THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

NOS. 84. 85. 89. 91. 93. 96. 100. & 104.

# श्रीलक्ष्मीसहस्रम्

श्रीमद्वेङ्कटाध्वरिविरचितम् ।

श्रीमद्रावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन विरचितया
वालवोधिन्याख्यया व्याख्यया समलङ्कृतम् ।

काशीस्थराजकीय संस्कृतप्रधानपाठशालायां

साहित्यशास्त्राऽध्यापकेन मानवल्ल्युपाख्यतैलङ्गरामशास्त्रिणा स्वकृतया अवतरणिः-
भणिकया संभूय संशोधितम् ।

## LAKSHMISAHASRA

BY

VENKATÂDHVAR

WITH THE

COMMENTARY CALLED BÂLABODHINI, BY

Srinivâsa Pandit or Ravji Mahârâja.

EDITED WITH AVATARANIKAS BY

Râma Sâstri Tailanga,

PROFESSOR, GOVT. SANSKRIT COLLEGE, BENARES.

*PUBLISHED AND SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT:
BENARES.
AGENTS:-OTTO HARRASSOWITZ LEIPZIG:
PAṆDIT JYESHṬHÂRÂMA MUKUNDJÎ, BOMBAY.
*Printed by Harî Dâs Gupta, Proprietor,*
AT THE VIDYÂ-VILÂSA PRESS,
BENARES.

*Price Rupee One.*

1906.

# अथ लक्ष्मीसहस्रम् ।

बालबोधिन्याख्यया व्याख्यया ऽवतरणनिःश्रेणिकया च समलङ्कृतम् ।

---

श्रीगणेशाय नमः ।

यत्प्रकाशात्प्रकाशन्ते देहेन्द्रियमनोधियः ।
सर्वोपाधिविनिर्मुक्तं तमात्मानमुपास्महे ॥ १ ॥
अखण्डचण्डपाखण्डखण्डिपाण्डित्यमण्डिताम् ।
शुभाङ्गीं कुटिलापाङ्गीं शारदां शुभदां नुमः ॥ २ ॥
पादाधःकृतहेमपुष्करदला नेत्रत्रयेणोज्ज्वला
धम्मिल्लव्यतिषक्तमल्लिमुकुला हालामदव्याकुला ।
उत्तुङ्गस्तनमण्डला हृतखला दीप्यन्महश्शृङ्खला
साऽब्जाऽभीतिगदारिपाणिकमला विन्ध्यालया पातु नः॥३॥
दिग्व्याप्तैर्युधि यो ऽट्टहासनिनदैर्ब्रह्माण्डमान्दोलयन्
देवद्वेषिविभञ्जनैकपटुधीर्दुर्वारवेगाऽऽकुलः ।
शूलप्रोतहिमाद्रिसन्निभमहाशुण्डालगण्डोच्छल-
द्रक्तासारविचित्रितस्त्रिनयनः पायान्महाभैरवः ॥ ४ ॥
वन्दे ऽतिकारुण्यमगण्यपुण्यदाक्षिण्यलावण्यगुणं शरण्यम् ।
सत्सेवितं तं कुलदैवतं मे ननादितन्द्रं(?)प्रभुरामचन्द्रम् ॥५॥
साराऽसारविवेकतः प्रतिदिनं भीरादिचोरावले-
र्यः सन्तापपरम्पराकुलजनोद्धाराय ताराधिपः ।
पूर्णो येन शिवाख्यभूमिपतये दत्तैहिकाऽऽमुष्मिक-
श्रीः सोयं प्रपितामहो मम पुनर्वर्वर्ति सिद्धेश्वरः ॥ ६ ॥
विघ्नप्रत्यूहसंहर्ता सिद्धराजो विराजते ।

यल्लीलया विमलया शिवः सन्तोषसंभृतः ॥ ७ ॥

अर्थः—अत्र सिद्धराजो मत्प्रपितामहो गणेशश्च । शिव-स्तच्छिष्यः शिवाजी राजा हरश्च ॥ ७ ॥

तमेव तपतां वरं परगुरुं प्रकाशप्रदं
नमामि यदनुग्रहं नवनवोत्सवं लेशतः ।
श्रयन्कुवलयं नयन्सकरवीरराजश्रियं
स्फुरत्प्रचुरतारको महति सत्पथे वर्तते ॥ ८ ॥

अर्थः—तपतां तपस्विनां प्रकाशकानां च वरं तं सिद्धेश्वरं रविं च । प्रकाशः स्फूर्तिरातपश्च । इन्दीवरं भूवलयं च । स प्रसिद्धशिवाजीसंज्ञः करवीरपुरराजः सकलवीरराजश्च । षोडशकलासहितः विशिष्टा इरा नीहाररूपा यस्मात्स चासौ राजा चन्द्रश्च । तारा मुक्ताश्च । सत्पथे सन्मार्गे आकाशे च ॥ ८ ॥

अपि च—

वेदा यस्य वशंवदाश्चिरतरं छात्राणि शास्त्राणि षड्
वागीशापि वशाऽनुशासनविधौ का वा कलानां कथा ।
कीर्तिश्रीद्युतयोपि यस्य कृतयो लोकस्तुतेर्भूमयः
सर्वज्ञः स पितामहो विजयते श्रीरामचन्द्रो मम ॥ ९ ॥

भृतकामो गुणग्रामो रामो दामोदरप्रियः ।
कलयेयुर्न कुशलाः कथमेनं बलाधिकम् ॥ १० ॥

अर्थः—ब्रह्मवित्त्वात्पूर्णकामः कामपालश्च । रामः एतन्नामा मत्पितामहो बलरामश्च । दामोदर एतन्नामा तच्छिष्यः कृष्णश्च । बलं शारीरं बौद्धशास्त्रीयं विज्ञानजं चेत्यनेकधा अन्यत्र स्पष्टम् । कुशला इति कर्तृपदम् ॥ १० ॥

अलङ्कार विपुलं महाराजकुलं तु यः ।
तं राममेव जानीमो वयं परशुभोदयम् ॥ ११ ॥

अर्थः—अलङ्कृतं चकार निवारितं च । महाराजः शिवाजी क्षत्रियाश्च । कुलं गृहं वंशश्च । रामं भार्गवश्च । परस्य शुभस्य उदयो यस्मात् परशोभायाः कान्त्याश्चोदयो यत्रेति च॥११॥

नानाभावाश्रयो रामः सदामोदरसंश्रितः ।
सदाशिवानन्दकरो यद्गुणप्रकरः परः ॥ १२ ॥

अर्थः—नानामहाराजभाऊमहाराज इति नामकाऽनुजद्वयस्य आश्रयभूतः स्वयं बाबामहाराज इत्यपरनाम्ना ख्यातः । अन्यत्र नानाभावानां सात्त्विकभावानामाश्रयभूतः । रामः पूर्वोक्तः श्रीमान् दाशरथिश्च । स दामोदरनाम्ना छात्रेण संश्रितः सर्वदामोदरसंश्रितश्च । शिवाजी रुद्रश्च ॥ १२ ॥

नमो ऽस्तु रामचन्द्राय ज्योत्स्नाविस्तारकारिणे ।
कलया ऽमलया यस्य शिव आनन्दभागभूत् ॥ १३ ॥

अर्थः—ज्योत्स्ना एतन्नामा प्राप्तशाख्यलक्षणाभिधायको ग्रन्थश्चन्द्रिका च । अन्यत्स्पष्टम् ॥ १३ ॥

तमेव बुद्धिविद्याश्रीप्रदातारं दयार्णवम् ।
षडक्षरोपदेष्टारं मत्सर्वस्वं नमाम्यहम् ॥ १४ ॥

अपि च—

येषां रसज्ञारङ्गान्तर्वाग्देवी नर्तकीयति ।
श्रीमतस्तातपादांस्तान्वन्देऽहं कृष्णपण्डितान् ॥ १५ ॥
तत्सुतेन श्रीनिवासपण्डितेन मनोहरा ।
लक्ष्मीसहस्रे क्रियते टीकेयं बालबोधिनी ॥ १६ ॥
श्रुतिस्मृतिपुराणेतिहासव्याकरणादिकम् ।
प्रमाणं संशयोच्छित्त्यै तावन्मात्रं प्रदर्श्यते ॥ १७ ॥

प्रायोऽनुप्रासयमकसद्भावात्तन्न दर्श्यते ।
अर्थालङ्कारवृत्तानि प्रतिपद्यं समासतः ॥ १८ ॥
प्रदर्श्यन्ते न संसृष्ट्यादिकं विस्तरभीतितः ।
सुगमानां दुर्गमानां पदानामपि सर्वशः ॥ १९ ॥
व्याख्यानं लिख्यते स्वेतद्यावद्बुद्धिबलोदयम् ।
गृह्यतां सङ्गतं यत्तत् त्यज्यतां यदसङ्गतम् ॥ २० ॥
पौलस्त्यादिनिशाचरव्रजमहाभारार्तया ऽनन्तया
विज्ञप्तिं गमितो विधिः सह सुरैर्गत्वा पयोधेस्तटम् ।
यं प्रस्तुत्य यदाज्ञया दिविषदः स्रष्टुं वनौकोगणे-
ष्वारम्भं कलयाञ्चकार तमजं रामं नमस्कुर्महे ॥ २१ ॥

इह खलु सकलसकलकविमूर्धन्येन निगमाऽऽगमसर्वस्वविदां प्रेक्षावतामप्यग्रगण्येन श्रीमद्वेङ्कटाध्वरिपण्डितेन निखिलविश्वगुणदोषप्रतिपादकविश्वगुणादर्शकाव्यकरणप्रमादादनिर्वाच्यव्याधिसमापन्नतया बहुतरांनिर्वेदमुपजग्मुषा पुनस्तत्परिहारार्थं निर्गुणस्यापि परमात्मनः पारमैश्वर्यसम्पादकमुख्यावचमपञ्चोपादानविषयं च श्रीरमादेव्याख्यं दैवतमेवैतस्य कुशलाऽकुशलनिर्वर्तकतया शरणीकरणीयत्वेनैकान्तिकं मन्वानेन 'काव्यं यशसेऽर्थकृते' इत्यादिमम्मटभट्टादिविधानस्य सत्काव्यपरतां 'काव्यालापांश्च वर्जये'दित्यादिनिषेधस्य भाषाद्यसत्काव्यविषयत्वं च निश्चितवता श्रीस्तोत्रसहस्रकं चिकीर्षुणा ऽविगीतशिष्टाचारविषयत्वात्परिशेषाऽनुमानाच्च निर्विघ्नपरिसमाप्तिफलकं च वस्तुनिर्देशपूर्वकनमस्क्रियात्मकं मङ्गलं स्वयमाचरता शिष्यशिक्षायै ग्रन्थतो निबध्यते—

लक्ष्मीचरणराजीवलाक्षालक्षितवक्षसे ।
विश्वसर्गादिलीलाय वेङ्कटब्रह्मणे नमः ॥ १ ॥

लक्ष्मीरिति । लक्ष्म्याश्चरणौ पादावेव राजीवे कमले मयूरव्यंसकादित्वात्समासः । तयोर्लाक्षया अविदारिताख्यरतिबन्धलग्नया लक्षितं चिन्हितं वक्षो यस्य तस्मै । पुनः विश्वस्य सर्वस्य जगतः सर्गादि सामान्ये नपुंसकम् । आदिशब्देन पालनलयावपि गृह्येते । तदेव लीला क्रीडा यस्य तस्मै । अत्र श्रुतिः–'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती'ति । 'जन्माद्यस्य यतः' लोकवत्तु लीलाकैवल्य'मिति न्यायौ च । वेङ्कटाख्यब्रह्मणे नमः प्रह्वीभावो ऽस्तु । नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्चेति च-

---

अथाऽवतरणनिःश्रेणिका ।

---

श्रीसरस्वत्यै नमः ।

विज्ञानघनमानन्दरससन्दोहतुन्दिलम् ।
शाश्वतं श्रेयसे नित्यं वाग्ब्रह्म समुपास्महे ॥ १ ॥

श्रियं प्रपद्य प्रतिपद्यमस्याः सुखाऽवताराय पुरस्करोति ।
लक्ष्मीसहस्रोपरिशोभमानां निःश्रेणिकां सम्प्रति रामशास्त्री ॥ २ ॥

श्रीनिवासविवृते ऽपि विस्तराच्छ्रीनिवासमहिषीसहस्रके ।
स्वाशयं स्फुटतरं वितन्वती स्वाशया मम न गीर्गतिर्वृथा ॥ २ ॥

१ अथ पञ्चविंशतिस्तबकैर्भगवतीं लक्ष्मीं देवीं तुष्टूषुः श्रीमान् वेङ्कटाध्वरिनामा कविवर्य आदौ प्रारम्भस्तबकमारिप्सुर्विश्वसर्गादीति प्रारम्भलिङ्गं निर्दिशन् मायाशबलितस्य ब्रह्मणो जगज्जन्मादिकारणतामवधारयंस्तद्रूपं रमापदपद्मयावकरसलाञ्छितवक्षःस्थलं विलासमात्रकृतजगद्रचनादिकार्यं भगवन्तं वेङ्कटाचलपतिं प्रणमन् मङ्गलमाचरति ।

तुर्थी । अत्र यद्यप्यस्त्वित्यध्याहारे क्रियाहीनमशरीरमित्युक्तत्वादशरीरत्वदोषः । तथा चोक्तमलङ्कारतिलके-'स्फुटप्रतीयमानायाः क्रियायाः पद्ये अभावेपि न दोष इत्यभिधाय तत्रैवोदाहृतं-'हृदयं त्वयि राघवे' इति । अत्रास्तीति स्फुटतरा क्रियाऽतो न दोष इति । युक्तं चैतत् 'अस्तिर्भवन्तीपरो ऽप्रयुज्यमानोऽप्यस्ती'ति भाष्यात् । भवन्तीति लटः संज्ञेत्यपि तत्रैव । अत्र रतिसमयलग्नलाक्षाचिन्हस्य सर्वदा हृदि धारणाच्छ्रियां प्रकृष्टप्रेमास्पदत्वं ध्वन्यते । तेन च स्वाश्रयाऽपेक्षया स्वप्रियतमाश्रयस्य भगवतो ऽतीव प्रियत्वेन तदाश्रयितुः क्षिप्रकार्यसिद्धिरिति श्रीस्तोत्रे कवेः परिकरः । अविदारितबन्धलक्षणं शृङ्गारशास्त्रे 'नारी स्वपादौ दयितस्य वक्षःस्थितौ ममालिङ्ग्य करद्वयेन । किंचिन्नतोरू रमते तदासौ प्रोक्तो मुनीन्द्रैरविदारिताख्य' इति । अनुष्टुब् वृत्तम् । तद्भेदो युग्मविपुला पथ्यावक्त्रं चेति । 'यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता' 'युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तित'मिति लक्षणद्वयमपि वृत्तरत्नाकरे । अत्र लाक्षालक्षितवक्षस इत्यनेन व्यङ्ग्यः सम्भोगशृङ्गाराख्यो रसः । भगवद्गतप्रेमरूपरतिस्थायिभावस्य श्रीरहोभ्यामालम्बनोद्दीपनविभावाभ्यां कटाक्षाद्यनुभावेन हर्षादिव्यभिचारिणा च पुष्टत्वात् । तदुक्तं रसमीमांसायां-'तत्र स्त्रीपुंसगतं प्रेम रतिः स्थायिभावोत्र । शृङ्गाररसे कान्ता रहश्च भवतो विभावौ द्वौ ॥ अनुभावः शृङ्गारे विज्ञैरुक्तः कटाक्षादिः । शङ्का ऽसूया ग्लानिर्व्याधिर्द्वेधा स्मृतिर्मतिश्चिन्ता ॥ औत्सुक्यं चापल्यं व्रीडा हर्षस्तथोन्मादः । जडता मदो विषादो धृतिरवहित्था सुषुप्तिश्च ॥ द्विविधेऽपि च शृङ्गारे व्यभिचारिण एतएवोक्ता' इति । अस्मिन्पद्ये समासबहुलत्वाद्गौडी रीतिः । तल्लक्षणं वाग्भट्टालङ्कारे-'द्वे एव रीती

गौडीया वैदर्भी चेति सान्तरे । एका भूयःसमासा स्यादसमस्तपदा परे'ति । तन्मते द्वे एव रीती । संदर्भस्य स्फुटमध्यत्वादर्थस्य च प्रौढत्वान्मध्यमाऽऽरभटी वृत्तिश्च । प्रतापरुद्रे ऽस्याः सर्वसाधारण्यस्योक्तत्वात् । लघुगुरुवर्णमिश्रणान्मध्या गतिश्च । एतल्लक्षणमलङ्कारतिलके । अर्थव्यक्तिः ओजः प्रसादः और्जित्यं गाम्भीर्यमित्यादयो गुणाश्च काव्यादर्शोक्तलक्षणानुसारेण यथायथं ज्ञेयाः । अत्र शब्दालङ्कारो वृत्त्यनुप्रासः । 'तुल्यश्रुत्यक्षरा वृत्तिरनुप्रासः स्फुरद्गुण' इति वाग्भट्टः । अयं छेकाऽनुप्रासो लाटाऽनुप्रासश्चेति द्वेधा । अस्य लक्षणविस्तारो ऽस्मत्कृतचम्पुभारतटीकायां द्रष्टव्यः । अर्थाऽलङ्कारो रसवान् रूपकं च । कविगतभगवद्रतिरूपव्यभिचारिभावाऽङ्गत्वेन शृङ्गारोपन्यासात् । चरणविषयस्य विषयिणा ताद्रूप्यरञ्जनाच्चेति । लक्ष्मीचेसारम्भे तगणस्य 'तो व्योम॰शून्यं फल'मिति फलाऽभावोक्त्या प्रयोगाऽनर्हत्वे ऽपि 'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोपि वे'ति प्रामाण्याददोष इति दिक् ॥ १ ॥

असदृशमरुणाब्जदृशं
प्रस्फीतपयोधरस्फुरन्मूर्त्तिम् ।
मनसि दधीमहि सततं
लोकानां मातरं च पितरं च ॥ २ ॥

असदृशमिति । नास्ति सदृक्समाना समानश्च यया येन

---

२ इदानीं निरुपमां कोकनदसमाननयनां पीवरकुचभरलसत्काठिन्यां लोकजननीं रमादेवीं, निस्तुलं रविशशिलोचनं सजलजलदनीलदेहं जगत्पितरं भगवन्तं नारायणं च हृदि धारयेमेति तयोः सायंकालिकीं निजमनसि स्थितिमाशासान आह ।

तां तं च । निरुपमां निरुपममित्यर्थः । तथा अरुणाब्जे इव दृशौ नेत्रे यस्याः । अन्यत्राऽरुणः सूर्यः अब्जश्चन्द्रः तौ दृशौ यस्य तम् । अरुणो भास्करेऽपि स्यात्, अब्जो जैवातृक इति चाऽमरौ । 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति मुण्डकश्रुतेः । 'चन्द्रसूर्यौ च नेत्रे' इति स्मृतेश्च । पुनः प्रस्फीतयोः पीनयोः पयोधरयोः स्तनयोः अन्यत्र प्रस्फीतः सतोयो यः पयोधरो मेघस्तद्वच्च स्फुरन्ती शोभना मूर्तिः काठिन्यं कायश्च यस्या यस्य तां तं च । लोकानां जगतां मातरं रमां पितरं वेङ्कटेशं च मनसि सततं दधीमहि स्थापयेम । आशंसायां लिङ् । वयमिति शेषः । अत्रोभयोरपि स्तव्यत्वेन प्रकृतश्लेषः । गीतिर्वृत्तम् ॥२॥

पुनः स्वस्य कवनशक्तिप्राप्त्यर्थं रमामेव स्तौति—

प्रातरम्बुजविडम्बिलोचनां मातरं त्रिजगतामुपास्महे ।
शीतरम्यकरुणावलोकनैर्या तरङ्गयति मङ्गलानि नः ॥ ३ ॥

प्रातरिति । या लक्ष्मीः शीतानि रम्याणि करुणया ऽवलोकनानि तैः कटाक्षैरित्यर्थः । नो ऽस्माकं मङ्गलानि धर्मार्थकाममोक्षाख्यानि तरङ्गयति विस्तारयति तां प्रातःकालीनं यदम्बुजं तद्विडम्बयतः अनुकुर्वतः लोचने यस्यास्तां त्रयाणां लोकानां मातरं श्रीदेवीमुपास्महे । वयमिति शेषः । तन्महिमा ऽग्रे ऽभिधास्यते । अत्र रथोद्धतावृत्तम् । उपमालङ्कारश्च ॥ ३ ॥

---

३ अधुना शीतलमनोरमैर्दयाकटाक्षैरस्मच्छुभविवर्धिनीं प्रातस्तनकमलसमाननयनां त्रिलोकीमातरमुपास्महइति निजशुभाप्तये आह।

अथ स्वगुरुवर्गं प्रणमति—

आचक्रायुधमा च मामकगुरोराचार्यवर्गं भजे
मध्यस्थैरिह नाथयामुनमुखैर्मान्यैः सनाथीकृतम् ।
क्षीराम्भोधिसुतापयोधरपयःपूरा इवोदित्वरा
यद्वाचां विसरा जगन्ति नितरामुज्जीवयन्ति स्वयम् ॥४॥

आचक्रेति । क्षीराम्भोधेः क्षीरसागरस्य सुता लक्ष्मीः तस्याः पयोधरयोः स्तनयोः पयःपूराः दुग्धप्रवाहा इव उदित्वरा उदयनशीलाः यद्वाचां येषां नाथयामुनप्रभृतीनां वाचां वाणीनां विसराः समूहाः जगन्ति भुवनानि नितरामत्यन्तं स्वयमितराऽनपेक्षत्वेनोज्जीवयन्ति आनन्दयन्तीत्यर्थः । इहाऽस्मिन् गुरुवर्गे मध्यस्थैर्मध्यवर्तिभिः तैर्नाथश्च यामुनश्च तत्संज्ञकावाचार्यौ मुखमिव मुख्यौ येषां तैः मान्यैः कीर्तिमद्भिः पुरुषैः सनाथीकृतं युक्तमित्यर्थः । रतिसुखसनाथमित्यादिदर्शनात् । चक्रायुधः श्रीविष्णुस्तमभिव्याप्येत्याचक्रायुधम् । आङ्मर्यादाऽभिविध्योरित्यव्ययीभावः । आ च मामकगुरोर्मद्गुरुमभिव्याप्य । आङ्मर्यादावचनइति कर्मप्रवचनीयत्वे पञ्चम्यपाङ्परिभिरिति पञ्चमी । अत्रोपसर्गगतित्वाऽभावादाङो व्यवधाने ऽपि न दोषः । ते प्राग्धातोरिति नियमात् । आचार्यवर्गं गुरुसङ्घं भजे सेवे । अत्र शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

———

४ साम्प्रतं निजकवितायाः सम्प्रदायशुद्धिं फलतः प्रदर्शयितुमिन्दिराकुचक्षीरप्रवाहा इव यद्वाग्विसराः स्वयं लोकानतीवोज्जीवयन्ति तां नारायणादारभ्य मध्यवर्तियामुननाथादिशोभितां निजदेशिकवेङ्कटनाथवेदान्ताचार्यपर्यन्तामाचार्यपरम्परां भजते ।

अथाऽऽदिकवित्वाद्वाल्मीकिं प्रणमति–

जलधिदुहितुः स्तुत्या सत्या सती मम भारती
रचयतु नमो वाचे प्राचेतसाऽऽननजन्मने ।
भवदवभवं तापं लोपं नयन्त्यनया यया
भुवि सुलभतां नीता सीताचरित्रसुधाझरी ॥ ५ ॥

जलधीति । यया भवः संसारस्तापहेतुत्वाद्दवो ऽरण्याग्निः । दवदावौ वनारण्यवह्नी इत्यमरः । तस्माद्भवो जन्म यस्य तं तापं लोपं नाशं प्रति नयन्ती सीतायाश्चरित्रमेव सुधाझरी सुलभतां नीता प्रापिता तस्यै प्रचेता वरुणस्तस्यापत्यं प्राचेतसो वाल्मीकिस्तस्याऽऽननान्मुखाज्जन्म उद्भवो यस्यास्तस्यै वाचे आदिकाव्यरामायणायेत्यर्थः । अनया प्रकृतोपक्रान्तया जलधिदुहितुः श्रीलक्ष्म्याः सत्या यथार्थया स्तुत्या स्तोत्रेण सती शुचिभूता मम भारती वाणी नमः रचयतु करोत्वित्यर्थः । हरिणीवृत्तम् ॥ ५ ॥

अथ विष्णुपुराणकरणत्वेन वैष्णवमुख्यत्वात्पराशरं स्तौति–

पराशरमुनीशितुः प्रणतिकर्म कुर्मस्तरा-

———

५ सम्प्रति यया जनानां संसारदावाऽनलजं सन्तापं शमयन्ती लक्ष्मीरूपसीताचरिताऽमृतझरी भुवि सौलभ्यं प्रापिता तस्यै श्रीमद्वाल्मीकिमहामुनिमुखोदितायै वाचे साध्व्या लक्ष्मीस्तुत्या साधुतामुपगता मद्वाग् नमस्कारं करोत्विति सीतामाहात्म्यप्रतिपादकमादिकाव्यं रामायणं प्रणमति ।

६ अधुना ऽहीनगुणशोभिभिः ( समधिकपाण्डित्यादिगुणाऽलङ्कृतैः, सर्पेन्द्रशेषरूपरज्जुशोभितैश्च ) अमृतसाधनोत्कण्ठाभिः ( मुमुक्षुभिः,

महीनगुणशोभितैरमृतसाधनोत्कण्ठिभिः ।
यदीयकृतिसिन्धुना विमथितेन यत्नाद्बुधैः
प्रकाशमिह नीयते परमपूरुषप्रेयसी ॥ ६ ॥

पराशरेति । अहीनाः संपूर्णाः गुणाः सौजन्यादयः अन्यश्चाऽहीनः सर्पश्रेष्ठः स एव गुणो मन्थनरज्जुस्तेन 'मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकि'मिति वचनात् । शोभितैः पुनः अमृतं मोक्षः सुधा च । श्रेयो निःश्रेयसाऽमृतं, पीयूषममृतं सुधेत्युभयत्राप्यमरः । तस्य साधने उत्कण्ठिभिरुत्कण्ठायुक्तैः । बुध्यन्ते इति बुधा विद्वांसो देवाश्च तैः । ज्ञातृचान्द्रिसुरा बुधा इति विश्वः । तैर्विमथितेन यस्य पराशरमुनेरियं यदीया कृतिः पराशरपुराणरूपा सैव सिन्धुर्दुरवगाहत्वादब्धिस्तेन इहास्मिन् लोके परमपूरुषस्य श्रीविष्णोः प्रेयसी प्रियतमा लक्ष्मीः प्रकाशं प्रकटीभावं नीयते तस्य मुनीनामीशिता नियन्ता चेति पराशरश्चासौ मुनीशिता च तस्य प्रणतेः प्रणामस्य प्रणतिरूपं वा कर्म कुर्मस्तरामतिशयेन कुर्मः । प्रसिद्धं हि पराशरपुराणे श्रीमाहात्म्यं समुद्रादाविर्भूतेति च । पृथिवीवृत्तम् । अप्रकृतश्लेषश्च ॥ ६ ॥

अथ स्वदेशिकं स्तौति–

---

पीयूषोद्धरणेच्छुभिश्च ) बुधैः ( पण्डितैर्देवैश्च ) प्रयत्नात् विमथितेन ( स्वभ्यस्तेन विलोडितेन च ) यदीयरचनासागरेण भगवती लक्ष्मीः प्रकाशं प्राप्यते तस्य पराशरमुनीश्वरस्यातिशयेन नमस्क्रियां कुर्मः इति लक्ष्मीमाहात्म्यप्रतिपादकविष्णुपुराणप्रणेतारं तत्रभवन्तं पराशरमुनिं नमस्करोति ।

दद्यादद्य कुदृष्टिसर्पगरुडस्त्रय्यन्तविद्यागुरुः
श्रीमान् वेङ्कटनाथदेशिकमणिः श्रेयांसि भूयांसि मे ।
दत्से दृष्टिलवेन देवि भजतां या त्वं विभुत्वं रमे
तस्या हन्त तवापि येन विभुता सुष्ठु प्रतिष्ठापिता ॥ ७ ॥

दद्यादिति । हे रमे! या त्वं भजतां भक्तानां दृष्टिलवेन कटाक्षलेशेन विभुत्वम् ईश्वरत्वं दत्से ददासि, हन्त विस्मये, तस्यास्तादृक्प्रभाववत्या अपि तव विभुता प्रभुता येन वेङ्कटनाथदेशिकमणिना सुष्ठु सम्यक्प्रतिष्ठापिता । विशिष्टाऽद्वैतस्य सिद्धान्तितत्वात् । सः कुदृष्टिरज्ञानदृष्टिः स एव घातकत्वात्सर्पस्तस्य गरुड इव गरुडो नाशकः । तथा त्रय्यन्तविद्यानां वेदान्तानां गुरुराचार्यः श्रीमान् श्रीसहितो वेङ्कटनाथ एव देशिकमणिर्गुरुवर्यः मे मह्यं भूयांसि बहूनि श्रेयांसि धर्मादिलक्षणानि अद्य दद्याद्ददातु । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

अथ स्वनिर्विण्णतां दर्शयति—

शीतज्योतिःशिखरिनगरीसागराऽम्भोधरादे-
र्जल्पं जल्पं जलजनिलये हन्त मिथ्यासमृद्धिम् ।

---

७ अथ हे रमे ! या त्वं सेवमानानां निजकटाक्षविक्षेपलेशमात्रेण विभुत्वं ( प्रभुत्वं ) ददासि तस्या अपि ते विशिष्टाऽद्वैतसिद्धान्तप्रतिष्ठापनेन विभुता ( व्यापकता ) येन प्रतिष्ठापिता स परविभुताप्रदत्त्वद्विभुत्वव्यवस्थापको मिथ्यादृष्टिरूपभुजगवैनतेयस्वरूपो वेदान्ताचार्यः श्रीमान् वेङ्कटनाथनामा गुरुवरो मह्यमतिबहुलानि स्फूर्त्यादीनि शुभानि दद्यादिति निजगुरुप्रसादमभ्यर्थयते ।

८ इदानीं हे कमलालये ! मम वाग् वारं वारं शशिशैलपुरसमुद्रजलधरादिमिथ्यासंपद्वर्णनेनास्मानं चिरतरं विगल्पयन्ती आ-

निर्विण्णा मे ननु भगवती भारतीयं त्वदीयं
स्तोत्रं चित्रं स्फुरति जननि स्वैरमारब्धुकामा ॥ ८ ॥

शीतेति । भो जलजनिलये कमलवासिनि ! शीतज्योतिश्चन्द्रः शिखरी पर्वतः नगरी पुरी सागरः सिन्धुरम्भोधरो मेघः । आदिशब्दान्नरवरभ्रमरादयस्तदादेर्मिथ्यासमृद्धिं हन्त खेदे जल्पं जल्पं वर्णयित्वा वर्णयित्वा । णमुलन्तमेतद् । ननु निश्चयेन निर्विण्णा निर्वेदं प्राप्ता खिन्नेति यावत् । मे मम भगवती इयं भारती त्वदीयं चित्रं बहुप्रासयमकश्लेषादिगर्भितं स्तोत्रं स्वैरं यथेच्छं सर्वसम्भवत्वात् आरब्धुं प्रारब्धुं काम इच्छा यस्यास्सा स्फुरति । अहो मद्भाग्यमित्यर्थः । मन्दाक्रान्ता वृत्तम् ॥ ८ ॥

मदाऽन्धक्षोणीपत्यपसदमनःप्रीणनकृते
नमस्कारं ब्रूमो भगवति चमत्कारवचसे ।
विधात्रीमानन्दं विपुलमिह चाऽमुत्र च तव
स्तुतिं प्रस्तौत्वंहोभरनिरसनायाऽद्य रसना ॥ ९ ॥

मदाऽन्धेति । हे भगवति ! मदस्त्रिविधः 'विद्यामदो धनमदस्तथैवाऽऽभिजनो मद' तत्युक्तलक्षणः । तेनाऽन्धानां क्षोणीपतीनां

---

सीत, परमिदानीं त्वत्कृपया ततो निर्वेदमुपगता सती तत्त्वमवबुद्ध्य चित्रे ते स्तोत्रे स्वैरं प्रवर्तते, तत्र निदानं त्वत्करुणैवेत्याह ।

९ अथ स्ववैभवमदमत्तनीचनृपतिमनःप्रसादनाय प्रवर्तमानायै चाटुवाचे दूरत एव प्रणामं ब्रूमो, मास्तु कथं चिदपि तस्यास्तदर्थो प्रवृत्तिः, किन्तु मदीया जिह्वा निखिलकलुषनाशायैहिकामुष्मिकसुखभरप्रदात्रीं त्वत्स्तुतिमेवाऽऽरभतामिति राजादिप्रसादनं परित्यज्य त्वत्प्रसादनायैव मे प्रवृत्तिरास्त्वित्याह ।

राज्ञां ये ऽपसदा नीचाः तेषां मनसः प्रीणनं सन्तोषस्तं करोति तस्मै चमत्कारवचसे ऽलङ्कृतवाक्याय नमस्कारं ब्रूमः न कुर्म इति भावः । तर्हि किं करोषि ? तदाह–इह भूलोके अमुत्र स्वर्गादौ विपुलं बहुलम् आनन्दं विधात्रीं कुर्वाणां तव स्तुतिम् अद्य मे रसना जिह्वा अंहसः नरस्तोत्रजन्मादिपापस्य भरस्य निरसनाय प्रस्तौतु प्रारभतामित्यर्थः । शिखरिणीवृत्तम् ॥ ९ ॥

अथ स्वमनोरथं प्रकटयति—

तत्ताद्दृग्रचनाविदग्धरसनाकण्डूतिनिर्धूतये
केचिन्नीचविचारगोचरगिरो ग्रथ्नन्तु मिथ्याकृतीः ।
स्वं वाग्ब्रह्म पुराणजिह्मगशिरःकम्पावहं पावनी-
कर्तुं देवि वयं पुनस्तव कथारम्भाय जृम्भामहे ॥ १० ॥

तदिति । नीचविचारः अज्ञलोकस्तुतिस्तद्गोचरास्तद्विषयिण्यो गिरो येषां ते केचित्कवयः काव्यकर्तारः तादृश्या विदग्धाया- श्चतुराया रसज्ञाया जिह्वायाः कण्डूतेर्निर्धूतये नाशाय मिथ्याकृतीः असत्यकविताः ग्रन्थन्तु निबध्नन्तु । वयं वेङ्कटाध्वरिणस्तु स्वं स्वकीयं वाग्रूपं ब्रह्म पावनीकर्तुं पवित्रीकर्तुं पुराणस्य पुरा-

---

१० ननु मिथ्याभूते राजादिवर्णने स्वाभाविक्येव जनानां प्रवृत्तिस्तत्रैव तथापि प्रवृत्तिरस्त्विति चेत्, अस्तु क्षुद्रचित्तनृपादिप्रवृत्तवाचां केषांचित् सरसकाव्यरचनाकुशलनिजजिह्वाखर्जूविनोदनाय मिथ्यारचनायां प्रवृत्तिः, परं वयं त्वच्छय्यारूपशेषभुजगशिरःसहस्रकम्पकारकं निजं वाग्ब्रह्म पावयितुं त्वत्कथाऽऽरम्भायैवोत्सहामहे इति स्वभावसरलाया निजवाचः कुपात्रे प्रयोगो नाऽस्मभ्यं रोचते ऽतस्त्वत्स्तोत्रे एवाऽस्मत्प्रवृत्तिरिति वदन् अनुपक्रान्तो निजवचोगौरवं लोकप्ररोचनायै प्रकटयति ।

तनस्य सर्पस्य शेषस्येति यावत् शिरःकम्पः श्लाघार्थः तदावहं तत्कारकं यथा स्यात्तथा तव लक्ष्म्याः कथारम्भाय जृम्भामहे प्राशस्त्येन प्रवर्तामहे । शार्दूलविक्रीडितम् ॥ १० ॥

इदानीं स्वाऽभिमानं परिहरति—

शय्या शब्दगणाऽनुशासनचणा छन्दोमयं वाहनं
सोदर्यस्तु कलानिधिस्तव रमे सूनुश्च वाणीपतिः ।
तस्यास्ते पुरतः स्तवं मितमतिः प्रोज्जृम्भितं श्रावयन्
गुञ्जाविक्रयिणः श्रयामि पदवीं माणिक्यपुञ्जापणे॥ ११॥

शय्येति । हे रमे ! तव शय्या शेषः शब्दगणः शब्दसमूहस्तदनुशासनं सूत्रभाष्यं पतञ्जलिः शेषाऽवतारो भाष्यकृदिति प्रसिद्धं तेन वित्ता । तेन वित्तश्चुञ्चुप्चणपाविति चणप्प्रत्ययः । वाहनं तु छन्दोमयं वेदप्रचुरम् । श्रूयते हि 'सुपर्णोसि गरुत्मान् त्रिवृते शिरो गायत्री' इत्यादिना गरुडस्य वेदमयत्वम् । सोदर्यस्तु कलानां चतुःषष्टीनां षोडशानां च निधिः शेवधिश्चन्द्र इत्यर्थः । सूनुः पुत्रश्च वाणीपतिर्ब्रह्मा । स्मर्यते हि मार्कण्डेयपुराणे वाणीपतित्वं ब्रह्मणः 'स्वरया सह संभूतो विरिञ्चो ऽण्डमजीजनत्' इति । तत्रैव च 'त्रयी विद्या कामधेनुः

---

११ सम्प्रति हे रमे ! शब्दाऽनुशासनमहाभाष्यकृत्पतञ्जलित्वेन विख्याता शेषरूपा ते शय्या, वेदमयो वैनतेयो वाहनं, कलानिधिश्च ते भ्राता, वाक्पतिर्ब्रह्मा च ते पुत्रः, इत्येवं विद्वदुत्तंसपरिवारायास्तव धुरि साऽऽडम्बरं स्तुतिं श्रावयन्मन्दमतिरहं माणिक्यराशिविपणौ गुञ्जाविक्रेतुर्धोरणीमाश्रयइति मन्दमतेर्मम विद्वत्परिवारायास्ते पुरः स्तुतिर्विदुषामुपहास्यतामेव विधास्यतीति निजाऽहङ्कारं परिहरन्नाह ।

सा स्त्री भाषा स्वरे'ति च । तस्यास्ते पुरतोऽग्रे मितमतिः परिमितबुद्धिरहं प्रोज्जृम्भितमाडम्बरितं स्तवं श्रावयन्नहं माणिक्यरत्नानां पुञ्जस्याऽऽपणे हट्टे गुञ्जाविक्रयिणः पदवीं पद्धतिं श्रयामि । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

कवीनां प्रत्नानां कवलितसुधास्वादिममदै-
रनूचानैः स्तोत्रैः श्रुतिजडिमभाजो जननि ते ।
अजामित्वायैव स्तवमिममकूपारतनये
विधाता* ग्रथ्नीमो विहसनपदैः कैरपि पदैः ॥ १२ ॥

कवीनामिति । हे अकूपारतनये सिन्धुकन्ये जननि ! प्रत्नानां पुरातनानां व्यासादीनां कवीनाम् अनूचानैर्गुरोः साङ्गवेदमधीयानैस्तत्सदृशैर्यथार्थवद्भिरिति यावत् । कवलितः ग्रस्तः सुधायाः स्वादिममदो माधुर्यगर्वो यैस्तैः स्तोत्रैः श्रुतिजडिमानं श्रवणजडत्वं भजति तस्यास्ते अजामित्वायाऽजाड्यायैव जामिर्जिह्वादिजाड्यदोष इत्यत्र प्रमाणं तु 'जामि वा एतद्यज्ञस्य यन्मिथः क्रियत'इति तैत्तिरीयश्रुतिः । विहसनपदै-

---

१२ ननु सत्सु पुरातनकविपुङ्गवप्रणीतेषु मत्स्तोत्रेषु किमर्था तत्र तव प्रवृत्तिरिति चेत, पुरातनानां कवीनां दलितपीयूषस्वादुताऽहङ्कारभरैर्मधुरैः प्रामाणिकैः स्तोत्रैः श्रवणजाड्यमुपगतायास्ते ऽरुचिपरिहारायैव धृष्टा वयमुपहास्यैः परिमितैः शब्दैस्तव स्तुतिं रचयाम इति अतिमधुररसजडरसनस्य पुंसो ऽरुचिनिवारणाय यथा ऽम्लादिर्विजातीयो निकृष्टोपि रसो भवति तथैवाऽमधुरापि मे वाक् मधुरस्तुतिभूयःसमाकर्णनेनाऽरुचिभाजस्ते तत्परिहाराय स्यादिति न तद्वैफल्यमिति स्वविनयं प्रदर्शयति ।

---

* विधातुम्—१ पुस्तकपाठः ।

हास्यास्पदैः कैरपि पदैः स्तवं विधाता धृष्टाः सन्तः ग्रथ्नीमो ग्रन्थसन्दर्भं कुर्मः । शिखरिणीवृत्तम् । उल्लासालङ्कारः ॥ १२ ॥

विद्वद्भ्यः स्वदमानया ऽऽत्मकृतया विश्वाम्ब नाधीयते
स्तुत्या ते सुखमज्ञचेतसि दृषत्प्राये न दूये ततः ।
गान्धर्वी हि पुरन्दरादिशिरसामान्दोलयित्री चिरं
गीतिः सा बधिरान्न नन्दयति चेत्किं छिन्नमेतावता॥ १३॥

विद्वद्भ्य इति । भो विश्वाऽम्ब ! विद्वद्भ्यः सूरिभ्यः स्वदमानया रुच्यर्थानां प्रीयमाण इति चतुर्थी । आत्मकृतया ते स्तुत्या दृषद्भिः शिलाभिस्तुल्यं तत्प्रायं तस्मिन् । उपलाश्मानः शिला दृषदित्यमरः । अज्ञानां चेतसि सुखं नाऽऽधीयते न स्थाप्यते चेत् तर्हि न दूये न दुःखीभवामि । तथा हि–पुरन्दरादीनामिन्द्रादीनां शिरसां मूर्ध्नां चिरम् आन्दोलयित्री कम्पयित्री गान्धर्वी गीतिः सा बधिरान् श्रोत्रेन्द्रियशून्यान्न नन्दयति न संतोषयति चेत् एतावता तत्सन्तोषाऽकरणेन किं छिन्नं ? न किंचिदपीति भावः । शार्दूलविक्रीडितं वृत्तम् । दृष्टान्तालङ्कारः ॥ १३ ॥

वक्तुं नैव चतुर्विधश्रुतिरसावीष्टे न चाऽष्टश्रुतिर्नो चक्षुःश्रुतिरप्यहो तव गुणान् नारायणप्रेयसि ।

---

१३ अथ हे जगदम्ब ! विपश्चितः प्रीणयन्ती मे स्तुतिः पाषाणपरुषे मूर्खचित्ते यदि सुखं न जनयेन्न कोऽपि खेदो, देवेन्द्रादिमूर्धस्फालनाढ्या गन्धर्वगीतिरुपहतश्रोत्रेन्द्रियांश्चेन्न प्रमोदयति का हानिस्तत्र ? इति दृष्टान्तेन समर्थयन् गुणग्राहिणां विदुषामेवाऽऽनन्दनायाऽस्मत्प्रवृत्तिर्न तु मत्सरिणामज्ञानामित्याह ।

१४ पुनः स्वाभिमानं परिहरन् हे नारायणगृहिणि ! यस्यास्तवाऽनन्तान् गुणान् वेदचतुष्टयी, चतुर्मुखो ब्रह्मा, सहस्रमुखः शेषो वा न,

स्तोतुं त्वामपि तामहं व्यवसितो दूरं हनूमन्मुखै-
र्दुर्लङ्घ्यं जलधिं तरीतुमनसः पङ्गोर्दधे चापलम् ॥ १४ ॥

वक्तुमिति। अहो नारायणप्रेयसि! तव गुणान् वक्तुम् असौ प्रसिद्धा चतुर्विधा ऋग्यजुःसामाऽथर्वाख्या नेष्टि न समर्था भवति। एवमष्टश्रुतिश्चतुर्मुखत्वेनाऽष्टकर्णो ब्रह्मा नैव समर्थः। तथा चक्षुरेव श्रुतिर्यस्य सशेषो ऽपि न समर्थः। तामपि त्वां स्तोतुं व्यवसितः कृतनिश्चयो ऽहं हनूमान् मुखमिव मुख्यो येषां तैः दूरं दुर्लङ्घनीयं जलधिं समुद्रं तरीतुं मनो यस्य तस्य पङ्गोश्चापलं दधे दधामि। चक्षुःश्रुतिर्द्विविधा श्रुतिः, ऋग्यजूरूपा चतुर्विधश्रुतिः ऋगादिचतुष्टयश्रुतिः उपवेदसहिताऽष्टविधश्रुतिरपि नेष्टे इति कविसंरम्भः। शार्दूलविक्रीडितम्। निदर्शनालङ्कारः ॥ १४ ॥

गर्वद्दुर्वसुधापतिस्तुतिपरव्याहारकूपान्धता-
निर्विण्णाशय एष वेङ्कटकविः पङ्केरुहावासिनि।
अद्य त्वद्गुणवर्णनाऽमृतरसैरानन्दितुं जृम्भते
चिञ्चापर्णरसाऽवसन्नरसनः पुण्ड्रेक्षुसारैरिव ॥ १५ ॥

गर्वादिति। हे पङ्केरुहावासिनि! गर्वन्तः ये दुष्टा वसुधापतयो राजानस्तेषां स्तुतिपरो यो व्याहारो वाग्विसरः स एव कूप-

———

वर्णयितुमलं, तामपि त्वां स्तोतुमुद्युक्तो ऽहं हनूमदादिभिर्जङ्घालैरपि अशक्योल्लङ्घनमपारं पारावारमुल्लङ्घितुकामस्य पङ्गोश्चाञ्चल्यं धारयामीति निदर्शनमुखेन स्वाऽशक्तिं प्रकटयन्नुपहास्यतां शङ्कते।

१५ अधुना हे कमलानिलये! मदमत्तकुनृपतिस्तोत्रपरोक्तिकूपविषये आन्ध्येन विरक्तचित्तो ऽयं वेङ्कटनामा कविरद्याऽम्लतिन्तिणीपत्ररसोद्वेजितजिह्वो मधुरतरैः पुण्ड्रेक्षुसारैरिव त्वद्गुणपीयूषैरानन्दमनुभवितुं यतत इति कुनृपतिवर्णने वैरस्यं प्रकटयन् भगवतीस्तोत्रे एव सुखाऽनुभवाय निजप्रवृत्तिरित्याह।

स्ततत्यया ऽन्धतया। निर्विण्णः खिन्न आत्मपश्चितं यस्य स एषः वेङ्कटकविः अद्य त्वद्गुणानां वर्णनैरेवाऽमृतरसैः आत्मानं स्वम् आनन्दयितुं सन्तोषयितुं(?)जृम्भते प्रयतते। क इव, चिञ्चायाः प्लक्षश्च तिन्तिणी चिञ्चेत्यमरः । पर्णानां पत्राणां रसेनाऽवसन्ना कलुषिता रसना यस्य स पुरुषः पुण्ड्रेक्षूणां शुभ्रेक्षूणां सारै रसैरिव । शार्दूलविक्रीडितम् । उपमालङ्कारः ॥ १५ ॥

इदानीं स्वस्याऽतिमन्दत्वेपि धृष्टत्वेन क्षमापणं याचते—

नाऽहं जाने नवरसगतीर्नाऽर्थमक्षुण्णमन्यै-
र्नाऽलङ्कारानपि न च वचोगुम्फगम्भीरिमाणम् ।
स्तोतुं मातस्तदपि भवतीं त्यक्तलज्जो यते ऽहं
मन्तुं किं तु प्रथितकरुणा क्षन्तुमर्हस्यमुं त्वम् ॥१६॥

नाहमिति । अहं नवरसानां गतीर्मार्गान् ते च शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः बीभत्सरौद्रौ च रसा इत्यष्टौ शान्तश्चैक इत्येवं नव । तथा ऽन्यैः पण्डितैरक्षुण्णमवर्णितं अचुम्बितं नवतममिति यावत् पुनरलङ्कारानुपमादीनपि । अन्यच्च वचोगुम्फस्य गम्भीरिमाणं ध्वन्युन्नेयगाम्भीर्यं तदपि न जाने इत्यस्य सर्वत्र सम्बन्धः । तथापि भो मातः भवतीं स्तोतुं त्यक्तलज्जो निर्लज्जोहं यते यत्नं करोमि, किं तु तत्र प्रथितकरुणा प्रख्यातदया त्वं मन्तुम् । आगोपराधो मन्तुरित्यमरः । क्षन्तुमर्हसि । मन्दाक्रान्तावृत्तम् ॥ १६ ॥

---

१६ यद्यपि हे मातः ! अहं शृङ्गारादिरसमार्गान्,नितराऽनुद्भावितमर्थ,मलङ्कारान्, वाग्रचनागाम्भीर्यं, मित्येतत्त्वत्स्तोत्राधिकारापादकमविद्वानपि निर्लज्जः सन् यत् त्वां स्तोतुं प्रयते तमिमं ममाऽपराधं प्रसिद्धकृपा त्वं क्षन्तुमर्हसीति त्वत्स्तोत्रे ऽनधिकारिणो ऽपि मे तत्करणे प्रवृत्तिरूपो ऽपराधो दयामय्या त्वया मर्षयितव्य इति प्रार्थ्यते ।

चक्षुष्मन्तश्चरणकमले चक्षुषि श्रोत्रवन्तः
श्रोत्रे भूमेर्जलधितनये जन्मवन्तोपि न स्मः ।
वक्त्राण्यासन् भगवति न षट् पञ्च चत्वारि वा नः
कस्मादस्मान्न हसतु जनः स्तोष्यतस्त्वद्गुणौघम् ॥ १७ ॥

चक्षुष्मन्त इति । हे जलधितनये ! चरणकमले चक्षुरस्ति येषां ते अक्षपादगौतमा न्यायप्रणेतार इति यावत् । तथा चक्षुषि श्रोत्रमस्ति येषां ते शेषरूपेण भाष्यकाराः पतञ्जलय इति यावत् । एवं भूमेः श्रोत्रे श्रोत्रस्थानीये वल्मीके जन्म अस्ति येषां ते वाल्मीकिन(?)आदिकवयो ऽपि न स्मः । न भवाम इत्यस्य सर्वत्र सम्बन्धः । भो भगवति । नो ऽस्माकं षड् वा पञ्च वा चत्वारि वा वक्त्राण्यपि नासन्, येन कुमारशङ्करब्रह्माणो भवामः । एवमनधिकारित्वेपि तव गुणौघं स्तोष्यतस्तोतुमिच्छतः अस्मान् जनः कस्मान्न हसतु । उपहासास्पदमेवेदं मत्कर्मेत्यर्थः । अत्र चक्षुष्मन्त इत्यादिपर्यायोक्त्या पर्यायः । अथ षट्पञ्चेत्यादिसाऽभिप्रायबहुविशेषणनिवेशेन वाक्यार्थरूपः परिकराऽवान्तरभेदश्च । मन्दाक्रान्तावृत्तम् ॥ १७ ॥

---

१७ साम्प्रतं पुनरपि निजामशक्तिं प्रकटयन् सकरुणया त्वया क्षान्ते ऽप्यपराधे जनहास्यता दुर्निवारैवेति प्रतिपादयितुं हे सागरसुते ! वयं पादे नेत्रवन्तो ऽक्षपादगौतमरूपाः, नेत्रे श्रोत्रवन्तश्चक्षुःश्रवसः शेषरूपाः, वल्मीकतो गृहीतजन्मानो वाल्मीकिरूपा वा न स्मः, एवमस्माकमाननानि षट् पञ्च चत्वारि वा नासन्, अर्थात् वयं गुहशिवब्रह्मरूपा बहुमुखा न स्मस्तथापि अनन्तानां त्वद्गुणानां वर्णने प्रवृत्तानशक्ततमानस्मान् जनश्चेत्परिहसति युक्तमेवेत्याह ।

अभूमिस्त्वद्भूमा जननि जरतीनामपि गिरा-
मसौ कस्मान्माद्दक्कृशजनमनीषोक्तिविषयः।
अशक्यानामौर्वाग्निभिरपि निपीतुं निधिमपा-
मपारं तं पातुं मशकशिशुकः किं प्रभवति ॥ १८ ॥

अभूमिरिति । हे जननि ! जरतीनामपि गिरां वेदवाचामित्यर्थः । त्वद्भूमा त्वदीयमहिमा अभूमिरविषयः 'यतो वाचो निवर्तन्त' इति श्रुतेः । असौ तव महिमा माद्दशः कृशजडमनीषस्य(?) उक्तेर्विषयः कस्मात्कथं स्यात् ? अपि तु न स्यादेव। अत्र दृष्टान्तः—आर्वाग्निभिर्वडवाग्निभिरपि निपीतुं प्राशितुम् अशक्यानाम् अपां निधिं सिन्धुं पातुं प्राशितुं मशकस्य शिशुकः बालः किं प्रभवति ? नेत्यर्थः । शिखरिणीवृत्तम् । दृष्टान्ताऽलङ्कारः ॥ १८ ॥

प्रकृष्यन्तामस्मत्परमितरकाले विधिमुखा
वयं मातस्ते वा तव नुतिदशायां समधियः।
निकर्षोत्कर्षौ स्तो निशि तु शशिखद्योतमहसो-
र्दिवा को वा भेदो दिनकरकरव्रातजटिले ॥ १९ ॥

प्रकृष्यन्तामिति। भो मातः ! विधिमुखा ब्रह्मादयो देवाः

---

१८ पुनर्विनयप्रदर्शनाय निजाऽशक्तिं प्रकटयितुं हे जननि ! पुरातनीनां वेदभारतीनामपदं त्वन्माहात्म्यं माद्दशाल्पमतिबुद्धिवाग्गोचरः कथं भवेदिति वडवानलैरप्यशक्यपानस्याऽपारस्य पारावारस्य पाने मशकशिशुः कथं शक्तिमाप्नुयादिति वदन् समर्थयते।

१९ ननु सत्सु चतुराननादिषु गुणगरिष्ठेषु मत्स्तुतिकारिषु का नाम मूढस्य तव मत्स्तुतौ योग्यतेऽति भवत्या न मन्तव्यं, सन्तु नाम ते

इतरकाले स्तुतिभिन्नसमये अज्ञातपरमस्मदपेक्षया प्रकृष्यन्तामधिका भवन्तु, तथापि ते वा वयं वा तव नुतिदशायां स्तुतिसमये समधियः समानबुद्धय एव। तत्र निदर्शनं–शशी चन्द्रः खद्योतश्च तयोर्महसोर्निशि रात्रावेव तु निकर्षश्चोत्कर्षश्च न्यूनाधिक्ये स्तः भवतो, दिनकरस्य कराणां किरणानां व्रातेन समूहेन जटिले दिवा दिवसे को वा भेदः? न कश्चिदस्ति। सूर्यतेजसि उभयोरपि हतकान्तित्वादिति भावः। शिखरिणीवृत्तम्। दृष्टान्तालङ्कारः॥ १९॥

वाग्भिः कोरकितानि ते रचयतः स्तोत्राणि वाणीपते-
रस्माकं सुमितां स्तुतिं कलयतामप्यम्ब तुल्यं फलम्।
कौबेरीं श्रियमानशे बहुतरैः कश्चित्तपोभिश्चिरा-
देनामाशु कुचेल एव जगृहे धानाप्रदानादपि॥ २०॥

वाग्भिरिति। भो मातः! वाग्भिर्वाणीभिः कोरकितानि तदस्य सञ्जातमितीतच्। उल्लसितानीत्यर्थः। ते स्तोत्राणि रचयतः कुर्वतः वाणीपतेर्ब्रह्मणो बृहस्पतेर्वा सुमितां स्तुतिं कलयतां कुर्व-

---

ऽन्यस्मिन् लोकरचनादिकालेष्वस्मत्तो गरीयांसः, परं त्वत्पुरतः स्तुत्यवसरे नास्ति तेषा मस्माकं वा किमपि मतितारतम्यमिति सत्यपि रात्रौ चन्द्रखद्योततेजसोस्तारतम्ये सूर्यकिरणनिकरभास्वरे दिवसे प्रतिहततेजस्त्वमुभयोरपि तुल्यमेवेति निदर्शयन् साधयति।

२० अथ मास्तु मत्पुरतः स्तुतौ मतितारतम्यं, परं नैसर्गिकसामर्थ्यतारतम्यात् स्तुतितारतम्ये सति फलतारतम्यमवश्यं स्यादेवेत्यपि न त्वया मन्तव्यं, देवताप्रसादे सति किं वा ऽधमस्यापि स्वल्पेनापि यत्नेनाऽसम्भाव्यमिति प्रतिपादयितुं वाग्भिः सञ्जातको-

वामस्माकमपि फलं तुल्यं समानमेव । तत्किं ? कश्चित्तापसः बहुतरैश्चिरात्तपोभिः कुबेरस्य इयं कौबेरी तां श्रियं संपदम् । आनशे प्राप । एनां संपदं कुचेलः कुत्सितवस्त्रधारी सुदामा नाम विप्र एव धानानां भ्रष्टयवानां प्रदानादपि आशु शीघ्रं जगृहे स्वीचकारेति गीष्पतेरप्यात्मनो विशेष उक्तः । शार्दूलविक्रीडितम् । दृष्टान्तालङ्कारः ॥ २० ॥

आसन् धन्यतमा गुणांस्तव बहूनास्वाद्य शक्रादयो
दृह्णन्तो ऽपि गुणार्णवामृतकणान्मातः कृतार्था वयम् ।
आचामन्ति सुधाझरान्सुमनसो द्वित्रांश्चकोराः कणा-
नेणाङ्कादविशेषमार्तिशमनं तत्तोभयेषामपि ॥ २१ ॥

आसन्निति । हे मातः ! शक्रादयः इन्द्रादिदेवाः तव बहून् गुणानास्वाद्य प्रस्तुत्य अतिशयेन धन्याः धन्यतमाः कृतार्थाः । अतिशायने तमप् । आसन् । तथा तव गुणा एवाऽर्णवाः समुद्रा अनन्तत्वात् तेषाममृतकणाः सुधालेशाः तान् गृह्णन्तो वयमपि कृतार्थाः । तदेवाह—सुमनसो देवा एणाऽङ्काच्चन्द्रात्सुधाझरानमृतप्रवाहानिति यावत् । आचामन्ति पिबन्ति, चकोरास्तु तस्मादेव चन्द्राद्द्वौ वा त्रयो वा द्वित्राः । बहुव्रीहौ संख्येये डज-

---

रकाणि ( उल्लसितानि )-ते स्तोत्राणि रचयितुः, बृहस्पतेः, सुमितां (पुष्पितां परिमितां च) स्तुतिं कुर्वतामस्माकमपि फलं समानमेवेत्यत्र चिरतरबहुतरतपःसंभारसमासादितकुबेरसंपदः कस्यचित्फलं भगवते हरये पृथुकमुष्टिप्रदानमात्रेण सद्यः प्राप्तवानन्वर्थनामा कुचेल एवोदाहरणमित्याह ।

२१ नन्वेवं वैश्वदेवाऽश्वमेधयाजिनोस्तुल्यफलत्वाऽऽपत्तिरित्याशङ्क्य न वयं समानकारणजन्यत्वेन फलतौल्यं ब्रूमो ऽपितु तत्कर्तृ-

बहुगणादिति समासान्तो डच्प्रत्ययः । कणाभिन्दूनाचामन्ति, तत्र सुधापाने उभयेषां देवानां चकोराणां चाऽऽर्तेस्तृष्णायाः शमनम् अविशेषं तुल्यमित्यर्थः । शार्दूलविक्रीडितम् । दृष्टान्तालङ्कारः ॥ २१ ॥

देवि श्रीवृषशैलदेवदयिते दाक्षिण्यपण्यक्षिते
मातः साहसतस्तव स्तवमिमं कर्तुं प्रवृत्तस्य मे ।
उन्मीलन्तु परं गिरस्तव कराऽलङ्कारपङ्केरुहात्
प्रेङ्खत्तुङ्गषडङ्घ्रिसंघविसरज्झङ्कारशङ्काकृतः ॥ २२ ॥

देवीति । हे देवि हे मातः ! वृषशैलः शेषाद्रिस्तत्रत्यदेवस्य दयिते प्रिये ! दाक्षिण्यस्यौदार्यस्य पण्यक्षितिः पण्यवीथी हट्ट इति यावत् । तस्यास्तव इमं स्तवं साहसादिति साहसतः । पञ्चम्यास्तसिल् । धार्ष्ट्येन कर्तुं प्रवृत्तस्योद्युक्तस्य मे तव करेणाऽलङ्कारो यस्य पङ्केरुहस्य तस्मात्तव हस्तगतकमलादित्यर्थः प्रेङ्खतां निःसरतां तुङ्गानां षडङ्घ्रीणां भ्रमराणां सङ्घस्य विसरतां झङ्कारा-

---

अनतृप्तिमाम्यादिति प्रतिपादयितुं हे मातः ! बहुंस्त्वद्गुणानास्वाद्य महेन्द्रादीनां या कृतार्थता सैव त्वद्गुणसुधाबिन्दुसमास्वादकानामस्माकमप्यत्र च चन्द्रात् अमृतपूरमास्वादयतां देवानां छित्रशीकरानास्वादयतां चकोराणामपि जायमाना समानरूपा तृप्तिरेवोदाहरणमित्याह ।

२२ अथ हे वेङ्कटपतिप्रेयसि ! दाक्षिण्यापणरूपे देवि मातरधिकाराभावेऽपि साहसिकयास्वत्स्तोत्रकरणे प्रवृत्तस्य मम त्वत्करालङ्कारभूतलीलाकमलाच्चलन्मिलिन्दकुलविसृत्वरझङ्कारशङ्काकारिण्यः सरसा गिरः समुन्मिषन्त्विति सरसकविताप्रसारप्रसादं प्रार्थयते ।

र्णां शङ्कां कुर्वन्ति ताः गिरः परमत्यन्तम् उन्मीलन्तु भवत्प्रसादाद्विकसन्तु इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । भ्रान्तिमदलङ्कारः ॥ २२ ॥

पद्यानां दशभिर्यदस्तुत शतैस्त्वत्प्रेयसः पादुकां
त्रय्यन्तार्यकविः परो हयमुखस्तत्रास्ति को विस्मयः ।
स्तोकप्रज्ञमतीव मूकमपि मां श्लोकैः सहस्रेण ते
स्तोतारं समवेक्ष्य सूक्ष्ममतिभिः कस्मान्न विस्मीयते ॥ २३ ॥

पद्यानामिति । यत्तु पद्यानां श्लोकानां दशभिः शतैः सहस्रपद्यैरित्यर्थः । त्रय्यन्तार्यकविः वेदान्ताचार्यवेङ्कटनामा कविः परो ऽन्यो हयमुखो हयग्रीवो विद्यानिधित्वात् त्वत्प्रेयसो हरेः पादुकाम् अस्तुत स्तुतवान् तत्र तत्स्तवने को विस्मयः? न कोऽपीत्यर्थः । तर्हि स्तोकप्रज्ञमल्पमतिम् । अतीव मूकं वक्तुमशक्तम् । मूढं वेति पाठान्तरम् । मामिदानीं भवत्प्रसादात्सहस्रेण श्लोकैः पादुकासहस्रेणेत्यर्थः । ते स्तोतारं समवेक्ष्य विलोक्य सूक्ष्ममतिभिः प्राज्ञैः कस्मात्कथं न विस्मीयते? नाश्चर्यं प्राप्यते । महान्तो हि दुष्करमपि कर्तुं समर्थास्तदेवाऽल्पैः कृतं चेद्विस्मयहेतुरेवेत्याशयः । शार्दूलविक्रीडितं वृत्तम् । विभावनालङ्कारः ॥ २३ ॥

---

२३ इदानीं मद्गुरुवर्यो विद्यामयहयग्रीवस्वरूपो वेङ्कटनाथवेदान्ताचार्यः पादुकासहस्रं नाम महास्तोत्रं त्वत्प्रियस्य भगवतश्चकार न तत्र कोऽपि विस्मयः, परं मन्दमतेरवाचो ऽपि मम पद्यसहस्रेण त्वत्स्तोत्रे प्रवृत्तिर्विदुषामाश्चर्यकारिणी कथं न स्यादिति निजविनयं प्रदर्शयन् लक्ष्मीसहस्रस्तोत्रनामकप्रकृतस्तोत्रप्रकरणं प्रकटयति ।

मन्ये सत्स्वपि वाङ्मयेषु विदुषामन्येषु धन्यैर्बुधै-
.. रुक्तिर्मे भुवि देवि तावकगुणस्पर्शादुपादीयते ।
भद्रे त्वद्रमणप्रशस्तचरणद्वन्द्वैकसंसर्गतो
भर्गः स्वर्गधुनीं बिभर्ति शिरसा भूयस्सु सत्स्वम्बुषु ॥२४॥

मन्ये इति। हे देवि भद्रे कल्याणि। त्वद्रमणस्य हरेः प्रशस्तयोश्चरणयोर्द्वन्द्वस्यैकः केवलः संसर्गस्तस्मात् भूयस्सु बहुषु अम्बुषु सत्स्वपि भर्गः स्वर्गधुनीं भागीरथीं शिरसा बिभर्ति धत्ते यथा तथा अन्येषु विदुषां वाङ्मयेषु सत्सु विद्यमानेष्वपि धन्यैर्यथार्थप्राप्तिपुण्यवद्भिर्बुधैर्मे मदीया उक्तिः भुवि भूमौ तावकानां त्वदीयानां गुणानां स्पर्शात्सम्बन्धादेव उपादीयते। त्वद्गुणवर्णनादेव मदुक्तेः श्रैष्ठ्यं सर्वैरादीयतेऽपि चेति भावः । वर्तमानसामीप्ये लट्। शार्दूलविक्रीडितं वृत्तम्। दृष्टान्तालङ्कारः ॥ २४ ॥

नन्विदानीन्तनाः पुरुषाः प्रायो मन्दधिषणा अतस्त्वदीयेनाऽनेन काव्येन तेषां सन्तोषो न स्यात्, तेन च तथायं प्रयत्नोऽपि विफलः स्यादिति चेत्तत्राह—

तव स्तोत्रे मन्दाः कति चिदतिचित्रेऽपि कमले

---

२४ साम्प्रतं सत्स्वपि मान्यानां विदुषां रुचिरतरासु रचनासु मीरस्याऽपि मद्रचना त्वदीयगुणसम्बन्धादेव गरीयसामपि विदुषामुपादेयतां यास्यत्येवेत्यत्र वर्तमानेष्वपि बहुषु जलाशयेषु त्वत्प्रियभगवन्नारायणचरणसंसर्गादेव महादेवेन शिरसोह्यमाना गङ्गा ऽस्माकं दृष्टान्तमुदाहरणमित्याह ।

२५ अथ हे कमले ! ऽतिविचित्रे ऽपि मत्कृते त्वत्स्तोत्रे केषां चिन्मूढानामानन्दाभावस्तेषां दौर्भाग्याद्यदि न स्यान्न कोऽपि मे खेदो, यतो

न विन्दन्त्यानन्दं यदि, तदपि न म्लायति मनः ।
सृजेदेव स्रष्टा स किल विपुले ऽस्मिन् क्षितितले
चमत्कारानन्दाऽनुभवचतुरान् द्वित्रिचतुरान् ॥ २५ ॥

तवेति । हे कमले लक्ष्मि ! अत्यन्तं चित्रे विचित्रे ऽपि तव स्तोत्रे अस्मिन्मत्कृतस्तवने कति चिन्मन्दाः अल्पप्रज्ञाः अरसिका इत्यर्थः । यद्यपि आनन्दं सन्तोषं न विन्दन्ति न प्राप्नुवन्ति, तदपि अस्माकं मनः न म्लायति ग्लानिं न प्राप्नोति । कुत इति चेत्तत्र हेतुमाह–स प्रसिद्धः स्रष्टा सकलजगदुत्पादको ब्रह्मा किल निश्चयेन विपुले विस्तीर्णे अस्मिन् क्षितितले भूतले चमत्काराणां मत्कृतचित्रादिचित्तविनोदविषयाणाम् । आनन्दस्याह्लादस्य अनुभवे चतुरान् दक्षान् । दक्षे तु चतुरपेशलपटव इत्यमरः । द्वित्रिचतुरान् द्वौ वा त्रयो वा चत्वारो वा द्वित्रिचतुरास्तान् पुरुषान् सृजेत् उत्पादयेदेवेति । सृज विसर्गे अस्माल्लिङ् । अत्र मन्दाऽवज्ञापूर्वकस्वकाव्यसंमाननेन अवज्ञालङ्कारः । अथ च विरलरसज्ञलाभेन काव्यकरणीयार्थस्य समर्थनात्काव्यलिङ्गमपि । अत्र स्रष्टा सृजेदित्यादिना सम्भवाख्यप्रमाणदर्शनात् सम्भवाख्यः प्रमाणालङ्कारः । शिखरिणीवृत्तम् ॥ २५ ॥

---

ऽतिविशाले ऽस्मिन् भूतले विधिः चमत्कारानन्दानुभवकुशलान् द्वित्रिचतुरानपि रसिकानुत्पादयेदेव, तत एव च मे रचनाप्रयासश्चरितार्थः स्यादिति मूर्खैर्बहुभिरनुपास्यापि मत्कविता विरलैरपि सहृदयैरुपास्ता सती भवेदेव चरितार्था तत एव मे सन्तोषो 'वरमल्पफलं सारं न बहुः शुष्कभरकली'ति न्यायादित्याह ।

सुचारुमधुमोचिकारसमुचो वचोदेवता-
कुचाऽमृतकचाकचिप्रचुरचातुरीमेदुराः ।
नराः सततमिन्दिरागुणकथासुधादोहिनी-
रुपाध्वमिह वेङ्कटाध्वरिकवेरुदारा गिरः ॥ २६ ॥

सुचार्विति । भो नराः ! इन्दिराया लक्ष्म्याः कथैव सुधा तां दुहन्तीति तथा सुचारुणो मधुनः क्षौद्रस्य मोचिकाया रम्भायाश्च रसं मुञ्चन्ति ताः। पुनः वचोदेवतायाः श्रीसरस्वत्याः कुचस्याऽमृतेन कचेषु कचेषु गृहीत्वा इदं प्रवर्तमानं युद्धं कचाकचि । तत्र तेनेदमिति सरूपे इति कर्मव्यतिहारबहुव्रीहौ अन्येषामपीति दीर्घे इच् कर्मव्यतिहारइतीच्प्रत्ययः । तत्र प्रचुरया बहुलया चातुर्या मेदुराः सान्द्रस्निग्धाः । सततम् अश्रान्तम् । इहाऽस्मिन् लोके वेङ्कटाध्वरिसंज्ञकस्य कवेः उदारा महतीगिरः उपाध्वं स्वीकुरुत । सरस्वतीकुचाऽमृतसदृशा मद्वाण्यः, अतः सर्वैरवश्यम् उपास्या इति भावः । उपमाकाव्यलिङ्गालङ्कारौ । पृथ्वीवृत्तम् ॥ २६ ॥

स्वैरं प्ररोहयतु पद्यसहस्रमाशु
दासस्य मे वदनसीम्नि तवाऽवलोकः ।

---

२६ एतावता सन्दर्भेण विनयाऽतिशयं प्रदर्श्य लोकपाराङ्मुख्यमाशङ्कमानस्तत्प्ररोचनायै मधुरतरमाध्वीककदलीफलरसस्राविणीर्वाग्देवताकुचामृतकचयुद्धचातुर्यपूर्णाः ( तत्तुल्याः ) लक्ष्मीगुणकथामृतानिष्यन्दिनीरुदारा वेङ्कटाध्वरिनाम्नः कवेः (आत्मनः) गिरोऽङ्गीकुरुतेति विदुषो निजवचसां श्लाघापूर्वकं प्रार्थयते ।

२७ अथ सकृत्कृताञ्जलिबन्धस्य भक्तजनस्य सहस्राक्षसम्पद-

यः क्वापि हन्त सकृदञ्जलिबन्धभाजि
जन्तौ जगज्जननि सौति सहस्रमक्ष्णाम् ॥ २७ ॥

स्वैरमिति । हे जननि ! यस्तवाऽवलोकः दृष्टिः हन्त हर्षे । सकृत् एकवारमपि अञ्जलिबन्धभाजि नमस्कुर्वति क्वापि कुत्र चिदपि जन्तौ पुरुषे । जन्तुर्जन्यशरीरिण इत्यमरः । अक्ष्णां नेत्राणां सहस्रं सौति देवराजं करोतीत्यर्थः । स ते ऽवलोकः तव दासस्य मे वदनसीम्नि जिव्हाग्रे इत्यर्थः । पद्यानां श्लोकानां सहस्रं स्वैरम् अनायसेन प्ररोहयतु अङ्कुरयतु । अत्र वसन्ततिलकावृत्तम् । पर्यायोक्तं काव्यलिङ्गमुदात्तश्चेत्यलङ्काराः ॥ २७ ॥

पङ्कजनिलये स्तोत्रं वेङ्कटकविगीतमेतदविगीतम् ।
किङ्करकृतमिति कृपया त्वं कलयितुमर्हसि प्रसीदन्ती ॥ २८ ॥

पङ्कजेति । हे पङ्कजनिलये रमे वेङ्कटकविना गीतं कृतम् । अविगीतमनिन्दितम् एतत्स्तोत्रं किङ्करेण दासेन कृतमिति हेतोः कृपया त्वं प्रसीदन्ती सती कलयितुं स्वीकर्तुं अर्हसि योग्याऽसीत्यर्थः । गीतिश्छन्दः । काव्यलिङ्गमलङ्कारः ॥ २८ ॥

रसिकालिभिरास्वाद्यं रम्यं* श्रीकरविलसदलङ्करणम् ।

---

र्पणविचक्षणस्त्वत्कटाक्ष एवाऽशक्तस्यापि किङ्करस्य मम मुखे सहस्रं श्लोकानङ्कुरयत्वित्यभ्यर्थ्यते ।

२८ इदानीं प्रभूणामाश्रितेषु ममत्वं भवतीति इदं वेङ्कटकविप्रणीतमनिन्दितं स्तोत्रं दासरचितमिति मत्वा करुणया त्वया ऽङ्गीकार्यमिति याचते ।

२९ सम्प्रति रसग्रहणशालिभिरास्वाद्यं सुन्दरं शोभाकरप्रस्फुरदलङ्कारं सहस्रपद्यघटितमिदं स्तोत्रं, मकरन्दरसग्रहणचतुर-

---

* रम्यम्—इति १ पु. नास्ति ।

विकसतु सूर्यालोकात्पद्मनिवासे सहस्रपत्रमिव ॥२९॥

इति श्रीमद्वेङ्कटाध्वरिविरचिते लक्ष्मीसहस्रे

प्रारम्भस्तबकः प्रथमः ।

रसिकेति । हे पद्मे ! सहस्रपत्रपक्षे रसिका ये ऽलयो भ्रमराः पद्मपक्षे रसिकानां पुरुषाणाम् आलयः पङ्क्तयश्च तैः आस्वादितुं योग्यं पुनः श्रीकरे लक्ष्मीहस्ते विलसदलङ्करणभूतम् । अन्यत्र श्रीकरं कान्त्याख्यगुणयुक्तं विलसत् अलङ्करणम् उपमाद्यलङ्कारा यस्मिंस्तत् । सूर्यस्य तपनस्य सूरेः कवेश्चाऽऽलोकात् प्रकाशादवलोकनाच्चेति यावत् । सहस्रपत्रं कमलमिव इदं स्तोत्रं लक्ष्मीसहस्राऽभिधमित्यर्थः । विलसतु विशेषेण शोभां प्राप्नोत्वित्यर्थः । गीतिश्छन्दः । उपमाश्लेषावलङ्कारौ ॥ २९ ॥

इति श्रीमद्विद्वन्मुकुटालङ्कारहीरवरकरवीरपुरपालशिवच्छत्रपतिगुरुमहाराजेत्यादिबिरुदौघभ्राजमानश्रीमत्सिद्धेश्वरयोगिराजसूनुश्रीमद्रामचन्द्रपण्डितात्मजश्रीकृष्णपण्डिततनयेन रावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन विरचितायां बालबोधिन्याख्यायां श्रीलक्ष्मीसहस्रटीकायां प्रारम्भस्तबकः प्रथमः ॥ १ ॥

---

मधुपकुलास्वादनीयं लक्ष्मीकरे स्फुरद्भूषणरूपं कमलमिव सूरीणां सूर्यस्य चाऽऽलोकात ( अवलोकनात् प्रकाशाच्च ) विकसतु ( प्रसरतु पुष्यतु च ) इति निजकविताया बुधजनाऽवलोकनेन प्रचारमभ्यर्थयन् स्तबकं पूरयति ।

इति श्रीमानवल्ल्युपाख्यतैलङ्करामशास्त्रिविरचितायां

लक्ष्मीसहस्राऽवतरणनिःश्रेणिकायां प्रारम्भस्तबकः १ ।

अथ प्रादुर्भावस्तबकः २ ।

ब्रह्माऽभ्यर्थनया भास्वद्वंशे यो भरतादिभिः ।
स्वप्रादुर्भावमाधत्त स रामः श्रेयसे ऽस्तु नः ॥ २ ॥

अथाऽस्मिन् द्वितीयस्तबके लक्ष्मीप्रादुर्भावप्रकारं वर्णयितुं प्रथमपद्ये प्रादुरभूदिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

भजे दुग्धाम्बुधिं यत्र परिष्कर्तुं हरेरुरः ।
कठिनं सुकुमारं च रत्नं प्रादुरभूद् द्विधा ॥ १ ॥

भजे इति । यत्र यस्मिन् हरेर्भगवतः उरो वक्षस्तत्परिष्कर्तुमलङ्कर्तुम् । परिष्कारो विभूषणमित्यमरः । कठिनं कौस्तुभाख्यं सुकुमारं लक्ष्म्याख्यमिति द्विविधं रत्नं प्रादुरभूत्प्रकटीबभूव तं दुग्धाम्बुधिं क्षीरसागरं भजे । अत्र स्तबके सूचनीयस्य तद्व्यपदेशकस्य प्रादुर्भावस्याऽस्मिन्नमनपद्ये प्रादुरभूदिति पदेन सूचनान्मुद्रालङ्कारः । एवमग्रे ऽपि नक्षत्रमालास्तबकमन्तरेण प्रतिस्तबकनमनपद्ये तत्तल्लिङ्गदर्शनान्मुद्रालङ्कारो ज्ञेयः । तथैव मत्कृतपौलस्त्यादीति प्रथमस्तबकनमनपद्यमारभ्याऽग्रिमप्रतिस्तबकनमनपद्येषु श्रीमद्रामायणीयकथाप्रक्रमाऽनुरोधेन तत्तत्स्तबकलिङ्गदर्शनान्मुद्रालङ्कार ऊह्यः ॥ १ ॥

चतुर्मुखादीन् जगदम्ब डिम्भान्
दुग्धैर्बहून् वर्धयितुं समृद्धैः ।

---

१ अथ द्वितीयेन प्रादुर्भावस्तबकेन लक्ष्मीप्रादुर्भावं वर्णयितुकामः प्रथमं यत्र नारायणवक्षःस्थलमलङ्कर्तुं कठिनं कौस्तुभाख्यं सुकुमारं रमाभिधं च रत्नद्वयमाविरभूत्तं रत्नाकरं भजे इत्याह ।

२ इदानीं चतुर्वदनादीन् बहून् शिशून् बहुलैः क्षीरैः पोषयितुं क्षीरसागरे क्षीरिण्या कामधेन्वा साकं भवती प्रादुर्बभूवेति भवती

पयःपयोधौ भवती दयालुः
सत्यं प्रजज्ञे सह कामधेन्वा ॥ २ ॥

चतुरिति । हे जगदम्ब, चतुर्मुखो ब्रह्मा तदादीन् बहून् डिम्भान् पोतः पाको ऽर्भको डिम्भ इत्यमरः । समृद्धैर्बहुभिर्दुग्धैर्वर्धयितुं पयःपयोधौ दयालुर्भवती सत्यं कामधेन्वा सह प्रजज्ञे जाता । अत्र चतुर्मुखादिडिम्भतृप्तिदायित्वरूपहेतोः सिद्धविषयफलोत्प्रेक्षालङ्कारः । उपेन्द्रवज्रावृत्तम् ॥ २ ॥

त्वयोज्ज्वलं दुग्धपयोधिमध्ये महोद्वयं देवि सहोदियाय ।
हरेरुरोभूषणमेकमासीदन्यच्छिरोभूषणमष्टमूर्तेः ॥ ३ ॥

त्वयेति । हे देवि ! दुग्धपयोधेर्मध्ये त्वया सह महोद्वयं महस्तूत्सवतेजसोरित्यमरात् । तेजोद्वयम् उदीयाय उत्पन्नं, तयोरेकं हरेः उरः भूषयतीति उरोभूषणं कौस्तुभाख्यं अन्यत्तु अष्टमूर्तेः शिवस्य शिरो भूषयतीति शिरोभूषणं चन्द्राख्यम् आविरासीत्प्रकटीबभूव(?) । उपेन्द्रवज्रावृत्तम् ॥ ३ ॥

जीवञ्जीवं प्रत्युदारां समृद्धिं
कर्तुं हर्तुं कञ्जवासे तमांसि ।

---

प्रादुर्भावे चतुर्मुखादिशिशुपोषणमेव हेतुरित्याह ।

३ सम्प्रति सत्स्वप्यन्येषु रत्नेषु कौस्तुभचन्द्रयोर्यथायथं विष्णुवक्षःस्थलशिवमौलिभूषणताऽऽप्तिर्भवत्या सहोदयादेवेत्याह ।

४ हे कमलवासिनि ! जीवञ्जीवं प्रति ( प्रतिचकोरं प्रतिप्राणिनं च प्रति ) महतीं समृद्धिं ( तृप्तिम् ऐश्वर्यं च ) कर्तुं तमांसि ( अन्धकारान् अज्ञानानि दारिद्र्याणि वा च ) हर्तुं, तथा सकलं स-

सत्त्रं त्रातुं सत्कदम्बं पुरा ऽब्धे-
श्चान्द्री मूर्तिर्जायते तावकी च ॥ ४ ॥

जीवमिति । हे कञ्जवासे कमलवासिनि ! जीवञ्जीवं च-कोरं प्राणिनं प्राणिनं प्रति च उदारां समृद्धिं कर्तुं, तथा त-मांसि हर्तुं तिमिराण्यज्ञानानि च हर्तुं, पुनः सतां नक्षत्राणां साधूनां च कदम्बं त्रातुं, चन्द्रस्येयं चान्द्री तवेयं तावकी च मूर्तिः पुरा जायते ऽभूत् यावत्पुरानिपातयोरिति निपातना-द्भूतार्थे लट् । शालिनीवृत्तम् । दीपकश्लेषालङ्कारौ ॥ ४ ॥

विश्वासेचनकं मुखं तव पयःसिन्धोरुदञ्चद्यदा
शङ्कित्वा विगलत्कलङ्कमपरं चन्द्राङ्कुरं शङ्करः ।
न्यस्तं मस्तपदे विधुं प्रथमतो नूनं भृशं न्यूनमि-
त्यम्ब भ्रंशयितुं स्तुवन्निव शिरःकम्पं रमे निर्ममे ॥ ५ ॥

विश्वेति । हे अम्ब रमे ! विश्वस्य जगत आसेचनकं मुहुर्मु-हुर्दृष्टमपि न तृप्तिजनकं यदाहाऽमरसिंहः—'तदासेचनकं तृप्तेर्ना-स्त्यन्तो यस्य दर्शना'दिति । पयःसिन्धोर्यदा तव मुखम् उ-दञ्चदुदयं प्राप्नुवत् तदा शङ्करः विगलत्कलङ्कं कलङ्कशून्यम् अ-

---

त्कदम्बं ( नक्षत्रसमूहं साधुसमुदायं च ) त्रातुं चान्द्रमसी त्वदीया च मूर्तिः समुद्रादाविरासेति श्लेषेण चन्द्रमूर्तिसाम्यं भगवत्यामाह ।

५ अथ बहुशो दृश्यमानमप्यतृप्तिजनकं तव मुखमुदधेरुदयद् दृष्ट्वा निष्कलङ्कं चन्द्रान्तरं प्रादुर्भवदाशङ्क्य शिवः मौलौ विधृतपूर्वचन्द्र एतस्मान्न्यून इति हेतोः तं शिरसः पातयितुं त्वन्मुखं स्तुवन्निव शिरः कम्पयामासेति उत्प्रेक्षमाणः प्रसिद्धचन्द्रस्य सकलङ्कस्य निष्कलङ्कात् भगवतीमुखचन्द्रान्न्यूनत्वं वर्णयन् कमप्युत्कर्षं भगवतीमुखस्य दर्शयति ।

परं द्वितीयं चन्द्राङ्कुरं शङ्कित्वा स्तुवन्निव प्रथमतः पूर्वं मस्तके शिरःस्थाने न्यस्तं स्थापितं विधुं भृशमत्यन्तं न्यूनमिति तं भ्रंशयितुमधः पातयितुं शिरसो मस्तकस्य कम्पं निर्ममे निर्मितवान् । नूनमित्यसिद्धविषयहेतूत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितम् ॥ ५ ॥

दातुं त्वां पुरुषोत्तमाय तनयां पद्मे गृहीतव्रतः
प्रादात् कामगवीं मुदे सुमनसां पानीयमप्यम्बुधिः ।
कं चित्सप्तिमनुत्तमं मघवते कल्पद्रुमं चेष्टदं
सर्वज्ञाय सितांशुकं धृतजटावर्गाय दिग्वाससे ॥ ६ ॥

दातुमिति । हे पद्मे ! पुरुषोत्तमाय कन्यां त्वां दातुं गृहीतं व्रतं येन सोम्बुधिः कामगवीं कामधेनुं गोरतद्धितेति टचि ङीप् । पातुं योग्यं पानीयममृतमपि सुमनसां देवानां के चित् कमप्यनुत्तमं श्रेष्ठं सप्तिमश्वं हयसैन्धवसप्तय इत्यमरः । इष्टदं कल्पद्रुमं मघवते इन्द्राय पुनः धृतो जटावर्गो येन तस्मै दिग्वाससे दिगम्बराय सर्वज्ञाय सितांशुकं शुक्लवस्त्रं पक्षे सिताः शुभ्रा अंशवः किरणा यस्य स हिमांशुः स एव सः स्वार्थे कप्रत्ययः । मुदे हर्षाय प्रादादिति सर्वान्वयेषु ज्ञेयम् । अत्र रत्नाकरऋद्धिचरितवर्णनादुदात्तः गूढाऽसिद्धविषयफलोत्प्रेक्षा श्लेषः परिकराङ्कुरश्चेत्यलङ्काराः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

---

६ साम्प्रतं त्वत्पिता समुद्रो हरये त्वां दातुं गृहीतनियमो देवप्रसादनाय कामधेनुम्, अमृतं, श्रेष्ठमुच्चैःश्रवसं हयं, कल्पवृक्षं च कामदं, दिगम्बराय जटिलाय सर्वज्ञाय शिवाय च सितांशुकं ( चन्द्रं शुभ्रवस्त्रं च ) अदादिति देवानां तत्तत्प्राप्तिस्त्वद्विवाहाङ्गभूतदानानिदानेनेति प्रशंसति ।

हर्षादब्धेरमृतकलशं स्वाददे देवसङ्घः
श्रीमानुच्चैःश्रवसममरक्ष्मापतिश्चन्द्रमीशः ।
तेषामेकं किल न जगृहे त्वां शुभामेव शार्ङ्गी
पद्मे सारग्रहणनिपुणः पारिशेष्याद् ग्रहीतुम् ॥ ७ ॥

हर्षादिति । हे पद्मे ! अब्धेः सकाशाद्देवसङ्घस्तु हर्षादमृतकलशम् आददे जग्राह, श्रीमानमराणां क्ष्मापतिः राजा इन्द्रः उच्चैःश्रवसं तत्संज्ञमश्वं जग्राह, ईशः शङ्करस्तु चन्द्रं जगृहे स्वीचकार, शार्ङ्गी हरिस्तु तेषां पूर्वपदार्थानां मध्ये एकं किमपि न जगृहे । किं तु सारो मुख्यांशः अराभिर्धाराभिः सहितं सारं चक्रं च तस्य ग्रहणे निपुणः । पारिशेष्यादशेषत्वेन सर्वथेति यावत् । परिरत्र वर्जनार्थः । शुभां त्वामेव जगृहे । ग्रह ग्रहणे, कर्तरि लिट् । अत्र सारग्रहणनिपुण इति स्वभाववर्णनात् स्वभावोक्तिः श्लेषश्च । मन्दाक्रान्तावृत्तम् ॥ ७ ॥

छाया मुखे जननि चान्द्रमसी तवाऽस्मिन्
कल्पद्रुपल्लवरुचिः करयोः पदोश्च ।

---

७ इदानीं समुद्रात्क्रमशो रत्नेष्वाविर्भवत्सु देवसमूहे सुधाऽमृतं, देवेन्द्रे चोच्चैः श्रवसं, शिवे च चन्द्रं गृहीतवति सारग्रहणनिपुणः (चक्रधारणकुशलः सारग्राही च) हरिः परिशिष्टां सारभूतां त्वामादातुं तेषां रत्नानां मध्यादेकमपि नोपाददे इति सर्वेषु रत्नेषु भगवत्या मुख्यत्वं दर्शयति ।

८ हे मातः ! त्वदास्ये चन्द्रकान्तिः, हस्तयोश्चरणयोश्च कल्पवृक्षकिसलयशोभा, वचने च सुधामाधुर्यमस्ति 'सहोदराः कोक-

सौधो रसो वचसि, तद्वचनं न मिथ्या
भ्रातृश्रियं सहभुवः परिबिभ्रतीति ॥ ८ ॥

छायेति । हे जननि ! चन्द्रमसः इयं चान्द्रमसी छाया कान्तिः तवाऽस्मिन्मुखे चेत्यपरं करयोः पदोश्च कल्पद्रोः कल्पवृक्षस्य पल्लवानां रुचिः, तथा सुधाया अयं सौधो रसस्तव वचसि अस्ति यतः तस्मात्सह भवन्ति ते सहभुवः सोदरा भ्रातृणां परस्पराणां श्रियं शोभां बिभ्रति धारयन्तीति यद्वचनं तन्न मिथ्येत्यर्थः । इन्द्रवज्रावृत्तम् । निदर्शनैतिह्यप्रमाणालङ्कारौ ॥ ८ ॥

सुधादयः सन्तु तथापि तोयधि-
र्ध्रुवं भवत्यैव भवत्यपत्यवान् ।
गुणा रमे जाग्रतु विक्रमादयो
गुणी महोदारतयैव भूपतिः ॥ ९ ॥

सुधादय इति । सुधादयः सन्तु, तथापि तोयधिः ध्रुवं निश्चयेन भवत्या त्वयैव प्रशस्तमपत्यमस्याऽस्तीत्यपत्यवान् भवति । प्रशंसायां मतुप् । यतो विक्रमादयो गुणा जाग्रतु जागरूकतया तिष्ठन्तु तथापि भूपतिः राजा महती चासौ उदारता च तयैव गुणी इत्युच्यते । वंशस्थं वृत्तम् । दृष्टान्तालङ्कारः ॥ ९ ॥

---

रश्रियं वहन्ती'ति लोकोक्तिः सत्यैवेति वदन् सर्वरत्नच्छाया त्वयि निवसतीत्याह ।

९ सत्स्वप्यन्येषु रत्नेष्वपत्यभूतेषु, विक्रमादिगुणेषु सत्स्वपि समधिकौदार्यगुणेनैव यथा भूपतिरुच्यते तथैव महोदारया भवत्यैव समुद्रोऽपत्यवानित्याह ।

भ्राम्यत्पन्नगवक्त्रकोटरमरुन्नुन्नोर्मिसंघट्टनाद्
झाटित्योर्ध्वविसारिदुग्धकणिकानिष्पन्नपुष्पाञ्जलिः ।
सिन्धुर्मुग्धवसुन्धराभृदुदयद्धुन्धुंध्वनिच्छद्मना
स्तुत्वा माधवमद्भुतामलभत त्वामम्ब कन्यामणिम् ॥ १० ॥

भ्राम्यदिति । भ्राम्यतः पन्नगस्य वासुकेर्वक्त्रमेव कोटरं तस्मान्निर्गच्छता मरुता वायुना नुन्नानां प्रेरितानामूर्मीणां लहरीणां सङ्घट्टनया परस्परसङ्घर्षेण झटितीत्यस्य भावो झाटित्यं शीघ्रत्वं तेन विसारिणीभिर्दुग्धस्य कणिकाभिर्निष्पन्नः संपन्नः पुष्पाञ्जलिर्यस्य सः सिन्धुः समुद्रः मुग्धाः सुन्दरा ये वसुन्धराभृतो मन्दराद्रेः सकाशादुदयन्त उद्भवन्तः ये धुन्धुमिति ध्वनयः तेषां छद्मना कपटेन माधवं विष्णुं स्तुत्वा प्रस्तुत्य अद्भुतां कन्यामणिं कन्यारत्नं त्वां रमामलभत प्राप्तवान् । रत्नं मणिर्द्वयोरित्यमरात्स्त्रीलिङ्गोऽपि । रूपकाऽपन्हुतिगूढहेतूत्प्रेक्षालङ्काराः । शार्दूलविक्रीडितम् ॥ १० ॥

सिन्धोरोधःस्थपुटविलुठन्मन्थलब्धाऽवतारे-
धुन्धुङ्कारैस्त्वदुदयमहे दुन्दुभिश्रीमति श्रीः ।

---

१० इदानीं श्रीप्राप्तिर्भगवत्समाराधनादेव नाऽन्यथेति विचार्य रत्नाकरो मथनसमये भ्राम्यद्वासुकिमुखकुहरवातप्रेरितवीचीसङ्घट्टनजोच्छलत्क्षीरसीकरैर्दत्तकुसुमाञ्जलिः सन् मथ्यमानाऽलोड्यमानमन्दराचलसमुत्थधुन्धुन्ध्वनिमिषेण भगवन्तं स्तुत्वा कन्यारत्नं त्वां प्रापदित्याह ।

११ हे रमे । समुद्रपूरमध्यप्रविचलन्मन्थरूपमन्दराचलप्रासजन्मभिर्धुन्धुंशब्दैर्दुन्दुभिध्वानशोभाधारिणि त्वदावि॰र्भावोत्सवे

प्राञ्चो झञ्झाऽनिलपटुनटोन्नाटितप्रौढवीची-
वल्ली*हल्लीसकमकलयन्नन्तरुल्लीढहर्षाः ॥ ११ ॥

सिन्धोरिति । हे रमे ! सिन्धोः सागरस्य रोधःस्थपुटे तीरमध्ये विलुठता प्रचरता मन्थेन मन्दराचलेन कृत्वा लब्धोऽवतारो जन्म यैस्तैर्धुन्धुंकारैर्धुन्धुम् इति शब्दैः दुन्दुभिश्रीमति भेरीशोभाभाजि भेरी स्त्री दुन्दुभिः पुमानित्यमरः । त्वदुदयमहे तव जन्मोत्सवे अन्तर्मनसि उल्लीढः उत्कृष्टतमास्वादितः हर्षो यैस्ते प्राञ्चः पुरातना जनाः झञ्झाऽनिल एव पटुनटः कुशलनर्तकः तेनोन्नाटितानां नर्तितानां प्रौढानां वीचीवल्लीः लहरीलताः(?)हल्लीसकं नर्तनविशेषं कान्तानां मण्डलीनृत्तं विदुर्हल्लीसकं बुधा इति मेदिनी । अकलयन्नबुध्यन्त । कल सङ्ख्याने इत्यस्माल्लङ् । रूपकालङ्कारः । मन्दाक्रान्तावृत्तम् ॥११॥

बर्हं भ्रान्त्वा चिकुरमुदधेरुद्भवन्त्या भवत्या
बद्धा मन्थक्षितिभृति सुरैः पन्नगाः खिन्नगात्राः ।
तत्कालैकोचितमतिजुषस्त्रासतस्तस्य चेष्टां

---

साम्प्रतमप्यान्तरङ्गाः पुरातना देवादयो झञ्झामारुतरूपनटपरिकम्पितोर्मिलतामण्डलीनृत्तमपश्यन्निति साधारणजनैरप्यपत्यजन्मोत्सवे नृत्यादि दृश्यते, तदुचितमेव त्वज्जन्मोत्सवानन्दनिर्भराणां देवानां तथा करणमित्याह ।

१२ हे कमलाक्षप्रेयसि ! समुद्रादाविर्भवन्त्या भवत्याः केशपाशं मयूरपिच्छं मत्वा प्रत्युत्पन्नबुद्धयः सुरैर्मन्थाचले बद्धाः सर्पा भीताः

---

* वीचीर्वल्ली—इति १ पु. ।

राजीवाक्षप्रणयिनि भृशं रज्जुतामभ्यनैषुः ॥ १२ ॥

बर्हमिति । हे राजीवाक्षस्य हरेः प्रणयिनि प्रिये ! मथ्नक्षितिभृति मन्दरगिरौ सुरैर्देवैर्बद्धा नद्धा अत एव खिन्नानि गात्राणि येषां ते पन्नगाः सर्पाः । जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यामिति पाक्षिकं बहुत्वम् । उदधेः सागरादुज्जृम्भन्त्या उदयन्त्या भवत्यास्तव चिकुरं केशपाशं दृष्ट्वा बर्हं मयूरपिच्छमिति भ्रान्त्वा स चासौ कालश्च तस्मिन्नेका उचिता चासौ भनिश्च तां जुषन्ते ते तूष्णीम्भूता इति यावत् । त्रासतः भयात् अस्य मन्थस्य इष्टामपेक्षितां रज्जुताम् । अभ्यनैषुरगच्छन् । यदा मयूरत्रासाभिश्वेष्टा जातास्तदा तद्रज्जुत्वेनैव तन्मन्थस्येष्टां रज्जुतां प्रापुरिति भावः । भ्रान्तिकाव्यलिङ्गरूपकाणि । मन्दाक्रान्तावृत्तम् ॥ १२ ॥

आलोक्य तत्रभवतीमवतीर्णरूपां
वृष्टा मुदा सुमनसः सुमनःप्रधानैः ।
पिण्डीभवद्भिरखिलाम्ब पयःपयोधौ
डिण्डीरखण्डनिवहैः सममप्लवन्त ॥ १३ ॥

आलोक्येति । हे अखिलाऽम्ब जगन्मातः ! तत्र पयःपयोधौ भवतीं त्वां यद्वा तत्रभवतीं पूज्यां 'पूज्ये तत्रभवानत्रभवांश्च

---

सन्तो निश्चेष्टा भूत्वा मन्थापेक्षितां रज्जुताम् अभिनीतवन्त इति केशपाशं सर्पाणां बर्हभ्रान्तिवर्णनपुरस्सरं तत्तुल्यतां वर्णयति ।

१३ पूज्यां भवतीं समुद्रादाविर्भूतां निरीक्ष्य हर्षेण देवैर्वृष्टानि कुसुमानि समुद्रजले सङ्घीभवद्भिः फेनपुञ्जैस्तुल्यमप्लवन्तेति स्वजन्मोत्सवे देवाः सानन्दं पुष्पवृष्टिमकुर्वन्नित्याह ।

भगवानपी'त्यभिधानात् । अवतीर्णरूपामुदितमूर्तिम् । आलोक्य दृष्ट्वा सुमनसां देवानां प्रधानैः श्रेष्ठैः इन्द्रादिभिः मुदा हर्षेण वृष्टाः सुमनसः पुष्पाणि । स्त्रियः सुमनसः पुष्पमित्यमरः । ताश्च पिण्डीभवद्भिः पुञ्जीभवद्भिः डिण्डीरस्य फेनस्य खण्डानां शकलानां निवहैः समूहैः डिण्डीरो ऽब्धिकफः फेन इत्यमरः । समं सह आप्लवन्ताऽतरन् । सर्वैर्देवैस्त्वदुदये पुष्पवृष्टिः कृतेति भावः । वसन्ततिलकावृत्तम् ॥ १३ ॥

अम्ब स्वयं त्वयि चिरादवतीर्णवत्यां
मन्थश्रमव्यपनयाय मखाऽशनानाम् ।
श्रान्ताऽहिरज्जुकबलीकृतिचिन्तयेव
क्षीरोदरोधसि शनैरनिलश्चचार ॥ १४ ॥

अम्बेति । हे अम्ब जगन्मातः ! त्वयि चिराद्बहुकालेन स्वयं स्वतः अवतीर्णवत्याम् उद्भवन्त्यां सत्यां मखे यज्ञे अशनं येषां ते मखाशना देवास्तेषां मन्थो मन्थनं तेन जातस्य श्रमस्य श्रान्तेर्व्यपनयाय दूरीकरणाय क्षीरोदस्य दुग्धोदधेः रोधसि तीरे । कूलं रोधश्च तीरमित्यमरः । शनैर्मन्दम् अनिलो वायुश्चचार सञ्चारं कृतवान् । तन्मन्दवहने हेतुमाह—श्रान्ताभिः अहिरज्जुभिः या कबलीकृतिः कबलीकरणं भक्षणमिति यावत् । तस्य चिन्तयेव । स्याच्चिन्ता स्मृतिराध्यानमित्यमरः । वाताशनत्वात्तेषामिति हेतूत्प्रेक्षा । वसततिलकावृत्तम् ॥ १४ ॥

---

१४ अथ त्वदाविर्भावेन सफलमनोरथेषु देवेषु मथनव्यापारपरिश्रान्तेषु सत्सु तच्छ्रमपरिहाराय मन्थरज्जुभूतवासुकिसर्पान्निजभक्षणभीत्येव मरुन्मन्दं मन्दं समुद्रतीरे आववाविति शुभशकुनमाह ।

सान्द्रोत्कण्ठामसृणमधुजित्सादराऽपाङ्गधारा-
सध्रीचीभिः श्वसनविसरद्दुग्धवीचीभिरब्धिः ।
उद्वाहाख्यं कमपि भवतीमुत्सवं लप्स्यमानां
मातस्तातो मधुरमनयन्मङ्गलस्नानकर्म ॥ १५ ॥

सान्द्रेति । हे मातः ! त्वदीयस्तव अयं तातः पिता ऽब्धिः सिन्धुः उद्वाहो विवाहस्तदाख्यं तत्संज्ञकं कमप्यनिर्वचनीयम् उत्सवं लभ्यमानां प्रापयन्तीं(?)भवतीं त्वां प्रति सान्द्रया निविडया उत्कण्ठया उत्सुकतया मसृणाभिः स्निग्धाभिः सान्द्रः स्निग्धस्तु मेदुरः, चिक्कणं मसृणं स्निग्धमित्यमरौ । मधुजितो हरेः सादराभिरादरयुक्ताभिरपाङ्गधाराभिः कटाक्षसम्पातैः सध्रीचीभिः समानाभिः श्वसनेन वायुना विसरन्तीभिर्दुग्धस्य वीचीभिः मधुरं सुन्दरं मङ्गलस्नानरूपं कर्म प्रति अनयत्प्रापयामासेत्यर्थः । मन्दाक्रान्तावृत्तम् । उपमागूढोत्प्रेक्षालङ्कारौ ॥ १५ ॥

अथ प्रादुर्भूतां लक्ष्मीं ध्यायति—

सुधोदधिसमुल्लसत्सुरतरुच्छटान्तर्गते
मनोज्ञमणिमण्डपे महति रत्नसिंहासने ।

---

१५ इदानीं विवाहोत्सवे प्रथमं पतिंवरां बन्धवो मङ्गलस्नानं कारयन्तीति लोकानुसारेण त्वत्पिता दुग्धोदधिरुद्वाहमहोत्सवमचिरात् प्राप्स्यमानां त्वां घनतरोत्कण्ठितभगवत्सादरकटाक्षपरम्परासमानाभिर्मारुतप्रविचलद्दुग्धोर्मिभिरस्नपयदित्याह ।

१६ अथ जयलाभाय सुधासागरमध्यगतकल्पवृक्षवाटीमध्यस्थसुन्दरमणिमण्डपास्थितरत्नसिंहासनमध्यगतकमलोपविष्टां हे-

स्थितां मणिसरोरुहे त्रिदशसुन्दरीसेवितां
जयाय भवतीमहं जननि सन्ततं चिन्तये ॥ १६ ॥

सुधेति। हे जननि मातः! सुधोदधेः क्षीरसागरात्समुल्लसन्तीनां निर्गच्छतां(?)सुरतरुच्छटानां कल्पवृक्षपङ्क्तीनाम् अन्तर्मध्यं गते मनोज्ञे सुन्दरे मनोज्ञं मञ्जु मञ्जुलमित्यमरः। मणिमण्डपे रत्नखचितसभायां महति विस्तीर्णे रत्नप्रचुरे सिंहासने। नृपासनं तु यद्भद्रासनं सिंहासनं तु तदित्यमरः। स्थितामासीनां त्रिदशानां देवानां सुन्दरीभिरिन्द्राण्यादिभिः सेवितां भवतीं त्वां जयाय उत्कर्षप्राप्तये सततं निरन्तरं यथा तथा अहं चिन्तये ध्यायामीत्यर्थः। पृथ्वीवृत्तम् ॥ १६ ॥

अभ्यर्णस्फुरदप्सरःकरधृतैरुद्दामदुग्धाम्बुधि-
स्वैरोत्सृत्वरवीचिकासहचरैः संवीजितां चामरैः।
हस्तालङ्कृतपङ्कजामभिनवाऽऽकल्पैरनल्पैः शुभा-
मम्ब त्वामुषसि स्मरामि जगतामातङ्ककूलङ्कषाम् ॥ १७ ॥

अभीति। हे अम्ब! अभ्यर्णे समीपं स्फुरन्तीभिः करैर्धृतैः उद्दामानां महतीनां दुग्धाम्बुधेः सकाशात्स्वैरं यथेच्छम् उत्सृत्वरीणाम् ऊर्ध्वप्रसारिणीनां वीचिकानां सहचरैर्मित्रैः चामरैः स-

---

वाऽङ्गनोपसेवितां भगवतीं ध्यायति।

१७ हे मातः! समीपभागविलसद्देवाङ्गनाकरकलितैर्दुग्धसागरनिरर्गलोत्सर्पत्कल्लोलतुल्यैश्चामरैरुपवीजितां करकलितकमलां नवभूषणभूषितां जगत्परितापसमूलनाशिनीं त्वां प्रातः स्मरामीत्याह।

ऋगग्वीजितां तथा हस्तेनाऽलङ्कृतं पङ्कजं यस्यास्तां पुनरनल्पैर्ब- हुभिः अभिनवैर्नूतैराकल्पैर्भूषणैः शुभां कल्याणीं तथा जगता- मातङ्कस्य । रुक्तापशङ्कास्वातङ्क इत्यमरः । कूलङ्कषां नाशिका- मिति यावत् । सर्वकूलाभ्रकरीषेष्विति खच् । त्वाम् उषसि काले स्मरामि । 'ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हित'- मित्यभिधानात् । अत्राऽप्सरोगतरतिः कविगतां तां पुष्णातीति प्रेयोलङ्कारः । शार्दूलविक्रीडितम् ॥ १७ ॥

भूयासुस्ते त्वदीया मयि हरिदयिते स्थूललक्ष्याः कटाक्षा
यल्लिप्साव्यग्रभर्गाद्यमरविरचितैरञ्जलीनां प्रपञ्चैः ।
मन्थाद्रिक्षोभदुःस्थं कलशजलनिधेर्मध्यमुत्सृज्य वेलां
प्राप्ते रेजे सरोजैरिव नवरजनीनायकाऽऽलोकमूकैः ॥ १८ ॥

भूयासुरिति । हे हरिदयिते ! येषां कटाक्षाणां लिप्सया लब्धुमिच्छया व्यग्रैर्भर्गाद्यमरैर्विरचितैः अञ्जलीनां प्रपञ्चैः स- मूहैर्मन्थाद्रेः क्षोभेण दुःस्थं वासाऽनर्हं कलशजलनिधेर्मध्यम् उत्सृज्य त्यक्त्वा वेलां तटं प्राप्तैः पुनः नवस्य तत्कालोदितस्य रजनीनायकस्य चन्द्रस्याऽऽलोकेन प्रकाशेन मूकैर्मुकुलितैः । आलोकौ दर्शनोद्द्योतौ इत्यमरः । सरोजैः कमलैरिव रेजे शु- शुभे । भावे लिट् । ते प्रसिद्धास्त्वदीयास्तावकाः स्थूललक्ष्या- श्चतुर्विधपुरुषार्थदातारः । स्युर्वदान्यस्थूललक्ष्यदानशौण्डा ब-

---

१८ हे हरिप्रिये ! यत्प्रेप्सोत्कण्ठितशिवादिदेवविधृतैरञ्जलि- पुञ्जैर्मन्दरपर्वतविलोडनसम्बाधमुदधिमध्यमुत्सृज्य कूलं प्राप्तैरभिन- वचन्द्रदर्शनमुकुलितैः कमलैरिवाऽशोभि, ते सकलैश्वर्यदायिनस्ताव- वकाः कटाक्षा मयि पतन्त्वित्याशासे ।

द्रुमदे इत्यमरः । कटाक्षा अपाङ्गदर्शनानि भूयासुः । आशंसायां लिङ् । काव्यलिङ्गस्वरूपोत्प्रेक्षालङ्कारौ । स्रग्धरावृत्तमिदम् ॥ १८॥

अग्रे मुरारेररविन्दपीठे
हरित्करीन्द्रैरभिषिच्यमानाम् ।
अवेक्ष्य पुत्रीमखिलेश्वरीं त्वा-
मानन्दसिन्धौ निममज्ज सिन्धुः ॥ १९ ॥

अग्रे इति । अरविन्दपीठे हरित्सु दिक्षु । दिशस्तु ककुभः काष्ठा आशाश्च हरित इत्यमरः । स्थितैः करीन्द्रैर्गजैरित्यर्थः । अभिषिच्यमानां पुनः अखिलस्य जगत ईश्वरीं नियन्त्रीं त्वां कन्यां मुरारेर्हरेरग्रे अवेक्ष्य सिन्धुरपि त्वदीयः पिता आनन्दस्य सिन्धौ निममज्ज मग्नो बभूव । उपजातिर्वृत्तम् । रूपकालङ्कारश्च ॥ १९ ॥

प्रसभमुदधिकन्ये पश्यतां देवतानां
परमपुरुषवक्षःपीठमाढौकथास्त्वम् ।
सह दयिततमेन स्वैरकेलौ सतीनां
न खलु निजशिशूनां सन्निधिर्व्रीडहेतुः ॥ २० ॥

प्रसभमिति । हे उदधिकन्ये ! देवतानां पश्यतां पश्यतो दे-

---

१९ कन्याया योग्यवरलाभः पितुः परानन्दजनक इति विवाहोत्सवे हरेः पुरतः कमलासनोपविष्टां दिग्गजैरभिषिच्यमानां जगदीश्वरीं त्वामवलोक्य त्वत्पिता समुद्र आनन्दसागरे ममज्जेत्याह ।

२० हे सागरसुते ! सर्वेषु देवेषु पश्यत्सु हरेरुरःपीठं त्वं निःसङ्कोचमारूढवतीति सतीनां स्त्रीणां निजप्रियतमेन सह यथेच्छक्रीडायां शिशुसामीप्यं न लज्जाकरमित्युचितमेवेत्याह ।

वाननाहत्येत्यनादरे षष्ठी । त्वं प्रसभं हठात् परमपुरुषस्य हरेर्वक्षःपीठमुरःस्थलं प्रति आढौकथाः आरोहणं कृतवती । ढौकृ गतावित्यस्माल्लङ् । तथा हि—सतीनां स्त्रीणां दयिततमेन प्रियतमेन सह स्वैरकेलौ यथेष्टक्रीडायां शिशूनां बालानां सन्निधिः सामीप्यं व्रीडहेतुर्लज्जाहेतुर्न भवति खलु निश्चयेनेत्यर्थः । मालिनीवृत्तम् । अर्थान्तरन्यासालङ्कारः ॥ २० ॥

कलितकलशसागरोर्मिगङ्गं
कमपि मुकुन्दमहःकलिन्दजौघम् ।
कनकसुहृदभूषयत्तवाभा-
विततिरतीव रमे सरस्वतीव ॥ २१ ॥

कलितेति । हे रमे ! कनकस्य सुहृदारक्तत्वात्तत्सदृशीत्यर्थः । तव आभाया विततिर्विस्तारः कलिता स्वीकृता कलशसागरस्य उर्मिर्लहर्येव गङ्गा येन तं कमपि अनिर्वचनीयं मुकुन्दमह एव श्यामवर्णत्वात्कलिन्दजाया यमुनाया ओघः प्रवाहस्तं प्रति सरस्वतीव अभूषयत् । शोभयति स्म । इत्यनेनाऽत्र लक्ष्मीप्रादुर्भावे त्रिवेणीसङ्गमः सूचितः । पुष्पिताग्रावृत्तम् ॥ २१ ॥

---

२१ अथ सुधासमुद्रतरङ्गरूपगङ्गासङ्गतं नारायणदेहकान्तिस्वरूपं यमुनाप्रवाहं कनकमनोज्ञा भवतीकान्तिः सरस्वतीवाऽतीव शोभयामासेति सोऽयं त्रिवेणीसङ्गमः सम्पन्न इति तत्र सकलदुरितानिबर्हणाक्षमत्वं सूचयन्नाह ।

द्युनदीशिशिरं शिरः पुरारे-
र्भजतीन्दुर्भवती दयारसार्द्रम् ।
हृदयं मुरहन्तुरब्धिजे वा-
मुचितैव स्थितिरुद्भवाऽनुरूपा ॥ २२ ॥

द्युनदीति । हे अब्धिजे ! इन्दुश्चन्द्रः द्युनद्या भागीरथ्या शिशिरं शीतलं पुरारेः शङ्करस्य शिरो मस्तकं भजति, भवती त्वं तु दयारसेन आर्द्रं स्निग्धं मुरहन्तुर्मुरारेर्हृदयं भजति, अतः वां युवयोर्भ्रातृभगिन्योः स्थितिः आसनम उद्भवस्योत्पत्तेः अनुरूपा सदृशी उचिता योग्यैव । क्षीरोदादुत्पन्नयोर्भवतोः सरसस्थले स्थितिरुचितेति कार्यस्य कारणसंमत्ववर्णनात्समालङ्कारः । औपच्छन्दसिकं वृत्तम ॥ २२ ॥

कमले तोषयितुं त्वां
कान्तभुजान्तरनिशान्तमुपयान्तीम् ।

कमले इति । हे कमले लक्ष्मि ! कान्तस्य हरेर्भुजान्तरमेव निशान्तं सदनं निशान्तपस्त्यसदनमित्यमरः । उपयान्तीं प्राप्नवतीं त्वां तोषयितुं हर्षयितुम अथ अस्मै हरये ऽम्बुधिः क्षीराब्धिः मन्नं पुराणमपि अरीणं स्यम्नं रीणं स्नुतं स्नुतांम-

---

२२ हे समुद्रजे ! चन्द्रस्तावद् गङ्गाप्रवाहशीतलं शिवशिरः, भवती च करुणारसार्द्रं मुरारेरुरो भजतीति सोदरयोः सरससागरसमुद्भूतयोर्युवयोः सरसस्थलाश्रयणं युक्तमित्याह ।

२३ हे रमे ! प्रियभुजान्तरालरूपान्तःपुरगतां भवतीं प्रसाद-

प्रायच्छत्तमथाऽस्मै

प्रत्नं रत्नगणमम्बुधिररीणम् ॥ २३ ॥

इति श्रीमद्वेङ्कटाध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे प्रादुर्भावस्तबको द्वितीयः सम्पूर्णतामगमत् ॥ २ ॥

त्यपराव रीणो जीर्णः स न भवतीत्यरीणो नव्यः अनुपभुक्तमित्यर्थः । रत्नगणं रत्नसमूहं प्रायच्छद् दत्तवान् । विवाह समये जामात्रे ऽत्यद्भुतं यौतकं ददाविति भावः । गूढोत्प्रेक्षा । घनचपला गीतिर्वृत्तम् ॥ २३ ॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन विरचितायां बालबोधिन्याख्यायां श्रीलक्ष्मीसहस्रटीकायां प्रादुर्भावस्तबको द्वितीयः ॥ २ ॥

---

यितुं पयोधिः पुरातनमनुपभुक्तपूर्वं मणिगणं त्वत्प्रियाय विवाहमहोत्सवे यौतकरूपेण ऽयतरदित्याह ।

इति श्रीमानवल्ल्युपाख्यतैलङ्गरामशास्त्रिविरचितायां लक्ष्मीसहस्राऽवतरणनिःश्रेणिकायां प्रादुर्भावस्तबको द्वितीयः सम्पूर्णः ।

## अथ वक्षःस्थलाऽवस्थानस्तबकः ३ ।



वक्षःस्थलस्थां क्षीरोदसुतां यो जनकालये ।
व्यजिज्ञपत्सभवितुं स रामः श्रेयसे ऽस्तु नः ॥ १ ॥

अथाऽस्मिन् तृतीये स्तबके लक्ष्म्या भगवतो हृदयाऽवस्थानकारणं वर्णयितुं प्रथमपद्ये हृदयङ्गमामिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

श्रये शेषाऽचलमणेः शार्ङ्गिणो हृदयङ्गमाम् ।
अनुकम्पामिवाऽकम्पामम्बामम्बुजवासिनीम् ॥ १ ॥

श्रये इति । शेषाऽचले शेषाद्रौ मणेरिव शोभमानस्य शार्ङ्गनामकं धनुरस्यास्तीति शार्ङ्गी तस्य हरेर्हृदयङ्गमां वक्षोवामभागे हेमरेखारूपेण वसन्तीं, तथा चोक्तं भागवते रुद्रगीते–'श्रिया ऽनपायिन्या क्षिप्तनिकषाऽश्मोरसोल्लस'दिति । श्रिया हेतुभूतया क्षिप्तः तिरस्कृतः निकषात्मा स्वर्णरेखाङ्कितो निकषपाषाणो येन तादृशेनोरसा इति श्रीधराचार्यः । पक्षे हृदयस्थामकम्पामखण्डामिति यावत् । अनुकम्पां दयामिव अम्बुजवासिनीं पङ्कजस्थामम्बां लक्ष्मीं श्रये ऽवलम्बे। अनुष्टुब् वृत्तम् । उपमालङ्कारः॥१॥



१ अथ वक्षःस्थलाऽवस्थानस्तबकेन तृतीयेन स्तोतुकाम आदौ भगवतो वेङ्कटाऽचलपतेर्हृदये साक्षादचलां दयामिवविराजमानां कमलवासिनीं जननीमाश्रये इत्याह ।

कल्याणि दिव्यकरुणादिगुणाम्बुराशे
काङ्क्षाऽधिकाऽभ्युदयदायिकटाक्षलेशे ।
भद्राय दैत्यजिदुरःकृतनित्यवासे
भक्तिस्थिरेण मनसा भवतीमुपासे ॥ २ ॥

कल्याणीति । हे कल्याणि ! दिव्यानां करुणादिगुणानाम् अम्बुराशे ! काङ्क्षाया अधिकम् अभ्युदयं दत्ते स तादृशः कटाक्षलेशो यस्याः । पुनः भद्राय जगत्कल्याणार्थं दैत्यजितो हरेः उरसि कृतः नित्यं वासो यया तत्सम्बुद्धौ । भक्त्या स्थिरेण एकतानेन मनसा भवतीम् उपासे भजे इत्यर्थः । काव्यलिङ्गमलङ्कारः । वसन्ततिलकावृत्तम् ॥ २ ॥

नालीकसम्भवभवादिसुराभिवन्द्ये
नानाविधाऽकृतकवाङ्मयमौलिवेद्ये ।
पाथोधिपुत्रि पतिवक्षसि नित्यहृद्ये
भान्तीमनन्यशरणो भवतीं प्रपद्ये ॥ ३ ॥

नालीकेति । हे नालीकसम्भवो ब्रह्मा भवः शिवस्तदादिसुरैरभिवन्द्ये ! तथा नानाविधानाम् ऋगादिभिन्नानामकृतका-

---

२ इदानीमाशाऽतिशायिफलदाननिपुणकटाक्षलवां लोकोत्तरदयादिगुणसमुद्ररूपां नारायणवक्षःस्थलनित्याऽवस्थितां कल्याणीं भगवतीं दृढभक्तिना चेतसा कल्याणप्राप्तये उपास्ते ।

३ सम्प्रति हे वाराशिसुते ! ब्रह्मशिवादिसुरवन्दनीयामनेकविधोपनिषद्वेद्यां हरिवक्षसि नित्यं विराजमानां भवतीमनितरगतिरहं शरणमाश्रये इत्याह ।

नामकृत्रिमाणां वाङ्मयानां वेदानां मौलय उपनिषदस्ताभिर्वेद्ये वेदनीये ! पुनर्हे पाथोधेः पुत्रि ! नित्यहृद्ये सदा प्रिये पत्युर्वक्षसि भान्तीं भवतीं नाऽस्त्यन्यः त्वद्व्यतिरिक्तः शरणं यस्य सो ऽहं कविः प्रपद्ये शरणं यामि । शरणं गृहरक्षित्रोरित्यमरः । वसन्त-तिलकावृत्तम् । काव्यलिङ्गम् ॥ ३ ॥

शय्यागृहं तव पिता जगतां नियन्तु-
र्भ्राता मृगाङ्क इतरः पुनरङ्गभूषे ।
वक्षस्यमुष्य वरदे त्वमवस्थिता त-
द्वाल्लभ्यमम्ब भवदीयमनन्यलभ्यम् ॥ ४ ॥

शय्येति । हे वरदे तव पिता सिन्धुर्जगतां नियन्तुर्हरेः शय्यागृहं शयनस्थानं, भ्राता मृगाङ्कः अङ्गं नेत्ररूपो ऽवयवः सूर्याचन्द्रमसोर्नेत्रत्वात् । इतरः कौस्तभः भूषेति द्वयमप्यङ्गयोर्नेत्रहृदययोर्भूषे । द्विवचनं यथासंख्याभिप्रायम् । अमुष्य हरेर्वक्षसि त्वम् अवस्थिता, ऽतः भवदीयं तस्य हरेर्वल्लभस्य भावो वाल्लभ्यम् अनन्यलभ्यम् अनन्यसाधारणं; यथा भवती हरेर्वल्लभा तथा ऽन्यत्किमपि नास्तीति भावः । वसन्ततिलकावृत्तम् । काव्यलिङ्गमलङ्कारः ॥ ४ ॥

---

४ हे वरदायिन्यम्ब ! जगच्छासितुर्भगवतो हरेः शयनसद्म तव पिता सागरः, चन्द्रः कौस्तुभमणिश्चेत्येतौ त्वद्भ्रातरौ नेत्ररूपतया हृदयाऽलङ्कारतया च शरीरभूषणरूपौ, अस्य च भगवतो वक्षसि त्वं कृताऽवस्थानेति त्वद्बन्धुवर्गो भगवतो ऽतिप्रियस्त्वञ्चाऽऽक्रान्ततद्धृदयेति इतराऽनवाप्यं ते पतिप्रीतिपात्रत्वमित्याह ।

भ्रातुर्विधोर्वसुसमृद्ध्यसहेषु पद्मे-
ष्वास्ते रमेत्यपयशःप्रशमाय नूनम् ।
सोदर्यकौस्तुभशुभावहमब्धिकन्ये
वक्षस्त्वमात्वसासि वेङ्कटनायकस्य ॥ ५ ॥

भ्रातुरिति । हे अब्धिकन्ये भ्रातुर्विधोश्चन्द्रस्य वसुसमृद्धिः किरणसमृद्धिर्द्रव्यसमृद्धिश्च तदसहेषु पद्मेषु सूर्यविकासिकमलेषु रमा आस्ते इत्यपयशसो ऽपकीर्तेः प्रशमाय नाशाय सोदर्यस्य भ्रातुः कौस्तुभस्य शुभावहं मङ्गलावहं वेङ्कटनायकस्य हरेर्वक्षः उरस्थलं प्रति आवससि । वक्ष इत्यत्र उपान्वध्याङ्वस इत्याधारस्य कर्मत्वं ज्ञेयम् । श्रीः पद्मवासिनीति तदानीन्तनवादस्तु काकवद्देवदत्तस्य गृहमितिवदुपपादनीयः । नूनमित्युत्प्रेक्षालङ्कारः । वसन्ततिलकावृत्तम् ॥ ५ ॥

भगवतः प्रतिघो हृदि मा स्म भूत्
समुदयद्वृजिनेषु जनेष्विति ।
अवहिता जगदम्ब हिताय नो
हृदयमेव हरेरधितिष्ठसि ॥ ६ ॥

भगवत इति । समुदयन्ति समुद्भवन्ति वृजिनानि पापानि

---

५ हे समुद्रपुत्रि ! निजसोदरस्य चन्द्रस्य वसूनां ( किरणानां धनानां च ) समृद्ध्यसहेषु कमलेषु लक्ष्मीर्वसतीति अकीर्तिं प्रमार्ष्टुं किल त्वं सोदरान्तरकौस्तुभमणिविभूषिते भगवतो वेङ्कटपतेरुरसि वससीत्युत्प्रेक्षते ।

६ साम्प्रतं पापिषु मादृशेषु जनेषु हरेर्हृदयं क्रोधाध्मातं मा भूदिति सर्वदा ऽस्मद्धितसम्पादनाया ऽवहिता सती तदधितिष्ठसीत्याह ।

येषां तेषु । कलुषं वृजिनैनोऽघमित्यमरः । जनेषु मनुष्येषु विषये प्रतिघः क्रोधः । प्रतिघा रुट्क्रुधौ स्त्रियामित्यमरः । मा स्म भूत् नैव भवतु इति हेतोः अवहिता सावधाना त्वं नोऽस्माकं हिताय कल्याणाय हरेर्हृदयमधितिष्ठसि वससि । हृदयमित्यत्राऽधिशीङ्स्थाऽऽसां कर्मेति कर्मत्वम् । द्रुतविलम्बितं वृत्तम् । गूढोत्प्रेक्षालङ्कारः ॥ ६ ॥

फणिशैलपतेस्त्वमिन्दिरे
भवसि प्राणसमेति साम्प्रतम् ।
अमुना भवती यतः स्वयं
हृदये प्राणपदे निवेशिता ॥ ७ ॥

फणिशैलपतेरिति । हे इन्दिरे ! यतो भवती अमुना हरिणा प्राणानां पदे प्राणस्य वा पदे स्थाने । हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थित इत्यादिना अपानादीनां स्थानपददर्शनान्मुख्यस्थानं स्वयं निवेशिता स्थापिता अतः फणिशैलपतेः श्रीहरेस्त्वं प्राणैस्तुल्या भवसीति साम्प्रतं युक्तम् । वैतालीयं वृत्तम् । अनुमानाऽलङ्कारः ॥ ७ ॥

उरगाद्रिपतेरुरःस्थलस्थे
भवती तद्गलशङ्खगर्भमुक्तैः ।

---

७ हे कमले ! त्वं हरेः प्राणतुल्येति लोकप्रसिद्धिर्युक्तैव, यतस्त्वमनेन प्राणनिवासस्थाने हृदये ऽवस्थापिता, समानयोरेव हि सामानाधिकरण्यं घटत इत्याह ।

८ हे अम्ब ! वेङ्कटपतेर्वक्षःस्थले ऽवस्थिता त्वं तत्कन्धराकप-

शुचिहारमहःसुरस्रवन्ती-
सलिलैरम्ब सदाऽभिषिच्यसे त्वम् ॥ ८ ॥

उरगाद्रिपतेरिति । हे उरगाद्रिपतेः शेषाचलस्वामिनः श्रीवासुदेवस्य उरःस्थलस्थे वक्षोदेशनिवासे कमले रमे ! तस्य हरेर्गल एव शङ्खः । कम्बुर्ना वलये शङ्खे इत्यमरः । तस्य गर्भाद् मुक्तैश्च्युतैः शुचिहारस्य स्वच्छमुक्ताहारस्य महस्तेज एव सुरस्रवन्ती भागीरथी तस्याः सलिलैर्जलैः सदैव त्वमभिषिच्यसे ऽभिषेकवती क्रियसे । अहो महद्भाग्यं तवेत्यर्थः । औपच्छन्दसिकं वृत्तम् । परिणामरूपकालङ्कारौ ॥ ८ ॥

कुमारि क्षीराब्धेः कुसुमसुकुमाराङ्गि भवती
नवं पद्मं सद्म प्रदिमरमणीयं विजहती ।
शरण्ये त्रातुं नः शरकिणघनं कौस्तुभशिला-
कठोरं गाढोरः श्रयसि कृपया कैटभरिपोः ॥ ९ ॥

कुमारीति । हे क्षीराब्धेः कुमारि दुग्धोदकन्ये, पुनः शरणे साधुः शरण्या तत्सम्बुद्धौ । तत्र साधुरिति यत् । तथा हे कुसुम-

---

कम्बुमध्योत्सृष्टैः शुभ्रमौक्तिकदामकान्तिरूपगङ्गाजलैर्निरन्तरमभिषिक्ता भवसीति वक्षःस्थलस्थितायास्तवोपरि हारस्य विलुण्ठनाद् गङ्गाजलैरभिषिच्यमानेवेत्याह ।

९ हे पुष्पकोमलाङ्गि दुग्धोदधिपुत्रि ! त्वं सौकुमार्यरमणीयमभिनवं कमलरूपं सदनं परित्यजन्ती सती बाणकिणसङ्कुलं कौस्तुभशिलापरुषं कैटभारेर्वक्षो ऽस्मान् परित्रातुमेव कृपया ऽधितिष्ठसीति स्वसुखमविचिन्त्याऽस्मद्रक्षणे यतसे इत्याह ।

सुकुमाराङ्गि पुष्पकोमलमूर्ते ! भवती म्रदिम्ना मार्दवेन रमणीयं सुन्दरं नवं नूतनं पद्मं सद्म कमलरूपं गृहं विजहती परित्यक्तवता सती नो ऽस्मान् भक्तान् त्रातुं कृपया कैटभारिपोः श्रीहरेः युद्धे रिपुविसृष्टशराणां प्रहारजनितैः किणैः । घट्टे इति लोके । घनं कठिनम् । घनं निरन्तरं सान्द्रमित्यमरः । तथा कौस्तुभ एव रत्नत्वाच्छिला तया कठोरं निष्ठुरं गाढं दुरवगाहमित्यर्थः । मगाढं भृशकृच्छ्रयोरित्यमरः । उरो वक्षःस्थलमेव श्रयसि यतः, ततः स्वयं दुरवगाहस्थले स्थित्वा ऽपीतरसुखकरणरूपं विलक्षणदयालुत्वमिति भावः । शिखरिणीवृत्तम् । काव्यलिङ्गगूढोत्प्रेक्षे ॥ ९ ॥

श्रीवत्साङ्कं चिरतरमुरःसीमगोष्ठं मुरारे-
रध्यासीनामनघहरितोदारकान्त्या ऽभिरामम् ।
कल्याणि त्वामतुलममृतं संश्रितानां दुहानां
क्षीराम्भोधेः समुदितवतीं ब्रूमहे कामधेनुम् ॥ १० ॥

श्रीवत्साङ्कमिति । हे कल्याणि हे कुशले ! श्रीमान् वत्सस्तर्णकः अङ्को यस्य । अन्यत्र श्रीवत्सनामको ऽङ्को यस्य । कलङ्काङ्कौ लाञ्छनं च चिन्हं लक्ष्म चेत्यमरः । पुनश्च अनघा निर्दोषा हरिता हरिद्वर्णा उदारा महती च या कान्तिस्तया, पक्षे

———

१० हे शुभे ! हरेः श्रीवत्साङ्कं ( सशोभनवर्णकाऽलङ्कृतं श्रीवत्सनामकचिन्हसहितञ्च ) अनघहरितोदारकान्त्या ( अदुष्टतृणकान्त्या निर्दोषहरितवर्णकान्त्या च ) सुन्दरं मुरजितो वक्षःस्थलसामरूपं गोष्ठम् अधिष्ठितां, तथा आश्रितानां निरुपमम् अमृतं ( पीयूषं मोक्षं च ) दुहन्तीं दुग्धसमुद्रोद्भूतां त्वां कामगवीं कथयाम इति श्लेषेण भगवत्याः कामधेनुत्वं साधयति ।

अनघानाम् आरोग्यकारकाणां हरितानां दूर्वाणां तत्प्रभृतितृणानामित्यर्थः। हरिता स्त्री च दूर्वायां हरिद्वर्णयुते ऽन्यवदिति मेदिनी। उदारया इतस्ततः प्रसृत्वरत्वान्महत्या कान्त्या ऽभिरामं सुन्दरम् उरसः सीमैव गोष्ठं गोस्थानम् । गोष्ठं गोस्थानकं, सीमसीमे स्त्रियामित्यमरौ । अध्यासीनां स्थितां तथा ऽतुलं निरुपमं प्रचुरं चाऽमृतं मोक्षं दुग्धं च संश्रितानां दुग्धे सा दुहाना तां, दुह प्रपूरणे शानच् । क्षीराम्भोधेः समुदितवतीं प्रादुर्भूतां त्वां कामधेनुं ब्रूमहे वदामः । श्लेषरूपकाऽलङ्कारौ । मन्दाक्रान्तावृत्तम् ॥ १० ॥

विश्वाऽतीतो जयति वृजिनह्रासदो वासुदेवः
पद्मे तस्याप्युपरि महिमा भासते तावकीनः ।
क्षेत्रज्ञानां हृदयमनिशं कञ्जनाभो ऽधिशेते
तस्यापि त्वं हृदि हृततमोराजसे राजसे या ॥ ११ ॥

विश्वातीत इति । हे पद्मे हे कमले ! वृजिनस्य पापस्य ह्रासं नाशं ददाति सः । आतो ऽनुपसर्गइति कः । कलुषं वृजिनैनोघमित्यमरः। वासुदेवः श्रीवेङ्कटपतिः विश्वमशेषम् अतीत्य अतिक्रम्य वर्तते । विश्वमशेषं कृत्स्नमित्यमरः। जयति विश्वमतीत्य शोभते। तस्य वासुदेवस्याप्युपरि ऊर्ध्वं तवायं तावकीनस्त्वदीय इत्यर्थः। महिमा माहात्म्यं भासते प्रकाशते तदेव दर्शयति—कञ्जं कमलं नाभौ यस्य स कञ्जनाभो विष्णुः। क्षे-

---

११ हे जननि ! पापनाशको वासुदेवस्तावद् लोकोत्तरः, तस्याप्युपरि त्वदीयं माहात्म्यं राजते, यतो हि स कमलनाभः प्राणिनां हृद्देशमधितिष्ठति, तस्यापि तिरस्कृतरजस्तमोगुणे हृदि या त्वं शोभसे इति भगवतो ऽपि भगवतीमहिम्नः श्रेष्ठतां वर्णयति ।

ऽज्ञानां जीवानां हृदयम् अधिशेते ऽधितिष्ठति त्वं तु तमः तमोगुणः रज एव राजसं रजोगुणः स्वार्थे ऽण् । हृते नष्टे तमोराजसे यस्मात्तादृशे शुद्धसत्त्वमये इत्यर्थः । तस्य हरेरपि हृदि राजसे शोभां प्राप्नोषि । मन्दाक्रान्तावृत्तम् । काव्यलिङ्गसारालंकारौ ज्ञेयौ ॥ ११ ॥

वीक्षन्ते ये वेङ्कटक्ष्माभृदिन्दोः
सूरस्थाने शोभमानामिह त्वाम् ।
दुग्धोदन्वत्पुत्रि दिव्यं पदं ते
सूरस्थानं हन्त भित्त्वा विशन्ति ॥ १२ ॥

वीक्षन्ते इति । ये प्राणिनः वेङ्कटक्ष्माभृति वेङ्कटगिरौ इन्दोरिव प्रकाशमानस्य हरेः सूरस्थाने शोभमानवक्षःस्थले शोभमानां त्वाम् इहाऽस्मिन् लोके वीक्षन्ते साक्षात्कुर्वन्ति, ते नराः हे दुग्धोदन्वतः क्षीरसागरस्य पुत्रि कन्ये रमे ! दिव्यं पदं तद्रूपं सूरस्थानं सूर्यमण्डलं भित्त्वा भेदनं कृत्वा विशन्ति प्रविशन्ति । यथा त्वं सूरस्थानस्था तथा ते भवन्तीति स्वसारूप्यदानाऽधिकत्वपर्यवसायीदं वचनं ज्ञेयम् । हन्त हर्षे । कर्मिज्ञानिभेदेन आवृत्त्यनावृत्तिरूपा द्विविधा हि गतिः । तत्र 'गत्वा चान्द्रमसं लोकं सोमपाः पुनरष्यन्ती'त्याद्या । द्वितीया तु 'सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम्' इत्यादिनोक्ता । स्मृ-

---

१२ हे क्षीराब्धिसुते ! वेङ्कटाऽचलेन्दोर्भगवतः शोभने उरःस्थले राजमानां त्वां ये जना वीक्षन्ते ते सूर्यमण्डलं भित्त्वा परमं पदं मोक्षरूपं लभन्ते इति स्वदर्शनं योगिजनलभ्यसूर्यमण्डलभेदपूर्वकाऽपवर्गप्रदमित्याह ।

तिरपि 'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते । अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना' इति । अतः पुनरावृत्तिरूपं कर्मिमार्गं त्यक्त्वा 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाऽभिमुखो हतः' इति स्मृत्या 'य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्य'मित्याद्याम्नातां गतिं यान्ति मुक्ता भवन्तीत्यर्थः। शालिनीवृत्तम्। समालङ्कारः॥१२॥

बलिवसुमुषः प्रहर्षादुच्चोरस्थलमुपेत्य कमले त्वम् ।
अस्माकमपथगानां हरसे चिरकालसञ्चितानर्थान् ॥ १३॥

बलीति । हे कमले ! त्वम् उपेन्द्रावतारे वामनरूपेण बलिनामकस्य दैत्यराजस्य वसु धनं मुष्णातीति तस्य हरेः । पक्षे बलिनामपि वसुमुष उच्चम् उरःस्थलं श्लेषेण चोरस्य स्थलं चोपेत्याऽधिगत्य अपथगानाम् अधर्मगामिनाम् अन्यत्र न पन्था इत्यपथं, पथो विभाषेति टचि अपथं नपुंसकमिति नपुंसकत्वम् । 'आड्वाट्' इति लोके । तेन गच्छन्ति तेषामस्माकं चिरकालेन बहुकालेन सञ्चिताः सम्पादिताश्च ते अनर्थाश्च तान् इत्येकं

---

१३ हे रमे ! त्वं बलिवसुमुषः ( बलिचक्रवर्तिधनाऽपहारिणो हरेः, बलवद्धनचोरस्य च ) उच्चोरस्थलम् ( उन्नतं वक्षःस्थलम्, उन्नतचोरस्थानं च ) प्राप्याऽपथगानाम् ( असाधुमार्गगामिनां, मार्गं विहाय चरतां च ) अस्माकं बहुकालोपार्जितान् अनर्थान् चिरोपार्जितानि धनानि चाऽपहरसीति चोरस्थानाऽवस्थितायास्ते परधनाऽपहारो युक्त एवेति श्लेषेण वदन् भगवदुरःस्थिता त्वं पापिनामस्माकं निखिला आपदो हरसीत्याह ।

एवं लक्ष्मीपक्षे । अन्यत्र चिरकालेन ढब्बूकं ढब्बूकमिति कृत्वा सञ्चितानर्जितान् अर्थान् वित्तानि हरसि तव चोरस्थलस्थिता-यास्ते उचितमेवेति भावः । गीतिर्वृत्तम् । समालङ्कारः ॥ १३ ॥

शशिलेखा भवती च श्रीरब्धेर्निर्गते तयोराद्या ।

धारयति कृष्णमन्तः कृष्णेनाऽन्तस्तु धार्यते चरमा ॥ १४॥

शशिलेखेति । शशो लाञ्छनं विद्यते यस्मिन्नस्य शशि-नश्चन्द्रस्य लेखा कलापङ्क्तिः भवती लक्ष्मीश्चेति उभे द्वौ हे श्रीः ! अब्धेः सकाशान्निर्गते, तयोर्मध्ये आद्या शशिलेखा अन्तरभ्य-न्तरे कृष्णं कालिमानं धारयति, चरमा द्वितीया भवती तु कृष्णेन श्रीवासुदेवेन अन्तः हृदि धार्यते । अत्र श्लेषेण चेत्परं रमा धार्यते इत्युपमेयाऽधिक्यपर्यवसायिव्यतिरेकालङ्कारो ज्ञेयः । गीत्यार्यावृत्तम् ॥ १४ ॥

वनमालया प्रमुषितां विश्वविभोर्भुजलतैकविटपान्तः ।

कामपि कनकलतां त्वां कलशाऽकूपारकन्यके मन्ये ॥ १५॥

वनमालयेति । हे कलशाऽकूपारस्य कन्यके ! वनमालया

---

१४ हे श्रीः ! समुद्रादाविर्भूतयोश्चन्द्रकलाभवत्योर्मध्ये चन्द्र-कला ऽन्तः कृष्णं ( कृष्णवर्णं ) दधाति, भवती च कृष्णेन (हरिणा) अन्तर्धार्यत इति उभयोः कृष्णसम्बन्धे समाने ऽपि कृष्णेनाऽन्त-र्धृतत्वेन भवत्यास्ततो व्यतिरेक इति श्लेषेणाह ।

१५ हे अमृतोदधिसुते ! जगत्प्रभोर्हरेर्भुजलताशाखाऽन्तराले वनमालया ( भगवद्धृतया आपादलम्बिन्या स्रजा, वनपङ्क्त्या च ) आवृतां त्वामनिर्वचनीयरूपां सुवर्णवल्लीं मन्ये इत्याह ।

'आपादलम्बिनीं मालां वनमालां विदुर्बुधाः' इत्युक्तलक्षणया प्रमुषिताम् आच्छादिताम् । अपूर्ववल्ली हि प्राचीरेण आसमन्ताद्रोप्यते । पक्षे वनस्याऽरण्यस्य माला पङ्क्तिस्तया मुषितां, विश्वविभोर्जगत्प्रभोर्भगवतो भुजलताया एको यो विटपो विस्तारस्तस्यान्तः कामपि कनकवल्लीं त्वां मन्ये तर्कयामि । अत्र विश्वविभोरिन्द्रनीलविटपस्येति पाठे कल्पिते विच्छित्तिविशेषः । यथा विटपो ऽस्त्यस्य स विटपः, अर्शआद्यच् । इन्द्रनीलमयवृक्षस्य सम्बन्धिनीं कनकलतां मन्ये तर्कयामि । इन्द्र आत्मा नीलः विटपो जारवर्यश्च तस्येत्यन्यत्र । रूपकश्लेषौ । गीतिवृत्तम् ॥ १५ ॥

परमतुलशीतमनघे वनमालासं सुलक्षमणाकलितम् ।
कलयसि सद्रूपयुतं वक्षोदेशं हरेर्महारामम् ॥ १६ ॥

हे अनघे रमे ! हरेर्वक्षोदेशं कलयसि आश्रयसि । कीदृशं

---

१६ हे निर्दोषे ! त्वं भगवतो वक्षःस्थलमेव महान्तमाराममुपवनं, श्रेष्ठं रामं दाशरथिं वा, बलरामं वा आश्रयसीति प्रतिपादयन् तदुचितानि विशेषणानि विन्यस्यति—वक्षः परमया तुलस्या युक्तम्, आरामश्च श्रेष्ठतुलसीवृक्षोपशोभितः, उत्कृष्टो ऽतिशीतलश्च वा, दाशरथिश्च श्रेष्ठो निरुपमवैदेहीयुक्तश्च । बलरामश्च श्रेष्ठो निरुपमलाङ्गलपद्धतियुक्तश्च । तथा—आपादलम्बिमालोपशोभितं वक्षः, वनपङ्क्तिपरिगतश्चाऽऽरामः, वनवासित्वात्तदाप्तो दाशरथिः, आपादलम्बिस्रग्भूषितश्च बलभद्रः । एवम्—शोभनश्रीवत्सावर्यचिह्नाङ्कितं हरिवक्षः, सारसाङ्कनोपशोभित आरामः, लक्ष्मणाख्यभ्रात्रा युक्तो दाशरथिः, शोभनलक्षणेन सौभाग्यव्यञ्जकेनाऽन्वितो बलभद्रः । अपि च—सता रूपेण युतं वक्षः, सद्भिर्द्रुभिः ( तरुभिः ) युत आरामः, साधुना ऽऽकारेण सौन्दर्येण वा युतो दाशरथिः, सीरी च । अत्र श्लेषादौ शकारसकारयोरभेदस्य कविसमयसिद्धत्वेन प्रतुलशीतमित्यादेरर्थान्तरस्य बोधे न प्रतिबन्ध इति विभावनीयम् ।

महान्तमारामं राममिव च स्थितम् । वक्षःपक्षे परमां तुलसीं तद्रचितमालाम् इतं प्राप्तम् । आरामपक्षे परमत्यन्तम् अतुलं शीतं यस्मिन् । रामपक्षेपि अतुला सीता स्त्री यस्य तम् । पुनर्वनमालां तत्संज्ञकमालाम् आप्तः । रामपक्षे सीतान्वेषणे वनं मालश्चाप्तौ येन तम् । मालो ग्रामान्तराऽटवी इत्यभिधानचिन्तामणौ । तथा सुलक्ष्मणा श्रीवत्सचिह्नेन सारस्या भ्रात्रा लक्ष्मणेन च कलितं युक्तम् । लक्ष्मणं नाम्नि चिह्ने च सारस्यां लक्ष्मणा क्वचिदिति मेदिनी । सत् उत्तमं रूपम् आकारः सौन्दर्यं च । सन्तो द्रवः वृक्षाश्च तदुपयुतम् । रूपं तु श्लोकशब्दयोः । पशावाकारसौन्दर्ये नाणके नाटकादिषु इति हेमचन्द्रः । अथ बलरामपक्षेपि परम् अत्यन्तम् अतुला सीता लाङ्गलपद्धतिर्यस्य तं महाहलत्वात् । ईषा लाङ्गदण्डः स्यात्सीता लाङ्गलपद्धतिरित्यमरः । अन्यविशेषणानि तूक्तार्थानि योजनीयानि । गीतिर्वृत्तम् । श्लेष उपमा च ॥ १६ ॥

दृष्टात्मप्रतिबिम्बकेषु मणिषु द्रागिन्दिरे मा स्मभू-
दन्तःस्थेष्वबलान्तरस्थितिधिया कोपस्तवेत्यच्युतः ।
शङ्कोन्मेषकथापथाऽतिपतितं संत्यक्तरत्नान्तर-
स्तं त्वत्सोदरमेव कौस्तुभमणिं धत्ते भुजाभ्यन्तरे ॥ १७ ॥

दृष्टेति । हे इन्दिरे ! दृष्टम् आत्मनः प्रतिबिम्बं येषु तेषु अ-

---

१७ अथ भुजयोर्मध्ये वक्षःस्थले इतराणि रत्नान्युपेक्ष्य भगवता कौस्तुभ एव कस्माद्ध्रियते ? इत्याशङ्क्य इतरमणिधारणे सांनिध्यात् तत्र तव प्रतिबिम्ब पतिते तत्राऽन्याङ्गनास्थितिभ्रमेण तव कोपो मा भूदिति रत्नान्तराणि परित्यज्य भगवान् त्वद्भ्रातृतया त्वच्छङ्काऽनास्पदं कौस्तुभमेव धत्ते इत्याह ।

अबलान्तराणामन्यभार्याणां स्थितिरस्ति किमिति धिया तव कोपो न्तःस्थेष्ववयवस्थेषु मणिषु हीरकादिरत्नेषु द्राक् शीघ्रमापाततोपि मा स्म भून्नैव भवतु इत्यभिप्रायेण संत्यक्तानि हृदयधार्याणि रत्नान्तराणि येन सः हारः शङ्काया उक्तलक्षणाया उन्मेषो ऽङ्कुरः तस्य कथापथं वार्तामार्गमतिपतितम् अतिक्रान्तं तं प्रासद्वं त्वत्सोदरं कौस्तुभं मणिमेव भुजयोरभ्यन्तरे वक्षसि धत्ते । हृदये हि धृते कौस्तुभे तत्र प्रत्यासत्त्या प्रतिफलितस्य दर्शने ऽपि न स्त्र्यन्तरशङ्का, परमहितकारिसोदरत्वेन तत्र तदसम्भवात् । यत्तु तत्र दृश्यते तत्प्रतिबिम्बमेवेत्येवमेवाऽन्यमणिगतस्त्रियोऽपि मत्प्रतिबिम्बान्येवेति विवेकेन कोपाऽनुद्भव इत्याशयेन तमेव धृतवानिति भावः । गूढोत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितम् ॥ १७ ॥

सस्नेहपूर्तिरुदितत्रिदशोपजीवी
दीप्रो हरेरुरसि देवि तवेष्टगेहे ।
अस्माकमान्तरतमः प्रशमय्य मुक्ते-
र्मार्गं प्रकाशयतु कौस्तुभरत्नदीपः ॥ १८ ॥

सस्नेहेति । हे देवि ! तव इष्टगेहे प्रियगृहरूपे हरेरुरसि स्नेहस्य प्रीतेः पूर्त्या पूर्णतया सहितः तैलपूर्तिसहितश्च । स्नेहः स्यात्पुंसि तैलादिरसद्रव्ये च सौहृदे इति मेदिनी । तथा उदि-

———

१८ हे देवि ! त्वत्प्रियसद्मनि हरेरुरसि सस्नेहपूर्तिः ( प्रेमपर्याप्तिसहितः तैलपूर्तियुक्तश्च ) उदितत्रिदशोपजीवी ( उत्पन्नदेवतोपजीवनः, समुत्पन्नसूत्रत्रयनिर्मितवर्त्युपजीवी च ) दीप्रः ( प्रकाशमानः, उज्ज्वलश्च ) कौस्तुभरत्नमेव दीपो ऽस्मदान्तराऽज्ञानाऽन्धकारं विनाश्य मुक्तिमार्गं प्रदर्शयत्विति प्रार्थ्यते ।

तोत्पन्ना त्रिदशानामुपसेवा भोगेच्छा ऽस्त्यस्मिन् पक्षे तिसृणां दशानां वर्तीनाम् उपसेवा ऽस्त्यस्येति । दीप्तः प्रकाशमानः कौस्तुभ एव रत्नदीपः अस्माकमान्तरं हृत्स्थं तमो ऽज्ञानं प्रशमय्य शान्तिं नीत्वा मुक्तेर्मार्गं तत्त्वज्ञानं प्रकाशयतु प्रदर्शयतु । वसन्ततिलकावृत्तम् । रूपकश्लेषालङ्कारौ ॥ १८ ॥

सरसिजनिलयापि वैभवेन
स्फुरसि निरेनसि मानसे मुनीनाम् ।
उरसि मुररिपोरुपोढहारे
शिरसि च देवि गिरां पुरातनीनाम् ॥ १९ ॥

सरसिजेति । हे देवि ! सरसिजं कमलं तदेव निलयो गृहं यस्यास्तादृश्यपि त्वं वैभवेन व्यापकत्वेन मुनीनां मननशीलानां निरेनसि निष्पापे मानसे हृदि । स्वान्तं हृन्मानसं मन इत्यमरः । स्फुरसि प्रकाशसे । तथा उपोढः धृतः हारो येन तस्मिन्मुररिपोर्हरेरुरसि वक्षसि । उरो वत्सं च वक्ष इत्यमरः । स्फुरसि । तथा पुरातनीनां प्राचीनानां गिरां वेदलक्षणानां शिरसि उपनिषत्सु च स्फुरसि । अत्रैकस्यापि श्रीदेवीवस्तुनो ऽनेकत्र वर्णनाद्विशेषालङ्कारः । पुष्पिताग्रावृत्तम् ॥ १९ ॥

शुभश्रीवत्साङ्कं शुचिरुचिरहारं मुररिपो-
स्तमालाभं वक्षस्तरलवनमालासुरभिलम् ।

---

१९ हे देवि ! कमलवासिन्यपि त्वं सर्वव्यापकतया ऽनघे मुनिजममानसे, धृतहारे हरेरुरसि, उपनिषत्सु च प्रकाशसे इत्याह ।

२० हे जगदम्ब ! श्रीवत्सचिह्नचिह्नितं शुभ्रसुन्दरहारधा-

परिष्कुर्वाणां त्वां भवजलधिशोषाय कलये
जगन्मातः प्रातस्तनजलजदायादवदनाम् ॥ २० ॥

शुभमिति । शुभं कल्याणं श्रीवत्सरूपम् अङ्कश्चिन्हं यस्मिन् । तथा शुचिः शुक्लो रुचिरः सुन्दरश्च हारो यस्मिन् । तथा तमालवृक्षवदाभा कान्तिर्यस्य । तालः स्कन्धस्तमाल इत्यमरः । पुनस्तरलया चञ्चलया वा मुल्यया वनमालया सुरभिलं तरलश्चञ्चले षिङ्गे हारमध्यमणावपीति मेदिनी । मुररिपोर्वक्षः प्रति परिष्कुर्वाणामलङ्कुर्वाणां त्वां प्रातर्भवं प्रातस्तनम् । सायश्चिरमित्यादिना ल्युटि तुट् च । यज्जलजं कमलं तस्य दायादो बन्धुस्तत्सदृशमित्यर्थः । वदनं यस्यास्तां त्वां भवजलधेः संसारसिन्धोः शोषाय कलये हृदीति शेषः । अथ च हरेर्वक्षः शुभं तत् । सशयोरभेदात्सुभं सुष्ठु अचलं दक्षिणध्रुवत्वात् भं तारा यस्य तदगस्त्यरूपं तत्परिष्कुर्वाणां ततोप्यतिसमर्थाम् इत्ययं भवजलधिशोषकत्वे यथाकथं चिद्धेतुर्योजनीय इति विभावनीयं सुधीभिः । शिखरिणीवृत्तम् । उपमालङ्कारः ॥ २० ॥

प्राचीनवाक्परिषदां परतत्त्वचिन्तां
व्यालेन्द्रभूधरपतिर्व्यपनेतुकामः ।
कान्तो बिभर्ति भवतीं कलशाब्धिकन्ये

---

रि तमालनीलं चलद्वनमालासुगन्धि हरेरुरो ऽलङ्कुर्वाणां प्राभातिकसरोरुहसमानवदनां त्वां संसारसागरशोषणाय संश्रये इत्याह ।

२१ अथ हे सागरसुते ! वेङ्कटपतिरुपनिषत्प्रतिपाद्योत्कृष्टतमतत्त्वचिन्तादूरीकरणायेव सर्वदा परचित्स्फूर्तिर्हृदये ऽस्त्विति वि-

भूषाविशेषमिव देवि भुजान्तराले ॥ २१ ॥

प्राचीनेति । हे कलशाब्धिकन्ये क्षीरसमुद्रतनये देवि रमे ! प्राचीनवाक्परिषदां वेदवाक्समूहानां परतत्त्वविषये उत्कृष्टवस्तुविषये या चिन्ता ताम् । स्याच्चिन्ता स्मृतिराध्यानमित्यमरः । व्यपनेतुं दूरीकर्तुं काम इच्छा यस्य सः । व्यालेन्द्रभूधरस्य शेषाद्रेः पतिः श्रीहरिः भवतीं प्रति भुजयोरन्तराले वक्षःस्थले भूषाविशेषमिव बिभर्ति धत्ते । श्रीरेव हि परतत्त्वं हृद्यत्वान्नतो नाऽन्यदिति सूचयितुमिति भावः । वसन्ततिलकावृत्तम् । उत्प्रेक्षालङ्कारः ॥ २१ ॥

स्वभावादुन्मीलद्बकुलसुमनःकोमलतनो-
स्तव क्लेशाशङ्काकुलितहृदयेनापि हरिणा ।
त्वदाक्रान्ते हन्त व्युदसितुमुरस्यम्ब पुलका
न शक्यन्ते पद्मे, न खलु सुलभः कण्टकजयः ॥ २२ ॥

स्वभावादिति । हे अम्ब ! स्वभावात्स्वतः उन्मीलन्त्यः विकसन्त्यश्च ताः बकुलवृक्षस्य सुमनसः पुष्पाणि ता इव कोमला तनुर्यस्याः तस्यास्तव क्लेशो भविष्यतीत्याशङ्कया आकु-

---

चार्यं त्वां वक्षःस्थले ऽलङ्कारविशेषमिव धारयतीति वदन् त्वमेव सकलोपनिषत्प्रतिपाद्यपरतत्त्वरूपा ऽसीति सूचयति ।

२२ हे मातः ! निसर्गविकसत्केसरकुसुमसुकुमारशरीरायास्तव पीडाशङ्कया विह्वलान्तःकरणेनापि भगवता त्वदधिष्ठिते वक्षःस्थले समुदित्वरा रोमाञ्चा अपनेतुं न शक्यन्ते इति कण्टकजयः ( रोमाञ्चविजयः, क्षुद्रशत्रुविजयश्च ) न सुकर इत्यर्थान्तरन्यासमुखेन श्लेषेण समर्थयन् भगवतः प्रेमा सार्वदिकस्त्वयि विलसतीत्याह ।

लितं हृदयं यस्य तादृशेनापि हरिणा हन्त इति खेदे त्वया आक्रान्ते ऽधिष्ठिते ऽप्युरसि पुलका रोमाञ्चाः व्युदसितुं निरसितुं न शक्यन्ते त्वत्सम्पर्कादिति भावः । अत्रार्थान्तरं—कण्टकानां चोराणां कण्टकः क्षुद्रशत्रौ च चर्मस्थानकदोषयोरिति विश्वः । तेषां जयः खलु निश्चयेन सुलभो न भवति । यावज्जवदवस्थानं तावत्कण्टकाऽवस्थानं तदभावे तदभावः, स तु नास्तीति न तदपसरणशक्यतेति भावः । कण्टकजयस्तु न खलु सुलभ एव । नखं लुनातीति नखलु नाराचिका तया सुलभ इति मतान्तरे समासोक्तिः । शिखरिणीवृत्तम् ॥ २२ ॥

निरत्ययं नीलमहोनिधानं
कान्तं मुकुन्दाभिधमिन्दिरे त्वम् ।
निरञ्जनैरेव जनैर्गृहीतं
वीक्ष्य स्थिता वक्षसि रक्षितुं किम् ॥ २३ ॥

निरत्ययमिति । हे इन्दिरे निरत्ययं निर्बाधं नीलमहसां निधानं पक्षे अहो नीलम् एतन्नामकं निधानं निधिरूपं मुकुन्दं श्रीकृष्णं तन्नामकं निधिं च कान्तं पतिं सुन्दरं च निरञ्जनैरुपाधिबाधारहितैरन्यत्र दर्शनसाधनाञ्जनरहितैरपि जनैर्गृहीतं वीक्ष्य

---

२३ हे इन्दिरे! निरपायं नीलमहोनिधानं ( नीलकान्तिम्, अहो, नीलनामकं निधिं च ) मुकुन्दनामकं कान्तं ( पतिं, सुन्दरं च ) निरञ्जनैः ( योगिभिः, सिद्धाञ्जनविधुरैरपि च ) गृहीतं ( प्रत्यक्षीकृतम्, उपात्तं च ) अवेक्ष्य तद्रक्षणाय वक्षसि स्थिता ऽसि किमिति उत्प्रेक्षमाणो योगिजनध्येयस्य भगवतो वक्षःस्थले त्वं स्थितासीति अहो ते माहात्म्यमित्याह ।

त्वं रक्षितुं वक्षसि हृदि अवस्थिता किं ? न हि रक्षकसद्भावे नि-ध्यपहरणं मायासद्भावे च भगवद्ग्रहणमिति भावः । यदाहामर-सिंहः—मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नवेति । उपजाति-वृत्तम् । श्लेषफलोत्प्रेक्षालङ्कारौ ॥ २३ ॥

जननि पुष्यसि तामरसं पदं
वितनुषे च नताऽमरसंपदम् ।
परमुरस्फुरणप्रतिरोधिनः
परमुरःस्फुरणं नयसे ऽद्भुतम् ॥ २४ ॥

जननीति । हे जननि ! तामरसं कमलरूपं पङ्केरुहं ताम-रसमित्यमरः । पदं स्थानं पुष्यसि पुष्टं करोषि । तथा नता-नाम् अमरसम्पदं देवसम्पत्तिं वितनुषे ददासि । परस्य शत्रोः मुरनामकदैत्यस्य स्फुरणं वीर्यं प्रतिरुन्धे तस्य श्रीहरेः परं श्रे-ष्ठम् अनन्तम् उरः वक्षः उरो वत्सं च वक्षश्चेत्यमरः । प्रति स्फुरणं नयसे । शोभां प्रापयसीत्यर्थः । अत्र तामरसम् अतामरसं(?) परमुरःस्फुरणप्रतिरोधपरमुरस्फुरणप्रापणेन च अत्यद्भुतं तवेदं चरित्रमिति विरोधाभासालङ्कारः । द्रुतविलम्बितं वृत्तम् ॥२४॥

यदि नाम विष्णुवक्षः

———•

२४ हे मातः! कमलरूपं स्थानमधिष्ठिता त्वं नम्राणां देवस-म्पदं ददासि, एवं शत्रुभूतमुराऽसुरतेजोविघातकस्य भगवतो व-क्षःस्थलमलं करोषीति विरोधाभासमुखेन वैचित्र्यं दर्शयन्नाह ।

२५ हे पृथ्वीसुते सीतारूपे ! दयामय्यास्तव हरिहृदये क्षमा-मध्यमध्यसान्निध्ये साऽपराधानस्मान् कुपितः कालः (यम इव स्थितः

क्षणमत्यक्षः क्षमात्मजे नु त्वम् ।
आगस्विनस्तदा नो
नैवाऽरक्षिष्यदूष्मलः कालः ॥ २५ ॥

यदीति । हे क्षमात्मजे भूकन्ये सीते! अनेन क्षमावत्त्वं साहजिकं सूचितम् । नाम निश्चयेन त्वं क्षणमपि यदि चेत् विष्णोर्वक्षः प्रति अत्यक्षः त्यागमकरिष्यः । तदा अयं ऊष्मलः क्रोधनः कालः कृष्णवर्णो नाथः स तु कालः यम एव निदाघश्च आगस्विनो ऽपराधिनः आयासिनश्च नो ऽस्मान्नैव अरक्षिष्यद् रक्षणमकरिष्यत् । क्रियातिपत्तौ लृङ् । उपाश्रितशीत एव ऊष्मलः कालो न बाधते तद्वत्साहित्येनैवोपासितो हरिः प्रीतये नान्यथेति भावः । गीतिर्वृत्तम् । श्लेषविरोधाभासालङ्कारौ ॥ २५ ॥

हृदये कमलदलाक्षि
त्वत्पदलाक्षीयलक्ष्म भवतीं च ।

हृदये इति । हे कमलदलाक्षि कमलपत्रनेत्रे ! त्वत्पदयोर्लाक्षाकृतं लक्ष्म भवतीं रमां च दधत् अहिगिरीशः शेषाद्रिपतिः

---

कृष्णो ) नैवाऽरक्षिष्यदिति कारुण्याद्वारं वारम्भगवन्तं प्रबोध्य भयादस्मद्रक्षणायैव तत्र ते सार्वदिकी स्थितिरित्याह ।

२६ हे कमलदलनयने! त्वत्पादलाक्षाचिन्हं भवतीं च बिभ्रत् वेङ्कटाचलपतिः कृष्णः ( वासुदेवः कृष्णवर्णश्च ) साऽपराधेष्वस्मासु कुपितो ऽपि पादलाक्षाचिन्हितो ऽरुणत्वं समधिकं कारुण्यं च तद्-

दधदूष्मलोपि कृष्णो

ऽप्यधिकारुण्यं वहत्यहिगिरीशः ॥ २६ ॥

इति श्रीमद्वेङ्कटाध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे वक्षः-
स्थलाऽवस्थानस्तबकस्तृतीयः संपूर्णः ॥३॥

श्रीहरिः ऊष्मलो ऽप्यधिकारुण्यम् अधिकरक्ततां करुणत्वं च । अथ कृष्णो ऽपि अधिकमारुण्यमारक्तत्वं वहतीति चित्रमित्यर्थः । गीतिच्छन्दः । प्रकृतश्लेषतद्गुणालङ्कारौ ॥ २६ ॥

इति श्रीरावजीमाहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन विरचितायां बालबोधिन्याख्यायां श्रीलक्ष्मीसहस्रटीकायां वक्षःस्थलावस्थानस्तबकस्तृतीयः सम्पूर्णः ॥ ३ ॥

---

स्सान्निध्याद्वहतीति कृष्णवर्णो ऽप्यरुणिमानं वहतीति चित्रमितिविरोधाभासमुखेन त्वद्धारणेनैव सापराधेष्वस्मासु तस्य दयोदय इत्याह ।

इति श्रीमानवल्ल्युपाख्यतैलङ्गरामशास्त्रिविरचितायां लक्ष्मीसहस्राऽवतरणिकाश्रेणिकायां वक्षःस्थलाऽवस्थानस्तबकः ॥ ३ ॥

## अथ कारुण्यस्तबकः ४ ।

विश्वामित्रमखं त्रात्वा मिथिलां प्रस्थितो मुनेः ।
स्त्रियां चकार कारुण्यं स रामः श्रेयसेऽस्तु नः ॥ ४ ॥

अथाऽस्मिन चतुर्थे स्तबके लक्ष्म्याः कारुण्यं वर्णयितुं प्रथमपद्ये दयामिति तल्लिङ्गं निर्दिशन् मङ्गलमाचरति—

भजे भुजङ्गशैलेशभुजान्तरपरिष्क्रियाम् ।
तनयां दुग्धजलधेर्दयामिव कृतोदयाम् ॥ १ ॥

भजे इति । भुजङ्गशैलेशस्य शेषाचलस्वामिनो हरेर्भुजान्तरे वक्षःस्थले परिष्क्रियेव परिष्क्रिया भूषणभूता तां, परिष्कारो विभूषणमित्यमरः । कृतः उदयः उद्भवो यया तां दयामिव दुग्धजलधेः तनयां कन्यां लक्ष्मीरूपां भजे । उत्प्रेक्षालङ्कारः । अनुष्टुप् वृत्तम् ॥ १ ॥

जननि जीवयितुं जगदर्दितं
दशमुखप्रमुखैस्त्रिदशारिभिः ।
जनकयज्ञमहीजठरे जनिं

---

१ अथ कारुण्यस्तबकेन चतुर्थेन जगदम्बां वर्णयितुकामो वेङ्कटपतेर्हृदयालङ्कारभूतां मूर्तिमतीं दयामिवाऽविर्भूतां क्षीरसागरसुतां भगवतीं भजे इत्याह ।

२ इदानीं हे मातः ! सीतारूपा त्वं दशवदनादिसुरारिसमुपद्रुतं

कृतवती भवती कृपया रमे ॥ २ ॥

जननीति । हे जननि भो रमे ! दशमुखो रावणस्तत्प्रमुखैस्त्रिदशानां देवानामरिभिः शत्रुभूतराक्षसैः अर्दितं पीडितं जगद्विश्वं जीवयितुं जनकनाम्नो नृपस्य यज्ञमह्या मखवसुमत्याः जठरे यज्ञे भूमिशुद्ध्यर्थं हलाकृष्टवसुधामध्ये कृपया दयया कृपा दया ऽनुकम्पा स्यादित्यमरः । जनिमुत्पत्तिं जनिरुत्पत्तिरुद्भव इत्यमरः । कृतवती चकार । द्रुतविलम्बितं वृत्तम् ॥ २ ॥

अकरुणा करुणा ध्रुवमम्ब ते
क्षितितले भवतीमवतार्य या ।
अहह यातुपुरस्थितिवेदना-
ऽऽमयमदाज्जगदार्तिनिवृत्तये ॥ ३ ॥

अकरुणेति । हे अम्ब ! या करुणा क्षितितले भूम्यां भवतीं त्वामवतार्य अवतारं ग्राहयित्वा अहह अत्यन्तखेदे यातुनो रावणस्य राक्षसस्य पुरः पुरस्य(?) स्थितेरासनस्य वेदना दुःखं सैव आमयो रोगस्तमदाद्ददाति स्म । रजकस्य वस्त्रं ददातीतिवत्सम्बन्धसामान्ये षष्ठी । स्थिरवेदनामगमयदिति पाठः सुगम एव । सा ते करुणा ध्रुवं निश्चयेनाऽकरुणा करुणाभावः । अत्र करुणायामकरुणत्वारोपेण व्याजस्तुतिः, अकरुणत्वसमर्थनात्काव्यलिङ्गं च । द्रुतविलम्बितं वृत्तम् ॥ ३ ॥

---

जगज्जीवयितुं दयया जनकयागभूमेराविर्भूतासीति परमदयालुत्वं तवेत्याह ।

३ साम्प्रतं हे अम्ब! त्वद्दया भूतले त्वामवतार्य जगत्पीडाविनाशाय तत्र दशवदनपुरनिवासदुःखप्रदत्वेनाऽकरुणा संपन्नेति निन्दाव्याजेन त्वं कृपया दुर्जनसंहारपूर्वकं सज्जनपरित्राणे गृहीतदीक्षा ऽसीति बोधयन्नाह ।

अविरताविविधाऽपराधकारि-
ण्यपि मयि देवि दयां करिष्यसीति ।
जननि मम भयातुरस्य धैर्यं
जनयति वायसदानवाऽपदानम् ॥ ४ ॥

अविरतमिति । हे देवि हे जननि ! अविरतं सततं विविधानपराधान् करोति तादृशे मयि दयां करिष्यसि इति भयातुरस्य भयव्याप्तस्य मम वायस ऐन्द्रकाकः स एव निर्दयत्वाद्दानवः तस्याऽपदानं वृत्तं कर्म चरितमिति यावत् । धैर्यं जनयति । द्रुतविलम्बितम् ॥ ४ ॥

राघवस्य हृदयं स्थिराऽघव-
द्वायसं प्रति नवाऽऽयसंक्रमम् ।
देवि जानकि दयारसात्त्वया
पादयोजनकृता द्रवीकृतम् ॥ ५ ॥

राघवस्येति । हे देवि जानकि! स्थिरम् अघं त्वत्पीडारूपमस्यास्ति तद्वन्तं वायसमैन्द्रकाकं प्रति नवायसक्रमम् । अयसो लोहस्याऽयमायसः स चासौ क्रमः परिपाटी, नवः आयस-

---

४ अधुना हे देवि! निरन्तराऽपराधकारित्वाद्भयातुरस्य मम सापराधे ऽपि जयन्तनाम्नि काके ऽभयदानवृत्तमेव धैर्यमुत्पादयतीति निजाऽपराधक्षान्तिविश्वासमाह ।

५ हे देवि जानकि! न केवलं त्वमेवाऽपराधिनामपराधान् क्षमसे ऽपि तु त्वद्दयितस्य हरेरपि कोपस्य प्रादुर्भावे तमपनयसीत्यत्र कृतापराधमपि शरणागतं जयन्तवायसं भगवत्पादयोर्निपात्य सदयया त्वया तद्धृदयं द्रवत्वं प्रापितमिति वृत्तान्त एव प्रमाणमित्याह ।

क्रमो यत्र तद् राघवस्य श्रीरामस्य हृदयं पादयोजनकृतात्का-
ककृतपादप्रणामजनितात्(?) दयारसाद् द्रवीकृतं सदयीकृतमि-
त्यर्थः । रथोद्धतावृत्तम् ॥ ५ ॥

अब्धेः कन्ये जननि महतामागसां जन्मगेहे-
ष्वस्माद्दक्षेष्वपि च करुणामादधासि ध्रुवं त्वम् ।
साक्षी तस्मिन् युधि दशमुखे सारसाक्षि व्यपेते
यातुस्त्रीणां कबलनविधिं याचमानो हनूमान् ॥ ६ ॥

अब्धेरिति । हे अब्धेः कन्ये जननि! महतां पृथूनामा-
गसामपराधानां जन्मगेहेषूत्पत्तिभूमिषु अस्माद्दक्षेष्वपि च ध्रुवं
निश्चयेन करुणाम् आदधासि करोषि, हे सारसे कमले इवा-
ऽक्षिणी नेत्रे यस्यास्तत्सम्बुद्धौ, तस्मिन्दशमुखे रावणे युधि
युद्धे व्यपेते मृते सति यातुस्त्रीणां रक्षोयोषितां कबलनस्य
भक्षणस्य विधिं करणं याचते ऽसौ याचमानः प्रार्थयमानः। याचृ
याच्ञायां शानच् । हनूमान् साक्षी प्रमाणं, साक्षाद्द्रष्टरीति सा-
धुः । अपराधकारिरक्षःस्त्रीरक्षणमस्मासु धैर्यं जनयतीति भा-
वः । मन्दाक्रान्तावृत्तम् ॥ ६ ॥

रामस्तिष्ठतु नाम, यो न विमृधे जिह्रेति निर्हेतुकं
सुग्रीवैकविरोधिनं क्षितिसुते संहृत्य तं वालिनम् ।

---

६ हे सागरसुते मातः! सापराधेष्वप्यस्मासु तावकीना दया
नाऽपयातीत्यत्र दशाननवधोत्तरं राक्षसीनां भक्षणं प्रार्थयमानो
ऽपि दयामय्या त्वया निवारितो हनूमानेव निदर्शनमित्याह ।

७ हे सीते ! भगवतो दयायामपि त्वत्सांनिध्यमेव हेतुर्यतस्त्व-
द्विरहसमये निरागसं वालिनं हत्वा ऽपि स न लज्जते स्म, त्वत्सा-

कारुण्याम्बुनिधिस्त्वमेव नियतं क्लृप्तार्द्रपीडं यतो
रक्षःस्त्रीनिकरं ररक्षिथ तमप्यार्द्रागसं वायसम् ॥ ७ ॥

राम इति। हे क्षितिसुते! यः करुणानिधित्वेन कैश्चिद्वर्णितोऽपि रामस्तिष्ठतु नाम, तत्कारुण्यं नाऽनुभवारूढं भवति। कुत? इति चेत् निर्हेतुकं स्वप्रयोजनशून्यं यथा स्यात्तथा सुग्रीवैकविरोधिनं सुग्रीवमात्रशत्रुं तं प्रसिद्धं वालिनं विमृधे वृक्षखण्डे निलीनत्वादधर्मयुद्धे संहृत्य नाशं नीत्वा हृदये न जिह्रेति लज्जते न, स रामः तिष्ठतु नाम, तेनाऽस्माकं किमपि न प्रयोजनमस्तीत्यर्थः। त्वं तु क्लृप्ता कृता आर्द्रा सद्यस्तनपीडा येन तं रक्षःस्त्रीणां निकरं ररक्षिथ रक्षितवती, तथा तमपि आर्द्रमागः अपराधो यस्य तं वायसं काकं ररक्षिथ। ततः कारुण्यस्य कृपायाः अम्बुनिधिः समुद्रभूता नियतं निश्चयेन त्वमेव, न राम इति भावः। शार्दूलविक्रीडितम्। काव्यलिङ्गमलङ्कारः॥७॥

गुरुणा प्लवेन करुणात्मना विना
हरिणाङ्कसोदरि गुणाम्बुधे तव।
जननाऽऽधिरोगमरणादिवेदना-
वरुणालयस्य तरणाय का गतिः[1] ॥ ८ ॥

गुरुणेति। हे हरिणाङ्कस्य चन्द्रस्य सोदरि भगिनि, हे

---

त्निध्ये तु प्रत्यग्रापराधा यातुस्त्रियो जयन्तं काकं च नाऽवधीदिति त्वमेव तद्रक्षणे हेतु, रतो भगवतोऽपि कदाचिदाविर्भवन्ती दया त्वन्मूलिकैवेत्याह।

८ अथ हे चन्द्रभगिनि! तव करुणापोताश्रयं विना जन्माऽऽधिव्याधिमरणप्रभृतियातनासमुद्रसन्तरणे नाऽस्त्यस्माकमन्यदालम्बनमित्याह।

१ गुणाम्बुधेस्तवेति १ पु० पा०।

गुणाम्बुधे! तव करुणात्मना कृपारूपेण गुरुणा महता प्लवेन नौकया विना उडुपं तु प्लवः कोल इत्यमरः। जननं जन्म, आधिर्मानसी व्यथा, रोगा आमयाः, मरणं च तदादिर्या वेदना सैव बहुत्वाद्वरुणालयः समुद्रः तस्य तरणाय का गतिः? त्वत्कृपां विना ऽन्या न कापीति भावः। मञ्जुभाषिणीवृत्तम्॥८॥

त्वय्येवायतते कृपा रघुपतेर्देवस्य सत्यं यतो
वैदेहि त्वदसन्निधौ भगवता वाली निरागा हतः।
निन्ये कापि वधूर्वधं, तव तु सान्निध्ये त्वदङ्गव्यथां
कुर्वाणोऽप्यवितः पतन्नशरणः काको विवेकोज्झितः॥९॥

त्वयीति। हे वैदेहि हे जनककन्ये! यतस्तवाऽसन्निधौ सान्निध्याऽभावे भगवता रामेण निर्दयीभूय निरागा निरपराधो वाली नाम वानरो हतः। तथा कापि वधूस्ताटका वधं नाशं निन्ये प्रापिता। ततो देवस्य रघुपतेः रामचन्द्रस्य कृपा दया त्वय्येवायतते त्वद्दयालुतयैव तद्दयालुत्वमिति भावः। इदं सत्यं, तदुपपादयति–तव सीतायाः सान्निध्ये सामीप्ये सति तु चित्रकूटपर्वते विवेकेन विचारेण उज्झितः शून्यः। विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयोरिति मेदिनी। काकः ऐन्द्रः तव सीतायाः अङ्गस्य स्तनरूपस्य व्यथां क्षतरूपां व्याधिं कुर्वाणोऽपि अशरणः रक्षितृशून्यः सन् पतन् स्वाऽपराधक्षमापणाय प्र-

---

९ हे वैदेहि! त्वदसान्निध्ये निरागसोस्ताटकावालिनोर्वधः, त्वत्सांनिध्ये च कृताऽपराधस्यापि शरणागतस्य वायसस्य रक्षणमित्यन्वयव्यतिरेकाभ्यां त्वदधीनैव भगवतो दयेत्याह।

शमन् अवितः रक्षितः । अव रक्षणइत्यस्माभिष्ठा । रामेणेति शेषः । शार्दूलविक्रीडितं वृत्तम् । काव्यलिङ्गमलङ्कारः ॥ ९ ॥

द्विपञ्चग्रीवाज्ञाचकितसमुदञ्चन्निशिचर-
प्रपञ्चप्रक्षिप्तः पवनसुतवाले हुतवहः ।
यतो जातः शीत,स्तमिह भवसन्तापविवशे
कृपापूरं स्वैरं किरतु मयि लोकाम्ब भवती ॥ १० ॥

द्विपञ्चेति । हे लोकाम्ब जगन्मातः ! द्विगुणिताः पञ्च द्विपञ्चाः दशेत्यर्थः । बहुव्रीहौ सङ्ख्येये इति डच् । ताः ग्रीवाः यस्य तस्य दशकण्ठस्य आज्ञायाः चकिताः भीता अतः सम्यगुदञ्चन्तो न तु स्वत एव ये निशिचरा राक्षसास्तेषां प्रपञ्चेन समूहेन प्रक्षिप्तः पवनसुतस्य हनूमतः वाले पुच्छे । पुच्छोऽस्त्री लोम लाङ्गूलमित्यमरः । हुतवहो ऽग्निः यतः येन कारणेन शीतो जातः ततः भवस्य संसारस्य यस्सन्तापस्तस्य विवशः अधीनः व्याकुल इत्यर्थः । तत्र मयि तं कृपापूरममृतप्रवाहं स्वैरं यथेष्टं भवती इहाऽस्मिन् लोके किरतु वर्षतु । शिखरिणीवृत्तम् । उदात्तरूपकाऽतिशयोक्त्यलङ्काराः ॥ १० ॥

---

१० अथ हे जगज्जननि ! दशवदननिदेशेन निशाचरैर्हनूमत्पुच्छे प्रदीपितो ऽपि वह्निर्यद्दशाचन्दनशिशिरः संवृत्तस्तं ते कृपापूरं संसाराऽनलसन्तापदूने मयि पातयेति प्रार्थयते ।

विष्णावुष्णांशुवंशं गतवति विबुधद्वेषिशोषाय रोषा-
देष्यत्तद्योषिदागःशतमपि कृपया क्षन्तुकामैव नूनम् ।
धत्ते कन्या जनन्या गुणमिति निपुणं किंवदन्तीं वदन्ती
पूर्वं सर्वंसहायामुदयमकुरुथा भोगिशैलेन्द्रकान्ते॥ ११॥

विष्णाविति । हे भोगिशैलेन्द्रकान्ते शेषाद्रिपतिप्रिये! विष्णौ नारायणे विबुधद्वेषिणां राक्षसानां शोषाय नाशाय उष्णांशोः सूर्यस्य वंशं कुलं गतवति प्राप्तवति सति एष्यत् आगामि यत्तद्योषितां राक्षसस्त्रीणां आगःशतमपराधसहस्रमपि कृपया क्षन्तुं सोढुं काम इच्छा यस्याः सैव नूनं कन्या पुत्री जनन्या मातुः प्रस्वाः गुणं शीलादिकं निपुणं निश्चयेन धत्ते दधाति इत्येवं किंवदन्तीमपि लोकवार्तामपि । किंवदन्ती जनश्रुतिरित्यमरः । अपिशब्दात् 'कारणगुणाः कार्ये उपसंक्रामन्ती'ति न्यायमपि वदन्ती ब्रुवन्ती त्वं पुरा पूर्वं सर्वं सहते इति सर्वंसहा तस्यां भूम्यामुदयं सीतारूपेण प्रादुर्भावम् अकुरुथाः कृतवत्यसि । स्रग्धरावृत्तम् । प्रमाणपरिकराङ्कुरावुत्प्रेक्षा चेति त्रयो ऽलङ्काराः ॥ ११ ॥

अवितुमिह दया ते देवि मार्गत्यशक्ता-

---

११ हे वेङ्कटपतिप्रिये! भगवति रामचन्द्रे निशिचरशोषणाय सूर्यवंशे ऽवतीर्णे सति त्वमपि राक्षसीनामपराधान् मर्षयितुं 'मातृगुणानां कन्यासूपसंक्रम' इति न्यायं स्फुटं कथयन्ती सती सर्वंसहायाः (पृथिव्याः) प्रादुर्भूतेति भगवतः कोपेपि तव नैसर्गिकी दया ऽनपायिनीत्याह ।

१२ शरणागतदुर्बलजनरक्षणबद्धदीक्षा त्वं दुर्बलान् मार्गयसे, अहमपि संसारसागरे निमज्जन् बलीयः शरणमन्वेषयामीत्यावयो-

१ गुणमपीति १ ३ पु० पा० ।

नहमपि शरणार्थी हन्त मज्जन् भवाब्धौ ।
घटनमुचितमासीदावयोर्दैवयोगात्
कलशजलधिकन्ये हातुमेनं न युक्तम् ॥ १२ ॥

अवितुमिति । हे देवि ! इहाऽस्मिन लोके ते दया अशक्तान् दीनानवितुं रक्षितुं मार्गति अन्वेषयति हन्तेति हर्षे । भवाऽब्धौ संसारसिन्धौ मज्जन्नहमपि शरणं रक्षितारम् अर्थयते प्रार्थयते तादृशो ऽस्मि । तत्तस्मात् हे जलधिकन्ये ! आवयोर्दैवयोगाद्धटनं मेलनम उचितं योग्यमासीत् । अत एनं कविं अन्वादेशत्वादेनादेशः । हातुं त्यक्तुं न युक्तम् इति यत्नं विना ऽर्थसिद्धेः प्रहर्षणमलङ्कारः । मालिनीवृत्तम् ॥ १२ ॥

कार्येषु कारणगुणा नियतं भवन्ती-
त्युक्तिं सतामवितथामवधारयामः ।
चान्द्री कला च भवती च पयोधिमध्या-
ज्जाते यदम्ब सुधया दयया च शीते ॥ १३ ॥

कार्येष्विति । कारणस्य गुणाः कार्येषु नियतं निश्चयेन भवन्तीति सतां विदुषामुक्तिं वाचम् अवितथां सत्याम् अवधारयामः जानीमः । तथा हि—हे ऽम्ब ! यद्यस्मात्सुधया दयया च

---

दैवात्समुपजातेयं घटना मा कदा चिदपि विघटतामित्यात्मनो ऽपरित्यागं प्रार्थयते ।

१३ हे अम्ब ! सुधोदधेराविर्भूते चन्द्रकला त्वं च यथायथं सुधादयाभ्यां शीतले इत्येतद्दर्शनात् 'कारणगुणाः कार्यगुणानारभन्ते' इति न्यायं समन्वितं मन्महे इत्याह ।

शीते शीतले चन्द्रस्येयं चान्द्री कला भवती चेत्युभे पयोधेर्मध्याज्जाते उत्पन्ने । वसन्ततिलका वृत्तम् । अर्थान्तरन्यासो दीपकं च ॥ १३ ॥

आसादितोन्नतपदेषु गिरीशमुख्ये-
ष्वारोढुमब्जनिलये शिथिलाऽभिलाषा ।
नीचे तु मादृशि दयारसनिम्नगा ते
प्राप्तादरा प्रवहतीत्यनुरूपमेतत् ॥ १४ ॥

आसादितेति । हे ऽब्जनिलये रमे ! ते दयारसरूपा निम्नगा नदी आसादितं प्राप्तमुन्नतपदम् उच्चस्थानं यैः पक्षे ईश्वरत्वं गिरीशाः पर्वताः शङ्करश्च तन्मुख्येष्वारोढुं शिथिलः अभिलाष इच्छा यस्याः सा नीचे मादृशि तु प्राप्तः आदरो यया सा तादृशी सती प्रवहतीति युक्तम् । निम्नगाया नीचप्रवणत्वं युक्तमिति भावः । इत्यत्र समालङ्कारः । स च श्लेषालङ्कारेण सङ्कीर्णः । वसन्ततिलकावृत्तम् ॥ १४ ॥

शौरिश्चकास्ति हृदयेषु शरीरभाजां
तस्यापि देवि हृदयं त्वमनुप्रविष्टा ।

---

१४ उन्नतपदारूढेषु गिरीशादिषु समारोढुं शिथिलादरा ते दयारसनिम्नगा मादृशि नीचे प्रसरतीति तस्या निम्नगात्वेनोच्चपर्वताद्यधिरोहणं विहाय नीचप्रवृत्तिरनुरूपैवेति वदन् उच्चपदस्थानां सर्वे एव सहाया भवन्ति दुर्बलस्य न को ऽपीति स्थितौ सत्यामपि तव दयाया मादृशदुर्बलरक्षकत्वाल्लोकोत्तरत्वमित्याह ।

१५ हे लक्ष्मि ! प्राणिनां हृदये आत्मस्वरूपो हरि,स्तस्य हृदये त्वं,

पद्मे तवापि हृदये प्रथिता दयेयं
तामेव जाग्रदखिलाऽतिशयां श्रयामः ॥ १५ ॥

शौरिरिति । हे देवि ! शरीरभाजां प्राणिनां हृदयेषु शौरिर्हरिश्चकास्ति प्रकाशते । हे पद्मे ! तस्यापि हृदयं प्रति त्वम् अनुप्रविष्टा ऽसि । तवापि हृदये इयं दया प्रथिता, इति हेतोर्जाग्रज्जागरूका ऽखिलेभ्यः अतिशय आधिक्यं यस्यास्तां दयामेव श्रयामो भजामः इत्युत्तरोत्तरसारवर्णनात् सारालङ्कारः । वसन्ततिलकावृत्तम् ॥ १५ ॥

नित्यं विश्वं वशयति हरिर्निग्रहाऽनुग्रहाभ्या-
माद्ये शक्तिं विघटयति ते हन्त कारुण्यपूरः ।
ईषन्न्यूनं तदिह दयितादीशितृत्वं भवत्या-
स्तच्छेषत्वं कथमितरथा देवि तुल्येपि भूम्नि ॥ १६ ॥

नित्यमिति । हे देवि ! हरिः निग्रहश्चाऽनुग्रहश्च ताभ्यां दण्डप्रसादाभ्यां नित्यं प्रत्यहं जगद्वशयति स्वाधीनतां नयति । हन्तेति विस्मये । तव कारुण्यस्य पूरः प्रवाहः आद्ये निग्रहविषये शक्तिं विघटयति नाशयति । युक्तमिदमित्याह—तत्तस्मादिहाऽस्मिन् लोके दयिताच्छ्रीकृष्णाऽपेक्षया भवत्यास्तव ईशितृत्वम् ईश्वर-

---

तव च हृदये दया, चकास्तीति त्वद्दयैव श्रेयसीति तामेवाश्रयामहे इति सारालङ्कारमुखेनाह ।

१६ हे देवि ! भगवतो भवत्याश्च समे ऽपि महिम्नि हरेर्निग्रहाऽनुग्रहाभ्यां जगद्वशीकरणात्, त्वयि च दयापूरेण निग्रहशक्तेः प्रतिरोधाद्भवत्यास्तस्मात् किञ्चिन्न्यूनत्वमत एव भवत्यास्तदङ्गत्वं, न खलु भयोः सर्वथा साम्ये तदुपपद्यतइति न्यूनताप्रदर्शनमुखेन केवलदयामयत्वात्तवैव श्रेष्ठत्वमिति स्तौति ।

त्वम् ईषत् किञ्चित् न्यूनम् । इतरथा निग्रहाऽनुग्रहसमत्वे भूम्नि महिम्नि तुल्ये सति तव तच्छेषत्वं तदंशभूतत्वं कथं स्यात् ? न कथमपीति भावः । मन्दाक्रान्तावृत्तम् । अनुमानव्याजस्तुत्यलङ्कारौ ॥ १६ ॥

विहितं जहतं विवेकहाना-
दहितं कर्म च नित्यमाचरन्तम् ।
अपयातगुणं हरिप्रिये मां
कृपया केवलयैव पालयेथाः ॥ १७ ॥

विहितमिति । हे हरिप्रिये ! विवेकस्य हानादभावाद्विहितं वेदोक्तं कर्म जहतं त्यजन्तं तथा अहितं वेदनिषिद्धं नित्यं प्रत्यहम् आचिरन्तं कुर्वन्तम् अपयाता गुणा दयादयो यस्मात्तं गुणशून्यमित्यर्थः । एवंभूतं मां केवलया कृपयैव पालयेथाः । कस्यापि पालनहेतोरभावाद्रक्षस्वेति भावः । औपच्छन्दसिकं वृत्तम् ॥ १७॥

क्षणमप्यनवस्थितौ जनाऽऽगः
कमिता न क्षमितेति साऽनुकम्पा ।
अवतारदशासु देवि रूपै-
रनुरूपैरनुगाहसे मुकुन्दम् ॥ १८ ॥

क्षणमिति । हे देवि ! क्षणं क्षणमात्रमपि अनवस्थितौ स्वा-

---

१७ हे हरिपत्नि ! अविवेकेन विहिताऽकरणनिषिद्धाऽऽचरणाभ्यां पतितस्य निर्गुणस्य मम त्वत्करुणैव केवलमालम्बनमित्याह ।

१८ हे देवि मम क्षणमप्यसांनिध्ये न लोकाऽपराधः प्रियेण क्षान्तो भवेदिति विचार्यैव करुणया दयस्वापि अवतारेषु त्वं तत्तद्रूपैः प्रियमनुगतासीत्याह ।

ऽसन्निधौ सत्यां जनानामागो ऽपराधं क्षमिता श्रीहरिः न क्षमिता न सहिष्यते इति हेतोः साऽनुकम्पा सदया त्वम् अवताराणां मत्स्यादीनां दशास्ववस्थासु अनुरूपैस्तदनुकारिभिरेव मत्स्यादिरूपैर्मुकुन्दं श्रीकृष्णम् अनुगाहमे ऽनुगच्छसि। तदुक्तं हरिवंशे—'देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी। विष्णोर्वीर्यानुरूपां वै करोत्येषा ऽऽत्मनस्तनु'मिति। अत्रैव कविरिदं स्वयमेवाऽग्रे स्फुटं व्यवस्थापयिष्यति। औपच्छन्दसिकं वृत्तम्॥१८॥

चलति कलिताऽऽयासे श्वासे कफाऽर्गलिते गले
भ्रमति नयने भ्रान्ते स्वान्ते यियासुषु चाऽसुषु।
त्वरयति दया जन्तोर्हन्तोत्क्रमे भवतीं रमे
त्वमपि कृपणत्राणे प्राणेश्वरं च पराङ्मुखम्॥१९॥

चलतीति। कलितः कृतः आयासः श्रमो येन तादृशे श्वासे चलति सति, गले कफरूपाऽर्गलेन युक्ते सति। अर्गलम् 'अण्डणा' इति लोके। तद्विष्कम्भो ऽर्गलं न ना इत्यमरः। अत्र कफैर्विकले गले इति न्यासो ऽनुप्रासंसामान्याऽनुकूल इति विभावनीयम्। तथा नयने चक्षुषि भ्रमति भ्रमणं प्राप्नवति सति, तथा स्वान्ते चित्ते भ्रान्ते मूढे सति, तथा असुषु प्राणेषु यियासिषु गन्तुमिच्छत्सु सत्सु, दया भवत्कृपा ईदृशस्य विकलस्य जन्तोः उत्क्रमे प्राणोत्क्रमणसमये भवतीं श्रीलक्ष्मीं त्वरयति त्वरायुक्तां

---

१९ इदानीं जन्तूनां प्राणोत्क्रमणसमये क्लेशप्रदे श्वासे चलति, कण्ठे च कफकुण्ठिते, नेत्रे च घूर्णमाने, प्राणेषु च जिगमिषत्सु तत्क्लेशाऽसहा स्वदया भवतीं, भवती च तदपराधवतैः प्रतिकूलं प्रियं, तेभ्यः सुगतिप्रदानाय त्वरयतीत्याह।

करोति । हन्त हर्षे । ततस्त्वमपि कृपणत्राणे दीनरक्षणे पराङ्मुखं परावृत्तं प्राणेश्वरं श्रीहरिं त्वरयसीति मध्यमपुरुषविपरिणामेन लापनीयम् । भक्तेषु तवाऽतिवात्सल्यमिति भावः । हरिणीवृत्तम् । एकावली अलङ्कारः ॥ १९ ॥

दुःखाक्रान्तं भवजलनिधिं दुस्तरं योगिवर्यैः
पापानां नस्तरितुमधुना का कथा लोकधात्रि ।
एवं यद्यप्युदयति मतिस्तावकीमब्धिकन्ये
धन्ये दृष्ट्वा तदपि करुणां धैर्यमेत्यन्तरात्मा ॥ २० ॥

दुःखाऽऽक्रान्तमिति । हे लोकधात्रि जगन्मातः ! योगिवर्यैर्मुनिश्रेष्ठैरपि दुःखेन तरितुं शक्यं दुःखैराध्यात्मिकादिभिस्तापैः आक्रान्तं व्याप्तं भवरूपं जलनिधिं दृष्ट्वा अधुना पापानां नोऽस्माकं तरितुं का कथा ? इत्येवं मतिर्यद्यपि उदयति । इधातोः रूपम् । तथापि हे धन्ये ऽब्धिकन्ये ! तावकीं त्वदीयां करुणां दृष्ट्वा अन्तरात्मा ऽन्तः करणं धैर्यम् एति । भविष्यत्युद्धार इति धैर्यं प्राप्नोतीति भावः । मन्दाक्रान्तावृत्तम् । काव्यार्थापत्तिरूपकाऽलङ्कारौ ॥ २० ॥

तपोभिरिह योगिनस्तव दयामविन्दन्त या-
मकिञ्चनतया ऽपिताममृतसोदरि प्राप्नुमः ।

---

२० अथ योगिवराऽसुकरोल्लङ्घनं दुःखबहुलं भवाऽब्धिमुत्तरीतुं पापात्मनामस्माकं का कथेत्येवं चिन्तयन्तो ऽपि वयं त्वत्करुणां दृष्ट्वा सधैर्याः स्म इत्याह ।

२१ अनेकजन्मसमाचरितैस्तपोभिर्या त्वदया योगिवर्यैरासादि सा ऽकिञ्चित्कराणामस्माकं सुलभेति यद्दैवतं कृष्णाख्यं योगिनश्चि·

समाधिपटवः श्रमादनुभवन्ति यद्दैवतं
तदेव यमुनातटीतरुगणः सुखेनाऽन्वभूत् ॥ २१ ॥

तपोभिरिति । हे ऽमृतस्य सोदरि भगिनि! ते तव यां दयां योगः अष्टाङ्गो यमनियमप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपः स विद्यते येषां ते योगिनः तपस्विनः इह लोके तपोभिस्तपस्याभिः अविन्दन्त प्राप्नुवन्तः, तां दयाम् अकिञ्चनतया ऽपि निष्किञ्चनत्वेनैव साधनेन वयं प्राप्नुमः। एतदेवाऽर्थान्तरन्यासेनाह–यद्दैवतं श्रीकृष्णाख्यं समाधिविधिचतुरा मुनयः श्रमादायासादनुभवन्ति साक्षात्कुर्वन्ति तदेव दैवतं यमुनातटी कलिन्दजातीरं तत्सबन्धी तरुगणः वृक्षसमूहः सुखेनाऽनायासेन अन्वभूदनुभूतवान् । अत्र पद्ये दृष्टान्तप्रहर्षणाऽलङ्कारौ ज्ञेयौ। पृथ्वी वृत्तम् ॥ २१ ॥

अपारपरितापकृद्भवतपाऽऽतपाऽन्धा वयं
प्रपामिव सुपावनीं तव कृपामुपासीमहि ।
उदञ्चितधनञ्जयः प्रभुरुदारहेतिर्यया
ययावुदधिकन्यके तपनमध्यगः शीतताम् ॥ २२ ॥

अपारेति । हे उदधिकन्यके श्रीः! अपारमनन्तं परितापं करोति स भव एव तपाऽऽतपः ग्रीष्मोष्मा तेनाऽन्धा वयं प्रपां पानीयशालामिव सुपावनीं तव तां कृपाम् उपासीमहि आश्र-

---

राय तपोभिः पश्यन्ति तद्यमुनातीरतरवो ऽनायासेनाऽन्वभवन्निति दृष्टान्तमुखेनाऽऽह ।

२२ हे सागरसुते ! उदञ्चितधनञ्जयः ( वर्द्धिताऽर्जुनो दीपिताऽग्निश्च ) उदारहेतिः ( महाऽस्त्रो महाज्वालश्च ) सूर्यमण्डलाऽवस्थितः प्रभुर्हरिर्यया ते कृपया शैत्यमवाप तां ते कृपामपारसन्तापप्रद-संसाररूपग्रीष्मोष्मव्याकुला वयं पानीयशालामिवाऽऽश्रयाम इत्याह ।

यामः। आशंसायां लिङ्। तां कां? यया तपनवर्ती सूर्यमध्यवर्ती 'य एतस्मिन् मण्डले पुरुषो योयमेव स यो ऽयं हिरण्मयः पुरुष' इति शतपथब्राह्मणे। उदश्चितधनञ्जयः वर्धिताऽर्जुनः प्रज्वालिताऽग्निश्च। 'आदित्यो वा अस्तं यन्नग्निमनुप्रविशती'ति बहृचब्राह्मणे। तत्राप्युदारा महत्यो हेतयः शस्त्राणि ज्वालाश्च यस्मिन्निति विशेषणत्रयेण सर्वदा तत्र दाहवत्त्वं सूचितम्। एतादृशः प्रभुः नारायणः शीततां शीतलतां ययौ प्राप। पृथ्वी वृत्तम्। उदात्तं श्लेषः प्रौढोक्तिः अतिशयोक्तिश्चाऽलङ्काराः ॥२२॥

कंसाऽरातिप्रेयसि संसाराऽब्धौ भ्रमन्ननाथोहम्।
अम्ब तव साध्वकम्पामनुकम्पां नाम नावमवलम्बे॥२३॥

इति श्रीमद्वेङ्कटाध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे
कारुण्यस्तबकश्चतुर्थः ॥ ४ ॥

कंसारातीति। हे कंसाऽरातेः श्रीकृष्णस्य प्रेयसि प्रिये! संसाराऽब्धौ भ्रमन्ननाथो रक्षणशून्यो ऽहं हे अम्ब! तवाऽकम्पामचलाम् अनुकम्पां नावं दयारूपां नौकां साधु यथा भवति तथाऽवलम्बे आश्रये। त्वद्दयां विना मे नाऽन्यत्संसारतरणसाधनमिति भावः। गीतिः। रूपकालङ्कारः ॥ २३ ॥

इति श्रीरावजीमहाराजापरनाम्ना श्रीनिवासपण्डितेन विरचितायां बालबोधिन्याख्यायां श्रीलक्ष्मीसहस्रटीकायां कारुण्यस्तबकश्चतुर्थः संपूर्णः ॥४॥

---

२३ इदानीं भवाऽर्णवतारणशीलां त्वत्कृपानावमेव संसारसागरे मज्जन्नशरणो ऽहमाश्रयामीत्याह।

इति श्रीमानवल्ल्युपाख्यतैलङ्गरामशास्त्रिविरचितायां लक्ष्मीसहस्राऽवतरणनिःश्रेणिकायां कारुण्यस्तबकः ॥ ४ ॥

## अथ कटाक्षस्तबकः ५ ।

राजगर्वध्वंसिभर्गधनुर्भङ्गाद्बभूव यः ।
सीताकटाक्षविषयः स रामः श्रेयसे ऽस्तु नः ॥ ५ ॥

अथाऽस्मिन् पञ्चमस्तबके लक्ष्म्याः कटाक्षफलं वर्णयितुं प्रथमाद्ये कटाक्षात्मेति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति–

लक्ष्मीवदनलावण्यसुधोदधिकृतोदयः ।
कल्पवृक्षः कटाक्षात्मा काङ्क्षितानि करोतु नः ॥१॥

लक्ष्मीरिति । लक्ष्म्याः वदने मुखे यल्लावण्यं सौन्दर्यं तदेव सुधोदधिरमृतसागरः तस्मात् कृत उदयो येन स कटाक्षरूपः कल्पवृक्षः सुरद्रुः नो ऽस्माकं काङ्क्षितानि इष्टानि करोतु संपादयतु । अत्र कटाक्षस्य कल्पवृक्षताद्रूप्यवर्णनाद्रूपकाऽलङ्कारः । आशीरलङ्कारश्च । अनुष्टुब्वृत्तम् ॥ १ ॥

क्षमाकुमारि क्षणमीक्षणं त्वं
यदृच्छया न्यस्यसि यत्र जन्तौ ।
स ईक्षणानां त्रयमष्टकं वा
सहस्रकं वा सहसा दधाति ॥ २ ॥

क्षमेति । हे क्षमाकुमारि भूकन्ये ! त्वं क्षणं क्षणमात्रम् ई-

---

१ अथ कटाक्षस्तबकेन पञ्चमेन भगवतीं स्तोतुकामो लक्ष्मीमुखलावण्यरूपसुधासागरसमुद्भूतः कटाक्षकल्पवृक्षो ऽस्माकं सकलकाङ्क्षितप्रदो भवत्विति मङ्गलमाचरति ।

२ हे सीते ! यत्र क्षुद्रेऽपि जन्तौ त्वं क्षणमबुद्धिपूर्वमपीक्षणं निक्षिपसि सपदि स शिवपदं ब्रह्मपदं देवेन्द्रपदं वा प्राप्नोतीति तव एकदृष्टिलवपाते भक्तस्त्रिचतुःसहस्राक्षो भवतीति वैचित्र्यमुखेनाह ।

क्षणं कटाक्षं यत्र यस्मिन् जन्तौ यदृच्छया केनापि तद्भाग्योदयेन न्यस्यसि स्थापयसि स जन्तुः प्राणी ईक्षणानां नेत्राणां त्रयं वा अष्टकं वा सहस्रकं वा सहसा सद्यो दधाति । शिवो ब्रह्मा विष्णुर्वा भवतीत्यर्थः । 'सहस्राक्षः सहस्रपा'दिति श्रुतेः । आखण्डलः सहस्राक्षः इत्यमराच्छक्रो वेति । अत्र शिवादिस्वरूपताया भङ्ग्यन्तरेण सूचनात्पर्यायोक्तमलङ्कारः । उपेन्द्रवज्रावृत्तम् ॥ २ ॥

अम्ब स्तोकाऽऽलोकसुधाशीकरलेशै-
रङ्गं जन्तोरार्द्रयसे यस्य स एषः ।
हस्तात् स्वीयाद्वारणमस्ताच्च गलद्भि-
र्दानाम्भोभिः पङ्किलगेहाऽङ्गणभूः स्यात् ॥ ३ ॥

अम्बेति । हे अम्ब ! स्तोकाऽऽलोकः ईषदवलोकनं तदेव सुधायाः शीकरस्तस्य । शीकरोम्बुकणा इत्यमरः । लेशा बिन्दवः तैर्यस्य जन्तोरङ्गम् आर्द्रयसे स्निग्धीकरोषि स एष जन्तुः स्वीयात् स्वकीयाद्धस्ताद्वारणस्य गजस्य मस्ताच्छिरसश्च गलद्भिः क्षरद्भिः दानस्य प्रसिद्धस्य मदस्य च । दानं गजमदे दाने इति विश्वः । अम्भोभिर्दानरूपैरुदकरूपैश्च पङ्कः सञ्जातो ऽस्यां पङ्किला । पिच्छादित्वादिलच् । गेहसम्बन्धिनो ऽङ्गणस्य । अङ्गणं चत्वराजिरे इत्यमरः । पृषोदरादित्वात्साधुः । भूर्यस्य तादृशः स्यात् । दानशूरो विभवसंपन्नश्च स्यादिति भावः । मत्तमयूरं वृत्तम् । उदात्तश्लेषौ ॥ ३ ॥

---

३ हे मातः ! त्वम् अपाङ्गसुधाशीकरलवैर्यमकिञ्चनमपि स्नपयसि स वदान्यमान्यो गजघटापरिगताऽङ्गणो भूपतिर्भवतीत्याह ।

त्वद्वीक्षणाऽमृतकणो ऽपि न येषु तेषां
सद्मानि जीर्णशिथिलच्छदिरातिरक्तैः ।
अभ्रच्युतैः सलिलबिन्दुभिरश्रुमिश्रै-
र्जम्बालितानि जगदम्ब चिरं भवन्ति ॥ ४ ॥

त्वद्वीक्षणेति । हे जगदम्ब ! तव वीक्षणरूपस्याऽमृतस्य कणो लेशोऽपि येषु नास्ति तेषां नराणां सद्मानि गृहाणि जीर्णा शिथिला या च्छदिः गृहोपरितनं तृणमयमाच्छादनं, छद अपवारणे इति चौरादेरर्चिशुचीत्यादिना औणादिक इसिप्रत्ययः । छदिः स्त्रियामिति लिङ्गानुशासनसूत्रम् । सान्तोप्ययं, पटलं छदिरित्यमरः । तस्य आप्त्या प्राप्त्या रक्तैरारक्तैः अभ्रान्मेघाच्च्युतैः अश्रुभिर्बाष्पैर्मिश्रैः सलिलस्य जलस्य बिन्दुभिर्विप्रुड्भिः जम्बालः कर्दमः येषु सञ्जातः तानि । तदस्य सञ्जातम् इतीतच् । सजम्बाले तु पङ्किल इत्यमरः । चिरं भवन्ति । वसन्ततिलकावृत्तम् ॥ ४ ॥

कनकशिबिकाऽऽरूढाः प्रौढाऽऽधिराज्यपदे स्थिताः
कति चिदतुलंमन्या धन्याश्चरन्ति यदिन्दिरे ।
यदपि च वहन्त्येनां दीनाः परे फलमम्ब तद्
द्वयमपि तव स्तोकाऽऽलोकाऽन्वयव्यतिरेकयोः ॥ ५ ॥

कनकेति । हे इन्दिरे अम्ब ! यदपि अतुलंमन्याः कृतार्थे-

---

४ अथ येषु दुर्भगेषु त्वदपाङ्गलेशो न निपतति ते जीर्णच्छदिरन्तरालगलितैः रक्तवर्णैर्वर्षपयोभिर्बाध्यमानाश्चिरं गृहविहीना अकिञ्चना रोरुद्यन्ते इत्याह ।

५ पूर्वश्लोकाभ्यां भगवतीकटाक्षपाताऽपातयोः संपद्विपज्जनकत्वं प्रदर्श्य साम्प्रतं स्फुटतरं तदन्वयव्यतिरेकफलं शिबिकाऽऽरूढविष्ट्यारवस्थां प्रदर्शयन्नाह ।

मन्याः कति चिद्धन्याः सुकृतिनः कनकमय्यां शिबिकायामारूढाः अधिराजस्य भावः आधिराज्यं सार्वभौमपदं प्रौढं च तदाधिराज्यपदं च तत्र स्थिताः सन्तो भुवि चरन्ति, च परं परे दीना दरिद्राः विष्ट्या मौल्येन वा तद्वहने नियुक्ता एतान् पूर्वोक्तान् सुकृतिनो वहन्ति, तद्द्वयमपि तव स्तोकाऽऽलोकस्य ईषत्कटाक्षस्य अन्वयव्यतिरेकयोर्भावाऽभावयोः फलं भवतीति । अयं भावः—यत्सत्त्वे यत्सत्त्वमन्वयः, स भवत्किञ्चित्कटाक्षसत्त्वाच्छिबिकाऽऽरोहणादिना सूचितः। तथा यदभावे यदभावो व्यतिरेकः, स त्वत्प्रसादशून्येषु शिबिकावहनादिना स्पष्टीकृतः। तेन च हेत्वलङ्कारोपि स्पष्टीकृतः। हरिणीवृत्तम् ॥ ५ ॥

जडं मामप्यार्तं जननि शिशिराऽपाङ्गविसरैः
कृपापूरस्मेरैः क्षणमपि कृतार्थीकुरु मुदा ।
ततः को वा दोषस्तव भवति कंसारिदयिते
मरौ वा मेरौ वा भगवति समं वर्षति घनः ॥ ६ ॥

जडमिति । हे जननि हे कंसाऽरेर्हरेर्दयिते ! आर्तं पीडितं जडं मूढमपि मां कृपापूरेण स्मेरैर्विकसितैः शिशिराऽपाङ्गस्य शीतलकटाक्षस्य विसरैः समूहैः क्षणमपि मुदा कृतार्थं कुरु कृतकृत्यतां नयस्वेति भावः । यतो हेतोरयं घनो मरौ निर्जलदेशे वा मेरौ कनकाऽचले वा समं तुल्यमेव वर्षति । ततस्तादृशकरणेन तव को वा दोषो भवति ? यथा घनस्य स्वभावाद्युक्ताऽयुक्त-

६ इदानीं मरुमेरुदेशयोरविशेषेण वृष्टिकारिणो मेघस्य समदृष्टित्वप्रकाशनपुरःसरं महत्स्विव पामरे ऽपि मयि कटाक्षलवनिक्षेपे नास्ति तव का चिद्धानिर्मम पुनः सर्वथा कृतार्थता स्यादित्याह ।

वर्षणे दोषाऽभावः तथैव तव मत्कृपाकरणे इति भावः । शिखरिणीवृत्तम् । दृष्टान्तालङ्कारः ॥ ६ ॥

द्वारि द्वारि दुरीशकिङ्करकृतैरातङ्कदैर्हुङ्कृतै-
रप्युच्चैरतिमात्रवेत्रपरुषाऽऽघातैरनुच्चाटितः ।
दुर्दारिद्र्यदशापिशाचनिचयो दूरात्समुत्सार्यते
देवि त्वत्करुणाकटाक्षतटिनीस्नानाज्जवेनाऽधुना ॥ ७ ॥

द्वारि द्वारीति । हे देवि द्वारि द्वारि विद्यमाना ये दुरीशानां दुष्टराजानां किङ्कराः सेवकास्तत्कृतैरताङ्कदैर्दुःखदैः उच्चैर्हुङ्कृतैरपि हुङ्कारमन्त्रैरपीत्यर्थः । तथा ऽतिमात्रम् । अतिवेलभृशाऽत्यर्थोऽतिमात्रेत्यमरः । वेत्राणां वेत्रयष्टीनां परुषाऽऽघातैः कठोरप्रहारैरप्यनुच्चाटितः अदूरीकृतः दुर्दारिद्र्यरूपाणां पिशाचानां निचयः समूहः त्वदीयकरुणाकटाक्षरूपतटिन्याः नद्याः स्नानान्मज्जनेन अधुना इदानीमेव जवेन वेगात् दूरं समुत्सार्यते निरस्यते मयेति शेषः । उदात्तरूपकाऽतिशयोक्त्यो ऽलङ्काराः । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

शुचौ वंशे जन्म श्रुतिनयमतिर्मातरतुला
विकम्पा संपत्तिर्विशदमविगीता च कविता ।

---

७ लोके हि पिशाचाऽऽविष्टानां मान्त्रिकहुङ्कारैर्वेत्राऽऽघातैश्चाऽपगच्छति पिशाचबाधेति प्रायिकं, क्वचित्तु बलीयसि पिशाचे पिशाचमोचनादितीर्थाऽवगाहनेनाऽपैतीति जनदारिद्र्यमहापिशाचो राजद्वारगतभयङ्करकिङ्करहुङ्कारैः परुषवेत्राऽऽघातैश्चाऽनुच्चाटितोऽपि त्वत्कृपाकटाक्षमहानदीस्नानेनाऽचिरादपयातीति रूपकमुखेन महादुर्भगस्यापि दुरपनयं दारिद्र्यं त्वत्कटाक्षपातमात्रेण सद्यो ऽपयातीत्याह ।

८ हे मातः ! न केवलं दारिद्र्यविघात एव त्वत्कटाक्षविक्षेप-

प्रसक्तिर्दैत्यारौ हितपरमपत्यं शुभयशो
विवर्त्ताः सप्तामी ध्रुवमसदृशां तावकदृशाम् ॥ ८ ॥

शुचाविति। हे मातः ! शुचौ वंशे शुद्धे कुले जन्म उत्पत्तिः, तथा श्रुतिनययोर्वेदतर्कशास्त्रयोर्मतिर्बुद्धिः, पुनः अतुला निरुपमा विकम्पा शाश्वती च संपत्तिर्लक्ष्मीः, अन्यच्च विशदं दोषरहितं यथा तथा अनिन्दिता कविता कवनशक्तिश्च, एवं दैत्याऽरौ श्रीहरौ प्रसक्तिर्भक्तिः, परं च अपत्यं कन्या वा पुत्रो वा हितपरं स्वाऽनुकूलवर्तनादिना हितकारकं, शुभयशः सत्कीर्तिश्च इत्यमी सप्त असदृशां निरुपमानां तावकदृशां त्वत्कटाक्षाणाम् इति यावत् । विवर्ताः साधारणकार्याणि नूनं ध्रुवं निश्चयेनेत्यर्थः। शिखरिणीवृत्तम्। तुल्ययोगितालङ्कारः ॥ ८ ॥

अलमलमनुसृत्य स्वामिनि ज्ञानहीना-
नकलितबुधमानानन्वहं किम्पचानान् ।
शरणमुपगतं मां चारुकारुण्यतुङ्गैः
स्नपय जननि संपन्नृत्तरङ्गैरपाङ्गैः ॥ ९ ॥

अलमिति । हे स्वामिनि ! स्वामिन्नैश्वर्ये इति निपातना-

---

परिपाको ऽपि तु शुद्धकुलजन्म, वेदमार्गाऽनुसरणबुद्धि,निश्चला संपत्, अनवद्या कविता, भगवत्परता, हितपरा सन्ततिश्चेत्येतानि सप्त निरुपमत्वदपाङ्गपातफलमित्याह।

९ हे स्वामिनि ! अज्ञान् अकृतबुधसत्कारान् कृपणान् धनिकान् प्रतिदिनमनुसृत्य नास्ति मे प्रयोजनम् । हे जननि ! शरणागतं मां सुन्दरकरुणापरिपूर्णैः सम्पन्नृत्यस्थानभूतैः कटाक्षैः स्नपयेति प्रार्थयते।

त्साधुः । ज्ञानहीनान् स्वतो ज्ञानशून्यान् तथा अकलितः न कृतः बुधानां विदुषां बहुमानो यैस्तान् किम्पचानान् कृपणान् किम्पचानमितम्पचा इत्यमरः । अन्वहं प्रतिदिनम् अनुसृत्य अलमलं निर्वेदद्योतकम् । अतः हे जननि ! त्वमेव शरणमुपगतं रक्षणाऽऽगतं चारुणा शोभनेन कारुण्येन तुङ्गैरुन्नतैः संपदां तदभिमानिदेवतानां नृत्तस्य नर्तनस्य रङ्गैः सभाभूतैः अपाङ्गैः स्नपयाऽवलोकयेत्यर्थः । मालिनीवृत्तम् । काव्यलिङ्गमलङ्कारः ॥९॥

कृती वसुमतीपतीन् कृतचटुस्तवः सेवतां
दिशः स्फुटमटाट्यतां दिशतु धातुवादे दृशम् ।
जपत्वपि बहून् मनून् जलनिधेः सुते यस्तु ते
दृशामिह दयास्पृशामविषयो दरिद्राति सः ॥ १० ॥

कृतीति । हे जलनिधेः सुते ! कृती स्तुतिकुशलः वसुमतीपतीन् राज्ञः प्रति कृतः चटुस्तवो मनोरञ्जकमिथ्यास्तवो येन तथाभूतः सेवतामाराधयतु, तथा दिशः प्रति स्फुटम् अटाट्यतां परिभ्रमतु, धातुवादे वैद्यके व्याकरणे हैमवतीविद्यायां, किमया इति लोके, तेषु दृशं दिशतु ददातु आलोचयत्वित्यर्थः । अपि च बहून् मनून् स्वर्णाऽऽकर्षकभैरवादिमन्त्रान् जपतु, तथापि इहाऽस्मिन् लोके दयां स्पृशन्ति तासां ते तव दृशां यस्तु अविषयः

---

१० हे जलधिसुते ! कुशलः पुरुषः कृतमिथ्यास्तवः सन् राज्ञः सेवतां नाम, दिक्षु वा भ्राम्यतु, कृत्रिमसुवर्णादिनिर्माणविद्यायां वा दृष्टिं ददातु, बहुलान् मन्त्रान् वा जपतु, परं स यदि दयानिधीनां त्वद्दृशामगोचरस्तर्ह्यवश्यं दारिद्र्यभाजनमेव भवतीति त्वत्कृपाऽभावे दारिद्र्यदूरीकरणाय भूयो यतमानोऽपि न तस्मै प्रभवतीति त्वत्कृपैव दारिद्र्यनाशनिदानमित्याह ।

अगोचरो भवति स कृती कुशलोपि दरिद्राति दारिद्र्यं प्राप्नोती- त्यर्थः। दरिद्रा दुर्गतावस्माल्लट्। 'सर्वमपि वाक्यं साऽवधारण'- मिति न्यायाद्दरिद्रो भवत्येवेति भावः । पृथ्वीवृत्तम्। विशेषो- क्तिरलङ्कारः ॥ १० ॥

कृपणदशापिशाचगणमोचनवेत्रलता
मधुरिपुभक्तिवल्लिपरिषिक्तिसुधाऽम्बुधराः ।
हृदयतमोविमोक्षहिमधामकराः कमले
भगवति नः पुनन्तु भवदीयकटाक्षलवाः ॥११॥

कृपणेति। हे भगवति षड्गुणैश्वर्यवति, हे कमलवासिनि रमे! कृपणदशा दीनदशा तल्लक्षणपिशाचानां गणस्य मोचनविषये वे- त्रलता वेत्रयष्टय एव। वेत्रयष्ट्या पिशाचगणो बिभेतीति प्र- सिद्धं लोके। पुनः मधुरिपोः श्रीवासुदेवस्य भक्तिरेव वल्लिर्लता तस्याः परिषिक्तौ परिषेचने सुधाऽम्बुधराः अमृतवर्षिमेघा इव। तथा हृदयसम्बन्धिनः तमसः अज्ञानरूपाऽन्धकारस्य विमोक्षे निरसने हिमधाम्नः अमृतांशोः कराः किरणाः। ईदृग्विधाः भ- वत्या लक्ष्म्या अयं भवदीयः। भवतष्ठक्छसौ इति छस् प्रत्ययः। यः कटाक्षः अपाङ्गः तस्य लवा लेशाः। लवलेशकणाणव इत्यमरः नो ऽस्मान् पुनन्तु पवित्रीकुर्वन्तु । अवितथं नाम वृत्तम्। रूपकश्लेषोल्लेखा अलङ्कारा ज्ञेयाः ॥ ११ ॥

---

११ हे कमले! हीनाऽवस्थारूपपिशाचौघनिःसारणे वेत्रयष्टि- रूपाः, भगवद्भक्तिलतासेकाविधौ घनाघनस्वरूपाः, आन्तराऽज्ञाना- ऽन्धकारनिरसने चन्द्रकिरणरूपास्त्वदीयकटाक्षलेशास्तत्तत्फलदा- नेनाऽस्मान् पवित्रयन्त्विति प्रार्थयते।

उदीता दुग्धाब्धेः कुवलयपरीतापशमनी
पदे विष्णोर्भान्ती रजनिचरचक्रव्यसनदा।
भजन्ती सार्वज्ञं भगवति शिरः कापि कमले
शुभाऽऽलोकैः शोकं हरतु शशिलेखेव भवती ॥१२॥

उदीतेति। हे कमले! दुग्धाब्धेः क्षीरसागरात् उदीता उत्पन्नेत्युभयत्र समानम्। ई गताविलस्माभिष्ठा। कुः पृथ्वी तस्या वलयस्य मण्डलस्य अन्यत्र कुवलयानां चन्द्रविकासिकमलानां परीतापं सन्तापं शमयति सा। यद्यपि सूर्यकरविकासिचन्द्रकरविकासिन्योः कमलकैरविण्योः कोशादौ भेदो नोपलभ्यते तथाऽप्ययं विचारोऽस्मत्कृतचम्पुभारतटीकायां तृतीयस्तबके द्वाविंशतिश्लोके द्रष्टव्यः। तथा विष्णोः पदे श्रीहरिचरणे पक्षे वेवेष्टि तद्विष्णु व्यापकत्वान्नभः तत्सम्बन्धिनि पदे स्थाने तद्रूपस्थाने वा। राहोः शिर इव निर्देशः। भान्ती प्रकाशमाना। न च वियद्विष्णुपदमित्यस्य विषय इति वाच्यम्। विष्णोः पदं क्रमो यत्रेति हैमचन्द्रेण व्याख्यानात्। तथा च प्रयुज्यते आदिरामायणे 'विष्णोः पदमिवाऽऽकाशं छादितं पाण्डुभिर्घनैः' इति। रजनीचराणां राक्षसानां चोराणां च चक्रस्य

---

१२ हे भगवति कमले! दुग्धसागरसमुद्भूता, कुवलयस्य (भूमण्डलस्य कुमुदस्य च) तापनाशिनी, विष्णोः पदे (पत्युर्भगवतश्चरणे आकाशे च) शोभमाना, रजनिचरचक्रस्य (राक्षससङ्घस्य, चौरसमूहस्य रात्रिचरकोकस्य वा च) दुःखप्रदा, सार्वज्ञं शिरः (उपनिषत्सङ्घं शिवमौलिं च) भजन्ती अनिर्वचनीयस्वरूपा भवती चन्द्रलेखेव शुभदायिभिरालोकैः (दर्शनैः प्रकाशैश्च) मम दुःखं हरत्विति श्लेषेण भगवत्याश्चन्द्रलेखासाम्यं वर्णयन् तमोरूपनिजदुःखविघातं प्रार्थयते।

मण्डलस्य व्यसनदा दुःखदायिनी। 'चोराणां चन्द्रमा रिपु'रित्युक्तेः। प्रसिद्धं च लोके। यद्वा रजन्यां चरति सञ्चरति सः चक्रः चक्रवाकः तस्य व्यसनदा इति चन्द्रलेखापक्षे कोकश्चक्रश्चक्रवाक इत्यमरः। अन्यच्च सार्वज्ञं सर्वज्ञस्य वेदस्येदं सार्वज्ञं शिरः उपनिषदं भजन्ती सा, अन्यत्र सर्वज्ञस्य शिवस्येदं शिरो मूर्धानं भजन्ती भवती लक्ष्मीः हे भगवति! शशिलेखा चन्द्रकलेव शुभाऽऽलोकैः अवलोकनैः शोभनप्रकाशैश्च शोकं तापं हरतु निवारयतु इत्यर्थः। अत्र शशिलेखोपमावाचकसाधारणधर्माणां चतुर्णामुपादानात् पूर्णोपमालङ्कारः। स च प्रकृताऽप्रकृतश्लेषेण सङ्कीर्णः। शिखरिणीवृत्तम् ॥ १२ ॥

दूराजाऽऽवसथाऽभिधाननिरयद्वाराग्रजाग्रन्नर-
क्रूराऽऽलापशराऽऽहतिव्यतिकरं दूरान्निराकुर्वतीः।
पारावारसुते तरङ्गय मयि स्मेराऽम्बुजस्पर्धिनी-
र्घोराऽपारसमस्तदुष्कृतपरीहाराय धीरा दृशः ॥ १३ ॥

दूराऽजेति। हे पारावारस्य सुते! दुष्टानां राज्ञाम् आवसथो गृहं यद्वा दूरः विप्रकृष्टः यः अजावसथो ब्रह्मलोकः 'ब्रह्मलोकतृणीकारो वैराग्यस्याऽवधिर्मत' इत्युक्तेः। तदभिधानो यो निरयः क्रममुक्त्यपेक्षत्वात् तस्य द्वाराऽग्रे जाग्रतां जागरूकाणां नराणां द्वारपालानामित्यर्थः। ये क्रूराऽऽलापाः कठोरभाषणानि।

---

१३ हे समुद्रपुत्रि! कुनृपतिमन्दिराख्यनरकद्वारस्थितरक्षिपुरुषपरुषभाषणबाणाऽऽघातसम्बन्धाऽत्यन्तविनाशिनीः, विकसत्कमलतुल्या धीरा दृष्टीर्मयि भीषणानःसीमनिखिलपापदूरीकरणाय किञ्चित् पातयेति याचते।

स्यादाभाषणमालाप इत्यमरः । तएव शराः तेषामाहतेः प्रहारस्य व्यतिकरं संपर्कं दूरान्निराकुर्वतीर्दूरं निरस्यन्तीः । तथा स्मेराऽम्बुजानि विकसितकमलानि स्पर्धयन्ति(?) ताः तत्समा इत्यर्थः । धीरा दृशः कटाक्षान् घोराणामपाराणां तरितुमशक्यानां समस्तानां दुष्कृतानां पातकानां परीहाराय नाशाय मयि वेङ्कटकवौ तरङ्गय व्यापारय । न हि तव दृष्टिविषयः पुमान् राजद्वारे याताऽऽयातेनाऽऽत्मानं खेदयतीति भावः । शार्दूलविक्रीडितं वृत्तम् । उपमालङ्कारः ॥ १३ ॥

अघटितघटनापटीयसी ते
हरिगृहिणि प्रकटा कटाक्षरेखा ।
स्थिरवसुमवनीपकं विधत्ते
जननि वनीपकमेव हन्त जन्तुम् ॥ १४ ॥

अघटितेति । हे हरेर्गृहिणि पत्नि ! हन्तेति विस्मये । ते कटाक्षरेखा अपाङ्गलेशः वनीपकमेव जन्तुम् अवनीपकं विधत्ते इत्यघटितघटनायां, परिहारस्तु वनीपकं दरिद्रमेव सन्तं वनीपको याचनक इत्यमरः । अवनीं पाति सः अवनीपः स एवाऽवनीपकस्तं भूपतिं सन्तं स्थिरं चिरकालस्थायि वसु द्रव्यं यस्य तं करोति । अतः हे जननि मातः ! सा अघटितघटनायाम् अनिर्वाच्यकरणे इत्यर्थः । पटीयसी अतिशयेन पटुः कुशला

---

१४ हे विष्णुपत्नि ! तवाऽपाङ्गरेखा ऽघटितस्य घटनायामतिशयेन पटु,र्यतो हि सा याचकं जनमचलसमृद्धिं राजानं करोतीति वनीपकमवनीपकं विधत्ते इत्यनेनाऽघटनघटनापटुत्वं प्रकटयन्नाह ।

अजादी गुणवचनादितीयसुन् । प्रकटा प्रसिद्धा । औपच्छन्दसिकं वृत्तम् । अत्र वनीपकाऽवनीपकत्वविधानाद्विरोधाभासः, काव्यलिङ्गं च ॥ १४ ॥

नयने फणीन्द्रशयनेष्टनायके
यदि नाऽऽदधासि सुदिनाऽब्जशोभने ।
बलभेदनोऽपि न लभेत संपदं
मरुतामयेत मरुतामपि स्थली ॥ १५ ॥

नयने इति । फणीन्द्रशयनस्य शेषशायिनो हरेरिष्टनायिके अभीष्टप्रिये ! यदि त्वं रमा मेघच्छन्ने ऽह्नि दुर्दिनं तद्विपरीतं सुदिनं तत्र विकासिताऽब्जे इव शोभने रमणीये नयने नेत्रे नाऽऽदधासि न स्थापयसि तदा बलनामाऽसुरं भिनत्ति स इन्द्रोपि सम्पदं न लभेत न प्राप्नुयात् । तथा मरुतां देवानां स्थली अमरावत्यपि मरोर्भावो मरुता तां निर्जलदेशताम् अयेत प्राप्नुयात् । मञ्जुभाषिणी वृत्तम् ॥ १५ ॥

करुणारसेन वरुणालयाऽऽत्मजे
म्रदिमानमेत्य यदि मामवेक्षसे ।

---

१५ हे शेषशायिप्रेयसि ! त्वं निरभ्रदिनसुभगकमलसुन्दरे स्वनयने यदि न पातयसि तर्हि देवेन्द्रो ऽपि न सम्पदमासादयेत्, स्वर्गलोकोपि धन्वतां प्राप्नुयादिति त्वत्कटाक्षपात एव सम्पत्सुखनिदानमित्याह ।

१६ हे समुद्रसुते ! त्वं दयारसेन मार्दवमुपगम्य यदि मां पश्यसि तर्हि कलुषाऽन्तरङ्गेण कालेन किं क्रियेत, कृतान्तदूतो वा

मलिनात्मना ऽपि कलिना क्रियेत किं
मम किं करोतु यमकिङ्करोपि वा ॥ १६ ॥

करुणेति । हे वरुणालयस्य वरुणनिवासस्थानस्य समुद्रस्याऽऽत्मजे कन्ये ! करुणारूपेण रसेन म्रदिमानं मृदुत्वम् एत्य प्राप्य मामवेक्षसे निरीक्षसे, तदा मलिनात्मना पापबुद्धिनापि कलिना किं क्रियेत, न किं चिदित्यर्थः । अथ वा मम यमस्य किङ्करो दूतोपि किं कुर्यात् । अपि तु न किमपि । यदि त्वत्करुणावीक्षणं भवेत्तदा ऽन्यः कोपि मम लोमापि वक्रं न कुर्यादिति भावः । मञ्जुभाषिणी वृत्तम् ॥ १६ ॥

मामपाङ्गलहरी गरीयसी
तावकी स्पृशतु देवकीस्नुषे ।
अन्तकस्य तु रुषा कषायिता
मा पतन्तु मयि दुष्टदृष्टयः ॥ १७ ॥

मामिति । हे देवक्याः स्नुषे ! गरीयसी महती तावकी त्वदीया अपाङ्गलहरी मां स्पृशतु, इति प्रार्थनायां लोट् । तु पुनः रोषेण कषायिताः कथितास्तप्ता इति यावत् । अन्तकस्य यमस्य दुष्टाश्च ता दृष्टयश्च मयि मा पतन्तु । अत्र यद्यपि माङ्योगे सर्वलकाराऽपवादलुङ्प्राप्तिस्तथाप्ययं न माङ् निपातः किं तु माशब्दो बोध्यः । रथोद्धता ॥ १७ ॥

---

मम किं क्रियादिति त्वदपाङ्गगोचरस्य मे न कलेर्यमकिङ्कराद्वा काचिद्भीतिरतस्त्वया कृपया मयि निपातनीयाः करुणाकटाक्षा इत्याह ।

१७ हे देवकीस्नुषे ! उदारा तवाऽपाङ्गतरङ्गपरम्परा मां स्पृशतु, येन यमस्य कोपकलुषा दुष्टा दृष्टयो मयि न पतेयुरित्याह ।

बन्धुरगुणे कृपणबन्धुमनपायं
सिन्धुतनये तव कटाक्षमकरन्दम् ।
इन्दुकरवृन्दजडचन्दनमहीभृ-
त्कन्दरमरुच्छिशिरसुन्दरमुपासे ॥ १८ ॥

बन्धुरगुणे इति । हे भक्तेषु बन्धुराः सुन्दरा गुणा औदार्यादयो यस्यास्तत्सम्बुद्धौ । बन्धुरं तु त्रिषु स्याद्रम्यनम्रयोरिति मेदिनी । हे सिन्धुतनये दुग्धोदन्वत्पुत्रि ! कृपणानां दीनानां च बन्धुं हितकारिणम् अनपायं नाशरहितं पुनरिन्दोश्चन्द्रस्य करवृन्दैः किरणसमूहैः जडस्य शीतलस्य चन्दनमहीभृतो मलयाऽचलस्य कन्दरेभ्यो गुहाभ्यः दरी तु कन्दरो वा स्त्री इत्यमरः । निर्गच्छन् यो मरुद्वायुस्तद्वत् शिशिरं शीतलम् अत एव सुन्दरं रमणीयं तव कटाक्षरूपं मकरन्दं रसम् अहम् उपासे आश्रये । इन्दुवदनावृत्तम् । काव्यलिङ्गप्रौढोक्ती अलङ्कारौ ॥ १८ ॥

आर्तिं लुम्पत्वम्ब तवाऽपाङ्गसुधाऽऽत्मा
गङ्गा सैषा चित्रगतिर्वर्जितभङ्गा ।

---

१८ हे उन्नतगुणे सागरसुते ! दीनजनबन्धुरूपम् अविनश्वरं चन्द्रकिरणशीतलितमलयाऽचलगुहागन्धवहशिशिरं रम्यं त्वत्कटाक्षरूपं पुष्परसं समाश्रयामीत्याह ।

१९ हे मातः ! एषा त्वदपाङ्गसुधारूपिणी विचित्रगतिः सुरनदी मम दुःखं विनाशयतु, या वर्जितभङ्गा ( पराभवशून्या, निस्तरङ्गा च ) भवं ( संसारं, शिवञ्च ) शोषयन्ती प्राज्ञानां (पण्डितानां, प्रकृष्टाऽज्ञानानां च) भासितरूपं ( भया कृष्णवर्णविष्णुरूपतां, कान्त्या

नेत्री शोषं प्रत्युत भवमेवमजस्रं
प्राज्ञानां या भासितरूपं च विधत्ते ॥ १९ ॥

आर्तिमिति । हे अम्ब हे मातः ! तव अपाङ्गसुधालक्षणः आत्मा मूर्तिर्यस्याः सा गङ्गा भागीरथी आर्तिं पीडां लुम्पतु नाशयतु । इयं गङ्गा सत्यपि विचित्रा विलक्षणा गतिर्वर्तनं यस्याः सा वर्तते । एका वर्जितभङ्गा परा भङ्गसहिता । अत्र भङ्गो नाशस्तरङ्गश्च । उत किम्(?) एका भवं मति शोषं नेत्री अपरा आर्द्रतां नेत्री । अत्र भवः संसारः शिवश्च । किं च एका प्राज्ञानां अज्ञानां भया कान्त्या असितं कृष्णं रूपं विधत्ते विष्णुं करोतीत्यर्थः । परा द्वितीया तु सितं शुक्लं शिवं करोतीत्यर्थः । मत्तमयूरं वृत्तम् । काव्यलिङ्गश्लेषावलङ्कारौ ज्ञेयौ ॥ १९ ॥

उच्चकोरकनवाऽभ्युदयं ते वीक्षितं मनुमहे मकरन्दम् ।
यत्र तल्लगति षट्पदमन्त्रस्तत्र भाति शतपत्रगृहे यत्॥२०॥

उच्चेति । हे शतपत्रगृहे ! ते वीक्षितम् अवलोकनं मक-

---

शुक्लरूपतां, प्रकाशमानरूपतां च ) विधत्ते इति प्रसिद्धगङ्गायाः सभङ्गतया भवार्द्रीकारेण प्राज्ञजनासितरूपाऽऽपादनेना,ऽस्याः कटाक्षगङ्गाया अभङ्गतया भवशोषकतया अज्ञजनविष्णुरूपताऽऽपादनेन च श्लेषेण वैचित्र्यं प्रदर्शयन् त्वत्कटाक्षपातेन पराभवाऽभावः संसारनाशो विष्णुत्वप्राप्तिश्च भवतीत्याह ।

२० हे कमलगृहे ! उच्चकोरकनवाऽभ्युदयं ( उत्कृष्टचकोरसमाननवोदयम, उन्नतकलिकानवोदयं च ) ते ऽवलोकनं मकरन्दं मन्यामहे, यतस्तद् यत्र सम्बन्धमाप्नोति तत्र षट्पदमन्त्रः ( षाड्गुण्यविचारः, मधुकरझङ्कारश्च ) भातीति वीक्षितस्य मकरन्दसाम्यं श्लेषेण वर्णयन् त्वद्दृग्गोचरः सन्ध्यादिषाड्गुण्यविचारशाली भूपतिर्भवतीत्याह ।

रन्दं मनुमहे मन्यामहे । तत्र हेतुः—उत् उत्कृष्टः चकोरवन्नवो ऽभ्युदयो यस्य, अन्यत्र उच्चे कोरके, कलिका कोरकः पुमानित्यमरः । नवः अभ्युदय उत्पत्तिर्यस्य तद्वीक्षितं मकरन्दश्च तद्यत्र लगति तत्र षट्पदमन्त्रः भ्रमरझङ्कारः षाड्गुण्यमन्त्रश्च भाति, राजा भवतीति यावत् । षाड्गुण्यममरे–सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः षड् गुणा इति । स्वागतावृत्तम् । काव्यलिङ्गं श्लेषश्चालङ्कारः ॥ २० ॥

यक्षश्रीजननचणैस्तवाऽवलोकै-
र्लक्ष्मि श्रीक्षयपिशुना निरस्यमाना ।
नालीकाऽऽसनलिपिरप्यलीकलग्ना
नाऽलीका भवति नृणां प्रतीपगत्या ॥ २१ ॥

यक्षेति । हे लक्ष्मि ! श्रीक्षयस्य पिशुना ऽपि । पिशुनौ खलसूचकौ इत्यमरः । नृणां पुंसाम् अलीके । ललाटमलिकमित्यमरः । लग्ना नालीकाऽऽसनस्य ब्रह्मणः लिपिः यक्षश्रियः कुबेरसम्पदः जननेनोत्पादनेन वित्तैः । तेन वित्त इति चणप्प्रत्ययः । तवाऽवलोकैरनिरस्यमाना अनिष्कास्यमाना(?) अलीका मिथ्या न भवति किं तर्हि यक्षश्रीजनिकैव भवति। कुत इति चेत्, प्रतीपगत्या, श्रीदेव्याः कटाक्षस्य प्रतीपगतित्वात् । प्रतीपदर्शिनी वा-

---

२१ हे लक्ष्मि ! श्रीक्षयसूचिका ऽपि भाललिखिता वैधसी लिपिर्यक्षलक्ष्मीसमुत्पादनेन प्रसिद्धैस्त्वदीयाऽपाङ्गदर्शनैः क्षिप्यमाणा ऽपि विपरीतगत्या ऽनृता न भवतीति दुर्भगस्य ललाटलिखितायाः श्रीक्षयसूचिकाया ब्रह्मलिपेस्त्वत्कटाक्षपाते संप्राप्त्या ऽलीकत्वप्राप्तिप्रसङ्गे ऽपि श्रीक्षयपदस्य प्रातिलोम्येनोच्चारणे यक्षश्रीति सिद्धेः सा ऽसत्या न भवतीति वैचित्र्येण वदन् दुर्भगोऽपि त्वत्कटाक्षविषयो भवन् कौबेरीं संपदमासादयतीत्याह ।

मेत्यमरोक्तोत्तमस्त्रीसम्बन्धित्वेनेति । अयं भावः—श्रीक्षय इत्याकारिका लिपिः रमायाः कटाक्षस्य प्रतीपगामितया विपरीतगतित्वेन यक्षश्री इत्याकारिकैवेति न निरस्यते, जन्यते च यक्षश्रीरिति सत्यपि यथाऽवस्थितौ(?) मिथ्या न भवतीति। अत्र लक्ष्मीकटाक्षस्य विचित्रकारित्वं दर्शितमिति ज्ञेयम् । प्रहर्षिणी वृत्तम्। विशेषोक्तियमकालङ्कारौ ॥ २१ ॥

दुग्धाऽब्धिकन्ये त्वदपाङ्गभृत्या
विात्ताधिपत्यादिपदाऽभिषिक्ताः ।
हृत्तापयुक्तास्तव देव्यभक्ता
मर्त्या जगत्यां विलपन्ति रिक्ताः ॥ २२ ॥

दुग्धाऽब्धीति। हे दुग्धाऽब्धितनये रमे! त्वदपाङ्गस्य त्वदीयकटाक्षस्य भृत्या उपासकाः वित्ताऽधिपतिः कुबेरः तदादिपदेषु स्थानेष्वभिषिक्ताः भवन्ति। हे देवि! ये तु पुनस्तवाऽभक्ता मर्त्याः वित्ताधिपत्यादिना रिक्ता रहितास्ते हृत्तापेन मनोव्यथया युक्ताः सन्तो जगत्यां भूमौ विलपन्ति शोचन्ति। इन्द्रवज्रावृत्तम् ॥ २२ ॥

वीक्षितानि तव वारिधिकन्ये
यत्र पालितजगन्ति लगन्ति ।

---

२२ हे क्षीराऽब्धिसुते! त्वत्कटाक्षकिङ्करा जनाः कौबेरपदाऽधिष्ठिता भवन्ति तवाऽभक्ताश्च हृत्तापव्याकुला अकिञ्चनाः सन्तो जगति विलपन्तीति भगवतीभक्त्यभक्त्योः फले प्रतिपादयति।

२३ हे वारिधिपुत्रि! परिपालितनिखिललोकानि ते विलोकितानि यत्र पतन्ति स पुमानत्राऽमुत्र च देहिशब्दं (इह देहि इति

चित्रमत्र स परत्र च देही
देहिशब्दमपहाय चकास्ति ॥ २३ ॥

वीक्षितानीति । हे वारिधिकन्ये लक्ष्मि ! पालितं रक्षितं जगत् यैस्तानि तव वीक्षितानि यत्र पुरुषे लगन्ति स देही देहोपाधिको जन्तुः अत्राऽस्मिन् लोके परत्र परलोके च देहिशब्दं देहीति शब्दं, पक्षे पाञ्चभौतिकदेहवानिति शब्दं च अपहाय त्यक्त्वा चकास्ति शोभते इति चित्रं, भवत्कटाक्षविषयः पुमान् भक्तिभाग् भवतीति भावः(?) । स्वागतावृत्तम् । विरोधाभासालङ्कारः ॥ २३ ॥

तव देवि पटुर्नटः कटाक्षो
गुणवत्तालसदुच्छ्रयः स नूनम् ।
ननु नर्तयते सरस्वतीं यः
सततं संश्रितमञ्जुलाऽऽस्यरङ्गे ॥ २४ ॥

तवेति । हे देवि ! गुणवत्ततं वाद्यं(?) तालश्च ताभ्यां लसन्नुच्छ्रय औन्नत्यं यस्य पक्षे गुणा दाक्षिण्यादयः सन्त्यस्याऽसौ

---

याचनाशब्दं, परत्र च विदेहत्वेन देहधारीति शब्दं च विमुच्य विदेहकैवल्यं भजते इति भगवतीकटाक्षविषयस्येहाऽमुत्र च यथायथं भोगाऽपवर्गप्राप्तिर्भवतीत्याह ।

२४ हे देवि ! तव गुणवत्तालसदुच्छ्रयः ( कारुण्यादिगुणवत्त्वेन स्फुरन्महिमा, माधुर्यादिगुणवन्तो ये तालाः कालक्रियासाम्यानि तत्र शोभमानं पाटवं यस्येति च ) तथा भूतः कटाक्षः प्रवीणो नट एवेति मन्यामहे, य आश्रितानां रमणीये मुखरूपे नाट्यस्थले सर्वदा सरस्वतीं नर्तयते, इति रमाकटाक्षस्याऽऽश्रितविद्याप्रदत्वं वर्णयति ।

गुणवान् तस्य भावस्तत्ता तया लसदुच्छ्रयः नन्वित्यतः तव कटाक्षः नूनं पटुः कुशलः नटो नर्तकः संश्रितानां भक्तानां मञ्जुलं सुन्दरं यदास्यं तदेव रङ्गो नर्तनशाला तत्र। पक्षे संश्रितं मञ्जु लास्यं नृत्यं यस्मिन्नीदृशे रङ्गे सभायां सततं सरस्वतीं वाग्देवीं नर्तकीं स्त्रियं च नर्तयते ननु। सरस्वती सरिद्भेदे गोवाग्देवतयोरपि स्त्रीरत्ने चेति विश्वः। औपच्छन्दसिकं वृत्तम्। रूपकमुत्प्रेक्षा वा श्लेषश्च ॥ २४ ॥

भावत्कैर्भगवति कज्जलाऽनुविद्धैः
कृष्णो यैर्भवति विधुः कटाक्षलेशैः।
तत्पूरैरधिकतमश्रियां निदानै-
र्मालिन्यं हरसि विचित्रमान्तरं नः ॥ २५ ॥

भावत्कैरिति। हे देवि! भवत्या इमे भावत्कास्तैः कटाक्षस्य लेशैः विधुश्चन्द्रसदृशः पक्षपातशून्यतया समत्वात्स्वच्छोपि कृष्णो भवति, साऽपराधानभिमुखं कर्षतीत्यर्थः। सदयो भवतीति यावत्(?) यत्तद्यथाकथं चित्क्षमम्। ईषत्कृष्णसम्बन्धाच्छुभ्रमपि कृष्णं भवति, परं तु अधिकतमसो ऽत्यन्ताऽन्धकारस्य श्रियं पक्षे ऽत्यन्तसम्पदां निदानैः। निदानं त्वादिकारणमित्यमरः। तेषामुक्तलक्षणकटाक्षाणां पूरैः नः अस्माकम् आन्तरं हृदयस्थं मा-

---

२५ हे देवि! त्वदीयैर्यैः कज्जलमिलितैः कटाक्षलवैः विधुः (विष्णुश्चन्द्रश्च) कृष्णवर्णो भवति, अधिकतमश्रियाम् (अत्यधिकसम्पत्तीनाम्, अधिकाऽन्धकारकान्तीनां च) आदिकारणैस्तैरस्माकमान्तरं मालिन्यम् (मलिनवर्णम्, अज्ञानं च) नाशयसीति स्वतः कृष्णैः परकृष्णत्वाऽऽपादकैः कटाक्षैरस्मन्मालिन्यमपहरसीति चित्रमिति वदन् त्वत्कटाक्षो ऽस्मदज्ञानविनाशक इत्याह।

लिन्यमज्ञानलक्षणं हरसि नाशयसि इत्येतद्विचित्रम् । अत्र अधिकमालिन्येन मालिन्यमपगच्छतीति चित्रतरमेतत् । प्रहर्षिणीवृत्तम् । समव्याघातौ अलङ्कारौ सश्लेषौ ज्ञेयौ ॥ २५ ॥

विकस्वराऽऽमोदभरं वितन्वती
पुरोवसन्तं प्रथितागमाश्रिता ।
कटाक्षवल्ली तव माधवप्रिये
प्रसौत्यनन्तं सुमिताप्यसौ फलम् ॥ २६ ॥

विकस्वरेति । हे माधवप्रिये ! पुरोवसन्तं वसन्तस्य ऋतोः पुरस्तादेवेत्यर्थः । पक्षे सेवार्थमुपसन्नं भक्तं प्रति विकस्वरं विकसितमामोदभरं सुगन्धभरं सन्तोषभरं च वितन्वती विस्तारयन्ती, तथा प्रथितागमेन ख्यातवेदेनाऽश्रिता स्तुता, पक्षे पलाशी द्रुद्रुमाऽगमा इत्यमरादगमो वृक्षस्तत्राऽऽरूढा । तवाऽसौ कटाक्षरूपवल्ली लता सुमिता परिमितापि पक्षे पुष्पिताऽपि अनन्तं बहु, पक्षे भगवद्रूपं फलं प्रसौति ददाति । न हि लतायाः प्रायशः फलं दृष्टं किं तु स्वयमेवेति भावः । वंशस्थं वृत्तम् । श्लेषरूपकविभावनालङ्काराः ॥ २६ ॥

———

२६ हे माधवप्रिये ! पुरोवसन्तं ( वसन्तर्तोः पुरः, अग्रेवासिनमुपासकञ्च प्रति ) विकसनशीलं सन्तोषभारं सुगन्धभारं च विस्तारयन्ती सुमितापि ( परिमितापि, पुष्पितापि च ) तव कटाक्षरूपा लता अनन्तं ( भगवद्रूपं, निःसीमं च ) फलं प्रसूते इति त्वत्कटाक्षलेशो भक्तानां विष्णुसारूप्यप्रापक इत्याह ।

न विप्रयोगिव्यसनाय कल्पते
न मार्गणानां सहते च पञ्चताम् ।
भवं जवात् प्रत्युत दन्दहीत्ययं
जयत्यपाङ्गस्तव चित्रमिन्दिरे ॥ २७ ॥

नेति । हे इन्दिरे कमले ! तवाऽयमपाङ्गः कटाक्षः अपगतम् अङ्गं यस्य स मदनोपि सन् चित्रं यथा तथा जयति विराजति । चित्रत्वमेवाऽऽह नेत्यादिना । अयं विप्रा ब्राह्मणा ये योगिनः तेषां व्यसनाय दुःखाय न कल्पते न समर्थो भवति, मदनस्तु विरहिदुःखाय कल्पते । तथा मार्गणानां दरिद्राणां बाणानां च पञ्चतां मरणं पञ्चत्वं च न सहते स तु सहतएव। तस्य पञ्चशरत्वेन प्रसिद्धेः । मार्गणो याचके शरे, पञ्चता पञ्चभावे स्यात् पञ्चता मरणेपि चेति विश्वौ । प्रत्युताऽयं जवाद्भवं दन्दहीति अत्यन्तं दहति । भृशार्थे यङ् । स तु भवेन शिवेन दृक्पातेनैव दग्धः। वंशस्थं वृत्तम् । श्लेषव्यतिकरावलङ्कारौ ॥२७॥

विकचकमलशोभाविभ्रमोद्भूतिसीमा
विधुमिह सदुपास्यं तन्वती सुप्रसन्नम् ।

---

२७ हे इन्दिरे! तवाऽपाङ्गः कटाक्ष एवाऽपाङ्गः कामः स चित्रं यथा स्यात्तथा जयति । तथा हि-प्रसिद्धः कामस्तावद् वियोगिदुःखदानाय कल्पते, बाणपञ्चत्वं सहते, भवेन च दह्यते, तद्विपरीतश्चाऽयमपाङ्गकामो यो विप्रयोगिव्यसनं न करोति, बाणपंञ्चत्वं न सहते, प्रत्युत भवमेवाऽतिशयेन दहतीति श्लेषेण प्रसिद्धकामवैपरीत्यं दर्शयन् कटाक्षस्य विप्राणां योगिनां च व्यसनाऽकरणं, याचकजनमरणाऽसहनं, प्रत्युत संसारदहनञ्च कार्यमिति फलं प्रदर्शयति ।

२८ हे शार्ङ्गिणः प्राणप्रिये ! विकसितकमलानामिव या शोभा,

शरदिव तव वीक्षा शार्ङ्गिणः प्राणकान्ते
शमयतु किल मेघाऽऽटोपमुज्जृम्भितापम् ॥ २८ ॥

विकचेति । भो शार्ङ्गिणः प्राणकान्ते रमे ! सद्भिः साधुभिर्नक्षत्रैश्च उपास्यं विधुं विष्णुं चन्द्रं च इहाऽस्मिन् लोके सुप्रसन्नं प्रसादोन्मुखं स्वच्छं च तन्वती कुर्वती, पुनः विकचानां प्रफुल्लानां कमलानां पद्मानामिव शोभाया विभ्रमस्य, विलासस्य, पक्षे विकचानां कमलानां जलानां पद्मानां च शोभायाविभ्रमस्य आवर्तस्य च उद्धूतेः सीमा मर्यादा तव वीक्षा दृष्टिः शरदिव किल निश्चयेन उज्जृम्भिताः सर्वतः प्रसृता आपो यस्मिन् । ऋक्पूरब्धूरित्यप्रत्ययः । पक्षे उज्जृम्भी उत्कटः तापो येन(?)तं विरहिणमित्यर्थः । मेघाटोपं मेघपटलम्, अन्यत्र मे ममाऽघानां पातकानामाटोपं भरं डम्बरं च शमयतु नाशयतु । मालिनीवृत्तम् । उपमाश्लेषावलङ्कारौ ॥ २८ ॥

नित्यामेव विभूतिमम्ब दिशतो निर्व्याजबन्धोर्भव-
द्दिव्याऽपाङ्गलवस्य वर्णनविधौ को लब्धवर्णो भुवि ।

---

तेषां च या शोभा तस्या यो विलासस्तदुदयस्य सीमा, सदुपास्यं (साधुसेवनीयं नक्षत्रसेव्यञ्च) विधुं (हरिं चन्द्रञ्च) सुप्रसन्नं (संतुष्टं निर्मलञ्च) वितन्वती त्वदीक्षा शरदिव उज्जृम्भितापं (प्रवर्धिततापं, प्रवृद्धजलञ्च) मे अघाटोपं (पापाडम्बरमेव मेघाऽऽटोपं जलदाडम्बरं) शमयत्विति निजपापशमनं प्रार्थयते ।

२९. हे अम्ब ! शाश्वतीं समृद्धिं ददतो ऽकृत्रिमबन्धोस्त्वद्दिव्यकटाक्षलेशस्य वर्णनकरणे भुवि को वा विचक्षणः स्यात्, यस्मै कटाक्षलेशाय अष्टदृष्टिर्ब्रह्मा, त्रिनयनः शिवः, सहस्राक्ष इन्द्रः, द्वादशने-

जुष्टो दृष्टिभिरष्टभिश्च तिसृभिः प्रायः सहस्रेण वा
देवि द्वादशभिश्च दैवतगणो यस्मै चिरं तिष्ठते ॥ २९ ॥

नित्यमिति । हे देवि ! नित्यां शाश्वतीमेव विभूतिमैश्वर्यं ददतो दातुस्तथा निर्व्याजबन्धोरकृत्रिमसुहृदो भवत्या दिव्याऽपाङ्गस्य सुन्दरकटाक्षस्य लवस्य लेशस्य वर्णनविधौ स्तुतिकरणे लब्धवर्णो विचक्षणः कः ? न कोपीत्यर्थः । तिसृभिर्दृग्भिः जुष्टो युक्तः त्र्यम्बकः, ताभिरेवाऽष्टभिर्जुष्टो ब्रह्मा, तथा द्वादशभिर्युक्तः षण्मुखः, प्रायः दृष्टिसहस्रेण युक्तः शक्रः, एतादृशोपि दैवतगणः यस्मै अपाङ्गाय चिरं तिष्ठते आशयं प्रकाशयितुमित्यर्थः । कदाऽयमस्मासु निपतेदिति प्रतीक्षतइति यावत् । श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान इति चतुर्थी । प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदम् । शार्दूलविक्रीडितं वृत्तम् । काव्यलिङ्गपर्यायोदात्तालङ्काराः ॥२९॥

त्वत्तादृक्षकटाक्षकङ्कटधरः श्रीवेङ्कटाऽधीशितुः
प्राणप्रेयसि भूयसीं प्रभजते शौर्याभिमुख्यश्रियम् ।

---

अथ कार्तिकेयो निजोपरि पतनाऽभिप्रायं प्रकाशयमानश्चिरमुपास्ते इति ब्रह्मादिसुरवरसमभीप्सितस्य त्वद्दृष्टिलेशस्य वर्णने भूतलगतो मनुजः कथंकारमलं स्यादित्याह ।

३० हे वेङ्कटपतिप्राणप्रियतमे ! त्वत्प्रासिद्धकटाक्षकवचधरस्त्वदुपाश्रितो बहुलां शौरेः शौर्यस्य च सांमुख्यलक्ष्मीमाप्नोति, सद्यः शुभयशसायुक्तः, समरोत्तमजयं ( देवेन्द्रजयम्, अविचलं श्रेष्ठं जयं च ) प्राप्तः सन् शत्रून् नित्यं पराभूय राज्ञां चाक्छत्रैनं विध्यते इति त्वत्कटाक्षरक्षिततनुस्त्वदाश्रितः पुमानासादितभगवदाभिमुख्यः कामक्रोधादिषड्रिपुपराभवपुरःसरं लोके विजयी भूत्वा कुनृपवाग्बाणैरवि-

सत्कीर्त्या सद्वसा ऽमरोत्तमजयं प्राप्तः स चोपाश्रितो
वाग्बाणैर्न विहन्यते क्षितिभुजां निर्जित्य नित्यं द्विषः॥३०॥

त्वदिति। हे श्रीः, वेङ्कटाधीशितुः प्राणप्रेयसि ! तव ता-दृक्षः प्रसिद्धः यः कटाक्ष एव कङ्कटधरः कवची पुमानित्यर्थः। उरश्छदः कङ्कटक इत्यमरः। भूयसीं कटाक्षपक्षे शौरेर्भगवतः, पुरुषपक्षे शौर्यस्य वीर्यस्याऽऽभिमुख्यश्रियं भजते च। तथा सत्या कीर्त्या प्रसादेन यशसा चोपाश्रितो महितः पूजितो भवति। कीर्तिः प्रसादयशसोर्विस्तारे कर्दमेपि चेति विश्वः। तथा अमरः शाश्वत उत्तमश्च जयस्तम्, अन्यत्राऽमरोत्तमेषु जयं प्राप्तः सन् नित्यद्विषः कामादयः शत्रवश्च तान्निर्जित्य क्षितिभुजां राज्ञां वाग्बाणैः कठोरभाषणरूपैः, पक्षे अवाक् नीचैः कङ्कटान्तर्वर्तिशरीरविद्धो यथा भवति तथा बाणैः शरैरपि न विहन्यते न खिद्यतइत्यर्थः। शार्दूलविक्रीडितम्। रूपकश्लेषौ॥ ३०॥

यावत्तावत्कवीक्षा चरति तनुभृतामिन्दिरे मन्दिरेषु
व्यक्तं नृत्तं विधत्ते धनपतिविभवादुन्तरा वित्तराजिः।
द्वारे तारेशगौरास्तुरगपरिवृढाः सिन्धुरा बन्धुराङ्गा
गर्वात्पुष्यन्त्यखर्वाऽभ्युदयमभिमुखं राजते राजतेजः॥३१॥

यावदिति। हे इन्दिरे तनुभृतां प्राणिनां मन्दिरेषु गृहेषु

---

क्षतः कीर्तिशाली संपद्यते इति श्लेषेणाऽप्रस्तुतवीरभटवृत्तान्तवर्णनमुखेनाह।

३१ हे इन्दिरे! यावत् तावत्कीना वीक्षा प्राणिनां गृहेषु चरति तावत् तत्र कुबेराऽधिका सम्पद्राजते, एवं तद्द्वारे चन्द्रधवलास्तुरङ्गा, उन्नताऽङ्गाः करिणो दर्पान्महान्तमुदयं पुष्णन्ति, तस्य पुरुषस्य मुखे च चन्द्रसदृशी कान्तिः नृपतेजो वा परिस्फुरतीत्याह।

यावत्कालपर्यन्तं भावत्कवीक्षा त्वत्कटाक्षश्चरति प्रवर्तते तावद्ध-नपतेः कुबेरस्य विभवादैश्वर्यादपि उत्तरोत्कृष्टा वित्तराजिर्द्र-व्यपङ्क्तिः नृत्तं नर्तनं विधत्ते कुरुते। तथा द्वारे ताराणामीशश्चन्द्रः तद्वच्छुक्लास्तुरगपरिवृढा अश्वनायकाः । प्रभौ परिवृढ इति निपातनात्साधुः। प्रभुः परिवृढो ऽधिप इत्यमरः। बन्धुराङ्गा न-तोन्नताऽङ्गाः सिन्धुरा गजाः गर्वादखर्वो महांश्चासावभ्युदयश्च तं पुष्यन्ति । तथा ऽभिमुखं मुखोपरि राज्ञश्चन्द्रस्य भूपस्य च तेजः राजते। स्रग्धरावृत्तम्। हेतूदात्तावलङ्कारौ श्लेषश्च ॥३१॥

धन्यः कश्चिज्जगति विषयस्तावकाऽऽलोकितानामत्राऽमुत्राप्यखिलजननि प्राप्य गोत्राऽधिकृत्त्वम् ।
सत्सन्तानप्रभवसुमनःसेवयामोदशाली
जैत्रस्थानं किमपि भजति श्रीमदुच्चामरं च ॥ ३२ ॥

धन्य इति। हे ऽखिलजननि ! तावकानामवलोकितानां कटक्षाणां विषयः गोचरः जगति कश्चिद्धन्यः पुण्यवान्नरः अत्राऽमुत्रेहपरलोकयोरपि अत्र गोत्रा पृथ्वी, अमुत्र गात्रं स्वर्गं त्रायते इति गोत्रः राजा इन्द्रश्च तयोरधिकृत्त्वं भोगकर्तृत्वमधि-कारं च प्राप्य सत् सन्तानः सुपुत्रः प्रभवः पराक्रमः सुमनसः सा-धवस्तेषां सेवया ऽन्यत्रोत्तमकल्पद्रुमप्रभवपुष्पसेवनेन आमोदेन

---

३२ हे जगदम्ब ! त्वत्कटाक्षपात्रं लोके कश्चित्सुकृती इह गोत्राऽधिकृत्त्वं ( भूम्यधिकारित्वं ) अमुत्र च गोत्राधिकृत्त्वम् ( प-र्वताऽधिककृन्तकत्वमिन्द्रत्वमिति यावत् ) प्राप्य, इह साधुसन्तानो-त्पत्त्या पण्डितसेवया च सन्तुष्टः, परत्र च देवतरुपञ्चकमध्यगस-न्तानवृक्षोदितपुष्पसेवनेन सौरभशाली सन्, इह ऊर्ध्वविचलच्चामरं, परत्र उन्नतदेवशोभित, मनिर्वचनीयं जैत्रं पदं भजतीति श्लेषणाह ।

हर्षेण सुगन्धेन च तच्छाली(?) । ताच्छील्ये णिनिः । श्रीमच्छ्री-युक्तम् । उत्कृष्टं चामरं प्रकीर्णकं, पक्षे उच्चा अमरा देवाश्च यस्मिन् तव किमपि जैत्रस्थानं भजति सेवते । मन्दाक्रान्तावृत्तम् । श्लेषालङ्कारः ॥ ३२ ॥

शय्योत्थायं जननि धनिनां वासमासायमित्थं
गत्वा गत्वा ऽप्यनुदिनमनुच्छिन्नतृष्णोद्गमो ऽहम् ।
हृद्यापाङ्गामिव भवदवप्लोषशान्त्यै रमे त्वां
हृद्याऽपाङ्गां मधुरिपुवशीकारविद्ये प्रपद्ये ॥ ३३ ॥

शय्येति । हे जननि, हे मधुरिपोर्वशीकारविद्ये ! अहं शय्याया उत्थायेति शय्योत्थायम् । अपादाने परीप्सायामिति णमुल् । प्रातरारभ्येत्यर्थः । सायं मर्यादीकृत्येत्यासायम् । आङ्मर्यादाऽभिविध्योरित्यव्ययीभावः । अनुदिनं प्रतिदिवसं धनिनां श्रीमतां वासं सदनं गत्वा गत्वा ऽपि अनुच्छिन्नः अनुन्मूलितः तृष्णाया उद्गमो ऽङ्कुरो यस्य सोऽहं भवः संसारः स एव दवो वनाऽग्निस्तस्य प्लोषस्य दाहस्य शान्त्यै नाशाय हृद्यापां रमणीयोदकां गां पृथ्वीमिव हृद्याऽपाङ्गां रमणीयकटाक्षां त्वां प्रपद्ये शरणं यामि । मन्दाक्रान्तावृत्तम् । उपमारूपकयमकान्यलङ्काराः ॥ ३३ ॥

---

३३ हे मधुध्वंसिनो वशीकरणविद्यारूपे जननि रमे ! प्रभातादारभ्य सायंपर्यन्तं धनिकानां निवासं भूयो गत्वाप्यनपास्ततृष्णाऽऽविर्भावो ऽहं संसारदावानलदाहशमनाय स्वादुसलिलां भुवमिव मधुरकटाक्षां त्वां शरणमाश्रये इत्याह ।

वितन्वन्त्यामिष्टं विविधमचिरादीक्षितलवै-
र्भवत्यां जाग्रत्यां भगवति नरान् सेवितुमनाः ।
क्षरन्तीमभ्यर्णे कमलसुरभिस्वादुसलिलां
स्रवन्तीमुल्लङ्घ्य श्रयति मृगतृष्णामतितृषा ॥ ३४ ॥

वितन्वन्त्यामिति । हे भगवत्यचिरात् शीघ्रमेव ईक्षितलवैर्दृष्टिलेशैः विविधं नानाविधम् इष्टं फलं वितन्वन्त्यां विस्तारयन्त्यां भवत्यां जाग्रत्यां जागरूकायां सत्यां नरान् सेवितुं मनो यस्य स पुमान् अभ्यर्णे उपकण्ठाऽन्तिकाऽभ्यर्णेत्यमरः । क्षरन्तीं वहन्तीं कमलैःसुरभि सुगन्ध्यत एव स्वादु मधुरं जलं यस्यास्तां, स्रवन्तीं स्रवन्ती निम्नगाऽऽपगेत्यमरः। उल्लङ्घ्य अतितृषा अतिपिपासया मृगतृष्णां मृगजलं श्रयति सेवते त्वद्विना ऽन्यजनसेवनं नदीत्यागपुरःसरमृगजलसेवनतुल्यमिति निष्कर्षार्थः । शिखरिणीवृत्तम् । वाक्यार्थवृत्तिनिदर्शनालङ्कारः ॥ ३४ ॥

अजीर्यदघनाशनं दृढगदाकरं देवि यत्
पुराणमपि पूरुषं पुनरलङ्घनं पुष्यति ।

---

३४ शेषशायिजीवरूपे, हे भगवति ! कटाक्षलेशैः सद्यः सकलवाञ्छितार्थवितरिण्यां भवत्यां जागरूकायां पामरनरसेवनपरमना जनः पद्मगन्धिस्वादुसलिलां महानदीमतिक्रम्याऽतितृष्णया मरुमरीचिकामाश्रयतीति निदर्शनामुखेनाह ।

३५ हे देवि ! यत् अजीर्यदघनाशनं ( प्रबलपातकनाशकम्, अपच्यमानलघुभोजनं च ) दृढगदाकरं ( दृढगदायुधविराजत्करं, प्रबलरोगाऽऽकरं च ) पुराणं पुरुषं ( नारायणं, स्थविरं च ) अलङ्घनं ( उ-

तदेतदिह पातु नस्तव कटाक्षदिव्यौषधं
फणीन्द्रशयजीविके भवविपन्मयादामयात् ॥ ३५ ॥

अजीर्यदिति । हे देवि ! यदजीर्यताम् अघानां नाशनं पक्षे अजीर्यत् नास्ति घनं कठोरं यस्मात्तदघनमनुत्तमवत्समासः। अशनं यस्य तं, दृढा गदा करे यस्य दृढानां गदानामाकरं खनिं गदो भ्रातरि विष्णोः स्यादामये चाऽऽयुधे गदे इति विश्वः। पुराणं पुरातनं वृद्धमपि च पुरुषं श्रीहरिं नरं च। पुनः अलङ्घनम् अनतिक्रमणीयम्, अन्यत्राऽतीसारे ज्वरे चापि लङ्घनं परमौषधमिति वैद्यशास्त्रमत्त्वेपि अनशनं लङ्घनहीनं यथा भवति तथा च पुष्यति पुष्टिं करोति तदेतत् हे फणीन्द्रशयस्य विष्णोर्जीविके जीविकातुल्ये अतिप्रिये इत्यर्थः । तव कटाक्षरूपं दिव्यौषधं भवविपन्मयात्संसारदुःखरूपादामयाद्रोगान्नः पातु रक्षतु । पृथ्वीवृत्तम् । रूपकश्लेषोदात्तालङ्काराः ॥ ३५ ॥

दुर्लङ्घ्यसंसृतिदुरर्णवकर्णधाराः
संपद्वधूसततनर्तनसूत्रधाराः ।
अज्ञानकाननविदारकुठारधाराः
पद्मे जयन्ति भवदीयकटाक्षधाराः ॥ ३६ ॥

दुर्लङ्घ्येति । हे पद्मे ! दुर्लङ्घ्यः लङ्घयितुमशक्यः स चासौ

---

लङ्घनाऽभावेनाऽऽदरेण, अनशनरूपलङ्घनं विना ऽपि च ) पुष्टिं प्रापयति तत् कटाक्षरूपं दिव्यौषधं संसारविपत्तिस्वरूपाद्रोगादस्मान् रक्षत्वित्याह ।

३६ हे पद्मे ! दुर्लङ्घ्यसंसारदुष्टसागरनाविकाः, संपन्नर्तकीनित्यनाटनसूत्रधाररूपाः, अज्ञानाऽरण्यविदारणपरशुधारास्वरूपा भावत्काः कटाक्षपूरा जयन्तीति कटाक्षपातफलं रूपकमुखेनाह ।

संसृतिदुरर्णवो भवाऽब्धिः तत्र कर्णधारा नाविकाः, पुनः संपदेव वध्वो वाराङ्गनास्तासां सततं नर्तने सूत्रधाराः, एवम् अज्ञानरूपकाननस्य विदारे छेदने कुठारधाराः भवदीयकटाक्षस्य धारा गतयः जयन्ति सर्वोत्कर्षेण वर्तन्ते । वसन्ततिलकावृत्तम् । रूपकालङ्कारः ॥ ३६ ॥

स्वादुशीतलदयारसपूर्णं
सेवितं द्विजवरैरमृतोत्कैः ।
देवि तावककटाक्षतटाकं
विश्वतापविगमाय विगाहे ॥ ३७ ॥

स्वाद्विति । हे देवि ! तावककटाक्षलक्षणं तटाकं सरोवरं प्रति विश्वस्याऽशेषस्य तापस्य विगमाय परिहाराय विगाहे विलोडयामि । कथंभूतं? स्वादुः शीतलश्च यो दयारूपो रस उदकं तेन पूर्णं तत्तु स्वादुशीतलोदकपूर्णम् । एवम् अमृते मोक्षे उदके च उत्कैरुत्कण्ठितैः द्विजेषु ब्राह्मणेषु च(?)वरैः श्रेष्ठैः । दन्तविप्राऽण्डजा द्विजा इत्यमरः । सेवितम् आश्रितमित्यर्थः । स्वागतावृत्तम् । रूपकश्लेषावलङ्कारौ ॥ ३७ ॥

करुणया कलशोदधिकन्यके
नतजनेष्ववलोकमघाऽपहम् ।

---

३७ हे देवि ! स्वादुशिशिरदयारूपजलपरिपूर्णम्, अमृतोत्कैः ( मुमुक्षुभि,र्जलोत्कण्ठितैश्च ) द्विजवरैः ( श्रेष्ठैर्विप्रैः, पक्षिवर्यैश्च ) सेवितं तावककटाक्षरूपं तटाकं निखिलतापशान्तये ऽवगाहे इति रूपकमुखेनाह ।

३८ हे ऽमृतसागरसुते ! त्वं नम्रेषु जनेषु दयया पापनाशकमवलोकं सकृद् विस्तारयसि, एष कटाक्षः पुनः पापिजनदुर्लभम-

१५

वितनुषे सकृदेष पुनस्तनो-

त्यनवलोकमधन्यदुरासदम् ॥ ३८ ॥

करुणयेति । हे कलशोदधेः कन्यके ! नतजनेषु निजभक्तेष्विति यावत् । अघमपहन्ति तं पापनाशकं यम् अवलोकं कटाक्षं करुणया केवलकृपयैव सकृदेकवारं वितनुषे विस्तारयसि स एव पुनः अधन्यानां पापिनां दुरासदं दुष्प्रापं नवो न भवतीत्यनवः पुराणपुरुषो विष्णुस्तस्य लोकं वैकुण्ठं ब्रह्मपदं वा तनोति विस्तारयति । द्रुतविलम्बितं वृत्तम् । विरोधाऽऽभासालङ्कारः ॥ ३८ ॥

देवि कटाक्षलवस्तव रिक्ते

संपदमाधिपदेऽपि निधत्ते ।

सिन्धुकुमारि तथाप्यतमस्के

सिध्यति तत्र समाधिरतृप्ते ॥ ३९ ॥

देवीति । हे देवि ! तव कटाक्षलवः रिक्ते दरिद्रे इति या-

---

नवस्य पुराणपुरुषस्य लोकं ( वैकुण्ठं ) विस्तारयतीति अवलोको ऽप्यनवलोकं तनोतीति विरोधाऽऽभासमुखेन कटाक्षस्य वैकुण्ठप्रापकत्वमाह ।

३९ अथ हे सिन्धुकन्ये देवि ! तव कटाक्षः मनोव्यथाऽऽस्पदे ऽपि दीने जने सम्पत्तिं निधत्ते, तथाप्यतृप्ते तमोगुणशून्ये तस्मिन् जने समाधिः सिध्यतीति त्वया सम्पदि समर्पितायामपि यः त्वत्कटाक्षवीक्षितः पुमान् किमनया विषयसम्पदेति ततः पराङ्मुखो वीतरागो मुमुक्षुः सन् त्वत्सेवापर एवाऽवतिष्ठते तस्य पुंसः समाधेः ( योगस्य ) लाभो ऽप्यस्मादेव पूर्वपातितात्कटाक्षाद् भवतीति आधिशब्दात् पूर्वं सम्पन्निधाने समाधिशब्दः सिध्यतीति शब्दवैचित्र्येण प्रतिपादयन् कटाक्षस्य भोगाऽपवर्गदातृत्वं कथयति ।

वत् । आधिपदे मनोव्यथास्थाने यद्यपि संपदं सम्पत्तिं निधत्ते तथापि अतमस्के तमोगुणरहिते राजसे इति यावत् । अत एव अतृप्ते पुनः पुनः सम्पदं कामयमाने तत्राऽऽधिपदे पुरुषे समाधिः सिध्यति । आधिपदे सम्पदं ददाति चेत्समाधिपदं सिध्यति । सम्पदं संपत्तिं सम् इत्याकारकं उपसर्गपदं च । अत्र सम्पद-सम्बन्ध औपश्लेषिकसम्बन्धेनाऽऽदौ विवक्षितः । राजसत्वेन स-माधीच्छाऽभावेपि तत्सिद्धिर्भवत्येवेति ऐहिकाऽऽमुष्मिकोभयफ-लसम्पादकत्वं त्वत्कटाक्षस्य सहजसिद्धमिति भावः । दोधकं वृ-त्तम् । विभावनासमानालङ्कारौ ॥ ३९ ॥

प्रागेव स्यात् प्रार्थिताऽर्थस्य सिद्धिः
पश्चादम्ब त्वत्कटाक्षोपलम्भः ।
दृष्टान्तो नस्तत्र ते दृष्टिपातात्
प्रागम्भोधिं लङ्घयन् पावमानिः ॥ ४० ॥

प्रागेवेति । हे अम्ब । प्रार्थितस्याऽर्थस्य प्रयोजनस्य सिद्धिः प्रागेव कटाक्षोपलम्भात् पूर्वमेव स्यात् भवति, पश्चादनन्तरं त्वत्क-टाक्षोपलम्भो ऽनुभवो भवति । उपलम्भस्त्वनुभव इत्यमरः । तथा हि, ते तव दृष्टिपातात् प्रागेव अम्भोधिं शतयोजनविस्तीर्णं समुद्रं लङ्घयन् पारं गच्छन् पवमानस्याऽपत्यं पावमानिर्मारुतिः समुद्रलङ्घनं चिकीर्षुर्हनुमानिति यावत् । नो ऽस्माकं दृष्टान्तः ।

---

४० हे अम्ब ! लोके कार्यकारणयोः पौर्वापर्यनियमे ऽपि निमित्त-भूतत्वत्कटाक्षपातात् पूर्वमेवाऽभीप्सिताऽवाप्तिस्ततस्त्वत्कटाक्षपात-इति सीतादर्शनात् प्रागुत्तरं महोदधिं तीर्णवन्तं हनूमन्तं दृष्टान्तमु-पन्यस्य द्रढयन् कटाक्षे लोकोत्तरं माहात्म्यं प्रकटयति ।

अर्थसिद्धौ निदर्शनमिति भावः। अत्र श्रीदेव्याः कटाक्षपतनरूपकारणात् प्रागेव कार्योत्पत्तिवर्णनादत्यन्ताऽतिशयोक्तिरलङ्कारः। शालिनीवृत्तम् ॥ ४० ॥

वक्षोरक्षे शार्ङ्गिणः स्थूललक्षे
तत्तादृक्षे जाग्रति त्वत्कटाक्षे।
सूनश्रीभिः सान्द्रगन्धे परोक्षे
कुर्यादास्थामल्पधीः कल्पवृक्षे ॥ ४१ ॥

वक्ष इति। हे शार्ङ्गिणो भगवतः वक्ष उरः रक्षति तत्सम्बुद्धौ! स चाऽसौ तादृक्षः प्रसिद्धश्च तस्मिन् स्थूललक्षे, स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे इत्यमरः। त्वत्कटाक्षे त्वदपाङ्गे जाग्रति जागरूके सति। सूनश्रीभिः सान्द्रगन्धे निबिडाऽऽमोदे अक्ष्णः परं परोक्षं, प्रतिपरसमनुभ्यो ऽक्ष्ण इति समासान्तविधानसामर्थ्यादव्ययीभावः। परोक्षे लिडिति निपातनात् परस्यौकारादेशश्च। परोक्षमस्याऽस्तीत्यर्शआद्यचि परोक्षः। तस्मिन् परोक्षे कल्पवृक्षे अल्पधीरज्ञजनः आस्थामाशां कुर्यान्न सुधीरित्यर्थः। कुत? इति चेत् स परोक्षोपि सुष्ठु ऊनश्रीभिन्यूनसम्पद्भिरपि सान्द्रः गन्धो गर्वो यस्य सः ततः। गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोरिति विश्वः। शालिनीवृत्तम्। काव्यलिङ्गमलङ्कारः ॥ ४१ ॥

---

४१ हे हरेरुरोरक्षिके! अतिप्रसिद्धे दानशौण्डे त्वत्कटाक्षेऽभीप्सितवितरणाय जागरूके सति सूनश्रीभिः ( स्वल्पलक्ष्मीभिः, पुष्पशोभाभिश्च ) सान्द्रगन्धे ( प्रचुरगर्वे, बहुसौरभ्ये च ) अप्रत्यक्षे कल्पवृक्षे मन्दबुद्धिरेवाऽऽदरं कुर्यादिति श्लेषेण कल्पवृक्षाऽधिकफलदातृत्वं कटाक्षस्य बोधयति।

रचयति तव वीक्षा नूनमज्ञे ऽपि रक्षां
दुरितचरितभेदी देशिको मन्त्रवादी ।
तदिह गलितमोहे द्रागयं पद्मगेहे
विषयरुचिपिशाचीविक्रियाभिर्व्यमोचि ॥ ४२ ॥

रचयतीति । हे पद्मगेहे ! हे गलितः गतः मोहो यस्यास्तत्सम्बुद्धौ ! इहाऽस्मिन् लोके दुरितस्य पापाऽऽचारस्य भेदी नाशकः तथा मन्त्रवादी मनुवक्ता देशिकः गुरुरज्ञे ऽपि रक्षां रक्षणं यद्यस्माद्रचयति करोति नूनं तत्तस्माद्विषयरुचिरेव पिशाची तस्या विक्रियाभिरुपद्रवैः कर्तृभिः अयं अज्ञजनः व्यमोचि मोचित इति भूताऽर्थलकारेण रक्षाकरणपूर्वमेव विकारमोचनं सूच्यते । मालिनीवृत्तं रूपकं च ॥ ४२ ॥

जगदम्ब तवाऽपाङ्गो
जलजातशरः प्रकृष्टमधुकालः ।

---

४२ हे निर्मोहे, कमलसदने ! त्वद्वीक्षारूपेण दुष्कृतचरित्रनाशकेन मान्त्रिकेण गुरुणा रक्षितो ऽज्ञो ऽपि जन्तुः सद्यो विषयाऽनुरागरूपपिशाचीबाधाभिराशु मोचित इति त्वत्कटाक्षस्य वैराग्यजननद्वारा तत्त्वाऽवबोधप्रदत्वमित्याह ।

४३ हे जगन्मातः कमले ! तवाऽपाङ्गः ( कटाक्ष एव ) अपाङ्गः ( कामः ) जलजातशरः ( लडयोरैक्याज्जाड्यसमूहनाशकः, कमलबाणश्च ) प्रकृष्टमधुकालः ( वशीकृतमधुरिपुः, वसन्तकालसहितश्च ) परमयं सर्वमङ्गलायाः गौर्या इनेन धवेन शिवेन निजवैरिणा ऽऽप्ति

कमले कथय कथं वा
करोत्यसौ सर्वमङ्गलेनाप्तिम् ॥ ४३ ॥

जगदम्बेति । हे जगदम्ब, कमले ! तवाऽपाङ्गः कटाक्षो ऽनङ्ग एव । कटाक्षपक्षे डलयोः सावर्ण्यात् जलजाते जडसमूहे शर इव भेदकः जाड्यहारी । यद्वा जडमवरं जातं जन्म शृणाति हन्ति सः पचाद्यच् । कामपक्षे जलजातं कमलं शरो यस्य । जातं जात्योघजन्मस्विति विश्वः । प्रकृष्टः आकृष्टः मधुकालः मधुसूदनः येन, पक्षे सहायार्थमाकृष्टः वसन्तकालश्च येन इति सति सर्वमङ्गलाया अपर्णाया इनेन पत्या आप्तिं प्राप्तिं कथं करोतीति विरोधे सर्वकल्याणेन युक्तं करोतीति परिहारः । गीतिर्वृत्तम् । विरोधाभासश्लेषालङ्कारौ ॥ ४३ ॥

तिष्ठन्त्वष्टमएव भूसुतशनिप्रष्ठाश्च दुष्टा ग्रहा
भाले कामपि लेलिखीतु जगतः स्रष्टापि कष्टां दशाम् ।
ते किं कुर्युरपाङ्गतो मयि सकृद्देवि त्वया ऽङ्गीकृते
नीहारो न करस्थमम्बरमणेर्लीलाऽम्बुजं बाधते ॥ ४४ ॥

तिष्ठन्त्विति । भूसुतो मङ्गलः शनिश्चेत्युभौ प्रष्ठाः श्रेष्ठा येषु ते दुष्टा ग्रहा रव्यादयः अष्टमस्थाने एव सन्तु, 'द्वादशाऽष्टमजन्म-

---

संबन्धं कथं करोतीति कामस्य शिवाऽऽप्तिकारित्वमसमञ्जसमिति विरोधमुपदर्श्याऽपाङ्गस्य निखिलकल्याणकारित्वं बोधयति ।

४४ हे देवि ! भौममन्दादयः क्रूरग्रहा अनिष्टे ऽष्टमस्थाने एव तिष्ठन्तु, विधिरपि ललाटे ऽनिर्वाच्यां कृच्छ्रामवस्थां पुनः पुनर्लिखतु नाम, परं त्वया मयि एकवारं दृशा ऽङ्गीकृते सति ते मम किङ्कुर्युरिति सामान्यकमलनाशकमपि हिमं सूर्यकरगतं लीलाकमलं न किल बाधते इति दृष्टान्तेन साधयन् कटाक्षस्य निखिलाऽनिष्टाऽपहारकत्वं प्रकटीकरोति ।

स्थः शनिरङ्गारको गुरुः। कुर्वन्ति प्राणसन्देहं देशत्यागं धनक्षयम्' इत्यभिधानात् । तथा भाले भालस्थले जगतः स्रष्टोत्पादको ब्रह्मापि कामपि दुष्टां दुःखदायिनीं दशां लेलिखीतु। यङ्लुकि लोट्। परं तु हे देवि! त्वया सकृदेकवारम् अपाङ्गतः कटाक्षेण मय्यङ्गीकृते सति ते ग्रहाः किं कुर्युः । अकिञ्चित्करा इति यावत्। तथा हि नीहारो हिमाऽतिशयः इतरकमलबाधनसमर्थोऽपि अम्बरमणेः रवेः करस्थं हस्ताश्रितं वा लीलाऽम्बुजं क्रीडाकमलं न बाधते। हेमन्तो हि कमलानि बाधते इति प्रसिद्धम्। शार्दूलविक्रीडितम्। दृष्टान्तालङ्कारः ॥ ४४ ॥

विजयाऽपजयौ रमे भवेतां
त्वदपाङ्गाऽन्वयतद्विपर्ययाभ्याम् ।
अजयत्तव वीक्षया हनूमा-
नधिलङ्कं विकटाक्षराक्षसौघम् ॥ ४५ ॥

विजयेति । हे रमे त्वदीयाऽपाङ्गस्याऽन्वयतद्विपर्ययाभ्यामन्वयव्यतिरेकाभ्यां विजयश्चाऽपजयश्च तौ भवेतां स्यातां, यतस्तव वीक्षया हनूमानधिलङ्कं लङ्कायां विकटानि भयङ्कराणि अक्षीणि यस्य विगतः कटाक्षो यस्मात्तं राक्षसानामोघं समूहमजयत् जितवान्। औपच्छन्दसिकं वृत्तम्। अर्थान्तरन्यासालङ्कारः ॥ ४५ ॥

---

४५ हे रमे! लङ्कायां त्वया वीक्षितो हनूमान् विकटाक्षं (क्रूरनेत्रं त्वत्कटाक्षाऽनास्पदं च) राक्षससङ्घं यदजयत् न तत्त्वत्कटाक्षसम्बन्धतदभावाभ्यामेव विजयपराजयौ भवत इति निश्चिनुम इत्याह।

प्रतिघोष्णमधीशितुर्न पद्मे
भवदीक्षाविषयं प्रवेष्टुमीष्टे ।
त्वदपाङ्गसुधाऽऽर्द्रितस्तुषारी-
भवदग्निर्हनुमानिह प्रमाणम् ॥ ४६ ॥

प्रतिघेति । हे पद्मे ! त्वदीक्षाविषयं त्वद्दृष्टिगोचरं नरं प्रति अधीशितुर्लङ्केश्वरस्य(?) प्रतिघा(?) क्रोध एवोष्णमातपः । प्रतिघा रुट्क्रुधौ स्त्रियामित्यमरः । प्रवेष्टुं नेष्टे न समर्थं भवति । इहाऽस्मिन्नर्थे त्वदपाङ्गसुधया आर्द्रितः तुषारीभवन् शीतलीभवन्नग्निः पुच्छस्थो ऽग्निर्यस्य स हनूमान् प्रमाणं दृष्टान्तः। तुषारः शीतलः शीत इत्यमरः। औपच्छन्दसिकं वृत्तम्। अर्थान्तरन्यासः॥४६॥

कटाक्षप्रत्यूषे तव मिषति कंसारिदयिते
तमः शाम्यत्यन्तर्गतमपि च सूर्याकलनतः ।

---

४६ हे पद्मे ! अधीश्वरस्य महाराजस्य कोपरूपमुष्णं त्वत्कटाक्षगोचरं नरं न बाधितुं शक्नोतीत्यत्र लङ्काऽधीश्वरस्य कोपपात्रमपि त्वत्कटाक्षाऽमृताऽऽर्द्रितः शीतलीभवज्ज्वालाऽनलो हनूमान् मानमिति वदन् त्वत्कटाक्षविषयो नरो राजकोपतापभाजनं न भवतीत्याह ।

४७ हे कंसरिपुप्रिये ! तावककटाक्षरूपप्रभाताऽऽविर्भावे सति सूरीणां सूर्यस्य च सम्बन्धादान्तरमपि अज्ञानरूपं तिमिरं विनश्यति, एवं दोषाणां दोषायाश्चोदयः स्वतो विरमति, सारभूतानां सवनानां ( यागानां, कमलवनानां च ) श्रिय उत्पद्यन्ते, स्वर्गलोके भया आसनं तेजसा ऽवस्थानम्, आकाशे प्रकाशश्च भवितेति

स्वयं दोषोन्मेषो विरमति पुनः सारसवन-
श्रियः सम्पद्यन्ते दिवि च भविता भासनमपि ॥४७॥

कटाक्षेति । हे कंसारेर्दयिते ! तव कटाक्षरूपे प्रत्यूषे प्रभाते मिषति प्रादुर्भवति सति सूरीणां सूर्यस्य चाऽऽकलनतः समन्वयादन्तर्गतं हृत्स्थमाकाशगं च तमोऽज्ञानमन्धकारश्च शाम्यति नाशमेति, तथा दोषाणां रात्रेश्चोन्मेषोऽङ्कुरः स्वयं विरमति, पुनः सारं दृढं यथा भवति तथा सवनश्रियः यज्ञसंपदः पक्षे सारसवनानां च श्रियः शोभाः संपद्यन्ते । दिवि स्वर्गे गगने च भासनं कान्तियुक्तमासनं प्रकाशश्च भविता भविष्यति । शिखरिणीवृत्तम् । रूपकश्लेषावलङ्कारौ ॥ ४७ ॥

सुरभिस्तनुते तवाऽवलोकः
सुमनःसंपदमम्ब भूमिजानाम् ।
अविपल्लवतां विधाय पुष्णा-
त्यपि चामोदमदीप्तिकाननानाम् ॥ ४८ ॥

सुरभिरिति । हे अम्ब ! तवाऽवलोकः कटाक्षः सुरभिः कान्तः

---

भुवन् त्वत्कटाक्षपातगोचरस्य सत्सङ्गलाभ,स्ततोऽज्ञाननिवृत्तिर्दोषशान्ती, महायागप्रवृत्ति,रन्ते चाऽमुत्र तेजसाऽवस्थितिरित्येतत्सर्वं सिध्यतीत्याह ।

४८ हे अम्ब ! मञ्जुलस्तव कटाक्ष एव वसन्तमासः अदीप्तिकाननानां (निस्तेजस्कमुखानाम, अशोभवनानां च) भूमिजानां (मानवानां वृक्षाणां च) सुमनःसम्पदम् ( देवसम्पत्तिं पुष्पसमृद्धिं च ) तनुते, तथा तेषाम् अविपल्लवतां (विपल्लेशशून्यत्वं, पल्लवसाहित्यं च) विधाय आमोदं ( सन्तोषं, सौगन्ध्यं च ) पुष्णातीति श्लेषेण कटाक्षे वसन्तरूपत्वमारोपयन् उक्तफलदातृत्वं बोधयति ।

स च वसन्त एव । अदीप्तीनि काननानि वनानि येषां पक्षे अदीप्तिकान्याननानि येषां तेषां भूमिजानां वृक्षाणां मनुष्याणां च । तथा विगताः पल्लवा येषां ते तथा न भवन्तीत्यविपल्लवास्तेषां भावस्तत्ता तां पल्लवयुक्ततामित्यर्थः । पक्षे नास्ति विपदां लवो लेशो येषां ते तत्तां संपद्युक्ततामिति यावत् । सुमनसां पुष्पाणां देवानां च सम्पदं विधाय कृत्वा आमोदं सुगन्धं हर्षं च पुष्णाति वर्धयति । औपच्छन्दसिकं वृत्तम् ॥ ४८ ॥

कमले गभीरकरुणाजलधौ
त्वयि मन्दरक्षणविकासहृदि ।
कलितोदया मृदुकटाक्षसुधा
प्रथयत्यसौ सुमनसां प्रमदम् ॥ ४९ ॥

कमले इति । हे कमले रमे ! मन्दानां रक्षणे विकासेनोत्सवेन युक्तं हृन्मनो यस्यास्तस्याम् । अथ च मन्दरस्य गिरेः क्षणं विकासो हृद्यन्तः यस्य तादृशि गभीरकरुणाया जलधौ सिन्धुरूपायां त्वयि कलितोदया कृतोद्भवा ऽसौ मृदुकटाक्षरूपा सुधा सुमनसां देवानां विदुषां च प्रमदं सन्तोषं वितनुते विस्तारयतीत्यर्थः । प्रमिताक्षरावृत्तम । रूपकश्लेषावलङ्कारौ ॥ ४९ ॥

———

४९ हे कमले ! दयोदधिस्वरूपाया त्वयि मन्दरक्षणक्षणविकासहृदि (मन्दानां जनानां रक्षणे क्षणमात्रप्रवणमानसायां, मन्दराऽचलेन क्षणमालोडितमध्यायां च ) सत्यामुदयमाना कोमलकटाक्षसुधा पण्डितानां देवानां च सन्तोषं विस्तारयतीति भगवत्या दयासागरत्वं, तत्र चोदयमानाया वीक्षायाः सुधात्वं श्लेषेण वर्ण्यते ।

प्रतिघाऽनलं भुजगशैलपतेः
प्रशमं नयन्त्यतितरां शिशिरा ।
कमलालये तव कटाक्षझरी
विधुनोतु नो वृजिनतापभरम् ॥ ५० ॥

प्रतिघेति । हे कमलालये पद्मसदने ! भुजगशैलपतेः शेषाऽचलाऽधीशस्य हरेः प्रतिघः क्रोध एवाऽनलः वह्निः तं प्रति प्रशमं शान्तिं नयन्ती प्रापयन्ती, एवम् अतितराम् अत्यन्तं शिशिरा शीतला तव कटाक्षरूपा झरी । प्रवाहो निर्झरो झर इत्यमरः । नः अस्माकं भक्तानामित्यर्थः । वृजिनतापभरं पापसन्तापाधिक्यं धुनोतु कम्पयतु । धूञ् कम्पनइत्यस्माल्लोट् । प्रमिताक्षरावृत्तम् । रूपकालङ्कारः ॥ ५० ॥

दृशो लेशं देयास्त्रियुगसखि देयं कियदिदं
महोदारायास्ते, मम तु सुमहानेष विभवः ।
कणानत्र द्वित्रान् गणयति न वारां जलधरः
प्रपद्यन्ते शुक्तौ परिणतिममी मौक्तिकतया ॥ ५१ ॥

दृश इति । हे त्रिष्वपि युगेषु कृतादिषु आविर्भवतीति त्रियुगो

---

५० हे सरोजगृहे ! वेङ्कटपतेः साऽपराधेष्वस्मास्वाविर्भवन्तं कोपाऽनलं शमयन्ती अतिशीतला ते कटाक्षरूपा झरी अस्माकं पापसन्तापभारं दूरीकरोत्वित्याह ।

५१ हे हरिगृहिणि ! दानशौण्डायास्ते मयि कटाक्षलेशदानं नाम कियदेतद्देयं, मम त्विदं सुमहदैश्वर्यम्, यथा तावन्निखिलभूताऽऽप्लावको घनाघनो द्वित्रान् जलबिन्दून्न किञ्चिद्गणयति, परं ते एव बिन्दवः शुक्तिकायां निपतिता मुक्ताफलतामापद्यन्ते, ऽतः करुणया मयि दृग्लवं देया इति प्रार्थयते ।

हरिस्तस्य सखि सहचारिणि ! मह्यं दृशः लेशं देयाः देहि, महोदाराया बहुतरदात्र्या इदं याच्यमानं दृग्लेशदानं कियदकिंचित्करमित्यर्थः। तथापि मम तु सुमहानेष विभवः उत्कर्षः। अत्र दृष्टान्तः जलधरो मेघः द्वौ वा त्रयो वा द्वित्राः। संख्यया ऽव्यया-ऽऽसन्नादूराऽधिकसंख्याः संख्येये इति बहुव्रीहिः। ततो बहुव्रीहौ संख्येये इति डच्। तान् कणान् यद्यपि न गणयति तथापि ते शुक्तौ पतिताः सन्तः मौक्तिकानां भावः मौक्तिकता तया मुक्तारूपेणेत्यर्थः। परिणतिं परिणामं प्रपद्यन्ते प्राप्नुवन्ति। शिखरिणीवृत्तम्। दृष्टान्तालंकारः ॥ ५१ ॥

बिलेशयकुलेशभूधरपतिप्रिये त्वद्दया-
तरङ्गमघभङ्गदं धृतवतश्चिरं दृश्यते।
विकस्वरपिकस्वरव्यतिकरस्फुरन्निष्कुटं
नटद्युवतिनूपुरक्वणितसुन्दरं मन्दिरम् ॥ ५२ ॥

बिलेशयेति। हे बिलेशयानां सर्पाणां कुलेशः तत्संज्ञकश्चासौ भूधरश्च शेषाद्रिरित्यर्थः। तस्य पत्युर्हरेः प्रिये इष्टे ! अघस्य पातकस्य भङ्गदं नाशकं तव दयारूपं तरङ्गं लहरीं धृतवतो धार्यमाणस्य(?) नरस्येत्यर्थः। मन्दिरं गृहं विकस्वराणां विकसनशीलानां पिकानां कोकिलानां स्वराणां व्यतिकरेण मूर्छनया स्फुरन्तः शोभायमानाः(?) निष्कुटा गृहारामा यस्मिन्। गृहारामास्तु निष्कुटा

---

५२ हे शेषाऽचलपतिदयिते ! पापभञ्जकं तावकदयातरङ्गं धृतवतो नरस्य मन्दिरं विकासिकोकिलालापसंसर्गविराजद्गृहारामं, तथा नृत्यत्तरुणीमञ्जीरशिञ्जितमञ्जुलं च भवतीति महासम्पत्प्राप्तिस्त्वत्कटाक्षगोचरस्य भवतीत्याह।

इत्यमरः । पुनः नटन्तीनां नृत्यन्तीनां युवतीनां तरुणवेश्यानां नूपुराणां मञ्जीराणां क्वणितेन शब्दितेन सुन्दरं रमणीयं चिरं बहुकालं दृश्यते ऽवलोक्यते । पृथ्वी । हेतूदात्तावलङ्कारौ ॥५२॥

नारायणप्रणयिनि त्वमपाङ्गदुग्ध-
धाराभिराभिरभिषिञ्च दयाऽम्बुधे माम् ।
स्मेराऽनवद्यनिरुपाख्यसुखं यतो मे
स्वाराज्यभाग्यमपि सेत्स्यति शाश्वतं तत् ॥ ५३ ॥

नारायणेति । हे दयाम्बुधे, हे नारायणस्य प्रणयिनि ! आभिरपाङ्गदुग्धधाराभिर्मामभिषिञ्च, ततः स्मेरं विकसितम्, अनवद्यं निर्दोषं निरुपाधिकम् इति यत् आख्यायते वेदेन तत्सुखं शर्म शाश्वतं नित्यं स्वाराज्यभाग्यं ब्रह्मसुखमपि सेत्स्यति महाभिषेकैकनिर्वर्त्यं हि स्वाराज्यं भविष्यतीत्यर्थः । वसन्ततिलकावृत्तम् । रूपकालङ्कारः ॥ ५३ ॥

भो भूपभूमौ भ्रम भीमपाप-
भूमेति मे मूर्ध्नि लिपिं विधातुः ।

---

५३ हे दयाऽम्बुधे, नारायणप्रिये ! आभिस्तावककटाक्षक्षीरधाराभिः स्नपय, येन मे विकस्वराऽनिन्द्याऽनिर्वचनीयसुखं शाश्वतं स्वर्लोकसाम्राज्यभोगभागधेयं सेत्स्यतीत्याह ।

५४ हे पद्मे ! तव कटाक्षः 'भो भीमपापबहुल ! 'भूपभूमौ भ्रमे'ति पवर्गघटितां मङ्गालिलिखितां वैधर्सी लिपिं परिमृज्याऽपवर्गगर्भां मोक्षप्रदां करोतीति इहलोके नृपाऽनुसरणादिदुःखं सम्पद्दानेन विनाश्य

पवर्गगर्भां परिमृज्य पद्मे
करोत्यपाङ्गो ह्यपवर्गगर्भाम् ॥ ५४ ॥

भो इति। भोः भीमपापानां भूमा बाहुल्यं यस्मिन् स त्वं भूपभूमौ राजाऽङ्गणे भ्रम पर्यट इत्याकारिकां मे मूर्ध्नि सङ्गतां विधातुः लिपिं पवर्गगर्भां पवर्गसम्बन्धि 'प,भ,म' इति वर्णत्रयसङ्कीर्णामपि त्वदपाङ्गो हि त्वत्कटाक्ष एव अपवर्गगर्भां पवर्गगर्भा न भवति तां मोक्षयुक्तां करोति नाऽन्यः। संसारिणो मोचयितुं त्वदपाङ्ग एव समर्थ इति भावः। तथा हि—अपाङ्गः यस्य पवर्गस्याऽङ्गानि अवयवाः 'पफा'ऽऽदयः ते न सन्ति यस्मिंस्तादृशः भूपभूमावित्यादिलिपौ पतितः पवर्गमुत्सादयति ततश्चाऽवशिष्टं र इति स चाऽग्निवत्स्वप्रकाशतया जीवाऽऽदृष्टाऽनुसारेण फलदानाद्वा परमेश्वर उच्यते। यश्च परमेश्वरः स एव मोक्षः। 'रेफारूढा मूर्तयः स्युः शक्तयस्तिस्र एव चे'ति तपिनीये ब्रह्मणः अंशाः सृष्टिस्थितिलयशक्तिमतः ब्रह्मविष्णुशिवा इत्यर्थेन रेफस्य ब्रह्मवाचकत्वाऽभ्युपगमात्। उपजातिर्वृत्तम्। काव्यलिङ्गमलङ्कारो विरोधाभासश्च। अत्र पद्ये 'रेफात्त्वं बक इव भूमौ विहरस्व पाप निष्ठेति। विधिलिपिमपाङ्ग एवाऽपवर्गमयतामनीदृशीं नयति' इति पाठे विन्यस्ते सर्वः पवर्ग आयातीति विच्छित्तिविशेषं विदाङ्कुर्वन्तु सुधियः ॥ ५४ ॥

यं त्वं देवि निरीक्षसे यदुपतेः कान्ते दृशा तादृशा
तत्र स्तोत्रगिरश्चरन्ति विदुषां तवैव चित्रा गुणाः।

---

परत्र त्वत्कटाक्षो मोक्षदो भवतीति पवर्गगर्भां लिपिमपमृज्याऽपवर्गगर्भां करोतीति कटाक्षस्याऽघटितघटनापटुतामाह।

५५ हे यदुपतेः कान्ते, देवि! त्वं तादृशा दयामय्या दृशा यं नर-

तेनैव व्यपदेशमर्हति कुलं तस्मिन् मतिस्तिष्ठति
द्रष्टा पृष्ठमरेः स एव न पुनर्धन्यं तदन्यं विदुः ॥ ५५ ॥

यमिति। हे यदुपतेः कान्ते देवि! तादृश्या दयापूर्णया दृशा यं नरं त्वं निरीक्षसे पश्यसि तत्र पुंसि विदुषां सूरीणां स्तोत्रगिरः स्तुतिवाण्यः चरन्ति, चित्रा अद्भुता गुणा अपि तत्रैव, तेनैव तदीय कुलं व्यपदेशं ख्यातिमर्हति, मतिरपि तस्मिन् तिष्ठति, अरेः शत्रोः पृष्ठं युद्धपलायने स एव द्रष्टा शूरो भवतीत्यर्थः। ततस्तस्मादन्यं धन्यं न विदुः। शार्दूलविक्रीडितं वृत्तम्। अत्र देवीकटाक्षाणां गुणानां च हेतुहेतुमद्भावकथनाद्धेत्वलङ्कारः ॥५५॥

अपारसंसारतपाऽऽतपार्ति-
व्यपायदच्छायमपास्तदोषम्।
कृपामरन्दैः शिशिरं रमे त्व-
दपाङ्गकल्पद्रुमुपाश्रयामः ॥ ५६ ॥

अपारेति। हे रमे! कृपारूपमरन्दैर्मकरन्दैः शिशिरं शीतलम्, एवम् अपारसंसार एव तपातपः ग्रीष्मोष्मा तेनाऽऽर्तेर्ग्लानेर्व्यपायदा नाशदा च्छाया यस्य, तथा अपास्ता नष्टा दोषा य-

---

मीक्षसे स विद्वत्स्तुतिभाजनं भवति, तत्रैव विचित्राः शौर्यादयो गुणा विराजन्ते, तेनैव वंशः प्रसिध्यति, स एव बुद्धिमान् भवति, स एव च शत्रून् पराजित्य तत्पृष्ठदर्शी संपद्यते, तदितरं च जगति जना न धन्यं मन्यन्ते इति त्वद्दयार्द्रदृष्टेरेतानि फलानीत्याह।

५६ हे रमे! निरवधिभवतापग्रीष्मबाधाविच्छेदच्छायं निर्दोषदयामकरन्दशीतलं त्वदीयकटाक्षरूपं कल्पवृक्षमेवाऽऽश्रयाम इति कटाक्षस्य संसारतापनिवर्तकत्वं कथयन् तदाश्रयणं प्रतिजानीते।

स्मात्तं त्वदपाङ्गरूपकल्पद्रुं कल्पवृक्षम् उपाश्रयामः । समीपे भजामः । उपेन्द्रवज्रावृत्तम् । रूपकालङ्कारः ॥ ५६ ॥

भावत्कमार्तिशमनं विरजातरङ्गं
पश्याम्यपाङ्गमखिलाऽम्ब यदाप्लुताऽङ्गः ।
पीताऽम्बराकलितदीप्ति पदं परार्ध्यं
मुक्तादिभूषितमुपेत्य मुदं दधाति ॥ ५७ ॥

भावत्कमिति । हे अखिलाम्ब ! भावत्कं भवदीयम् अपाङ्गम् आर्तिशमनं दुःखशामकं तृष्णाशामकं चेति हेतोः विरजातरङ्गं वैकुण्ठमार्गस्थनदीतरङ्गं पश्यामि, यस्मिन्नपाङ्गनदीतरङ्गे आप्लुतान्यङ्गानि यस्य। स्नात इत्यर्थः। पुरुषः परार्ध्यं श्रेष्ठं मुक्तादिभिः सनकादिभिरन्यत्र मुक्ताहारैः पीताम्बरेण भगवता पीतवस्त्रेण चाऽऽकलिता दीप्तिर्यस्मिन् तादृशं वैकुण्ठं राज्यपदं चोपेत्य मुदं तोषं दधाति । वसन्ततिलकावृत्तम् । रूपकश्लेषकाव्यलिङ्गानि ॥ ५७ ॥

दुर्वर्णमर्णवसुते नमता ललाटे
लोकाऽम्ब लुम्पति कटाक्षझरस्त्वदीयः ।

---

५७ हे जगदम्ब ! त्वदीयं पीडानाशकं कटाक्षं विरजाख्यनदीतरङ्गमुत्प्रेक्षे, यत्र कृताऽवगाहो नरः श्रेष्ठं मुक्तादिभूषितं (मौक्तिकहारादिशोभितं, मुक्तैर्जनैश्च शोभितं) पीताम्बराकलितदीप्ति ( पीतकौशेयादिवस्त्रकृतदीप्ति, नारायणसम्पादितकान्ति च ) पदं ( राजपदं, वैकुण्ठलोकं च ) प्राप्य मोदते इति भुक्तिमुक्तिप्रदत्वं कटाक्षस्य बोधयति ।

५८ हे सागरसुते, लोकमातः ! तावकः कटाक्षझरो नम्राणां भक्तानां भाले विधातृलिखितं दुर्वर्णं (दुरक्षरं, रजतं च ) प्रोञ्छति, ते-

ते राजताऽभ्युदयिनः पुनरुल्लसन्ती-

त्येतत् करोति हृदि विस्मयमस्मदीये ॥ ५८ ॥

दुर्वर्णमिति । हे अर्णवसुते, हे लोकाम्ब ! त्वदीयः कटाक्षभरः नमतां पुंसां ललाटे वर्तमानं दुर्वर्णं कुत्सितवर्णं रौप्यं च लुम्पति । दुर्वर्णं तु कुवर्णे स्याद्वालुके रजतेऽपि चेति विश्वः । ततस्ते रजतस्य रौप्यस्यायं राजतः अभ्युदयोऽस्ति येष्विति तादृशा भवन्तीति विस्मयः । राजतया राजभावेन चाऽभ्युदयो ऽस्ति येषां ते पुनः उल्लसन्तीति परिहारः । वसन्ततिलका । विरोधाभासः ॥ ५८ ॥

देवि दुर्गतमरौ तव वीक्षा

कालिका दिशति काञ्चनवृष्टिम् ।

तस्य सिध्यति सुकीर्तिरुदञ्च-

द्धीरसस्यविभवश्च ततः स्यात् ॥ ५९ ॥

देवीति । हे देवि ! तव वीक्षारूपा कालिका मेघपङ्क्तिः, का-

---

भक्ताः पुनर्भुवि राजताऽभ्युदयिनः (नृपत्वोदयभाजः, रजतसम्बन्धिसमृद्धिभाजश्च) भवन्तीति रजतलिपौ प्रोञ्छितायां रजतोदयभाजो भवन्तीति विस्मयाऽऽत्रहमिति वदन् दुर्भगो ऽपि त्वत्कटाक्षवीक्षितः पुरुषो नृपत्वं प्राप्नोतीत्याह ।

५९ हे देवि ! कालिका (कृष्णवर्णा) तव वीक्षा दरिद्ररूपे मरुदेशे काञ्चन वृष्टिं ददाति, तत्पात्रस्य च तस्य ततः शोभनं यशः सिध्यति, एव मुदञ्चद्बुद्धिरसस्य तस्य ऐश्वर्यमपि स्यादिति वदन् श्लेषेण मरुदेशे कालिका (नीलमेघपङ्क्तिः) कां चनाऽनिर्वचनीयां महतीं वृष्टिं करोति, तस्य मरुदेशस्य सुतरां कीर्तिः (पङ्कः) सिध्यति, ततश्च समृद्धप्रौढधान्यसंपत्तिश्च स्यादिति दृष्टौ नीलमेघावलित्वमारोपयन् तस्य दरिद्रे सुवर्णसुकीर्तिसुबुद्धिवैभवदानं प्रतिपादयति ।

लिका योगिनीभेदे कार्ष्ण्ये गौर्यां घनावलाविति विश्वः । दुर्गते दरिद्रे एव मरौ देशे काञ्चनस्य सुवर्णस्य काञ्चनाऽनिर्वचनीयां च वृष्टिं वर्षणं दिशति । ततस्तस्य सुष्ठु कीर्तिर्यशश्च सिद्ध्यति । चेत्यपरम उदञ्चन् पूजित उद्गच्छंश्च धियो रसस्तस्य धीरस्यस्य धान्यस्य च विभवः स्यात् । स्वागतावृत्तम् । रूपकश्लेषौ ॥ ५९ ॥

वरुणालयसार्वभौमकन्ये
करुणाऽपाङ्घमधुव्रतस्त्वदीयः ।
मधुनाशनमेत्य वृद्धिमिच्छ-
न्नधुना कुत्र स सङ्गतीर्विधत्ताम् ॥ ६० ॥

वरुणेति । हे वरुणालयसार्वभौमस्य दुग्धोदधेः कन्ये ! त्वदीयः करुणाऽपाङ्गरूपो मधुव्रतः भृङ्गः मधुना अशनं जीविकां मधुनामाऽसुरनाशनं च भगवन्तम् एत्य प्राप्य वृद्धिम् इच्छन् स मधुव्रतः अधुना कुत्र सङ्गतीर्विधत्तां करोतु । 'सिद्धमन्नं परित्यज्य भिक्षामटति दुर्मति'रिति न्यायेन न काऽपीत्यर्थः । 'नीरजसंगतिं विधत्तामिति पाठे मधुव्रतः मधुना अशनं भक्षणम् एत्य वृद्धिमिच्छन्वर्तमानः नीरजसङ्गतिं कमलसङ्गतिं करोति । पक्षे भगवन्तमेत्य नीरजसं रजोरहितां गतिं करोतु सात्त्विकतां दधात्वित्यर्थः । औपच्छन्दसिकं वृत्तम् । रूपकश्लेषावलङ्कारौ ॥ ६० ॥

---

६० हे समुद्रकन्ये ! तावकीनो दयाकटाक्षभ्रमरो मधुनाशनं ( मधुरिपुं भगवन्तं, मकरन्देन अशनं च ) प्राप्य वृद्धिमिच्छन्नधुना काऽन्यत्र सङ्गं करोत्विति मधुरसास्वादी भ्रमरो यथा नाऽन्यदशनं वाञ्छति तथा तावकः कटाक्षो हरिमुपेत्यैव वृद्धिमेति नाऽन्यत्रेत्याह ।

निद्राजुषां भवविषादमये निशीथे
स्वाऽपाङ्गमर्पयसि शोभनमौषधं नः ।
चित्रं ततोऽपि जगदम्ब चिरं विनिद्रं
वेत्स्यामहे विगतदुःखपथं प्रबोधम् ॥ ६१ ॥

निद्रेति । हे जगदम्ब ! भवेन संसारेण विषादमये खेद-प्रचुरे निशीथेऽर्धरात्रे निद्रां जुषन्ते सेवन्ते ते निद्राजुषस्तेषां नोऽस्माकं स्वस्याऽपाङ्गः कटाक्ष एव स्वापस्य निद्राया अङ्गं साधनं तच्च शोभनमौषधमर्पयसि ततः स्वाऽपाङ्गाऽर्पणतोऽपि विगता निद्रा स्वप्नमज्ञानं च यस्मात्तं, तथा विगतः दुःखपथो यस्मात्तं प्रबोधं जाग्रति ज्ञानस्वरूपं परं ज्योतिश्च वेत्स्यामहे प्राप्स्यामः, विद्लृ लाभे इत्यस्य प्रयोगः । वसन्ततिलका । रूपकश्लेषविभा-वनाः ॥ ६१ ॥

स्वाऽऽलोकं शिशिरं चिराय नयसे यं याजमानं जनं
संपश्येन्मधुकाल एव सुमनःसत्त्वाऽऽवहस्तं ततः ।

---

६१ हे जगदम्ब ! संसारदुःखमये निशीथे निद्रितानां नो नि-जकटाक्षरूपमौषधं वितरसि, ततोऽपि विनिद्रं ( निःस्वप्नं, निरज्ञा-नञ्च ) विगतदुःखमार्गं प्रबोधं तत्त्वज्ञानं जाग्रद्दशां च प्राप्स्याम इति स्वतः सुखनिद्रितस्य गाढतरनिद्राप्राप्तये प्रदत्तमौषधं सर्वथा निद्रा-विनाशपूर्वकं प्रबोधमापादयतीति चित्रमिति वदन् त्वत्कटाक्षः संसारदुःखं विनाश्य तत्त्वज्ञानं जनयतीत्याह ।

६२ हे कमलगृहे ! यं यजमानमुपासकं शिशिरं ( शीतलं, शिशि-रर्तुञ्च ) निजकटाक्षं नयसे तं सुमनसां ( देवानां पुष्पाणाञ्च ) सत्त्वा-वहः ( धैर्यप्रदः, सत्ताप्रदश्च ) मधुकालो ( मधुरिपुर्भगवान्, वस-न्तश्च ) पश्येत् । ततः रजसो ( गुणस्य, धूलेश्च ) जनको विधिक्रूरदृ-ष्टिसन्तापागम एव ग्रीष्मकालः, एवं तमसां (ध्वान्तानां, शोकानाञ्च)

पाथोजायतने रजांसि जनयन् वेधोदृगूष्मागमो
रौद्रालोकघनागमश्च तमसां कर्ता न तत्रास्पदी॥६२॥

स्वेति। पाथोजायतने, कमले! यं यजतीति यजमानः स एव याजमानः स्वार्थे ऽण्। तं स्वोपासकं यज्ञचिकीर्षुमित्यर्थः। जनं प्रति शिशिरं शीतलं शिशिरर्तुं च स्वस्याऽऽलोकं कटाक्षं चिराय बहुकालं नयसे ततस्तं जनं सुमनसां देवानां पुष्पाणां च सत्त्वावहो धैर्याऽऽवहो रसावहश्च मधुकालः श्रीकृष्णो वसन्तश्च संपश्येत् प्रसादं कुर्याद् दृग्विषयश्च भवेत् ततो रजांसि धूली रजोगुणविकारांश्च जनयन्नुत्पादयन् वेधसो ब्रह्मणः दृगेवोष्मागमः क्रूरत्वात् ग्रीष्मर्तुश्च तमसां तिमिराणामज्ञानानां च कर्ता तथा रौद्रो भयङ्करः आलोक उदयो यस्य तादृशो घनागमो वर्षाकालः पक्षे रुद्रस्यायं रौद्रः स चासावालोको दर्शनं च तस्य घनागमः दृढागमः नास्पदी कृतस्थानो न भवति। अयं भावः। त्वं यं यमुपासकं प्रति शीतलं स्वाऽपाङ्गं नयसि तं विष्णुरनुगृह्णात्येव। अथ च राजसो ब्रह्मा तामसो रुद्रश्च तं प्रति द्रष्टुमपि न समर्थो जननमरणाऽभावात्। पक्षे इयक्षमाणं जनं शिशिरर्तुं प्रापितश्चेत् तं प्रतिवसन्त एव पश्येत् दृग्विषयो भवति लोकः स्मरतीतित्वत्प्रयोगः। 'वसन्ते ज्योतिष्टोमेन यजेते'ति शास्त्रात्। तं प्रति ग्रीष्मः वर्षाकालश्च यजनाधिकरणे न स्तः। शार्दूलविक्रीडितं वृत्तम्। श्लेषालङ्कारः॥ ६२॥

---

कर्ता रुद्रसम्बन्धिभयदाऽवलोकनघनप्राप्तिरूपो वर्षासमयश्च न तत्राऽऽस्पदं लभते इति। यस्मिन् त्वत्कटाक्षपातो भवति स यजमानो यागयोग्येन वसन्तकालेनैव सम्बध्यते न ग्रीष्मवर्षाकालाभ्याम्, एवं तत्र हरेरपि कृपा भवति, न भवति च स रजःप्रवर्तकब्रह्मक्रूरदृग्विषयो न च तामसहरपरुषदृक्पदं भवतीति त्वदृग्विषयो नानाविधान् यागान् विधाय हरिकृपापात्रं भूत्वा जननमरणरहितो भवतीत्याह।

प्रायः कं चिददृष्टवन्तमवनौ पद्मे दृशा स्वीयया
संयोज्य प्रसभं क्षणेन तनुषे जन्तुं सहस्रेक्षणम् ।
आधित्सस्यसदृक्पदे त्रिदशनेत्राकारभाजं तम-
प्येणाङ्कस्वसरीदृशं घटयितुं द्रागीशिषे दुर्घटम् ॥ ६३ ॥

प्राय इति । हे पद्मे ! अवनौ भूमौ प्रायो बाहुल्येन कं चि-त्पुरुषम् अदृष्टवन्तं भाग्यवन्तं दृष्टिशून्यमिति यावत् । तं सन्तं स्वीयया स्वकीयया दृशा प्रसभं बलात्संयोज्य तं जन्तुं सहस्रे-क्षणम् अपरिमितदृष्टिं राजश्चारचक्षुष्ट्वेन बहुदृष्टित्वात्तं पण्डितं वा शक्रं च तनुषे करोषि । हे एणाङ्कस्वसः ! तं त्रिगुणितानि दश त्रिंशन्नेत्राणि यत्र तदाकारतां च संयोज्य त्रिदशानां नेतुर्नाय-कस्येन्द्रस्याकारं मूर्तिं भजति तमप्यसदृक्पदे निरुपमे मोक्षस्थाने वैकुण्ठे च अथ चाऽन्धस्थाने आधित्ससि स्थापयसि । ईदृशं दु-र्घटं घटयितुमपि द्राक् शीघ्रम् ईशिषे समर्था ऽसि । अयं भावः । किञ्चिद्भाग्यवन्तं स्वकटाक्षलवविषयं कृत्वा ऽत्र राजानं विधाय मेते इन्द्रं कृत्वा ऽन्ते वैकुण्ठेऽआदधासि । पक्षे ऽन्धं स्वैकदृशा संयोज्य

---

६३ हे चन्द्रसोदरि, पद्मे ! अदृष्टवन्तं (भाग्यवन्तं, दृग्रहितं च) कं चिज्जन्तुं प्रायशः स्वकीयया दृष्ट्या संयोज्य क्षणेन सहस्रनेत्रम् (इन्द्रं, नेत्रसहस्रवन्तञ्च ) तनुषे, एवं त्रिदशनेत्राकारभाजं ( देवनायकाका-रभाजं, त्रिंशन्नयनाऽऽकारभाजं च ) तम् असदृक्पदे ( निरुपमे पर-मपदे, नयनविकलाऽन्धस्थाने च ) स्थापयसीति ईदृशम् अन्धस्य स्वदृ-ष्टियोजनेन सहस्रनेत्रत्वकरणं, सहस्रनेत्रस्य च तस्य त्रिंशन्नेत्रा-कारतापादनपुरस्सरमन्धस्थाननिवेशनं चाऽघटितं घटयितुं त्वमेव समर्था ऽसीति श्लेषेण वदन् दुर्भगमपि स्वीयकरुणाऽवलोकनेन दे-वराजं विधाय निरुपमे वैकुण्ठाख्ये पदे निवेशयसीति अहो ऽघटित-घटनापटुत्वं ते इत्याह ।

सहस्रद्रशं करोषि तं पुनस्त्रिशत्नेत्रं पुनश्चाऽन्धपदे इति अघटितघटनापटीयसीत्वम् इति। शार्दूलविक्रीडितम्। विरोधाभासः॥६३॥

मुखरुचिसरित्तरङ्गाः स्मितसितशतपत्रलोलकलभृङ्गाः।
संपन्नर्तनरङ्गा जयन्ति जगदम्ब तावकाऽपाङ्गाः॥ ६४ ॥

इति श्रीमद्वेङ्कटाध्वरिविरचिते श्रीलक्ष्मीसहस्रे
कटाक्षस्तबकः पञ्चमः ॥ ५ ॥

मुखेति। मुखरुचिरेव सरित्तस्यास्तरङ्गाः स्मितरूपे सितशतपत्रे शुभ्रकमले लोलाः सतृष्णाः कला अव्यक्तं ध्वनन्तः भृङ्गाः, संपदः नर्तनस्य रङ्गा रङ्गभूमयः तवाऽपाङ्गाः जयन्ति। गीतिर्वृत्तम्। रूपकालङ्कारः ॥ ६४ ॥

इति श्रीरावजीमहाराजापरनाम्ना श्रीनिवासपण्डितेन
विरचितायां बालबोधिन्यां लक्ष्मीसहस्रटी-
कायां कटाक्षस्तबकः पञ्चमः
संपूर्णः ॥ ५ ॥

---

६४ हे जगज्जननि! मुखलावण्यनदीतरङ्गरूपाः, मन्दहास्यरूपसितकमलविलोलाऽलिस्वरूपाः, संपन्नाटननाट्यस्थलरूपास्त्वदीया अपाङ्गाः सर्वोत्कर्षेण विराजन्ते इति रूपकेण स्तुवन् स्तबकं पूरयति।

इति श्रीमानवल्लयुपाख्यतैलङ्गरामशास्त्रिविरचितायां लक्ष्मी-
सहस्राऽवतरणनिःश्रेणिकायां कटाक्षस्तबकः ॥ ५ ॥

अथ प्रयत्नस्तबकः ६ ।

राज्याऽभिषेकविघ्नाय कैकेयीं यत्नयन् स्वयम् ।
यो दण्डकां जिगमिषुः स रामः श्रेयसे ऽस्तु नः ॥ ६ ॥

अथाऽस्मिन् षष्ठे स्तबके लक्ष्मीप्राप्तौ भगवतापि यत्नः कृतस्तत्राऽस्मदादीनां का कथेऽति कैमुत्येन सूचयन् श्रीमद्रामायणीयां कथां वर्णयन् प्रथमपद्ये यत्नमिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति ।

श्रीनिवासस्य महिषीं श्रेयसे तामुपास्महे ।
यदर्थमेव विदधे यत्नं भूयांसमच्युतः ॥ १ ॥

श्रीनिवासस्येति । अच्युतः त्रिगुणविकाराऽनभिभूतोऽपि यदर्थं यस्याः प्राप्त्यर्थमेव भूयांसं यत्नं मन्दरगिरिधारणमथनादिकं यद्वा ऽग्रे एवैतत्स्तबकोक्तं विदधे चकार तां श्रीनिवासस्य महिषीं पट्टवधूं, कृताऽभिषेका महिषी इत्यमरः । श्रेयसे कल्याणाय उपास्महे भजामहे । विपुलाऽनुष्टुब् वृत्तम् । उदात्तालङ्कारः ॥ १ ॥

तमेव यत्नं प्रकटयति—

कमले कमलेक्षणस्त्वदर्थे
कठिनं कर्म करोत्यसौ न किं वा ।
कलशोदधिमन्थनप्रयासा-
दपरं किं श्रमदायि कर्म लोके ॥ २ ॥

कमले इति । हे कमले! यतो ऽस्मिन् लोके कलशोदधेः क्षीरसाग-

---

१ अथ प्रयत्नस्तबकेन षष्ठेन तुष्टूषुर्यत्प्राप्तये भगवान् हरिरपि महीयांसं यत्नमकरोत् तामेव सर्वाऽभ्यर्हितां भगवतीं लक्ष्मीं देवीमुपास्महे इति प्रथमं मङ्गलमाचरति ।

२ हे कमले ! भगवान् पुण्डरीकाक्षस्त्वदर्थं कं वा प्रयत्नं न करोतीति समुद्रमथनादन्यदायासप्रदं कर्म लोके किमस्तीऽति वदन् समर्थयते ।

रस्य मन्थनविषये प्रयासाधिक्यात् अपरमन्यत् किं नु कर्म श्रमदायि क्लेशकरं? नाऽन्यदस्तीति भावः। अतः असौ कमलेक्षणो विष्णुस्त्वदर्थे त्वत्प्राप्तये कठिनं कर्म न करोति, किंवाशब्दः प्रश्ने, करोत्येवेत्यर्थः। अयं भावः। यद्यपि सुधोत्पादनार्थमेव समुद्रमथनप्रयासः तथापि तस्या देवासुरैरेव निर्वाहः, ततस्तस्य श्रीहरेः मन्दरधरणादिप्रयासः लक्ष्म्यास्तव प्राप्त्यर्थमेवेति। औपच्छन्दसिकं वृत्तम्। काव्यलिङ्गमलङ्कारः ॥ २ ॥

तव गुरुस्तनशैलभरं सदा
जननि वोढुमना जगतां पिता।
गुरुभरोद्वहनाऽभ्यसनाय किं
तमपि मन्दरमम्बुनिधौ दधौ ॥ ३ ॥

तवेति। जननि! जगतां पिता विष्णुः तव गुर्वोः स्तनशैलयोर्भरं सदा वोढुं मनो यस्य तादृशोऽपि 'अनभ्यासे विषं शास्त्र'मिति न्यायं स्मृत्वा गुरोर्भरस्य भारस्योद्वहनस्य धारणस्याऽभ्यसनायाऽभ्यासाय तं प्रसिद्धं लक्षयोजनविस्तीर्णं मन्दरगिरिमपि अम्बुनिधौ दधौ किं? कमठरूपेणेत्यर्थः। द्रुतविलम्बितं वृत्तम्। रूपकोत्प्रेक्षालङ्कारौ ॥ ३ ॥

अथाऽहल्योद्धारः—

नाऽदत्तमध्यवनि सिध्यति किं चनेति
निश्चिन्वता भगवताऽपि क्विक्षता त्वाम्।

---

३ हे जननि तावकगुरुभरकुचगिरिभारं सर्वदा वोढुमिच्छुर्जगज्जनको भगवान् प्रथमं गुरुभारवहनाऽभ्यासाय गरीयांसं तं मन्दराऽचलं सागरे न्यधात् किमित्युत्प्रेक्षते!

४ हे वैदेहि! भूमौ 'नाऽदत्तमुपतिष्ठते' इत्यभियुक्तोक्तिं निश्चिन्वता त्वामुद्वोढुमिच्छता भगवता रामेण पतिशापाच्छिलात्वमुप-

वैदेहि कामपि शिलामबलां विधाय
कन्याप्रदानविधिरक्षपदाय चक्रे ॥ ४ ॥

नाऽदत्तमिति। अवनौ भूम्यामित्यध्यवनि। विभक्त्यर्थे ऽव्ययीभावे सप्तम्यर्थद्योतको ऽधिः । 'नाऽदत्तमुपतिष्ठते' इति वाक्यात् अदत्तं किञ्चनेषदपि न सिद्ध्यतीति निश्चिन्वता निश्चयं कुर्वता त्वां वोढुं प्राप्तुमिच्छतीति विवक्षन्, तेन । वह प्रापणे इत्यस्मात्सन्नताच्छतृप्रत्ययः । विवक्षितामिति पाठे इष्टामित्यर्थः । सेवायां शुश्रूषाप्रयोगवत् भगवता श्रीमद्राजाधिराजरामेण हे वैदेहि जानकि ! कामप्यनिर्वचनीयारूपिणीमपि शिलामहल्यारूपामबलां विधाय कृत्वा ऽक्षपदाय गौतमाय कन्याप्रदानविधिश्चक्रे । कृञ् करणे इत्यस्मात् कर्मणि लिट् । वसन्ततिलकावृत्तम् । गूढोत्प्रेक्षालङ्कारः ॥ ४ ॥

अथ विद्याप्राप्तिं वर्णयति—

विद्यां बलां रघुतिः पथि गाधिपुत्रात्
संप्राप्य निह्नुतसमस्ततनुक्लमो ऽपि ।
अम्बाऽतनुक्लमहरामबलामिह त्वां
स्वस्य ध्रुवं घटयितुं तमुपास्त भूयः ॥ ५ ॥

विद्यामिति। अम्ब ! रघुपतिः पथि गाधिनाम्नो राज्ञः पुत्रा-

---

गतामहल्यां पुनः प्राप्तनिजरूपां विधाय गौतमाय कन्यादानं विदधे इति त्वत्प्राप्त्यर्थमेवाऽयं प्रयास इत्याह ।

५ हे मातः ! रामो विश्वामित्रान्महर्षेर्बलां नाम सिद्धविद्यां समासाद्य निह्नुततनुक्लमः ( अपगतशरीरक्लेशः, स्वल्पक्लेशश्च ) अपि अतनुक्लमहरां ( कामाऽऽयासविनाशिनीं, महाश्रमहरां च ) त्वामात्मना संयोजयितुं तमेव मुनिं भूय उपासाञ्चक्रे इत्याह ।

द्विश्वामित्राद्बलां तदभिधां विद्यां संप्राप्य निह्नुतः लुप्तः समस्तः सकलः तनुक्लमो देहश्रमो ऽल्पश्रमश्च यस्य सोऽपि अतनुक्लमहरां महाश्रमहरां मदनज्वरहरां चाऽबलां त्वां स्वस्य घटयितुं तमेव भूयः उपास्त ध्रुवम् । वसन्ततिलकावृत्तम् । उत्प्रेक्षाश्लेषविभावनाख्यमलङ्काराः ॥ ५ ॥

अथ जनकपुरागमनम्—

शंसन्ति पङ्क्तिरथयागविधेः फलं किं
सो ऽयं मखाऽवनिभवां जनकात्मजे त्वाम् ।
प्राप्तुं व्यधात् कुशिकनन्दनयज्ञरक्षां
रक्षांसि हन्त दमयन् युधि रामचन्द्रः ॥ ६ ॥

यत्तदोर्नित्यसम्बन्धाद्यं पङ्क्तिरथस्य दशरथस्य यज्ञविधेः फलं शंसन्ति सोऽयं प्रसिद्धो रामचन्द्रः हे जनकात्मजे ! मखाऽवनिभवां यज्ञभूम्युद्भूतां त्वां प्राप्तुं युधि रक्षांसि दमयन्नाशयन् कुशिकनन्दनस्य यज्ञस्य रक्षां रक्षणं व्यधादकरोत्किम् । अत्र यज्ञरक्षावृत्तं तत्पुण्येनाऽस्याः प्राप्तिः सूचिता । अपि च यागभूम्युद्भवा वैदेही रामोऽपि यागोद्भूत इति कर्मैक्येन 'शुद्धां गोत्रकुलादिभिर्गुणयुतां कान्तां वरश्चोद्वहे'दित्यत्र चकाराद्वरोऽप्येतादृशगुणविशिष्टो ऽपेक्षित इति ज्यौतिषघटितं 'योग्यं योग्याय दातव्यं' 'समानशीलव्यसनेषु सख्य'मित्यादिन्यायश्च सं-

---

६ हे जानकि ! यं दशरथयागफलं पुराणा जनाः कथयन्ति सो ऽयं रामचन्द्रो यागभूमिसमुद्भूतां त्वां प्राप्तुं युधि यागविघातकान् मारीचादीन् दमयन् विश्वामित्रमुनिमखरक्षामकरोत् किमिति यागफलभूतस्य रामस्य मुनियागरक्षणप्रयासो यागभूभवायास्तव प्राप्त्यर्थमेवेत्युत्प्रेक्षते ।

गृहीतः । वसन्ततिलकावृत्तम् । उत्प्रेक्षासाधकसाधनेषु यज्ञसंबन्धादानुरूप्यनिबन्धनः समालङ्कारः ॥ ६ ॥

अथ शैवधनुर्दर्शनम्—

भगवति क्षितिपुत्रि भवत्कृते
भवहरो ऽपि भवन् रघुनन्दनः ।
समभवद् भवचापलतान्तधीः
स इति विस्मयवन्त इहाऽऽस्महे ॥ ७ ॥

भगवतीति । हे भगवति, हे क्षितिपुत्रि ! भवत्कृते त्वदर्थमेव 'सर्वं वाक्यं साऽवधारण'मिति न्यायात् रघुनन्दनो रामः भवहरो भवन् सन्नपि भवस्य चापलेन भयकृतकम्पनेन तान्ता खिन्ना धीर्बुद्धिर्यस्य स समभवत् बभूव इति हेतोः इति विस्मयवन्तः आस्महे स्थास्यामः(?) । आस उपवेशनइत्यस्माल्लट् । परिहारस्तु भवहरः संसारहरः तथा भवस्य हरस्य चापलताया धनुष अन्ते नाशे धीर्यस्येति । द्रुतविलम्बितं वृत्तम् । विरोधाभासश्लेषालङ्कारौ ॥ ७ ॥

अथ धनुर्भङ्गः—

त्वद्भ्रूभटस्य धनुषा विजितः सुमेषो
रामस्तमेव नितरामभिराद्धुकामः ।

---

७ हे भगवति भूसुते सीते ! रामचन्द्रः संसारहरोपि भवन् त्वदर्थे भवचापलतान्तधीः ( संसारचाञ्चल्यश्रान्तमतिः, शिवधनुर्लताभङ्गबुद्धिश्च ) आसीदिति वयं साऽऽश्चर्याः स्मः । संसारहरस्य संसारचापलतान्तबुद्धित्वसंपत्तिर्विस्मयकारिणी । संसारहरोपि शिवधनुर्भञ्जनाऽऽसक्तधीरिति विरोधपरिहार इत्याशयेनाह ।

८ हे जानकि ! तावकभ्रूभृत्यस्य कामस्य कार्मुकेण निर्जितो रामो

तत्प्रीतये जनकनन्दिनि तद्विपक्ष-

कोदण्डभङ्गमुपहारमिवाऽऽजहार ॥ ८ ॥

त्वदिति । हे जनकनन्दिनि ! तव भ्रुवोर्भटस्य लालाटिकसेवकस्येत्यर्थः । सुमेषोः कामस्य धनुषा अथ त्वद्भ्रूयुगाख्येति पाठे सुमेषोस्त्वद्भ्रूयुगाख्येन धनुषा विजितो रामस्तं सुमेषुमेव नितरामत्यन्तम् अभिराद्धुं प्रसादयितुं कामो यस्य सुमेषोः प्रीतये तस्य विपक्षस्य शत्रोः शङ्करस्य कोदण्डस्य भङ्गं नाशमुपहारमुपायनमिव । उपायनमुपग्राह्यमुपहारस्तथोपदेत्यमरः । 'नदराणा' इति लोके । आजहार अकरोदिवेत्युत्प्रेक्षा । अथ च मदनप्रसादनाय तद्विपक्षीभूतशर्वकोदण्डभङ्गात्प्रत्यनीकालङ्कारः । न च लक्षणविरोधः । सदसदर्थरूपत्वेन प्रत्यनीकस्य द्वैविध्याङ्गीकारात् । वसन्ततिलकावृत्तम् ॥ ८ ॥

अथ विवाहे पुरोहितसङ्गमं पूजां च वर्णयति—

कर्तव्ये जनकेन मैथिलि तवोद्वाहक्रमाऽऽलोचने

सो ऽयं वागुपकारमारचयितेत्यालोच्य भाविस्थितिम् ।

तद्वंशैकपुरोहितस्य हि शतानन्दस्य हर्षाय त-

न्मातुर्ग्रावदशां हरन् रघुपतिस्तस्योपकारं व्यधात् ॥ ९ ॥

कर्तव्ये इति । हे मैथिलि ! जनकेन राज्ञा कर्तव्ये कर्तुं योग्ये

---

बलवत्तरं तमेव प्रसादयितुकामः सन् तत्संतोषाय कामरिपुधनुर्भङ्गमुपायनमिवाऽकरोदित्याह ।

९ हे मैथिलि ! तत्पित्रा करणीये त्वद्वैवाहिके वराद्यालोचने तत्पुरोहितः शतानन्दो निजगुणाद्युपवर्णनपुरःसरं तत्प्ररोचनापरैर्वचनैरुपकारं करिष्यतीति विचार्य तत्तोषणाय तज्जननीं पतिशापाच्छिलीभूतामहल्यां स्वरूपेण संयोज्य शतानन्दस्योपकारमकरोत् किमित्युत्प्रेक्षते ।

तत्र उद्वाहस्य विवाहस्य क्रमस्याऽऽलोचने विचारे सोऽयं पुरोहितः वाग्भिः उपकारम् आरचयिता करिष्यति इति भाविस्थितिं पुरोभाविनीं स्थितिमालोच्य विचार्य तस्य राज्ञो वंशे एकस्य मुख्यस्य पुरोहितस्याऽऽचार्यस्य शतानन्दस्य हर्षाय तन्मातुरहल्यायाः पाषाणस्य दशामवस्थां हरन् रघुपतिः श्रीरामः तस्य शतानन्दस्य उपकारं व्यधात् कृतवान् । हीति निश्चयेन । शार्दूलविक्रीडितम् । गूढोत्प्रेक्षा ॥ ९ ॥

अथ विवाहं वर्णयति—

सुन्दस्त्रीतनुभूसुबाहुकुहनोपज्ञं तु यज्ञक्रिया-
प्रत्यूहं शमयन् प्रहर्षघटकं शुश्रूषयन् कौशिकम् ।
दुर्दर्शं शशिखण्डमण्डनमहादोर्दण्डकोदण्डम-
प्युर्वीनन्दिनि खण्डयन्नुदवहत्त्वामम्ब रामः श्रमात् ॥ १० ॥

सुन्देति । हे उर्वीनन्दिनि भूजे ! सुन्दस्त्रियस्तनुभुवोर्मारीचसुबाह्वोः कुहनायाः कपटस्य उपज्ञा आद्यज्ञानं यस्मिन् तं, कुहना दम्भचर्यायामिति विश्वः । उपज्ञा ज्ञानमाद्यं स्यादित्यमरः । यज्ञक्रियायाः प्रत्यूहं शमयन् । विघ्नोऽन्तरायः प्रत्यूह इत्यमरः । तत्कर्मणा प्रहर्षघटकं हर्षयुक्तं यद्वा सीताप्राप्तिहर्षघटकमिति ध्वनिः । कौशिकं विश्वामित्रं शुश्रूषयन् पुनर्दुःखेन द्रष्टुमशक्यं दुर्दर्शं शशिखण्डश्चन्द्रशकल एव मडनं भूषा यस्य तस्य शिवस्य महतोर्दोर्दण्डयोः संवर्तिनं कोदण्डं धनुरपि ख-

---

१० हे भूसुते अम्ब ! ताटकासुतयोः सुबाहुमारीचयोर्मायामूलकं यागान्तरायं नाशयन् हर्षप्रदं विश्वामित्रं सेवमानो दुरालोकं शिवधनुर्भञ्जयन् रामो महीयसाऽऽयासेन त्वामुदवोढेत्याह ।

ण्डयन् भञ्जयन्सन् रामः श्रमाद्यभावेन त्वाम् उदवहत्परिणीतवान् । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

अथ जटायूद्धारः—

त्वां मार्गमाणस्त्वदुदन्तशंसिने
वृद्धाय गृध्राय रमे रघूद्वहः ।
योग्येकयोग्यानि पदान्यहो ऽदिशत्
सन्तोपि वेलामतियन्ति रागतः ॥ ११ ॥

त्वामिति । हे रमे ! रावणकृतत्वद्धरणाऽनन्तरं त्वां सीतां सतीं मार्गमाणः शोधयमानः रघूद्वहो रामः तव उदन्तं वृत्तान्तं शंसति तस्मै । वार्ता प्रवृत्तिर्वृत्तान्त उदन्त इत्यमरः । वृद्धाय जरठाय गृध्राय जटायुनाम्ने आतापिचिल्लौ दाक्षाय्यगृध्रावित्यमरः । योगिनामेवैकयोग्यानि पदानि ब्राह्मादीनि । बहुवचनं क्रमेण तत्तल्लोकप्राप्तिसूचकम् । अदिशद्दत्तवान् । अहो इत्याश्चर्ये । यतः रागतः प्रेम्णा सन्तः साधवोपि वेलां मर्यादामतियन्त्यतिक्राममन्तीति न्यायः प्रसिद्धः । इन्द्रवज्रावृत्तम् । उत्प्रेक्षार्थान्तरन्यासौ ॥ ११ ॥

---

११ हे रमे ! रावणेनाऽऽपहृतां त्वां गवेषयन् रामस्त्वद्वृत्तान्तनिवेदकाय वृद्धाय जटायुषे योगिजनमात्रप्राप्याण्युत्तमपदानि ददाविति तुच्छस्य गृध्रस्योत्तमपददानमनुचितमपि त्वद्रागवशीभूतप्रकारेति साधवोपि रागादिदोषदूषितान्तरा अतिक्रामन्ति मर्यादामिति वदन् समर्थयते ।

अथ सुग्रीवसख्यं वर्णयति—

अपि सकलशरण्यो मानिनामग्रगण्यो
भगवति भवदर्थे भानुवंशाऽधिनाथः ।
कपिमपि शरणोत्कः कं चिदानर्च कष्टं
गणयति न फलार्थी लाघवं गौरवं वा ॥ १२ ॥

अपीति । सकलानां शरणे रक्षणे साधुः शरण्यः । तत्र साधुरिति यत् । मानिनामग्रगण्यो मुख्यो ऽपि भानुवंशस्याऽधिनाथः स्वामी रामः भवदर्थे त्वदर्थम् उत्कः । शरणं गृहरक्षित्रोरित्यमरः । तस्मिन्नुत्कण्ठितः सन् कपिं सुग्रीवमपि आनर्च सत्कृतवान् । कष्टमिति खेदे । तथाहि–फलार्थी कार्यार्थी गौरवं लाघवं वा न गणयति । अयमपि न्यायः प्रसिद्धः । मालिनीवृत्तम् । अर्थान्तरन्यासोत्प्रेक्षालङ्कारौ ॥ १२ ॥

अथ सुग्रीवविश्वासदर्शनम्—

त्वद्दाने जनकेन मैथिलि पुरा शुल्कीकृतं स्वामिनः
पाण्यङ्गुष्ठकिणं व्यधात् पशुपतेश्चापे गुणाऽऽरोपणम् ।

———

१२ हे भगवति ! निखिलजनरक्षकोपि मानिजनाग्रेसरोपि सूर्यवंश्यो रामः सुग्रीवाख्यं शाखामृगं शरणमगादिति कार्यार्थी हि नरो लाघवगौरवविचारविधुरो भवतीति वदन् समर्थयते ।

१३ हे मैथिलि ! पुरा त्वद्दाने शुल्कीकृतं शिवधनुर्गुणाऽऽरोपणं रामस्य कराऽङ्गुष्ठ किणमकरोत्, एवं त्वत्प्राप्तिसहायभूतसुग्रीवविश्वा-

त्वत्संप्राप्तिसहायवानरपतिप्रत्यायनार्थं त्वभूत्
पादाङ्गुष्ठकिणाय दुन्दुभितनोस्तद् दूरतः क्षेपणम्॥ १३॥

त्वद्दाने इति । हे मैथिलि! तव दाने ऽर्पणसमये पुरा प्रथमं जनकेन शुल्कीकृतं पणीकृतम् । घट्टादिदेयं शुल्को ऽस्त्री इत्यमरः । पशुपतेः शङ्करस्य चापे धनुषि गुणस्य मौर्व्या आरोपणं स्थापनं तव स्वामिनः पाण्योः करयोरङ्गुष्ठस्य किणं व्यधात् चक्रे, तथा तव संप्राप्तेः सहायभूतस्य वानरपतेः सुग्रीवस्य प्रत्यायनार्थं तत्प्रसिद्धं दुन्दुभेः तन्नाम्नो राक्षसस्य तनोः शरीरस्य दूरतः दूरप्रदेशे क्षेपणं पादाऽङ्गुष्ठस्य चरणाऽङ्गुष्ठस्य किणाय किणं कर्तुम् । क्रियार्थोपपदस्य च कर्मणि स्थानिन इति चतुर्थी । 'घट्टा' इति लोके । अभूत् बभूव । भवत्प्राप्तये तच्छरीरकर्शनमेवेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

अथ वालिवधः—

निशिचरपतिमन्तं नेष्यता तद्गृहीतां
पुनरवनिसुते त्वां प्रेप्सता राघवेण ।
तरणिजमभिराद्धुं तत्र कार्ये सहायं
सपदि निरपराधः सादितो हन्त वाली ॥ १४ ॥

निशिचरपतिमिति । हे अवनिसुते ! निशिचराणां रक्षसां

———

सोत्पादनाय कृतं दुन्दुभिनामकदानवदेहदूरक्षेपणं चरणाऽङ्गुष्ठे किणोत्पादनायाऽभूदिति भगवतस्त्वत्प्राप्त्यर्थमहा क्लेशाऽनुभव इत्याह।

१४ हे भूसुते! दशाननाऽपहृतां त्वां पुनर्लिप्समानेन रावणवधोद्युक्तेन रामेण तस्मिन् कार्ये सहायं सुग्रीवं प्रसादयितुं सपदि निरपराधो वाली नाशित इति त्वत्प्राप्तये ऽकार्यमपि रामो नाऽजीगणदित्याह ।

पतिं रावणम् अन्तं नाशं प्रति नेष्यता नेतुमिच्छता तेन रावणेन गृहीतां हृतां त्वां प्रेप्सता प्राप्तुमिच्छता राघवेण तत्र कार्ये सहायं तरणेः सूर्याज्जातं सूर्यसुतं सुग्रीवमित्यर्थः । अभिराद्धुं त्वच्छोधने सिद्धं कर्तुं सपदि सद्यः निरपराधोऽपि वाली सादितः नाशितः । हन्तेत्यन्याये न्याये वा । कथमिति चेत् । सूर्यस्य निजकुलकूटस्थत्वात् सुग्रीवस्य च तत्सुतत्वात्तत्सन्तोषायैतद्वालिनाशनमिति । 'अन्यायेनापि गोपायेदात्मानं स्वजनं तथे'ति प्रामाण्यात् । मालिनीवृत्तम् ॥ १४ ॥

अथ ऋष्यमूकपर्वताऽवस्थितिः—

परोरजसि धामनि श्रुतिशिरोभुवि च्छान्दसे
महामहसि योगिनां दहरमन्दिरे च स्थितः ।
धरादुहितरादरात्तव कृते कपीन्द्राऽऽगतिम्
प्रतीक्ष्य दिवसान् बहूनवसदृष्यमूके प्रभुः ॥ १५ ॥

परोरजसीति । हे धराया दुहितः कन्ये! परोरजसि रजसः परस्ताद्वर्तमाने धामनि वैकुण्ठे इत्यर्थः । श्रुतीनां शिरः मुख्यभागस्तद्रूपायां भुवि उपनिषत्स्वित्यर्थः । तथा छान्दसे गायत्रीप्रतिपाद्ये महामहसि परे ज्योतिषि सूर्ये इत्यर्थः । पुनर्योगिनां सनकादीनां दहरमन्दिरे हार्दाऽऽकाशे इत्यर्थः । स्थितः

---

१५ हे धरापुत्रि ! सात्त्विके वैकुण्ठलोके, उपनिषत्सु, सूर्यमण्डले, योगिनां दहराऽऽकाशे च वसन् भगवान् परमात्मस्वरूपो रामस्त्वदर्थं सुग्रीवादिकपिसेनाऽऽगमनं प्रतीक्षमाणः सन् ऋष्यमूकाख्ये पर्वते बहून् दिवसानवसदिति वैकुण्ठादिपरमपदनिवास्यपि वनचर इव चिरं गिराववसदिति प्रयासाऽतिशयं प्रकाशयति ।

प्रभुः श्रीरामः तव कृते त्वदर्थम् आदरात् कपीन्द्राणां सुग्रीवादीनाम् आगतिमागमनं प्रतीक्ष्य प्रतीक्षां कृत्वा बहून् दिवसान्वार्षिकादिनानीत्यर्थः । ऋष्यमूके तत्संज्ञकगिरौ अवसत् वसति स्म । पृथ्वीवृत्तम् ॥ १५ ॥

अथ सीताशुद्धिः—

रघुकुलपतिना ते लोकनायैव सीते
कृतरविसुतसेवः कोपि दत्ताऽनुभावः[1] ।
वनशिखरिविहारी वानरब्रह्मचारी
जलधिमपि ललङ्घे जातु खेलन्नलं खे ॥ १६ ॥

रघुकुलपतिनेति । हे सीते ! रघुकुलपतिना रामेण ते लोकनाय शोधनार्थमेव वित्तः ज्ञातः अनुभावः पराक्रमो यस्य। वित्तविज्ञातविश्रुता इत्यमरः । अत्र दत्तोऽर्पितः अनुभावो यस्य सः, दत्तानुभाव इति पाठः साधुः । तथा कृता रविसुतस्य सुग्रीवस्य सेवा शुश्रूषा येन सः। वनशिखरिषु वन्येषु पर्वतेषु विहरति क्रीडति तच्छीलः । ताच्छील्ये णिनिः। कोप्यनिर्वचनीयप्रभावः वानरो मारुतिः स एव ब्रह्मचारी वर्णी अलमत्यर्थं खे गगने । खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसीति मेदिनी। खेलन् क्रीडन् जातु कदा चित् जलधिं शतयोजनविस्तीर्णं समुद्रमपि ललङ्घे लङ्घितवान् । मालिनीवृत्तम् ॥१६॥

---

१६ हे सीते ! राघवेण तवाऽवलोकनाय प्रदत्तसामर्थ्यः कृतसुग्रीवसेवो वनपर्वतविहारी कोऽपि कपिब्रह्मचारी हनूमान् स्वैरं गगने खेलन् पारावारमप्युल्लङ्घयामासेति हनूमतः समुद्रलङ्घनं त्वत्प्राप्त्युत्कण्ठितेन रामेण प्रदत्तात्सामर्थ्यादजनीति त्वत्प्राप्त्यर्थमेव हनूमते तथाविधशक्तिदानमित्याह ।

---

१ वित्ताऽनुभाव इति १ पु० पा० ।

अथ पुनर्हनुमता रामाय कृत(?)सीतावृत्तकथनपुरःसरं तत्प्रसादप्राप्तिं वर्णयति—

द्रष्टुं त्वां ननु हनुमन्तमग्निदाहा-
द्यातङ्कं बहुमधिलङ्कमाप्तवन्तम् ।
सर्वस्वायितपरिरम्भसौख्यदानात्
काकुत्स्थो जननि चकार निर्व्रणं तम् ॥ १७ ॥

हे जननि ! त्वां द्रष्टुम् अधिलङ्कं लङ्कायां बहुम् अत्यन्तम् अग्निदाहादिश्वासावातङ्कश्च तम् । आतङ्को भयपीडयोरित्यमरः । आप्तवन्तं प्राप्तवन्तं हनुमन्तं प्रति सर्वस्वायितं सर्वस्वदानायितं यत्परिरम्भस्याऽऽलिङ्गनस्य सौख्यं तस्य दानादर्पणात् । 'परिरम्भो हि मे लोके दुर्लभः परमात्मन' इत्यध्यात्मरामायणे श्रीरामोक्तेः । निर्गताः व्रणाः क्षतानि यस्य तं चकार । त्वत्कृते भगवता मारुतये सर्वस्वं दत्तमिति भावः । प्रहर्षिणीवृत्तम् ॥ १७ ॥

अथ विभीषणशरणवरणम्—

दरादुपनतं रमे दशशिरोऽनुजं त्वत्कृते
समस्तनयकोविदः सपदि संग्रहीतुं प्रभुः ।

---

१७ हे जननि ! त्वामवलोकयितुं लङ्कापुरेऽग्निदाहादिपीडाभाजं हनूमन्तं सर्वस्वदानतुल्याऽऽलिङ्गनसुखदानाद्भगवान् तं नीरुजं चकारेत्याह ।

१८ हे रमे ! भयाच्छरणागतं विभीषणं त्वत्प्राप्त्यर्थं संग्रहीतुं निखिलनीतिनिपुणो भगवान् तदात्वे अनिर्जितलङ्कोऽपि तं

असाधितरिपुस्थलो ऽप्यभिषिषेच तं तत्पदे
नरः किल शमश्नुते न खलु साहसिक्यादृते ॥१८॥

दरादिति । दराद्भयात् । दरोऽस्त्रियां भये श्वभ्रे इत्यमरः । उपनतं शरणागतं दशशिरसो रावणस्याऽनुजं विभीषणं हे रमे ! समस्तेषु 'साम्ना दानेन भेदेन समस्तैरुत वा पृथक् । विजेतुं प्रयतेताऽरीन्न युद्धेन कदा चन' इत्यादिनयेषु नीतिषु कोविदः चतुरः प्रभुः रामः सपदि सद्यः संग्रहीतुम् असाधितमसंप्राप्तं रिपुस्थलं लङ्का येन तादृशोऽपि सन् तं विभीषणं तत्पदे ऽग्रजराज्ये लङ्कायामित्यर्थः । अभिषिषेचाऽभिषिक्तवान् । यतो नरः साहसिक्यादृते साहसं विनेत्यर्थः । अन्यारादितरर्तेदिक्शब्दाऽञ्चूत्तरपदाजाहियुक्ते इति पञ्चमी । किल निश्चयेन सुखं नाऽश्नुते न प्राप्नोति । 'साहसेन विना राजन्न सिध्यन्ति मनोरथाः' इत्युक्तेः । श्रीरामस्त्वदर्थम् अकरणीयमपि साहसं कृतवानिति भावः । पृथ्वीवृत्तम् । अर्थान्तरन्यासः ॥ १८ ॥

अथ विभीषणराज्यदानकारणम्—

स्त्रीहेतोः प्रथमं निजेन गुरुणा व्युत्पादितं ज्यायसः
साम्राज्याऽनुभवो भवेदनुजइत्येवं विगीतक्रमम् ।

---

लङ्काराज्ये ऽभिषिषेचेति 'न साहसमनारुह्य नरो भद्राणि पश्यती'-ति न्यायार्थोपन्यासपुरःसरं समर्थयन्नाह ।

१९ हे भूमिसुते ! स्वीयेन जनकेन दशरथेन कैकेयीहेतोः ज्येष्ठस्य धर्मप्राप्तो ऽपि साम्राज्यसंपदुपभोगो ऽवरजे भवेदिति स्वस्य वनप्रेषणपूर्वकं भरताय राज्यदानेन प्रतिपादितं निन्द्यं क्रमं भगवान् रामः त्वदर्थं वालिनि सति सुग्रीवाय, दशानने च सति विभीषणाय

सुग्रीवे च विभीषणे च भगवानाम्रेडयामास तम्
भूमेः पुत्रि भवत्कृते पितृगुणः पुत्रे हि धत्ते पदम् ॥ १९॥

स्त्रीति । 'शाश्वतो ऽयं सदा धर्मः स्थितो ऽस्मासु नरर्षभ । ज्येष्ठपुत्रे स्थिते राजन् कनीयान्न भवेन्नृपः' इत्यार्षरामायणे । अथ च 'तद्धैतदुद्दालकायाऽऽरुणये ज्येष्ठपुत्राय पिता ब्रह्म प्रोवाचेदं वाव तज्ज्येष्ठपुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्यान्तेवासिने नाऽन्यस्मै कस्मै च ने'ति छान्दोग्यश्रुतौ । इत्यादिना ज्येष्ठपुत्रस्यैव सर्वत्राऽधिकारः । अतः ज्यायसो ऽग्रजस्य साम्राज्याऽनुभवः अनुजे भवेत् इत्येवं स्त्रीहेतोः प्रमदार्थं निजेन स्वीयेन गुरुणा पित्रा प्रथममादौ व्युत्पादितं प्रकटितं तं प्रसिद्धं विगीतं निन्द्यं विरुद्धं वा क्रमं । विगीतख्यातगर्हणा इत्यमरः । भो भूमेः पुत्रि सीते ! भवत्कृते त्वदर्थं भगवान् श्रीरामः सुग्रीवे चेत्परं विभीषणे आम्रेडयामास द्विस्त्रिरुक्तयामास । आम्रेडितं द्विस्त्रिरुक्तमित्यमरः। तथाहि–पितृगुणः जातावेकवचनं, यावन्तः पितृगुणा इत्यर्थः । पुत्रे पदं स्थानं धत्ते दधाति किं नेत्यर्थः । हिः पादपूरणे । हेतौ विशेषे त्ववधारणे प्रश्ने चेति मेदिनी । काकुर्वा । ततश्चाऽस्य विगीताऽऽचारस्याऽनैसर्गिकत्वेन त्वदर्थमेवाऽङ्गीकरणमिति यत्नः सङ्गच्छते । शार्दूलविक्रीडितं वृत्तम् । काव्यलिङ्गलङ्कारः ॥ १९ ॥

---

राज्यप्रतिपादनेन पुनः पुनः प्रकटयामासेति 'पितृगुणः पुत्रे संक्रामती'ति वचनेन समर्थयन् भगवांस्त्वदर्थमकार्यमप्याचचारेत्याह ।

अथ सेतुबन्धनविचारः—

देवि त्वदर्थे दयितं नदीनां
सतां शरण्यः शरणं स गच्छन् ।
कुशेशयाक्षो ऽपि कुशेशयत्वम्
प्राप त्वदावासपदाशयेव ॥ २० ॥

देवीति । सतां साधूनां शरण्योपि रामः त्वदर्थे त्वत्प्राप्त्यर्थं नदीनां दयितं पतिं समुद्रं शरणं गच्छन् तत्राऽऽवासपदस्य वसतिस्थानस्य पद्मस्येत्यर्थः । आशया इच्छयेव कुशेशयाक्षः पद्माक्षोपि कुशेशयत्वं प्राप समुद्रतीरे मार्गदानाय प्रायोपवेशनं चकारेत्यर्थः । अयं भावः–कुशेशयः शयनं, स तावत(?)खरत्वेन क्लेशदोपि परमपवित्रत्वान्नेत्ररूपे एकदेशे ऽङ्गीकृतः कुशे शेते अक्षि यस्येत्यर्थान्तरात् । त्वदर्थं तु सर्वाङ्गेष्विति । यश्च कुशेशयः पद्मः(?) स भवदावास एव । ततश्च तत्रागमो ऽवश्यम्भविष्यति इत्याशया अयमपि कुशेशयो जात इति भावः । उपजातिवृत्तम् ॥ २० ॥

---

२० हे देवि ! सतां शरणे साधुर्भगवान् रामस्त्वत्कृते नदीपतिं शरणमुपगच्छन् स्वयं कुशेशयाक्षो ऽपि त्वद्वसतिस्थानोपलम्भाऽऽशयेव कुशेशयत्वं प्राप्तवानिति कमलाक्षोपि त्वद्वसतिस्थानभूतकमलपदप्राप्त्याशयेव कमलत्वं प्रापदिति केवलनेत्रमात्रे त्वन्निवासभूतकमलपदभागपि सर्वाऽवयवेषु तत्प्राप्त्याशया कमलतामगच्छदिति विचित्रमर्थं प्रतिपादयन् त्वत्प्राप्त्यर्थं कमलाक्षः स समुद्रे मार्गमदिशति सति रोषाद्दर्भशयनं समुद्रतीरे समाश्रयदित्याह ।

अथ सिन्धुभीदानम्—

प्रत्यानेतुमुपागताय भवतीमासन्नलङ्कोषितां
वात्सल्यादिव ते वियोगचकितो वारां निधिस्त्वद्गुरुः ।
काकुत्स्थाय चिराय मार्गमदिशन् कालाग्निनेवाऽमुना
शोणाक्षेण रुषा शुशोषयिषितः सीते शितैः सायकैः ॥२१॥

प्रतीति । हे सीते ! त्वद्गुरुर्वारां निधिः ते वात्सल्याद्वियोगाचकितो भीतः सन्निवाऽऽसन्नायां समीपवर्तिन्यां लङ्कायामुषितां भवतीं प्रत्यानेतुम् उपागताय प्राप्ताय काकुत्स्थाय चिरायापि मार्गम् अदिशन्नप्रदाता अतः रुषा शोणाऽक्षेणाऽऽरक्तनेत्रेण कालाग्निनेव जाज्वल्यमानेन अमुना रामेण शितैः तीक्ष्णैः। शितं च दुर्बले निशिते चेति मेदिनी । सायकैः शुशोषयिषितः अयं शोषितव्य इति मनसि कृतवानित्यर्थः(?)। भवद्विरहमसहमानः श्वशुरायापि द्रुह्यति स्मेति भावः । शार्दूलविक्रीडितं वृत्तम् । उत्प्रेक्षा च ॥ २१ ॥

अथ सेतुबन्धं प्रस्तौति—

प्रपात्य महतो गिरीन् प्रसभमन्तरिन्द्रेण यो
ऽप्यधायि वसुधासुते तदनुजस्त्वदर्थं बुधः ।

---

२१ हे सीते ! रावणाऽपहृतां निजतीरगतां लङ्कापुरीमधिष्ठितां त्वां प्रतिनेतुमुपागताय रामाय ते वात्सल्याद्वियोगभीत इव मार्गमददानस्त्वत्पिता समुद्रः क्रोधाध्मातेनाऽऽरक्तनयनेन संवर्ताग्निनेव रामेण तीक्ष्णैः शरैः शोषणेच्छाविषयीकृत इति त्वत्प्राप्तिप्रतिबन्धकस्य समुद्रस्य शोषणाय संनद्धो ऽभूदित्याह ।

२२ हे महीसुते ! यः समुद्रः पर्वतपक्षच्छेदोद्यतेनेन्द्रेण हठान्महतः पर्वतान् निपात्याऽन्तरपूर्यत तदनुज उपेन्द्रो रामो वानरसंघप्रक्षिप्तैः

अमुं बहिरिलाधरैरपिदधन्निधिं यादसां

कपिव्रजकराऽर्पितैः किमिह शेषपूर्तिं व्यधात् ॥ २२ ॥

प्रपात्येति। अयं मैनाकाय मदरये ऽभयं दत्तवानतः सर्वथा ऽऽच्छादनीय इति इन्द्रेण महतो गिरीन् प्रसभं बलान्निपात्य यः सिन्धुः अन्तरे च अप्यधायि आच्छादितः हे वसुधासुते ! त्वदनुज उपेन्द्राऽवतारो रामः बुधः विद्वान् भ्रात्रङ्गीकृतनिर्वोढा अमुं यादसां निधिं सिन्धुं कपीनां व्रजानां समूहानां करार्पितैरिलाधरैः अपिदधत्सन्। अपिधानतिरोधाने इत्यमरः। इह शेषपूर्तिं भ्रातृकृत्यशेषपूरणं व्यधादकरोत्किं ? न हि। तर्हि त्वदर्थमेव सेतुमबध्नात्। अन्यथैकदेशपिधानं न संगच्छेतेति भावः। पृथ्वीवृत्तम् ॥ २२ ॥

अथ सेतुबन्धफलं वर्णयति—

अङ्घ्र्योरक्ष्णोरपि किल फलं वानराणां नराणा-

माराद्राशिं तरितुमनसामम्भसामंहसां च।

———

पर्वतैर्बहिरपि तमाच्छादयन् ज्यायसा भ्रात्रा समारब्धस्य पर्वतैः समुद्रपूरणाख्यस्य कर्मणो बहिराच्छादनरूपं शेषपूरणमकरोत् किमित्युत्प्रेक्षते।

२३ हे जननि ! मान्यो रामचन्द्रः शत्रुसदनान्मानिनीं भवतीमानेतुमिच्छुर्यथायथं जलानां पापानां च राशिमुत्तितीर्षूणां कपीनां मानवानां च चरणयोर्नेत्रयोश्च फलरूपं सेतुबन्धनकृत्यं कौतुकाद्विदधे इति त्वदर्थे सेतुबन्धनप्रयासमङ्गीकृत्य वानरान् पारगमनस-

मानाऽर्हस्त्वामहितभवनान्मानिनीमानिनीषुः
काकुत्स्थोऽसौ जननि विदधे कौतुकात्सेतुकार्यम्॥ २ ३॥

अङ्घ्र्योरिति। हे जननि ! मानाऽर्हः पूज्यो ऽसौ काकुत्स्थः रामः अहितस्य शत्रोर्भवनात् गृहात्त्वाम् आनेतुमिच्छुरानिनीषुस्सन् । नीञ् प्रापणइत्यस्मात्सन्नन्तात्सनाशंसेत्युः। आराच्छीघ्रं अम्भसां जलानां राशिं समुद्रम् अंहसां पापानां राशिं समूहं क्रमेण तरितुं मनो येषां तेषां वानराणां नराणां च अङ्घ्र्योः अक्ष्णोरपि फलं फलभूतं सेतुकार्यं कौतुकात्त्वत्कौतुकहेतोर्विदधे किमित्युत्प्रेक्षा । वानरास्तु सेतुमवलम्ब्य लङ्काङ्गताः नराणां त्वद्दर्शनात्पापनाश इति स्वाश्रितत्वयात्राघटनां(?) वानराणां नराणां च पापदशकं नश्यतामिति त्वत्प्राप्तिसाधने एतन्माहात्म्यमिति तव कौतुकावहं सेतुं व्यधादिति भावः । शार्दूलविक्रीडितम् । यथासङ्ख्यं च ॥ २३ ॥

अथ सेतुबन्धफलं कथयति—

अन्तर्यः स्फुटमनलेन वारितो ऽप्सु
विश्वेषां जननि विधातुमेष सेतुम् ।
त्वल्लिप्साऽऽकुलरघुनाथचोदनातः
पाथोधिर्बहिरपि वारितोनलेन ॥ २४ ॥

अन्तरिति । हे विश्वेषां सर्वेषां जननि मातः ! पाथोधिः

---

मर्थान् नरांश्च 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती'ति शास्त्राद् महादुरितनिबर्हणसमर्थान् चकारेत्याह ।

२४ हे जगज्जननि ! यः समुद्रः स्पष्टम् अनलेन ( बडवाऽग्निना, नलभिन्नेन च ) अन्तरप्सु निवारितोपि त्वत्प्रेप्साव्याकुलरामप्रेरणाया सेतुं कर्तुं बहिरपि नलेन तन्नाम्ना वानरेण वारित इति अनलेनाऽन्तर्जलं वारितस्य बहिरप्यलवारितत्वरूपवैचित्र्योपन्यासमुखेनाह ।

अन्तः स्फुटम् अनलेन वडवाग्निना वारितो निवारितः अस्ति हि समुद्रे वाडवो नामाऽग्निर्यस्तु द्वादशक्रोशमात्रं जलं पिबतीति लोकप्रसिद्धम्। स एव पाथोधिः सिन्धुः त्वल्लिप्सया त्वां लब्धुमिच्छया ऽऽकुलस्य रघुनाथस्य रामस्य चोदनातः प्रेरणया सेतुं विधातुं रचयितुं नलेन नलनाम्ना वानरेण बहिरपि वारितो निवारितः। अयं भावः–सिन्धुः अनलेन अनरेण देवेन च रलयोः सावर्ण्यात् वारितो मार्गाऽप्रदानेन निवारितोऽपि नलेन वानरेण नरेण च बहिरपि वारितः इति त्वत्प्राप्त्यव्याकुलत्वाऽतिशयः। स्वकार्यसिद्ध्यव्याकुलो हि पुमान् स्वकार्यप्रतिबन्धकं सर्वमपि अन्ततो बाह्यतश्च येन केनापि प्रकारेण कृत्वा निवारयति इति हि लोके प्रसिद्धमस्ति अतः अनलवारितः सरित्पतिः त्वदर्थं नलवारितः कृत इति। अथ च भगवता श्रीमद्राजाधिराजरामचन्द्रेण भगवता भाविपर्यालोचनया समुद्रशोषणार्थं नियुक्तोऽप्यनरः तव तज्जनकत्वादिपक्षपातेन शैथिल्यमावहतीति न स्वकार्यक्षमो विजातीय इति सजातीयेनैव नरेण सद्यो बध्नाति स्म। जलबन्धश्च लोके नलेनेति प्रसिद्धमिति वा विच्छित्तिविशेषः। प्रहर्षिणीवृत्तम्। श्लेषश्च ॥ २४ ॥

अथ पुनरपि फलं कथयति—

सेतुं देवि भवत्कृते रघुपतिः सृष्ट्वा जनांश्चाऽपुना-
देतेषां सगराऽन्ववायजनुषामेष स्वभावो ध्रुवम्।

---

२५ हे देवि ! रामो भवत्याः कृते सेतुम् बद्ध्वा लोकानपावयत्, अयं हि सगरराजकुलोत्पन्नानां स्वभावो यत् भगीरथो नाम सगरवंश्य एव राजा कपिलमुनिशापदग्धानात्मपितृनुद्धाराय स्वर्गाद्गङ्गाम्

स्वर्गादेव भगीरथः पितृकृते भर्गाच्च रोषाविला-

दानीतैरपुनीत लोकमखिलं गाङ्गैस्तरङ्गैः कृती ॥२५॥

सेतुमिति । हे देवि स्वप्रकाशे ! रघुपतिः श्रीरामः भवत्कृते त्वदर्थे सेतुं सृष्ट्वा उत्पाद्य जनान् लोकांश्चाऽपुनात् पवित्रीचकार । कुतः? इति चेत् । एतेषां प्रसिद्धानां सगरनाम्नो राज्ञः अन्ववाये वंशे जनुर्जन्म येषां राज्ञाम् । एषः 'एका क्रिया द्व्यर्थकरी प्रसिद्धा' इत्येवंरूपः स्वभावः । शीलं स्वभावे सद्वृत्ते इत्यमरः । ध्रुवं निश्चयेन । तदेवाऽर्थान्तरेण द्रढयति–भगीरथो नाम सवितृवंश्य एव राजा पितृकृते पितॄणामुद्धारार्थं स्वर्गात्तथा रोषेणाविलात् । कलुषोऽनच्छ आविल इत्यमरः । भर्गाच्छङ्कराच्चाऽऽनीतैर्गाङ्गैर्गङ्गासम्बन्धिभिस्तरङ्गैः कृती पुण्यवान् सः अखिलं लोकं च अपुनीत पवित्रीचकार । शार्दूलविक्रीडितं वृत्तम् । विकस्वरालङ्कारः ॥ २५ ॥

अथ युद्धसन्नाहलङ्कारोधौ वर्ण्येते—

प्रभोरलङ्कोपनिरोधमम्ब

कृताऽपराधेऽपि करिष्यसीति ।

---

रुषाविलाच्च तपसा समानीतैर्गङ्गासम्बन्धिभिस्तरङ्गैरखिलं जगत् पावयामासेति महतां निजकार्यमपि परोपकाराय भवतीत्याह ।

२६ हे अम्ब ! त्वं कृताऽपराधे ऽपि जने प्रभोः रामस्य सर्वथा कोपप्रतिबन्धं करिष्यसीति हेतोः रामदासाः कपयस्त्वदर्थे लङ्कानगरोपरोधं चक्रुरिति रामदासानां तेषां काऽपि कस्मिंश्चित्के ऽपराधे जाते प्रभु-

लङ्कोपरोधं रघुवीरदासा
हन्त त्वदर्थं हरयो वितेनुः ॥ २६ ॥

प्रभोरिति। हे अम्ब! कृताऽपराधे ऽपि पुरुषे प्रभोः श्रीरामस्य अलम् अत्यर्थं कोपस्य रोषस्य निरोधं प्रतिबन्धं करिष्यसि इति हेतुना रघुवीरस्य दासाः भृत्याः हरयो वानराः हन्तेति विस्मये त्वदर्थं लङ्कानामनगर्या उपरोधं निरोधनं वितेनुः सविस्तरं चक्रुः। तनु विस्तारे इत्यस्माल्लिट्। भृत्यैः स्वामिसाम्यं कदा चिदपि नाऽऽचरणीयमिति भावः। उपजातिवृत्तम्। विरोधाभासालङ्कारः॥ २६॥

अथ रामप्रथमयुद्धम्—

प्रीतिं निनीषुः प्रियदेवतां त्वां
समुद्रतीरे हि चरन् स रामः।
महाहवं मैथिलि वर्धयिष्य-
न्नयोमुखेन व्यलुनात् पलाशान् ॥ २७ ॥

प्रीतिमिति। हे मैथिलि! प्रिया इष्टा चाऽसौ देवता च तां त्वां प्रीतिं हर्षं प्रति। मुत्प्रीतिः प्रमदो हर्ष इत्यमरः। निनीषुर्नेतुमिच्छुः स रामः समुद्रस्य तीरे चरन् सञ्चरन् हि निश्चयेन म-

———

कोपदूरीकरणेन त्वं रक्षिष्यसीति त्वत्प्राप्तये ते लङ्कापुरमवरुरुधुरित्याह।

२७ हे मैथिलि! इष्टदेवतायास्तव प्रीतये समुद्रतटचारी रामो महाहवं (महायुद्धं, महायागं च) वर्द्धयिष्यन् अयोमुखेन (बाणेन, कुठारेण च) पलाशान्, (राक्षसान्, पलाशवृक्षांश्च) चिच्छेदेति त्वदर्थं युद्धारम्भमकरोदित्याह।

हांश्चासावाहवो यज्ञश्च तम्, अन्यत्र महांश्चासावाहवो युद्धं च तम् । आहवः समरे यज्ञे इति हेमचन्द्रः । वर्धयिष्यन् करिष्यमाणः अयोमुखेन लोहशस्त्रेण बाणेन च पलाशान् समिधः अन्यत्र पलं मांसमश्नन्ति ते पलाशा राक्षसास्तान् । पलाशः किंशुके शम्ब्यां राक्षसे इति विश्वः । व्यलुनात् अच्छिनत् । उपजातिवृत्तम् । श्लेषोत्प्रेक्षालङ्कारौ ॥ २७ ॥

अथ प्रहस्तवधः—

त्वल्लिप्सयैव धर्मेष्वासक्तो विप्रयोगिवद्व्यसनी ।

काञ्चन दानसमृद्धिं भुवि वरदेविप्रहस्तमनयदिनः ॥२८॥

त्वदिति । त्वां लब्धुं प्राप्तुमिच्छा तया धर्मेषु आसक्तः । तत्परे प्रसिताऽऽसक्तौ इत्यमरः । वरदे ! व्यसनी विपत्तिमान् । व्यसनं विपदि भ्रंशे इत्यमरः । इनः रामः विप्रयोगिवद्विरहिवत्काञ्चनस्य सुवर्णस्य दानस्याऽर्पणस्य समृद्धिं विप्रस्य द्विजस्य हस्तं प्रति अनयत् । अथ च भो वरदेवि धर्मः धनुः इषुर्बाणः तयोरासक्तः प्रहस्तं तत्संज्ञकं राक्षसं कां चनाऽनिर्वचनीयां दानस्य खण्डनस्य । दो अवखण्डने इत्यस्माल्ल्युट् । समृद्धिम्

---

२८ हे वरदेवि ! वरदे ! च त्वत्प्रेप्सयैव धर्मेष्वासक्तः ( धनुर्बाणाऽऽसक्तः, पुण्येषु निरतश्च ) व्यसनी ( विरहविधुरः, दानव्यसनी च ) इनः (प्रभू राम, आढ्यश्च) विप्रयोगिवत् ( वियोगीव, ब्राह्मणयोगिवच्च ) भुवि काञ्चनदानसमृद्धिम ( अनिर्वचनीयां छेदनर्धिं, सुवर्णवितरणाधिक्यं च) प्रहस्तं (तन्नामकं राक्षसं) विप्रकरं च प्रापयामासेति श्लेषेण लक्ष्मीप्राप्तये पुण्यासक्तः कश्चन आढ्यो दानशीलो ब्राह्मणयोगी सुवर्णदानं विप्रहस्ते करोतीति वदन् त्वत्प्राप्तये धनुर्बाणनिरतः विरहविधुरो रामः प्रहस्तनामानं राक्षसमवधीदित्याह ।

धनयत्स्थापयामास । धर्मः पुण्ये यमे न्याये चापे इति विश्वः । गीतिवृत्तम् । श्लेषालङ्कारः ॥ २८ ॥

अथाऽतिकायनाशः—

सदस्युदारे ऽप्यतिकायमान-
महालये सत्यभितोरणाग्रे ।
जयश्रिया हन्त बलाद्वृतोपि
त्वय्येव विन्यस्तमनाः स नाथः ॥ २९ ॥

सदसीति । हे सति सीते ! अभितः समन्ततस्तोरणान्यग्रे द्वारदेशे यस्मिन् तस्मिन् सदसि सदोरूपे उदारे अतिकायमान-महालये । कायमानं तृणौकसीति हैमात् तदतिक्रान्ते स्वर्णादि-मये महालये महामन्दिरे, अन्यत्र सद्भिरसिभिः खड्गैरुदारे अ-तिकायनामरक्षसः मानस्य गर्वस्य महानाशो यत्र तत्र रणाग्रे अभितः जयश्रिया बलाद्वृतः अतः स नाथः सदारोपि त्वयि सीतायामेव विशेषेणाऽधिकतया न्यस्तं स्थापितं मनो येन सः आसीत् । उपजातिवृत्तम् । श्लेषालङ्कारः ॥ २९ ॥

---

२९ हे सति ! उभयतो बहिर्द्वाराऽग्रवति, सभाविषये महति, म-हाशालोपशोभिते तृणादिनिर्मितगृहातिशायिनि महागृहे, एवं सद्भि-रसिभिर्व्याप्ते, अतिकायाख्यराक्षसगर्वमहाप्रलयकारिणि युद्धाग्रे, जयलक्ष्म्या ( पतिं वरयेति सूच्यते ) बलाद् वृतोपि रामः त्वय्येवाऽऽसक्तमना इति श्लेषेण वदन् स्वत्कृतेऽतिकायनामकराक्षस-वधमकार्षीदित्याह ।

अथेन्द्रजिन्निधनम्—

विष्णुः स्वयं त्वद्विरहाऽसहिष्णुरपांसुले हंसकुलावतंसः।
तपस्स्वरूपस्य कृतप्रभेदं निनिन्द भूनन्दिनि मेघनादम्॥३०॥

विष्णुरिति। हे ऽपांसुले निष्पापे! हंसकुलस्याऽवतंसः रामः मरालनायको यतिनायकश्च। हंसो विहङ्गभेदे स्यादर्के विष्णाविति विश्वः। स्वयं तव सीताया विरहस्याऽसहिष्णुः सन् अलङ्कृञ्-निराकृञ्प्रजनेत्यादिनेष्णुच्। विष्णू रामः। तपस्वरूपस्य लक्ष्मणस्य ग्रीष्मस्य च कृतः प्रभेदः नाशो विशेषश्च येन तं मेघनादं घनशब्दितं रावणसुतं वर्षाकालं च निनिन्द। अयं भावः—रामो लक्ष्मणभेदकमेघनादं नाशितवान्, न हि सूर्यवंशजेन तपस्वरूपविशेषकारी मेघनादो ग्रीष्मो वा निन्दितव्यः, न वा यतिना तपोविशेषाऽधिकरणं वर्षाकालो निन्द्यः, तपःस्थितेरेकत्राऽवस्थानसाध्यत्वात्। एतदयुक्तमपि त्वदर्थं कृतमिति। उपजातिवृत्तम्। श्लेषालङ्कारः॥ ३०॥

———

३० हे साध्वि, भूसुते! त्वद्वियोगाऽसहिष्णुः हंसकुलाऽवतंसः (सूर्यवंश्यः, राजहंसो, यतिवर्यश्च) विष्णुः रामः तपःस्वरूपस्य (धर्ममूर्तेर्लक्ष्मणस्य, ग्रीष्मर्तुरूपस्य, तीर्थयात्रादिपुण्यकर्मस्वरूपस्य च) कृतप्रभेदं (कृतविदारणं, कृतनाशं च) मेघनादं (इन्द्रजितं, घनगर्जितं च) निनिन्देति सूर्यवंश्यो रामः शक्तिघातेन कृतसौमित्रिविदारणमिन्द्रजितं निनिन्द, तथा राजहंसो ग्रीष्मर्तुस्वरूपनाशकमेघगर्जितमात्मदुःखाकरं निनिन्द, एवं यतिवर्यश्च तीर्थयात्रादिपुण्यकर्मणो 'वर्षास्वेकत्र संवसे'दिति वचनेन प्रतिबन्धकं वर्षर्तुचिह्नं मेघगर्जितं निनिन्देति श्लेषवैचित्र्येणाह।

अथ कुम्भभञ्जनम्—

उच्चैरावणसहभूः कुम्भस्तव कुम्भिनीतनये ।
सद्यस्तनवैरीति क्रोधादेनं जघान रघुनाथः ॥ ३१ ॥

उच्चैरिति । कुम्भिन्यास्तनये कुम्भे उच्चस्यैरावणस्यैरावतस्य सहभूः कुम्भः गण्डः(?) पक्षे उच्चैः रावणसहितः कुम्भो नाम राक्षसः हे कुम्भस्तनि ! तव सद्यः सपदि स्तनस्य कुचस्य वैरी, पक्षे सद्यो भवः सद्यस्तनः । सायंचिरंप्राह्णेप्रगेऽव्ययेभ्य इत्यनेनाऽव्ययात् ट्यूलि तुटः भागनादेशः । वैरी इति क्रोधात् एनं कुम्भं रघुनाथः जघान हतवान् । उपगीत्यार्यावृत्तम् । श्लेषालङ्कारः ॥ ३१ ॥

अथ कुम्भकर्णवधः—

लोकव्राताऽऽलम्भकं कुम्भकर्णं
लुम्पन्नम्ब त्वत्कृते रामचन्द्रः ।
अर्थादेष त्वज्जनन्या धरण्या
भारं भूरिं देवि दूरीचकार ॥ ३२ ॥

लोकेति । हे ऽम्ब हे देवि ! लोकव्रातस्य जनसमूहस्य आलम्भकं घातकं कुम्भकर्णं प्रति त्वत्कृते लुम्पन्नाशयन् एषः

---

३१ हे भूमीसुते ! उच्चैरावणसहभूः ( उच्चस्यैरावतस्य समानः, उन्नतो दशाननभ्राता च ) तव सद्यः कुचरिपुरभिनवशत्रुश्चेति हेतोः कोपाद्राम एनं कुम्भमवधीदिति कुम्भवधमाह ।

३२ हे देव्यम्ब ! रामो लोकसमूहघातकं कुम्भकर्णं नाम रावणभ्रातरं त्वदर्थं विनाशयन् त्वन्मातुर्भूमेरर्थाद्भारमपनिन्ये इति त्वदर्थं कृतः कुम्भकर्णवधो भूभारहरणार्थो ऽप्यर्थात् जात इत्याह ।

रामचन्द्रः अर्थात्तज्जनन्या धरण्या भूरिं प्रभूतं भारं दूरीचकार निवर्तयामास । अर्थादित्यस्याऽयमाशयः—कुम्भकर्णो हि प्रत्यहं लोकान् हत्वा हत्वा प्रेतपर्वतांश्चकार ततः उच्छिष्टं प्रेतश्च भूमेर्भारो भवतीति द्रुतं निष्कासनीय इति प्रसिद्धम् । अस्य हननात्तादृशकरणाऽभावः सहजसिद्ध इत्यर्थादित्युक्तम् । शालिनीवृत्तम् । अर्थापत्तिरलङ्कारः ॥ ३२ ॥

अथ सर्वरक्षःसंहननम्—

निर्णीय भूयस्तरपुण्यलभ्यं
राम: क्षमापुत्रि समागमं ते ।
नीत्वाहवं पुण्यजनाननेका-
नकारयत् स्वर्वनिताविवाहम् ॥ ३३ ॥

निर्णीयेति। हे क्षमापुत्रि ! भूयस्तरेण प्रचुरतरेण पुण्येन लभ्यं ते समागमं निर्णीय निश्चित्य रामः अनेकान् बहून् पुण्यजनान् राक्षसांश्च। भवेत्पुण्यजनो यक्षे राक्षसे सज्जनेपि चेति विश्वः। आहवं यज्ञं पक्षे युद्धं च नीत्वा प्रापय्य स्वर्वनिताभिः अप्सरोभिः सह विवाहम् अकारयत्कारयामासेति सर्वरक्षःसंहारः श्रीरामकरमरणात्तेषां स्वर्गाप्तिरपि जातेति । अथ यज्ञप्रापणपूर्वकविवाहप्रयोजकत्वेन स्वस्मिन् पुण्याधानं कृतमिति भावः । उपजातिवृत्तम् । गूढोत्प्रेक्षालङ्कारः ॥ ३३ ॥

---

३३ हे क्षमापुत्रि ! रामस्तव समागमं समधिकपुण्यप्राप्यं निश्चित्याऽनेकान् पुण्यजनान् ( यातुधानान्, पुण्यकारिजनांश्च ) आहवं ( युद्धं ) हवं ( यागञ्च ) प्रापय्य देवाङ्गनाविवाहमकारयदिति श्लेषेण अनेकान् राक्षसान्युद्धाऽभिमुखान्निहत्य देवत्वं प्राप्तैस्तैर्देवाङ्गनाविवाहं स्वप्राप्तये ऽकारयदिति राक्षससैन्यवधमाह ।

अथ रावणवधः—

धर्मं हि पूर्वमवलम्ब्य कृते जनन्याः
कालं निनाय कुतुकादधिकाननं यः ।
देवि त्वदर्थमवलम्ब्य तमेव रामः
कालं निनाय पुनरप्यधिकाननं सः ॥ ३४ ॥

धर्ममिति । हे देवि ! पूर्वं जनन्याः कृते मात्रर्थं यः रामः धर्मं पुण्याऽऽचारमवलम्ब्य स्वीकृत्य अधिकाननं वने इत्यर्थः । कालं समयं निनाय गमयामास सः रामः त्वदर्थं तमेव धर्मं चापं, धर्मो यमोपमाचापपुण्याचारेष्विति विश्वः । अवलम्ब्य स्वीकृत्य अधिकानि दशाऽऽननानि लपनानि यस्य तं रावणम् इत्यर्थः । कालं यमं प्रति निनाय प्रापयामास । अकथितं चेति द्विकर्मकत्वम् । मातुः प्रीतये इव त्वत्प्रीतयेऽपि यत्नाचरणं कृतमित्येतद्धि रामायणं रावणवधाऽन्तम् । वसन्ततिलकावृत्तम् ॥३४॥

पापपञ्चकनिरासहेतुना
सेतुना तव कृते महीसुते ।

---

३४ हे देवि ! पुरा यः रामः मातुः कैकेय्याः सन्तोषाय धर्ममाश्रित्य काननमध्ये कौतुकात्कालं यापयामास स त्वदर्थं तमेव धर्मं चापमवलम्ब्य भूयोऽपि अधिकाननं दशमुखमन्तमनयदिति यः पुरा मातुः कृतेऽधिकाननं कालं निनाय स त्वत्कृते पुनरपि अधिकाननं कालं निनायेति चमत्कृतिप्रदर्शमुखेन रावणवधं प्रतिपादयति ।

३५ हे महीसुते ! त्वत्कृते पापपञ्चकस्य ब्रह्महत्यादिमहापातकपञ्चकस्य निरासकारणेन सेतुना लङ्कां प्राप्य पापिष्ठं दशशिरसं नाशयन् ईश्वरो रामश्चातुर्यमदर्शयदिति पापपञ्चकनिरासकार-

एत्य पापदशकं विनाशय-

न्नीशिता चतुरतामदर्शयत् ॥ ३५ ॥

पापेति । हे महीसुते ! तव कृते त्वदर्थं पापपञ्चकस्य 'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संयोगं चैव तैः सह'इत्युक्तलक्षणस्य निरासहेतुभूतेन सेतुना समुद्रस्य परं तीरं तटमेत्य पापानां दशकं स्मृतिप्रसिद्धं तथा च त्रिस्थलीसेतौ—'हिंसास्तेयाऽन्यथाकामपैशुन्यपरुषानृतम् । असत्प्रलापव्यापारावभिध्या दृग्विपर्यय' इति पापदशकम् । अन्यत्र पापो रावणस्तस्य मुखदशकं विनाशयन् ईशिता प्रभुः रामः चतुरतां चातुर्यमदर्शयदर्शयामास । न हि पापहर्ता सेतुरेव मम पापः रावणः तद्धातकत्वे प्रयोजकः किं तर्हि स्वनिष्ठम् अद्भुतकौशलं त्वत्प्रीतिकरमिति(?) । रथोद्धतावृत्तम् । द्वितीयविभावनालङ्कारः ॥ ३५ ॥

अथ सीताग्रहणम्—

परमार्थयितुं हुताशना-

च्छ्रियमिच्छेदिति साधुभाषितम् ।

भवतीं श्रियमम्ब पावका-

ज्जगृहे जानकि लक्ष्मणाऽग्रजः ॥ ३६ ॥

परमार्थयितुमिति । हे अम्ब हे जानकि ! 'हुताशनादग्नेः

---

णेन सेतुना एत्य पापदशकं विनाशयन्निति चातुर्यप्रदर्शनमुखेन रावणवधे भगवतश्चातुर्यं वर्णयति ।

३६ हे मातः ! रामः 'श्रियमिच्छेद्धुताशना'दिति साधुवचनं सत्यापयितुं सीतारूपां त्वां पावकाज्जग्राहेत्यग्निशुद्धिं वर्णयति ।

सकाशात् श्रियं लक्ष्मीम् इच्छेत्' इति साधूनां भाषितं वाक्यं परमार्थयितुं सत्यीकर्तुं तदुक्तम्—'आरोग्यं भास्करादिच्छेच्छ्रिय-मिच्छेद्धुताशनात्। ऐश्वर्यमीश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात्' इति शौनकः। लक्ष्मणाऽग्रजो रामः श्रीरूपां भवतीं पावका-ज्जगृहे स्वीचकार न तु स्वतः पूतायास्तव शुद्ध्यर्थमिति भावः। औपच्छन्दसिकं वृत्तम्। अत्र श्रीकामेन वह्निराराध्य इति प्र-माणस्य क्रोडीकरणात्प्रमाणालङ्कारः॥ ३६॥

अथ इन्द्राज्ञाकरणपूर्वकाऽमृतवृष्ट्या वानरजीवनम्—

प्राणव्ययं कृतवतः प्लवगांस्त्वदर्थे
भूयो ऽपि जानकि जिजीवयिषुः स रामः।
वव्रे वरं त्रिजगतां वरदो ऽपि देवात्
कार्याऽर्थिनो हि पुरुषस्य कुतो ऽवलेपः॥ ३७॥

प्राणव्ययमिति। हे जानकि! त्वदर्थं प्राणव्ययं स्वप्राणनाशं कृतवतः प्लवगान् वानरान्। कपिप्लवङ्गप्लवगेत्यमरः। भूयः पुनरपि जीवयितुमिच्छुर्जिजीवयिषुः रामः त्रिजगतां लोकत्र-याणां वरदः सन्नपि देवादिन्द्रात् वरं वानरेष्वमृतवृष्टिरूपं वव्रे वृतवान् तदुक्तं भारते—'वव्रे रामः स्थितिं धर्मे शत्रुभिश्चाऽपरा-जयम्। राक्षसैर्निहतानां च वानराणां समुद्भवम्' ब्रह्मणामिति शेषः। तथा हि—कार्याऽर्थिनः पुरुषस्य अवलेपः। दर्पो ऽवलेपो

---

३७ हे जानकि! त्वदर्थं युधि दत्तप्राणान् वानरान् पुनरुज्जीव-यितुकामो रामः स्वयं त्रिजगद्वरप्रदोऽपि देवेन्द्रात्तदुज्जीवनं वरं ययाचेति कार्याऽर्थिनः पुंसो गर्वः कुत? इत्यनेन समर्थयन्निन्द्रवरेण वानराणां पुनरुज्जीवनं प्रतिपादयति।

ऽवष्टम्भ इत्यमरः । कुतः ? न कुतश्चिदिति भावः । 'मनस्वी कार्यार्थी न गणयति दुःखं न च सुख'मिति । वसन्ततिलका । अर्थान्तरन्यासः ॥ ३७ ॥

अथ विभीषणाय लङ्कादानम्—

काकुत्स्थः कमनीयभूषणमणिक्षौमाग्र्यहेमादिभि-
स्तोषं देवि निनाय वानरभटांस्त्वत्कार्यधुर्यान् प्रभुः ।
एतद् युक्त,मिदं तु विस्मयकरं यत् सर्वनिर्वाहिणे
रङ्गं हन्त विभीषणाय दिदिशे रत्नादियोग्याय सः॥ ३८॥

काकुत्स्थ इति । हे देवि ! काकुत्स्थः प्रभुः स रामः तव प्राप्तिकार्ये धुर्यानग्रेसरान् वानरभटान् कमनीयैः सुन्दरैर्भूषणैर्मणिभिः क्षौमाग्र्यैः श्रेष्ठवस्त्रैः हेमादिभिश्च तोषं सन्तोषं निनाय नीतवान् । धुर्यानित्यत्र धुरो यड्ढकाविति यत्प्रत्ययः । धूर्वहे धुर्यधौरेयेत्यमरः । एतत्पूर्वोक्तं युक्तम्, इदं तु विस्मयकरं, किं? यत् सर्वनिर्वाहिणे सर्वसम्पादनकर्त्रे ऽतो रत्नादिदानयोग्याय विभीषणाय हन्त खेदे रङ्गं सीसं दत्तवानिति विस्मये । रङ्गं लङ्कासभां दत्तवानिति परिहारः । रङ्गः सीसकरङ्गयोरिति हैमः । शार्दूलविक्रीडितम् ॥ ३८ ॥

---

३८ हे देवि ! रामस्त्वत्कार्यधुरीणान् वानरवीरान् रम्याऽलङ्काररत्नाऽम्बरसुवर्णादिभिः प्रीणयामासेत्येतदुचितमेव, परं सर्वकार्यनिर्वाहकाय रत्नाद्युपहारोचिताय विभीषणाय यत् रङ्गं ( सीसं, लङ्काराजसभाञ्च ) दत्तवानिदं विस्मयकरमिति साधारणकार्यकारिभ्यो वानरेभ्यो महार्हं पारितोषिकं वितीर्य सर्वनिर्वाहिणे विभीषणाय त्रपुदानमाश्चर्यजनकमिति श्लेषेण वैचित्र्यं प्रतिपादयन् विभीषणाय लङ्काधिपत्यं दत्वा राजसभां तस्मै ददाविति विभीषणराज्यदानं प्रतिपादयति ।

अवतारान् दश भगवानपत्यभूतं जगत् समस्तं ते ।
त्रातुं मातरकार्षीत्त्वदिष्टकरणादृते न तस्य फलम् ॥३९॥

इति श्रीमद्वेङ्कटाध्वरिविरचिते श्रीलक्ष्मीसहस्रे
प्रयत्नस्तबकः षष्ठः ॥ ६ ॥

अवतारानिति । हे मातः! तस्य श्रीरामस्य आत्मारामस्यापि तव इष्टकरणात् ऋते । अन्याऽऽरादितरर्ते इति पञ्चमी । अन्यत्फलं प्रयोजनं न दृश्यते ततः ते अपत्यभूतं पुत्रीभूतं समस्तं जगत्त्रातुं रक्षितुमेव भगवाञ्छ्रीरामः मत्स्यकूर्मादीन् दशाऽवतारानकार्षीत् कृतवान् जगन्मातृत्वात्तवेति भावः । एवं च सर्वोऽपि पूर्वोक्तो यत्नस्त्वदर्थमेवेति निष्कर्षार्थः सम्पन्नः ॥ ३९ ॥

इति श्रीराघवजीमहाराजापरनाम्ना श्रीनिवासपण्डितेन
विरचितायां बालबोधिन्याख्यायां श्रीलक्ष्मी-
सहस्रटीकायां प्रयत्नस्तबकः
षष्ठः संपूर्णः ॥ ६ ॥

---

३९ एतावता प्रबन्धेन विश्वामित्रेण सह निजगृहात् प्रस्थानमारभ्य विभीषणराज्यदानपर्यन्तो महीयान् सुदुष्करः प्रभोः प्रयत्नस्त्वदर्थमेवेत्यभिधाय साम्प्रतं हे मातः ! भगवान् रामस्तवाऽपत्यरूपं सकलं जगत् त्रातुं दशाऽवतारानकार्षीद्यतस्त्वदभीप्सितविधानात्तस्याऽन्यत् फलं नाऽस्तीति त्वदर्थमेव भगवतो दशाऽवतारग्रहणप्रयास इति अहो प्रयाससीमेति प्रयत्नाऽतिशयं वर्णयन् स्तबकमुपसंहरति ।

इति श्रीमानवल्लयुपाह्वयतैलङ्गरामशास्त्रिविरचितायां लक्ष्मी-
सहस्राऽवतरणनिःश्रेणिकायां प्रयत्नस्तबकः ॥ ६ ॥

## अथ मङ्गलस्तबकः ७।

—:०:—

अमङ्गलविराधादीन्रक्षोयोनेः समुद्धरन्।
समङ्गलान्यश्चकार स रामः श्रेयसे ऽस्तु नः ॥ ७॥

अथाऽस्मिन्सप्तमस्तबके सर्वत्र मङ्गलत्वं लक्ष्म्या एवेति वर्णयितुं प्रथमपद्ये मङ्गलमिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

भागधेयं भजेयं तत् फणिशैलकुटुम्बिनः।
मनीषिणो यदेवाऽऽहुर्मङ्गलानां च मङ्गलम् ॥ १ ॥

भागधेयमिति। मनीषिणो विद्वांसो यदेव मङ्गलानां च मङ्गलमित्याहुः तत्फणिशैलकुटुम्बिनः श्रीहरेर्भागधेयं भाग्यं भजेयम्। न हि लक्ष्मीसदृशं मङ्गलमित्यर्थः। पथ्यावक्त्रं विपुला वा वृत्तम्। रूपकोदात्तावलङ्कारौ ॥ १ ॥

तनोति सिन्धोस्तनये कथं चित्
तवांशलेशो यदि संनिधानम्।
तृणे ऽपि माङ्गल्यमुपैत्यखर्वं
दूर्वादिरेवाऽत्र निदर्शनं नः ॥ २ ॥

तनोतीति। हे सिन्धोस्तनये! तवांशस्य लेशो ऽपि यदि कथं

———

१ अथ सप्तमं मङ्गलस्तबकमारब्धुकामः आदौ सर्वमङ्गलमङ्गलत्वेन प्रसिद्धायाः श्रीदेव्याः श्रीवेङ्कटाऽचलपतेर्भाग्यरूपाया भजनमाशास्ते।

२ हे सागरपुत्रि! त्वन्नामाऽवयववर्णलवो ऽपि कथं चिद्यदि संनिधानं तनोति तर्हि तृणे ऽपि महन्मङ्गलकारित्वं भवतीत्यत्र त्वन्नामभूतश्रीपदाऽवयवांशरेफघटितनामकं दूर्वातृणमेवोदाहरणमित्याह।

चित्सन्निधानं तनोति तर्हि अखर्वं बहु माङ्गल्यं तृणे ऽप्युपैति प्राप्नोति । अत्राऽर्थे नो ऽस्माकं-दूर्वादिरेव निदर्शनं दृष्टान्तः । दूर्वा तु शतपर्विका सहस्रवीर्याभार्गव्यौ रुहेत्यादितन्नामसु रमाशब्दांशरेफसत्वेन माङ्गलिकत्वम् । आदिशब्दादाम्ररसालादि ग्राह्यम् । अत एव दूर्वाया मङ्गलेति नाम । मङ्गला सितदूर्वायामिति मेदिनी । 'कुशस्थाने तु दूर्वा स्यान्मङ्गलस्याऽभिवृद्धये' इति स्मृतिश्च । अत्र "रमे तनोतीह यथा कथं चि"दिति पाठे कल्पिते परमसामरस्यम् । उपजातिवृत्तम् । काव्यलिङ्गमलङ्कारः ॥२॥

गरुडध्वजवल्लभे शुभे
गणवर्णादिजदोषशान्तये ।
वरदे तव वाचकं पदं
कवयः काव्यमुखे प्रयुञ्जते ॥ ३ ॥

गरुडेति । हे शुभे ! हे गरुडध्वजस्य वल्लभे ! हे वरदे ! तव वाचकं बोधकं पदं श्रीरित्यादि वर्णगणादिविपर्यासजनितदोषशान्तये कवयः काव्यस्य मुखे आदौ प्रयुञ्जते प्रयोगं कुर्वन्ति । तथा च 'श्रियः कुरूणा'मिति किरातादौ । 'श्रियः पति'रिति माघादौ 'लक्ष्मीं तनो'त्विति चम्पुरामायणादौ । प्रथमपद्यव्याख्यानेपि देवतावाचका इत्यादिनोक्तम् । वैतालीयं वृत्तम् ॥३॥

---

३ हे शुभे ! हरिप्रिये देवि ! कवयः काव्याऽऽरम्भे वर्णगणादिदोषशान्त्यर्थं त्वन्नामभूतं श्रीशब्दादिकं निवेशयन्तीति त्वन्नाम निखिलदोषाऽपनयनपूर्वकं मङ्गलप्रदं भवतीत्याह ।

विदुः पदाऽब्जं तव विश्वमङ्गलं
हरिप्रिये यत्परिचारवैभवात् ।
समाश्रिता स्थाणुमपि श्मशानगं
जगत्यपर्णा ऽजनि सर्वमङ्गला ॥ ४ ॥

विदुरिति । हे हरिप्रिये ! तव पदाऽब्जं विश्वमङ्गलं विदुः । कवय इति शेषः । तथा हि—यस्य त्वदीयस्य परिचारस्य सेवनस्य वैभवात् सामर्थ्यात् श्मशानं प्रेतस्थलं तद्गच्छति वसति तमपि । श्मशानं स्यात्पितृवनमित्यमरः । स्थाणुं शिवं वृक्षविशेषं च सम्यगाश्रिता अपर्णा पार्वती पर्णरहिता लता च जगति लोके सर्वमङ्गलाऽऽख्या अजनि जातेत्यर्थः । वंशस्थवृत्तम् । काव्यलिङ्गश्लेषालङ्कारौ ॥ ४ ॥

तातो दुग्धपयोनिधिः सहभुवस्ते कौस्तुभाद्याः शुभा
देवस्त्वव्ययदिव्यमङ्गलवपुः श्रीवत्सलक्ष्मा पतिः ।
नाम श्रीरिति धाम पद्ममखिलक्षेमङ्करः पक्षिराड्
वाहः को हरिवल्लभे कथयितुं माङ्गल्यमीष्टे तव ॥५॥

तात इति । हे हरिवल्लभे ! दुग्धपयोनिधिः ते तातः पिता,

---

४ हे हरिदयिते ! त्वच्चरणकमलं जगन्मङ्गलकारणं जना जानन्ति, यत्सेवाप्रभावात् श्मशाननिलयं स्थाणुं ( शिवं, शुष्कवृक्षं च ) समाश्रिता अपर्णा ( पार्वती, पत्रहीना लता च ) लोके सर्वमङ्गलेति प्रसिध्यतीत्याह ।

५ हे हरिप्रिये ! क्षीरोदधिस्ते पिता, शुभाः कौस्तुभमुखाः सोदराः, नित्यदिव्यमङ्गलशरीरः श्रीवत्सलाञ्छनो देवो नारायणः पतिः, नाम श्रीरिति, वासस्थानं च पद्मं, निखिलकल्याणकारको गरुडो वाहन,मेवं मङ्गलभूतनिखिलबान्धवपरिकरायास्ते माङ्गल्यं वर्णयितुं को वा समर्थः ? इत्याह ।

तथा कौस्तुभाद्याः सहभुवः सहोत्पन्ना भ्रातर इत्यर्थः । एवम् अव्ययं शाश्वतं दिव्यं सुन्दरं मङ्गलं च वपुर्यस्य तथा श्रीवत्सं तत्संज्ञब्राह्मणपादः लक्ष्म चिन्हं यस्य । चिन्हं लक्ष्म च लक्षणमित्यमरः । तादृशो हरिस्तु पतिः । धवः प्रियः पतिर्भर्तेत्यमरः । एवं नाम तवाऽभिधा श्रीरिति, धाम गृहं, गृहदेहत्विट्प्रभावा धामानीत्यमरः । अखिलजगतः क्षेमङ्करः अमृताऽऽनयनान्मङ्गलकरः । क्षेमप्रियमद्रे ऽण् चेति खच् । पक्षिराट् गरुडः वाहो वाहनं, ततः को वा पुरुषः तव माङ्गल्यं कथयितुम् ईष्टे समर्थो भवति । अत्र समुद्रादेर्गुणसान्निध्येन प्राक्सिद्धलक्ष्म्या माङ्गल्यगुणाऽऽधिक्यवर्णनेनाऽनुगुणालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

यस्तु श्रीर्न पुरस्करोत्यविनयाद्वस्तु त्वदीयं शुभं
तस्मिन् नृत्यति दुर्गतिश्चिरतरं तत्र प्रमाणं तु नः ।
दुर्वासःप्रतिघोद्गमादधिगतः स्वर्वासवस्त्वच्युतिं
दिव्यं माल्यमहो मदादगणयन्देवः शचीवल्लभः ॥ ६ ॥

यस्त्विति । हे श्रीः ! यस्तु पुमान् त्वदीयं त्वत्सम्बन्धि शुभं प्रसादरूपं वस्तु पुष्पादि अविनयात् उन्मादात् न पुरस्करोति न सत्करोति तस्मिन् पुरुषे दुर्गतिर्दारिद्र्यं चिरं नृत्यति नर्तनं करोति । अत्र नर्तनस्य चेतनधर्मत्वादचेतने दारिद्र्ये नर्तनं कथ ? मिति चेच्चरणप्रहारस्येव तस्यापि दुःखदातृत्वं लक्ष्यते । तत्र नो ऽस्माकं प्रमाणं दृष्टान्तस्तु दिव्यं माल्यं प्रसा-

---

६ हे श्रीः ! यो नर औद्धत्यात्तावकं वस्तु नाऽऽद्रियते तत्र दुरवस्था चिरतरं नृत्यतीत्यत्र त्वत्प्रसादभूतां दुर्वाससा दत्तां दिव्यां मालां गर्वादपमन्यमानः कुपितेन दुर्वाससा शप्तः स्वर्गराज्यात् स्वर्गनिवासाद्वा भ्रंशमुपगतो महेन्द्र एव प्रमाणमित्याह ।

दुरूपं स्रजं मदाद्गर्वादगणयन् तिरस्कुर्वन् अतः दुर्वाससः ऋषेः प्रतिघा(?) क्रोधः तदुद्भवात् तदुदयात् अहो इत्याश्चर्ये स्वः स्वर्गे वासवत्वं इन्द्रत्वं, वा स्वरित्यव्ययमस्यमरात्स्वः स्वर्गे वासो ऽस्यास्तीति तस्य भावस्तत्त्वं तस्मात्स्वर्वासवत्त्वात् च्युतिं भ्रंशम् अधिगतः प्राप्तः शच्या इन्द्राण्या वल्लभः पतिः शक्र इति । अयमितिहासो तभूपूर्वो विष्णुपुराणे सविस्तरः प्रपञ्चितः । तमत्र सङ्क्षेपरूपेण पद्यतो बध्नामि । यथा—

आराध्य त्रिजगत्प्रसूमधिगता या तत्प्रसादस्रजा
सा देवाऽङ्गनया ऽर्पिता मुदितया दुर्वाससे तेन सा ।
दत्तेन्द्राय च तेन हस्तिकरटे न्यस्ता तदा मर्दितां
तां नागेन स वीक्ष्य तं भव गतश्रीरित्यमुं शप्तवान् ॥ इति ।
शार्दूलविक्रीडितं वृत्तम् । काव्यलिङ्गमलङ्कारः ॥ ६ ॥

दृष्टिः शिवोदयकरी करुणाभिरार्द्रा
युक्तं तवाऽम्ब भजते भवतारकत्वम् ।
ज्येष्ठाश्रयोपि मघवा स्तुतिभिस्तवाऽहो
प्राप्याऽतुलो ऽजनि पुनर्वसुवर्गमुच्चम् ॥ ७ ॥

दृष्टिरिति । हे अम्ब ! ते तव दृष्टिः शिवस्य कल्याणस्य

---

७ हे अम्ब ! मङ्गलस्य उदयकारिणी, करुणाभिः आर्द्रा ते दृष्टिः संसारतारकत्वमुपैति तत्, एवं गिरिशस्योदयकारिणी आर्द्रा नाम तारका शिवनक्षत्रत्वमुपैतीत्येतच्च युक्तमेव, परं ज्येष्ठानक्षत्राश्रितो ऽपीन्द्रस्तव स्तवैरुच्चं पुनर्वसुनक्षत्रगणं प्राप्य अतुलाराशिगो ऽजायतेति ज्येष्ठानक्षत्रस्थस्य पुनर्वसुप्राप्तिराश्चर्यकारिणीति वदन् त्वत्प्रसाद-मालाऽवमाननात् अलक्ष्म्याश्रयो ऽपीन्द्रः पुनः द्रविणचयं प्राप्य निरुपमः समपद्यतेति अहो त्वत्स्तोत्रं मङ्गलकरमित्याह ।

शङ्करस्य चोदयकरी । शिवो मोक्षे महादेवे सुखक्षेमजले इति मेदिनी । एवं करुणाभिः आर्द्रा क्लिन्ना नक्षत्रं च । आर्द्रा नक्षत्रभेदे स्यात्त्रियां क्लिन्ने ऽभिधेयवदिति मेदिनी । अतो भवतारकत्वं संसारतारकत्वं शिवनक्षत्रत्वं च भजतीति युक्तम् । तारकशब्दो नपुंसकोपि नक्षत्रे इति 'आर्द्रया रुद्रः प्रथमान एती'त्यापस्तम्बश्रुतिः । ज्योतिषे च प्रसिद्धम् । 'इन्द्रो ज्येष्ठामनुनक्षत्रमेति' इत्यापस्तम्बश्रुत्या ज्येष्ठानक्षत्राश्रयो ऽपि मघवेन्द्रः उच्चं पुनर्वसुनक्षत्रवर्गं प्राप्यापि अतुलो निरुपमः अजनि । अत्र तुलां न गच्छतीति चित्रे पूर्वोक्ताऽत्रमानादेव ज्येष्ठाया अलक्ष्म्या आश्रयो यस्य स मघवापि तव स्तुतिभिः पुनः मुहुः उच्चम् उन्नतं विपुलमित्यर्थः । वसुवर्गं द्रव्यगणं प्राप्य निस्तुलो निरुपमो ऽभवत इति चित्राऽभावः । अमुमपि विष्णुपुराणस्थमेव शेषमितिहासं पश्यतो बध्नामि—

> गतश्रीकस्ततः शक्रः श्रियमाराध्य दैवतैः ।
> आरुरोह पुनः स्वर्गे ऋक्षैर्मेरुरिवांशुमान् ॥ इति ।

अत्राऽयं न्यासः—या हि शिवोदयकरी आर्द्रा सा भवतारकत्वं भजते इति युक्तम्, इदं तु विचित्रं ज्येष्ठाश्रयो हि पुनर्वसुसमृद्धो ऽभूदिति । अत्र "स स्वातिवैभवमितो ऽप्यतुलो बभूव" इति चतुर्थपादपाठे कल्पिते ज्येष्ठाऽऽश्रितेन स्वातिवैभवं दुरापम्, अवाप्ते ऽपि तस्मिन् सतुलेन भवितव्यं, स्वातेस्तुलाराशिनिविष्टत्वात् । अयमिन्द्रः स्वस्याऽतिवैभवं स्वाऽतिवैभवं च गच्छन्नपि अतुलो ऽभूदिति महाचित्रं विभावनीयं सुधीभिः । वसन्ततिलकावृत्तम् । समविरोधाभासावलङ्कारौ ॥ ७ ॥

---

फणिशयदयिते तव स्तुति-
भगवति पावनरीतिमाश्रिता ।
अवितथमत एव तद्बला-
च्छुभमगतो ऽपि सुमङ्गलत्यहो ॥ ८ ॥

फणीति । हे फणिशयस्य विष्णोर्दयिते ! भो भगवति ! तव स्तुतिः पावनीं पवित्रां, पक्षे पवनस्य वायोः सम्बन्धिनीं रीतिं प्रकारं वायुसाधर्म्यमिति यावत् । यतः आश्रिता आप्ता अत एव तद्बलात् स्तुतिबलात्, पक्षे वायुबलाच्च अवितथं सत्यं शुभं कल्याणम् अगतो ऽप्राप्तो ऽपि सुष्ठु मङ्गल इवाऽऽचरति सुमङ्गलति कल्याणरूपो भवतीत्यर्थः । सुमङ्गलशब्दादुपमानाचारे इति कर्तरि क्विप तिबादयः । पक्षे अगाद्वृक्षादित्यगतः । पञ्चम्यास्तसिल् । शैलवृक्षौ नगावगावित्यमरः । सुमं पुष्पं गलति पतति च । अपरवक्त्रं वृत्तम् । श्लेषकाव्यलिङ्गे अलङ्कारौ ॥ ८ ॥

त्वद्भ्रातुरिन्दोरनुचारयोगात्
प्रायेण मूढो ऽप्यशुभः कुजन्मा ।

---

८ हे शेषशायिदयिते भगवति ! त्वत्स्तुतिः पावनरीतिं ( पावित्र्याऽऽपादिकां, पवनसम्बन्धिनीं च रीतिम ) आश्रिता सत्यम, अत एव तद्बलादप्राप्तशुभो दुर्भगोऽपि सुमङ्गलो भाग्यवानिवाऽऽचरति, अगतो वृक्षाच्च सुमं पुष्पं गलतीति श्लेषेण भगवतीस्तुतेः पावनत्वं प्रतिपादयति ।

९ हे भूमण्डलाऽलङ्काररूपे ! त्वत्सोदरस्य चन्द्रमसो ऽनुचारयोगात् ( पश्चात्पाठात, अनुसरणयोगाच्च ) प्रायशो मूढोऽपि ( अस्तंगतोऽपि, मूर्खो ऽपि च ) अशुभः कुजन्मा ( भौमग्रहः, दुर्जातश्च ) बुधाग्रगण्यः ( बुधग्रहात् पूर्वपठितः, पण्डिताऽग्रगण्यश्च ) अभूत् । एवं

सुभूविभूषे स बुधाऽग्रगण्यो
बभूव जग्राह च मङ्गलाऽऽख्याम् ॥ ९ ॥

त्वदिति। सुष्ठु भुवः विभूषे भूषणभूते! तव भ्रातुः इन्द्रोश्चन्द्रस्य अनुचारयोगाद् ग्रहगणनायां पश्चादुच्चारकारणात् प्रायेण बाहुल्येन मूढः मूर्खः तामसश्चाऽतः अशुभः ग्रहशुभाऽशुभगणनायाम् । यद्वा मूढः रविसान्निध्येनाऽस्तं गतः अत एव अशुभः अमङ्गलश्च कुजन्मा कुत्सितजन्मा भूसुतश्च बुधानां ज्ञानिनां बुधाख्यग्रहस्य चाऽग्रगण्यः मुख्यः, बुधाख्यग्रहप्रथमनामग्रहयोग्यश्च बभूव आस, चेत्यपरं मङ्गल इति आख्यामभिधां जग्राह गृहीतवान् अहो इत्याश्चर्ये। उपजातिवृत्तम् । श्लेषविभावनालङ्कारौ ॥ ९ ॥

जगृहे क चिदच्युतो ऽवतारे
जगतां मातरिनाऽन्वयं पुरा यः ।

---

मङ्गलाख्यां ( मङ्गल इत्याख्यां, मङ्गलकरं नाम च ) प्रापेति ग्रहगणनाक्रमे त्वद्भ्रातुः चन्द्रात्पश्चात्पठात् अस्तं गतो ऽत एवाऽशुभोऽपि भौमग्रहः बुधग्रहात् पूर्वपठितो मङ्गलनामा चाऽजनीति अर्थान्तरं श्लेषेण प्रतिपादयन् त्वद्भ्रातृचन्द्राऽनुसरणप्रभावादपि मूर्खो ऽमङ्गलश्च दुर्जातो नरः पण्डिताऽग्रगण्यः शुभाऽभिधेयश्च भवति किं पुनस्त्वदनुसरणेनेत्याह ।

१० हे लोकमातः ! यो ऽच्युतः ( कृष्णः, अवर्णात् च्युतश्च ) पुरा क चिदवतारे ( रामाऽवतारे, अकारोत्तरवर्णाऽवतरणे च ) इनाऽन्वयं ( सूर्यवंशम, इना इकारेण समनन्तरोपस्थितत्वात् सम्बन्धश्च ) जगृहे तमाविरतम् इनाऽन्वयम ( इः कामस्तत्सम्बन्धम्, इकारेण सम्बन्धं च ) प्रापयन्ती त्वं तं शिवतातं ( साम्बस्य पितरं कृष्णम, अकारान्तं शि-

तमजस्रमिनाऽन्वयं नयन्ती
शिवतातं शिवतातिमातनोषि ॥ १० ॥

जगृहे इति। हे जगतां मातः! यो ऽच्युतः क्वचित् अवतारे इना कामेन इकारेण च इनस्य सूर्यस्य च अन्वयं सम्बन्धं वंशं च जगृहे स्वीचकार तमच्युतम् अजस्रं नित्यम् इना इवर्णेन मदनेन चाऽन्वयं नयन्ती सती शिवः साम्बः तन्नामा जाम्बवतीपुत्रः तस्य तातं जनकम्, अथ च शिवः संहारको रुद्रः ब्रह्मललाटादुत्पन्न इति श्रीमद्भागवते। लिङ्गपुराणेपि शरभाऽवतारवीरभद्रं प्रति नृसिंहवाक्यम्—

मन्नाभिपङ्कजाज्जातः पुरा ब्रह्मा चतुर्मुखः।
तल्ललाटसमुत्पन्नो भगवान् वृषभध्वजः॥ इति।

अतः तस्य तातं पितामहं तातशब्दस्य पितृसामान्यवाचित्वात्तादृशं क्रोधनमपि। यद्वा 'ललाटाज्जातवान् शम्भुः शूलपाणिस्त्रिलोचन' इति भगवन्तं प्रत्यर्जुनोक्तिर्वनपर्वणि। अत स्तमपीति शिवं कल्याणं करोतीति शिवतातिः तं, शिवशमरिष्टस्य करे इति तातिप्रत्ययः। आतनोषि विस्तारयसि। अयमत्र वक्तव्यो विच्छित्तिविशेषः—यो ह्यच्युतः स इनाऽन्वयं गच्छति, वासुदेवपराङ्मुखस्य तस्य कामाऽन्वयित्वनियमात्। अकारच्यु-

---

वतातशब्दं च) शिवतातिं (कल्याणकारिणम्, इकारान्तशिवतातिशब्दरूपञ्च) करोषीति शिवतातशब्दीयाऽन्ताकारच्युतौ तत्रेकारसम्बन्धं विधाय तं शिवतातिशब्दं करोषीति श्लेषेण वदन् सूर्यवंश्यं रामं सर्वदा कामसम्बन्धं प्रापयन्ती त्वं कृष्णाऽवतारे साम्बजनकं तं शुभङ्करं करोषीति वैचित्र्येणाह।

तस्य च प्रत्यासत्त्या इकाराऽन्वयित्वनियमात्। तदिदमभिसंधाय तादृशेन भगवता त्वद्धेते गृहीतेष्वपि मत्स्यकूर्मवराहसामराज(?)-वामनपरशुरामाऽवतारेषु इना ऽन्वयो नाऽभूत्। यदा च तत्र पाणिग्रहणचिकीर्षा तदैव सप्तमाऽवतारे इना अन्वयः कोऽपि कोऽभूत्, 'मदीयतां दाशरथाय मैथिली'ति दाशरथिरिति च। परं तत्र तव जिहासासत्त्वाल्लघुतयैव रलयोः सावर्ण्याल्लघुत्वेनेत्यर्थान्तरं न तु सम्यक्प्रभूततया। यदा च तव जिहासाऽभावस्तदाऽष्टमे ऽवतारे सदिनान्वयः सम्भैरन्तर्येण विद्यमानो य इः कामस्तेन सतां नक्षत्राणामिनः स्वामी चन्द्रश्च(?) तस्याऽन्वयः वंशः कैशोरमारभ्य कामाऽन्वयश्च मूर्तप्रद्युम्नाऽन्वयः। शिवतानः शिवतातिरिति पदद्वये अनेकधा इकाराऽन्वयश्चेति त्वत्साहाय्यं विना श्रीभगवतोऽपि कामपूर्तिर्नेति किमस्मत्कुशलस्थितिरिति। औपच्छन्दसिकं वृत्तम्। श्लेषहेत्वलङ्कारौ ॥ १० ॥

कूत्पत्तिमूलमपि केशवपादपद्मं

कल्याणि ते शुभकराऽन्वयमेलनेन।

---

११ हे कल्याणि! कूत्पत्तिमूलम (भूम्युत्पत्तिकारणं, कुत्सिताऽशुभकारणञ्च) अपि नारायणचरणकमलं ते शुभकराऽन्वयमेलनेन (रम्यहस्तसम्बन्धेन, कल्याणकारिसम्बन्धेन च) कपालिनः (कपालधारिणोऽशुभस्यापि भवस्य, कपालहस्य कापालिकापऽसदस्य च) शिवत्वपारदाय (शिवत्वाऽऽपादकं, माङ्गल्याऽऽपादक च) जगत्त्रयमङ्गलकरं तीर्थं (गङ्गारूपम, शुभसाधनोपायं च) उत्पादयामासेत्यशुभकारणमपि भगवत्पादपद्मं तव शुभकरसंसर्गप्रभावात् कपालधारिणो ऽप्यशुचेर्दुर्भगस्य सकलमङ्गलसंपादनकारण-

त्रैलोक्यमङ्गलमजीजनदब्धिकन्ये
तीर्थं शिवत्वपरिदायि कपालिनोऽपि ॥ ११ ॥

कूत्पत्तिमूलमिति। हे अब्धिकन्ये! हे कल्याणि? कोः कुत्सितात् पृथ्व्याश्चोत्पत्तिर्जनिर्यस्मात्तत् 'पद्भ्यां भूमिर्दिशः श्रोत्रा'दिति श्रुतेः। जनिरुत्पत्तिरुद्भव इत्यमरः। तदपि केशवस्य विष्णोः पादपद्मं चरणकमलं नूनं निश्चयेन ते तव शुभकरस्य शोभनहस्तस्य कल्याणकारिणश्च अनिशं संवाहनकाले सततमेलनेन सम्बन्धघटनेन कपालिनः नृकपालधारिणः पापिनोपि हरस्यापि शिवत्वस्य माङ्गल्यस्य च परिदायि सम्पादकं त्रैलोक्ये भुवनत्रये मङ्गलं तीर्थं भागीरथीरूपम् अजीजनदुत्पादयामास। तीर्थं शास्त्राऽध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। अवतारर्षिजुष्टाऽम्भःस्त्रीरजःसु च विश्रुतमिति विश्वः। वसन्ततिलकावृत्तम्। श्लेषविभावनालङ्कारौ ॥ ११ ॥

कन्ये दुग्धोदन्वतस्तावकीनं
मन्ये रूपं मङ्गलं मङ्गलानाम्।

---

मासीदिति श्लेषेण वदन् पृथिव्यादिजगदुत्पत्तिकारणमपि भगवच्चरणं पादसंवाहनादिकाले त्वत्करसम्बन्धाद्घोरमङ्गलकपालधारिणोपि भवस्य शिवस्वरूपाऽऽपादकं जगत्त्रयशुभकरं गङ्गारूपं तीर्थमुत्पादयामासेति प्रतिपादयन् यत्करसंसर्गप्रभावादेवंविधकार्यकारि भगवच्चरणमासीत्तस्या माहात्म्यं किमु वक्तव्यमिति सूचयति।

१२ हे क्षीरसागरसुते! त्वदीयं रूपं मङ्गलानामपि मङ्गलकरं मन्ये, यतो यस्य समानवर्णतया ऽवाप्तशुभस्वरूपा हरिद्रा सुवासिनीनामङ्गनानां सौभाग्यं विदधातीति स्त्रीभिः सौभाग्यचिन्हतया धार्य-

यत्सावर्ण्यप्राप्तभद्रा हरिद्रा
सौमङ्गल्यं संविधत्ते वधूनाम् ॥ १२ ॥

कन्ये इति। हे दुग्धोदन्वतः क्षीरसागरस्य कन्ये पुत्रि! रमे! तव इदं तावकीनं, तवकममकावेकवचने इति खञ् । रूपम् आकारः मङ्गलानां मङ्गलद्रव्याणां मङ्गलं माङ्गल्यप्रदं मन्ये जानामि। कुत? इति चेत, यस्य रूपस्य सावर्ण्येन सादृश्येन प्राप्तं भद्रं मङ्गलं यया सा हरिद्रा वधूनां सीमन्तिनीनां, नारी सीमन्तिनी वधूरित्यमरः । सौमङ्गल्यं सुमङ्गलरूपतां सौभाग्यमित्यर्थः। विधत्ते। शालिनीवृत्तम्। काव्यलिङ्गम् ॥ १२ ॥

यस्ते रूपमुपास्ते
शुभं प्रपन्नं श्रियं हरिद्राजाम् ।

---

माणा हरिद्रा यत्सावर्ण्यमात्रात्सौमङ्गल्याऽऽपादिका तत्ते रूपमतिसौमङ्गल्यप्रदमित्यार्थिकमित्याह ।

१३ इदानीं हे जननि ! यो नरः हरिद्राजां (हरिद्राया उत्पन्नां) शोभां प्राप्तं ते शुभं रूपमुपास्ते स परस्मिन् लोके ऽपि 'यं यथोपासते तदेव भवतीति' श्रौतन्यायेन हरिद्राजां (दिक्पालकानां) लक्ष्मीं प्राप्नोतीति हरिद्राजश्रीयुक्तरूपसमुपासकस्य हरिद्राजश्रीप्राप्तिस्तत्क्रतुन्यायासिद्धेति वदन् त्वद्रूपोपासकस्य स्वर्गादिशुभलोकेषु दिक्पा-

तत्क्रतुनयेन स वहे-
दमुत्र जननि श्रियं हरिद्राजाम्॥ १३ ॥

इति श्रीमद्वेङ्कटाध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे
मङ्गलाख्यः सप्तमः स्तबकः समाप्तः ॥ ७ ॥

यस्ते इति। यः पुमान् हरिद्राजां हरिद्रोद्भवां श्रियं शोभां प्रपन्नं प्राप्तं ते तव रूपं, रूपं स्वभावे सौन्दर्ये इति विश्वः। उपास्ते उपासनां करोति स पुमान् तस्य क्रतोः सङ्कल्पस्य नयेन न्यायेनेति 'स यथाकामो भवति तत्क्रतुर्भवति, यत्क्रतुर्भवति तत्कर्म कुरुते, यत्कर्म कुरुते तदभिसम्पद्यते' इति बृहदारण्यकश्रुतिः। 'यं यथा यथोपासते तदेव भवती'ति श्रुत्यन्तराच्च। 'तत्क्रतुश्चे'ति ब्रह्मसूत्रमपि। हरितां दिशां राजः स्वामिनः तेषां हरिद्राजां, क्विबन्तो राट्शब्दो ऽयं न तु राजन्शब्दः। तस्य टजापत्त्या राजानामिति प्रयोगेण भाव्यत्वात्। दिक्पालानामित्यर्थः। श्रियं लक्ष्मीं हे जननि हे मातः! अमुत्र परस्मिन् लोके वहेत् स्वीकुर्यादित्यर्थः॥ १३ ॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन
विरचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मीसह-
स्रटीकायां मङ्गलाख्यः सप्तमः स्तबकः स-
म्पूर्णो ऽभवत्॥ ७ ॥

---

लताप्राप्तिर्भवतीति प्रतिपादयन् स्तबकं समापयति।

इति श्रीमानवल्ल्युपाख्यतैलङ्गरामशास्त्रिविरचितायां
लक्ष्मीसहस्राऽवतरणनिःश्रेणिकायां मङ्गल-
स्तबकः॥ ७॥

## अथ सौन्दर्यस्तबकः ॥ ८ ॥

पञ्चवट्यां शूर्पणखा यत्सौन्दर्यविमोहिता ।
पतित्वं प्रार्थयामास स रामः श्रेयसे ऽस्तु नः ॥ ८ ॥

अथाऽस्मिन्नष्टमस्तवके लक्ष्म्याः सौन्दर्यं वर्णयितुं प्रथमपद्ये सौन्दर्यपर्याप्तिमिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

वन्दे सौन्दर्यपर्याप्तिभूमिं कामपि देवताम् ।
अब्जं सहोदरं यस्याः शंसन्त्यब्जशरं सुतम् ॥१॥

वन्दे इति । सौन्दर्यस्य मनोज्ञतायाः पर्याप्तेः सीमाया भूमिं स्थानं कामप्यनिर्वचनीयां देवतां वन्दे इति । तामेव सौन्दर्यपूर्णतां समर्थयति—यस्याः सहोदरं बन्धुम् अब्जं चन्द्रं, सुतम् अब्जशरं मदनं शंसन्ति तामिति सम्बन्धः । रामणीयकानधित्वेन प्रसिद्धौ यौ चन्द्रमदनौ तौ यस्या भ्रातृसुतौ सा सौन्दर्यसीमेति किं वक्तव्यमिति भावः । पथ्यावक्त्रं वृत्तम् । काव्यलिङ्गमलङ्कारः ॥ १ ॥

अद्वैतमक्षिभिरिह श्रवसां यदि स्याद्
द्वैतं पृथग्यदि पुना रसनासु च स्यात् ।

---

१ अथेदानीं भगवतीसौन्दर्यवर्णनाय सौन्दर्यस्तवकमष्टममारिप्सुर्यस्या अब्जं ( चन्द्र ) सहोदर, अब्जशरं ( कामं प्रद्युम्नं ) च पुत्रं जना वदन्ति, अत एव भ्रातृपुत्रसौन्दर्येणवाऽनुमेयलोकोत्तरसौन्दर्यतया सौन्दर्यपरिपूर्णतास्पदमनिर्वचनीयस्वरूपां देवतां वन्दे इति मङ्गलमाचरति ।

२ हे सागरराजपुत्रि ! मयि नेत्रैः सह कर्णानामैक्यं यदि स्यात्, एवं जिह्वासु प्रत्येकं द्वित्वं यदि स्यात्, तर्हि अनिर्वचनीयं तवाऽङ्गसौन्दर्यं वर्णयितुमहं शक्तः स्यामिति मम नेत्रद्वये कर्णद्वये च प्रथ-

ईशीय वर्णयितुमर्णवराजकन्ये
तत्तादृशं किल तवाऽवयवाऽऽभिरूप्यम् ॥ २ ॥

अद्वैतमिति । हे अर्णवराजकन्ये ! इह लोके मयि च यदि चेत् श्रवसां श्रोत्रेन्द्रियाणाम् अक्षिभिश्चक्षुरिन्द्रियैः, सहेति शेषः । अद्वैतम् ऐक्यं यदि चेत्पुनः रसनासु जिव्हासु । रसज्ञा रसना जिह्वेत्यमरः । द्वैतं स्यात् उभयथापि चक्षुःश्रवाः द्विरसनश्च शेष एव विवक्षितः, स यद्यहं स्यामित्यर्थः । तत्तर्हि तत्प्रसिद्धं च तत्तादृशं निरुपमं च तवाऽवयवानाम् । अङ्गं प्रतीको ऽवयव इत्यमरः । आभिरूप्यं रम्यत्वम् । अभिरूपो बुधे रम्ये इति मेदिनी । वर्णयितुम् ईशीय समर्थः स्याम् । वसन्ततिलकावृत्तम् । सम्भावनापर्यायोक्तं चालङ्कारौ ॥ २ ॥

अथ मातुः शिरोरुहं वर्णयति—

मौलौ त्वयापि विधृतो मधुपौघमैत्रीं
चित्रं करोति कमले चिकुरप्रपञ्चः ।

---

मतो बहुत्वं, ततश्च तेषां परस्परमभेदश्चक्षुःश्रवत्वम, एवं मम एकस्यां जिह्वायां बहुत्वं तत्रापि प्रत्येकं द्वित्वे द्विरसनत्व,मर्थाच्छेषत्वं यदि स्यात, तर्हि निःसीमसौन्दर्यनिधेस्तवाऽङ्गसौन्दर्यवर्णने ऽहं समर्थः स्याम् । परं केवलं द्विनेत्रस्यैकरसनस्य पामरमानवमात्रकस्य मम नास्ति त्वदवयववर्णनसामर्थ्यमिति देव्यङ्गानां लोकोत्तरसौन्दर्यशालित्व,मात्मनश्च तद्वर्णनाऽसामर्थ्यं प्रकटयति ।

३ अथ भगवत्याः प्रत्येकमवयवं वर्णयितुकाम आदौ केशपाशं वर्णयितुं, हे कमले ! त्वया शिरसि धृतः ( मूर्धनि धृतो, ऽप्याहृतश्च ) कुन्तलकलापो मधुपौघमैत्रीम ( अतिकृष्णतया भ्रमरसादृश्यं, मद्यपानकर्तृसौहार्दं च ) यत् कुरुते तदेवमत्याश्चर्यं तस्य करणं

माने कृते ऽपि भजते मलिनैकसख्यं
प्रायेण हन्त कुटिलप्रकृतिः स्वभावात् ॥ ३ ॥

मौलाविति । हे रमे त्वयापि मौलौ मस्तके विधृतः भृतः श्लाघितश्च चिकुरप्रपञ्चः शिरोरुहविस्तारः मधुपानां भ्रमराणां मद्यपानकर्तॄणां च ओघस्य समूहस्य मैत्रीं सख्यं करोति इति चित्रमाश्चर्यकारकं न भवति । तथा हि—हे देवि ! माने सत्कारे कृतेपि कुटिला वक्रा प्रकृतिः स्वभावो यस्य सः प्रायेण बाहुल्येन स्वभावात् मलिनेन एकसख्यम् अद्वितीयमैत्रीम् । मलिनं दूषिते कृष्णे ऋतुमत्यां मलिन्यपीति विश्वः । भजते करोति । 'स्वभावो दुस्त्यजो नाथ लोकानां सदनुग्रहा'दिति भागवते भगवन्तं प्रति कालियोक्तेः स्वभावस्य दुस्त्यजत्वादिति भावः । वसन्ततिलकावृत्तम् । अर्थान्तरन्यासश्लेषालङ्कारौ ॥ ३ ॥

न त्वं दधासि नवचम्पकमाल्यमम्ब
कर्तुं निसर्गसुरभौ कबरे सुगन्धम् ।

---

चित्रमित्युक्त्वा कुटिलप्रकृतिः ( निसर्गकुटिलः, प्रतीपस्वभावश्च ) आदरे कृते ऽपि स्वभावात् प्रायशो मलिनैकमैत्रीं करोतीति अर्थान्तरन्यासेन समर्थयन् देवीशिरसिजानां स्वभावकुटिलत्वं कृष्णवर्णत्वं च प्रदर्शयति ।

४ हे अम्ब ! त्वं स्वभावसुगन्धौ कबरीभारे सिद्धसाधनतया सुगन्धं विधातुं नवीनचम्पककुसुममालां न दधासि, किन्तु स्वाभाविकसुगन्धप्राप्तिलोभेन भ्रमतां भ्रमराणां निवारणाय, प्रसिद्धं हि चम्पकसौरभाऽसहत्वं भ्रमराणामिति स्वभावसुगन्धिकेशपाशे

किं तर्हि, कुन्तलपरीमलसारलाभ-
लोभभ्रमद्भ्रमरलोकनिवारणाय ॥ ४ ॥

नेति । हे ऽम्ब ! नवानां चम्पकानां पुष्पाणां पुष्पमूलेषु बहुलमिति लुक् । माल्यं मालां निसर्गेण स्वभावेन सुरभौ सुगन्धयुक्ते कबरे धम्मिल्ले सुगन्धं कर्तुं त्वं न दधासि । किं तर्हि कुन्तलानां परीमलस्य सुगन्धस्य सारस्य लोभेन भ्रमतां भ्रमरलोकानां भृङ्गसमूहानां निवारणायेति । तदुक्तं–'भ्रमन् वनान्ते नवमञ्जरीषु न षट्पदो गन्धफलीमजिघ्रत् । सा किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छा' इति । वसन्ततिलकावृत्तम् । गूढोत्प्रेक्षा शुद्धापह्नुतिर्वा ॥ ४ ॥

रुचं रचयितुं कचे रुचिरपुष्पवर्गैः समं[1]
सदा वहसि भूषणं सह सुधांशुना पूषणम् ।

---

चम्पकदामधारणस्य सौगन्ध्यसम्पादनरूपप्रयोजनाऽभावे ऽपि भ्रमरनिवारणमेव हेतुरिति वदन् केशानां स्वतः सुरभित्वं चम्पकमालाशोभितत्वं च कथयति ।

५ हे जननि ! त्वं चिकुरबन्धे शोभां विरचयितुं सूर्यचन्द्राख्यावलङ्कारौ सुन्दरकुसुमसमूहैः साकं धारयसि, अत एव तौ सूर्याचन्द्रमसावेकोक्त्या पुष्पवन्तावभूतां, तयोर्योगेन च उत्तमाश्रियं (उत्तमां शोभाम्, उत्कटस्य तमसः शोभां च) अन्वर्थामुपैषीति न केवलं रूढ्या सूर्याचन्द्रमसौ पुष्पवन्तावपि तु त्वया पुष्पैः सह धारणादेव तथा तौ, अत एव केशेषु एकत्र तयोर्घटनायाममावास्यायामत्रोत्कटाऽन्धकारशोभाप्राप्तिरिति वदन् सुन्दरपुष्पैः सह

१ चिकुरपुष्पवर्गैः समम्—१ पु० पा० ।

उभावभवतामतो जननि पुष्पवन्ताविमौ
तयोर्घटनयोत्तमश्रियमुपैषि तत्रार्थिकीम् ॥ ५ ॥

रुचमिति । हे जननि ! कचे केशबन्धे रुचं शोभां रचयितुं कर्तु सुधांशुना 'चन्द्रकोर' इत्याख्येन सह भूषणं 'राकडी' इत्याख्यं भूषणमलङ्कारं रुचिरैः पुष्पवर्गैः समं सह धारयसि । अतो हेतोः उभौ इमौ सूर्याचन्द्रमसौ पुष्पवन्तावभवताम् । एकयोगेन तत्र कचे आर्थिकीमर्थायाताम् उत्तमश्रियं सम्यक् शोभां उत्कटतमःश्रियं च उपैषि प्राप्नोषि । दर्शः सूर्येन्दुसङ्गमः इत्यमरात् दर्शे चन्द्रसूर्यसंयोगेन उत्कटतमोयोग उचित इति भावः । पृथ्वीवृत्तम् । हेतुगूढोत्प्रेक्षासमालङ्काराः ॥ ५ ॥

सुमनोवरवासवासनाऽध्युषिताः कृष्णघनाप्तिशालिनः ।
वरदेविजयन्ति कुन्तला भवदीयाः सकलापभृज्जयाः ॥ ६ ॥

सुमन इति । हे वरदेवि ! भवत्या इमे भवदीयाः । भवतष्ठक्छसाविति छस् । कुन्तलाः सुमनोवराणां श्रेष्ठपुष्पाणां वासस्य स्थितेर्वासनया गन्धेन अध्युषिता अधिष्ठिताः, कृष्णवर्णस्य घनस्य आप्त्या सख्येन शालन्ते तच्छीलाः, ताच्छील्ये णिनिः । क-

---

चन्द्रसूर्याऽभिधाऽलङ्कारधारणेनोत्तमां शोभां कृष्णेषु केशेषु प्राप्नोषीत्याह ।

६ हे वरदे ! उत्तमकुसुमनिवासेन सौरभयुक्ताः, कृष्णवर्णस्य घनं या ऽऽप्तिस्तया शोभमानाः, जितबर्हिणस्त्वदीयाश्चिकुरा विजयो ऽर्जुन इवाचरन्ति । अर्जुनो हि देवराजस्य वासवस्याऽऽसने स्थितः, कृष्णस्य वासुदेवस्य घनसम्बन्धेन शोभितः, कलाः पातीति कलापश्चन्द्रस्तद्धारी शिवस्तस्य किराताऽर्जुनीययुद्धे यो जयस्तत्सहितश्चेत्येवं केशपाशे ऽर्जुनसाम्यं वर्णयन् तस्मिन् पुष्पसौगन्ध्यं, कृष्णवर्णशालित्वं, मयूरबर्हसाम्यं च प्रदर्शयति ।

लापभृतो मयूरस्य जयेन सहिताः । अथ च हे वरदे ! ते कुन्तला विजयो ऽर्जुन इवाऽऽचरन्ति । सुमनोवरस्य वासवस्य आसने उषितः स्थितः, श्रीकृष्णस्य सततं निबिडसख्यप्राप्त्या शाली, कलापभृतः शिवस्य जयेन सहितः, वासो गेहे ऽप्यवस्थाने, वासनं वासने वरासनइति विश्वौ । अत्र कचपक्षे यानि बहुवचनान्तानि विशेषणानि तान्येवाऽर्जुनपक्षे एकवचनान्तानि लापने ऽपेक्षितानि । पुनरियं वचनलिङ्गभेदलापनरीतिरपि । तत्र प्रमाणं 'लिङ्गसंख्याविभेदेऽपि विशेषणविशेष्यता । विभक्तिः पुनरेकैव विशेषणविशेष्ययोः' इति ज्ञेयम् । वैतालीयं वृत्तम् । उपमा श्लेषश्च ॥ ६ ॥

जलभृद्रुचिभाजि सिन्धुकन्ये
शिखिषु द्वेषमुपेयुषि प्रकामम् ।
तमसा ऽऽकलिते तवोपपन्नः
कुटिले कुन्तलमण्डलेहिबन्धः ॥ ७ ॥

जलभृदिति । हे सिन्धुकन्ये ! जलभृतो मेघस्य रुचिं कान्तिं भजति तस्मिन्, अन्यत्र डलयोरभेदात् जडभृत्सु मूर्खपोषक-

---

७ हे सिन्धुकन्ये ! जलभृद्रुचिभाजि ( मेघकान्तियुक्ते, लडयोरैक्याज्जडपोषकस्य जडाधिपस्य प्रीतिपात्रे च ) शिखिषु ( मयूरेषु, द्विजेषु च ) नितान्तं द्वेषभाजि, तमसा ( अन्धकारसदृशेन कृष्णवर्णेन, तमोगुणेन च ) व्याप्ते कुटिले ( वक्रे, प्रतीपस्वभावे च ) कचमण्डले ऽहिबन्धः ( सर्पाकारो बन्धः ) हि निश्चयेन बन्धश्च युक्तिसङ्गत एवेति जडपोषकस्य द्विजद्वेष्टुस्तामसस्वभावस्य कुटिलस्य जनस्य निगडबन्धयोग्यत्वं समञ्जसमिति श्लेषेण वदन् जलदनीले मयूरबर्हविजयिनि कृष्णवर्णे केशपाशे कुटिलो बन्धो योग्यो विराजत इत्याह ।

राजसु रुचिं प्रीतिं भजतीति, शिखिषु मयूरेषु द्विजेषु च प्रकामम् अत्यन्तं द्वेषम् उपेयुषि प्राप्तवति, तथा तमसा तिमिरलक्षितेन कालिम्ना अज्ञानेन चाऽऽकलिते व्याप्ते, पुनः कुटिले वक्रे तव कुन्तलानां केशानां मण्डले समूहे, ऽन्यत्र कुटिले वक्रपुरुषे च अहिवद्बन्धः वेणीरूपः, अन्यत्र हि नियतं बन्धो बन्धनम्। उपपन्नः युक्त इत्यर्थः। औपच्छन्दसिकं वृत्तम्। श्लेषोपमालङ्कारौ। "तमसाकलिते" इत्यत्र "श्रितगन्धभरे" इति पाठः साधुः ॥ ७ ॥

अलकाऽऽकृतिरग्र्यपुष्पकान्ता
प्रबलश्रीदतया तव प्रसिद्धा।
नवनीलरुचोज्ज्वला मुरारे-
र्वनिते भाति मुकुन्दलालितश्रीः ॥ ८ ॥

अलकेति। हे मुरारेर्वनिते! अग्र्यैः श्रेष्ठैः पुष्पैः कान्ता सुन्दरी, पक्षे ऽग्र्यं पुष्पकं विमानमन्ते मध्ये यस्याः सा, एवं प्रबलां श्रियं शोभां ददाति, पक्षे प्रबलः श्रीदः कुबेरो यत्र, पुनः नवनीलरत्नस्य, पक्षे तत्संज्ञकनिधेः रुचा कान्त्योज्ज्वला, तथा

---

८ हे मुररिपुप्रिये! अग्र्यपुष्पकान्ता (उत्तमैः कुसुमैः सुन्दरी, श्रेष्ठं पुष्पकविमानमन्ते यस्याः सा च) प्रबलश्रीदतया (प्रकृष्टसंपत्प्रदत्वेन, बलिष्ठकुबेरयुक्ततया च) प्रसिद्धा, नवनीलरुचा (नवीनकृष्णकान्त्या, नवनीलनामकनिधिकान्त्या च) उज्ज्वला, मुकुन्दलालितश्रीः (श्रीकृष्णलालितशोभा, मुकुन्दनामकनिधिविशेषरमणीयशोभा च) तव अलकाऽऽकृतिः केशपाशाऽऽकारो ऽलकाकृतिरलकापुरीव भातीति श्लेषेण केशपाशे ऽलकापुरीसाम्यं निरूपयन् तस्मिन् सुन्दरकुसुमशोभां, संपत्प्रदत्वं, कृष्णवर्णत्वं, श्रीकृष्णलालितत्वं चाऽभिधत्ते।

मुकुन्देन विष्णुना तत्संज्ञकनिधिना च लालिता श्रीर्यस्याः सा ते अलकानां केशानामाकृतिराकारः, अलकाया यक्षनगर्या आकृतिरेव भाति शोभते। महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव। अलका पूर्विमानं तु पुष्पकमित्यमरौ। वैतालीयं वृत्तम्। श्लेषोपमालङ्कारौ ॥ ८ ॥

भुवनोत्तरसिन्धुभूषितो घनशैवालकवत् कचो ध्रुवम्।
सुरुचा महितोऽहिमालयोदितयोद्भासितमीनलक्षणः॥ ९॥

---

९ तव कचः घनो मेघः, शैवालं जलनीली, को ब्रह्मा, एवं घना निबिडा ये शैवाः शिवसम्बन्धिनो ऽलकाः केशा जटाजूटस्तद्वच्च। तथा हि—

कचस्तावत् भुवनोत्तरेण लोकोत्तरेण सिन्धुभुवा चन्द्रेण तच्छाययाऽलङ्कारेणोषित आश्रितः, यद्वा भुवनोत्तरो लोकोत्तरः, समुद्रेण स्वच्छपत्यप्रेम्णा भूषितश्च। एवं सुरुचा शोभनकृष्णवर्णेन महितः, एवं हि निश्चयेन उदितया मालया स्रजा उद्भासितो दीपितो मीनलक्षणः कामो येन तथाविधः।

घनश्च—भुवनेन जलेनोत्तरस्य पूर्णस्य सिन्धोः समुद्रस्य भुवि उषितः, एवं मालया राजिरूपणोदितया सुरुचा विद्युता महितः, तथा उद्भासितम् उत्पादितं मीना लक्ष्यांरैक्यात् रक्ष्यन्ते येन तद् मीनरक्षणं जलं ( वर्षणेन ) येन तादृशः।

शैवालं च-भुवनेन जलेनोत्तरायां सिन्धुभुवि नदीभूमौ उषितं, तथा मया लक्ष्म्या आलयः कमलं तस्मादुदितया सुरुचा महितः, प्रकटितमत्स्यचिन्हश्च सामानाधिकरण्यात्।

ब्रह्मा च—भुवनोत्तरे लोकोत्तरे सिन्धुभुवि नदीजन्ये पद्मे आसनभूते उषितः, तथा सुरुचा शोभनतेजसा महितः, एवं हिमालयादुदितया सरस्वतीनद्या (तदधिष्ठात्र्या वाग्देव्या) उद्भासितकामः, तस्या ब्रह्मपत्नीत्वात्।

भुवनेति । ते तव लक्ष्म्याः कचः ध्रुवं निश्चितं घनवत् । शैवालं जलनीली तद्वत् । को ब्रह्मा तद्वत् । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमनुसम्बध्यते' इति न्यायाद्वतिप्रत्ययस्य सर्वत्र सम्बन्धः । कचः केशः शिरोरुह इत्यमरः । घनजीमूतमुदिरेत्यमरः । शेवालश्चापि शैवालः शेवलो जलनीलिका इत्यमरटीकायाम् । को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे इति मेदिनी । किं च घनः निबिडः निरन्तरो वा यः शिवस्य हरस्याऽयं शैवः अलकः जटाजूटस्तद्वच्च । घनं निरन्तरं सान्द्रमित्यमरः ।

कचपक्षे—भुवनोत्तरं यत्सिन्धुभु सिन्धुदेशोद्भवं 'गङ्गावन'मिति लोके, तदुषितं स्थितं यस्मिन् सः । यद्वा भुवनोत्तरं यत्सिन्धुपदं तत्सिन्धुभुवनं गङ्गावनमेव तेन भूषितः । यद्वा भुवनेन जलेनोत्तरः समृद्धः यः सिन्धुस्तेन भूषितः प्रदानकाले ऽलंकृतः । यद्वा भुवनोत्तरसिन्धोर्भवति स चन्द्रस्तदाऽऽकारभूषणभूतः स उषितो यस्मिन् तथोक्तः । यद्वा भुवनं जलमुत्तरयति वर्धयति स सिन्धुभूश्चन्द्रः स उषितो यत्र । यद्वा भुवनोत्तरः जलसमृद्धः सिन्धुः समुद्रो येन स भूषितः । चन्द्रोदयेन हि सिन्धुर्वर्धते इति प्रसिद्धम् । हि यस्मात् मालया पुष्पस्रजा उदितया सुरुचा उ-

---

शिवजटाजूटश्च—भुवनोत्तरया लोकोत्तरया दिव्यया सिन्ध्वा गङ्गया भूषितः, एवं सुरुचा शोभनकान्तिविशिष्टया हिमालयादुदितया पार्वत्या महितः, तथा उद्भासितं मीनरक्षणं जलपूर्णत्वाद्येन तादृशः । उद्भासि शोभमानं, तमी रात्रिस्तस्या इनः स्वामी चन्द्रः, तद्रूप लक्षणं मौलौ चिन्हं यस्येति वा । अहिमालया सर्पपङ्क्त्या उदितया सुरुचा कान्त्या महितः, उद्भासितमीनरक्षणश्चेति वा ।

एवं श्लेषेण भगवतीकेशपाशे मेघ,शैवाल,ब्रह्म,शिवजटाजूट,साम्यं वर्णयन् तस्य चन्द्राऽऽख्याऽलङ्कारभूषितत्वं, शोभनकान्तिमत्वं, मालाऽलङ्कृतत्वं, भगवत्कामजनकत्वं च प्रतिपादयति ।

समकान्त्या महितः वर्धितः। उद्भासितं मीनस्य सुवर्णीकृतमीनस्य लक्षणं चिन्हं यस्मिन् सः। यद्वा उदि ब्रह्मणि वासुदेवे भासितः प्रकाशितः मीनलक्षणो मदनो येन सः। 'तस्योदिति नामे'ति श्रुतेः।

घनपक्षे भुवनेनोदकेनोत्तरस्य श्रेष्ठस्य सिन्धोः समुद्रस्य भुवि उदकग्रहणार्थम् उषितः स्थितः। हिमालयादुदितयोत्पन्नया सुरुचा विद्युता महितः। उद्भासितं यत्र मीनस्तत्रोदकं यत्र स तत्र तत उदकं विना मीनस्थितेरभावात् मीनलक्षणम् उदकं यस्मिन् सः। यद्वा ऽऽदौ हिमालयोदितया सुरुचा धवलकान्त्या महितः निर्जलमेघस्य सितत्वात्, ततो भुवनोत्तरसिन्धोर्निकटभुवि जलाऽऽदानार्थमुषितः। तत उत्कृष्टभया आसितो नीलः स चासौ मीनरक्षणः मत्स्यरक्षिता वर्षणेन जलदानात्।

शैवालपक्षे भुवनोत्तरसिन्धुभुवि उषितः, हि यस्मात् मया लक्ष्म्या आलयेन कमलेनोदितयोत्पन्नया सुरुचा महितः, उद्भासितं मीनस्य लक्षणं भक्षणचिन्हं यस्मिन् सः। यद्वा भुवनोत्तरसिन्धोर्भूरिजलनद्याः भुवि उषितः। हिमस्य शैत्यस्य अलयः अविनाशः सत्तेत्यर्थः। तद्विषये उत्पन्नया सुरुचोत्तमेच्छया महितः पूज्यः। 'शैवालैः शयनं सृजन्त्यपि पुनः शेते न वा लज्जये'ति रसमञ्जर्यां विरहतप्तायाः शीतेच्छया ऽभ्युपगमदर्शनात्। उद्भासितानां प्रकाशमानानां मीनानां रक्षणः धीवरादिभीत्या तत्र लीयमानत्वात्।

ब्रह्मपक्षे भुवनोत्तरसिन्ध्वा सरस्वत्या भूषितः महितः पूजितश्च। मह पूजायामित्यस्मान्निष्ठा। हिमालयादुदितयोत्पन्नया सुरुचा पार्वतीरूपयोद्भासित उत्पादितो मीनलक्षणो मदनो य-

स्मिन् सः। पार्वतीं दृष्ट्वा ऽयं कामवशो ऽभूदिति कथा ब्रह्माद्रि-खण्डे गोदामाहात्म्ये। तामत्र संक्षेपतः पद्येन दर्शयामि।

ब्रह्मा शर्वपुरोहितः परिणये गौर्याः पदं स्वे करे
धृत्वा न्यस्य शिलातले ऽतनुवशः सुस्राव शुक्रं यदा।
जातास्तेन तु वालखिल्यमुनयः षष्टिः सहस्राणि ते
तच्छुद्ध्यर्थमुमेशदत्तकरकाद्गोदा ऽऽस विष्णोः पदात्॥
वामनाऽवतारे कमण्डलूदकेन विष्णुपदक्षालनादित्यर्थः।

यद्वा भुवनानि चतुर्दश उत्तराणि भावीनि यस्मात्तत्र सि-न्धुभुवि समुद्रस्थाने उषितः सृष्टेः प्राक् स्थितः। मालयं(?)पद्मं लक्ष्मीनिवासत्वात् तेनोदितया सुरुचा महितः, भगवन्नाभिन-लिनाऽऽसनत्वात्। उद्भासी ललाटात्प्रकाशमानः तम्या रात्र्या इनश्चन्द्रः तल्लक्षणं शेखरचिन्हं यस्य स शिवः यस्मात् सृष्टि-समये जात इति भावः।

शैवालकपक्षे भुवने त्रिभुवने उत्तरा स्वर्गस्थत्वात्पूज्या वा या सिन्धुर्नदी भागीरथी, यद्वा सिन्धुं समुद्रं भवते प्राप्नोति सा सिन्धुभूः। भू प्राप्तावात्मनेपदी। इयमपि गङ्गैव। तया भूषितः। हिमालयोदितया पार्वत्या सुरुचा प्रीत्या महितः यद्वा अहिमालया सर्परूपस्रजोदितया सुरुचा महितः, उद्भासितं मीनस्य चन्द्रस्य लक्षणं यस्मिन् सः।

घनशैवालकवदित्यत्र यद्यप्यल्पाच्तरत्वादभ्यर्हितत्वाच्च कशब्दस्य पूर्वनिपातेन भाव्यं तथापि समुद्राभ्राद्घ इति नि-र्देशेन पूर्वनिपातप्रकरणस्याऽनित्यत्वेन साधुत्वमिति सुबोधि-न्याम्। अथ च लक्षणहेत्वोरिति निर्देशेनाप्यस्य प्रकरण-स्याऽनित्यत्वं शेखरे स्पष्टम्। उपमाश्लेषालङ्कारौ। वैता-लीयं वृत्तम्॥ ९॥

हन्त लक्ष्मि तव कुन्तलव्रजं
चामरं वदति पामरोऽपि कः ।
प्राक्तनस्तु हरिणोपलालितः
पश्चिमं यदपुरस्कृतं मृगैः ॥ १० ॥

हन्तेति । हे लक्ष्मि ! तव कुन्तलव्रजं पामरो ऽपि चामरमिति कः वदति ? अपि तु नेत्यर्थः । हन्त खेदे । प्राग्भवः प्राक्तनः कुन्तलः हरिणा भगवता उपलालितः, यद्यस्मात्पश्चिमं चामरं मृगैः सामान्यचतुष्पदैरपुरस्कृतं पश्चात्कृतम् इति समर्थनीयार्थसमर्थनात्काव्यलिङ्गमलङ्कारः।रथोद्धतावृत्तम् ॥१०॥

सिन्दूरकान्तां जगदम्ब मल्ली-
सराऽभिरामां चिकुराऽऽवलिं ते ।
मन्यामहे देवि कलिन्दकन्यां
गङ्गासरस्वत्युदिताऽनुषङ्गाम् ॥ ११ ॥

सिन्दूरेति । हे जगदम्ब ! सिन्दूरेण नागसम्भवेन कान्तां

---

१० हे लक्ष्मि ! तवाऽलकसङ्घं पामरो ऽपि कश्चामरं वदति ? यतः प्रथम केशपाशो हरिणा ( कृष्णेन, मृगेन्द्रेण च ) उपलालित, आदृतः, पश्चिममन्त्यश्चामरं च मृगैश्चमरीमृगैः अपुरस्कृतम् ( अनादृतं, कायपश्चार्द्धे च पुच्छतया धृतं ) भवतीति मृगेन्द्रोपलालितस्य तव केशपाशस्य सामान्यमृगैरप्यनादृतेन चामरेण साम्यं पामरो ऽपि को वदतीति वदन् भगवतीकेशपाशस्य नारायणोपलालितत्वं चामराऽधिकशोभाशालित्वं च बोधयति ।

११ हे जगदम्ब ! ( अधिकारुणेन ) सिन्दूरेण सीमन्ते धृतेन सुन्दरीं, ( विशद ) मल्लीमाला ललितां च ते ( कृष्णवर्णां ) चिकुरपङ्क्तिं गङ्गासरस्वतीसङ्गतां यमुनां मन्यामहे इत्याह ।

रमणीयां, तथा मल्लीनां पुष्पाणां सरेण हारेण अभिरामां ते तव चिकुराऽऽवलिं कचपङ्क्तिं गङ्गा सरस्वती चेत्युभाभ्याम् उदितः कृतः अनुषङ्गः संगमो यस्यास्तां कालिन्दकन्यां यमुनां मन्यामहे । अत्र यमुनासाम्यं चिकुरावले,गङ्गा मल्ली, सरस्वती सिन्दूर, इति त्रिवेणीसङ्गमनैतदवलोकयितुः प्रयागफलं सूचितं तदुत्प्रेक्षा च । उपजातिवृत्तम् ॥ ११ ॥

सुतरामलकव्रजः प्रसूना-
न्यलमम्लानिविरोचितानि बिभ्रत् ।
सुरभिस्फुरितः सुपुत्रि धात्र्याः
सुमहारामविभूषितो विभाति ॥ १२ ॥

सुतरामिति । हे धात्र्याः सुपुत्रि सीते ! ते सुतरामलकव्रजो विभाति। कथं ? अलमत्यर्थम् अम्लानीनि म्लानिरहितानि अत एव विरोचितानि शोभनानि प्रसूनानि पुष्पाणि बिभ्रत् ।

---

१२ हे धात्र्याः (पृथिव्याः, आमलक्याश्च) सुपुत्रि ! अलं न म्लानिर्म्लानत्वं नवीनत्वं तेन विशेषतो रोचितानि प्रसूनानि पुष्पाणि बिभ्रत्, एवम् अम्लरसानि विरोचितानि विशेषरुच्युत्पादकानि प्रसूनानि फलानि बिभ्रत्। सुरभिस्फुरितः (सुगन्धेन रोचमानः, वसन्ते उदितश्च) सुमहारामविभूषितः (सुमहाः सुशोभः, रामेण दाशरथिना विभूषितः, सुतरां महति आरामे विशिष्टभूमावुषितः, सुमहाऽऽरामे विभिः पक्षिभिर्भूषितश्च वा) तेऽलकव्रजः केशसमूहः सुतरः शोभनतर आमलकवृक्षव्रज एव विभातीति श्लेषेण केशपाशस्याऽऽमलकवृक्षरूपत्ववर्णनेन धात्रीपुत्र्या आमलकत्वं युक्तमेवेति सूचयन् नवपुष्पसम्बन्धं, सौगन्ध्यं, भगवद्विभूषितत्वं, चाह ।

किं च सुरभिणा सुगन्धेन स्फुरितः, पुनः सुमहाः सुतेजाः रामेण च विभूषितः कृतकबरीकः अयं धात्रीपुत्र्या आमलकीपुत्र्यास्ते सुतरः सुष्ठुतरः आमलकव्रज एतन्नामकवृक्षगणः त्वदुत्पन्नो विभाति। द्रव्यविशेषणत्वादामभावः। कथम्? अलम् अम्लान्यम्लरसवन्ति विरोचितानि पक्षिभ्यः प्रीयमाणानि प्रसूनानि फलानि बिभ्रत्। प्रसूनं पुष्पफलयोरिति मेदिनी। सुरभिर्वसन्तस्तेन स्फुरितः सुमहत्यारामे विशिष्टायां भुवि उप्तः। औपच्छन्दसिकं वृत्तम्॥ १२॥

आपीडयन्ति कुसुमेषुशरा निकाम-
मात्मानमित्यखिलधात्रि रुषेव देवः।
आपीडयत्यनुदिनं तव कुन्तलात्म-
न्यन्धे तमस्यहह सूनकुलं मुकुन्दः॥ १३॥

आपीडयन्तीति। भो अखिलधात्रि जगन्मातः! कुसुमेषोर्मदनस्य शराः पुष्पाणि आत्मानं स्वं निकामं पर्याप्तम् आपीडयन्ति व्यथयन्ति, पीड अवगाहे इति चौरादेर्लट्। इति रुषेव मुकुन्दः तव कुन्तलात्मनि। अन्धयति दृष्ट्युपघातं करोतीत्यन्धं पचाद्यच्। तस्मिन् तमसि, अहहेत्यद्भुते खेदे वा। सूनकुलं पुष्पव्रजम् आपीडमुत्तंसमिव करोत्यापीडयति। आपीडशब्दात्तत्क-

---

१३ हे लोकमातः! देवो हरिः कामशराः पुष्पाणि आत्मानमतीव आपीडयन्ति बाधन्ते इति विचार्यैव तत्कुसुमकुलं तव केशपाशरूपे गाढान्धकारे आपीडयति (शेखरयति, बाधते च) इति स्वाऽऽपीडकस्याऽऽपीडनमुचितमेवेति वदन् भगवता त्वदीयाः केशाः पुष्पैर्भूष्यन्ते इत्याह।

रोतीति णिचि धातुत्वाल्लट्। अथ च सुष्ठु ऊनकुलम् अतो ऽन्धे तमसि नरके आपीडयति व्यथयतीति समासोक्तिः । श्लेष उत्प्रेक्षा च । वसन्ततिलकावृत्तम् ॥ १३ ॥

बध्नासि हन्त सुरभौ सुमनोभिरम्ब
साकं हरेरपि मनो निजकेशपाशे ।
आमोदमग्र्यमत एव तदेत्यनन्तं
किं न क्षमं गुणवदाश्रयणं गुणाय ॥ १४ ॥

बध्नासीति । हे ऽम्ब ! सुरभौ निजे स्वीये केशपाशे सुमनोभिः साकं हरेर्मनः बध्नासि हन्त विस्मये । अतः तन्मनः अग्र्यं अनन्तं अपरिमितं चाऽऽमोदं सुगन्धं हर्षं च एति प्राप्नोति । यतो गुणवतः सौरभयुक्तस्य मालातन्तुयुतस्य च वस्तुनः आश्रयणं गुणाय गुणप्राप्तये क्षमं न स्यात्किम् ? अपि तु स्यादेवेति नेदमाश्चर्यमिति भावः । वसन्ततिलकावृत्तम् । अर्थान्तरन्यासश्लेषालङ्कारौ ॥ १४ ॥

त्रैलोक्यमातरजहन्निजशाखमेव
दृष्टं कुलं सुमनसां फलवद्धि लोके ।

---

१४ हे अम्ब ! त्वं स्वीये कुन्तलकलापे सुमनोभिः सह हरेरपि मनो बध्नासि, अत एव हरेर्मनः अग्र्यमनन्तमामोदं ( सन्तोषं, सौगन्ध्यं च ) एतीति गुणवदाश्रयणं ( गुणविशिष्टाश्रयणं, सूत्रविशिष्टस्रगाद्याश्रयणं च ) गुणप्राप्तये न किम् ? इत्यर्थान्तरन्यासेन सश्लेषेण समर्थयन् सुमनोमध्ये हरिमनसो बन्धनमुचितं, ततश्च तत्सम्बन्धात् तस्य सौगन्ध्यगुणलाभोऽपि योग्य एवेति वदन् कुसुमभूषितस्य केशपाशस्य हरिचित्ताऽऽकर्षकत्वं प्रतिपादयन्नाह ।

१५ हे त्रैलोक्यमातः ! लोके हि सुमनसां कुलमपरित्यक्तस्व-

अप्याहृतं बहिरहो सफलं प्रसूनं
काल्पद्रुमं तु भवतीकचमण्डलेन ॥ १५ ॥

त्रैलोक्येति। हे मातः! अजहदयजन्निजशाखं सुमनसां कुलं लोके फलवत्फलोत्पादकं दृष्टं, कल्पद्रुमस्येदं काल्पद्रुमं प्रसूनं बहिर्वृक्षात् आहृतमपि भवत्याः कचमण्डलेन सफलम् अहो आश्चर्यम्। अत्र विरोधाभासे सफलं सार्थकमिति परिहारेणालङ्कारः। सुमनसां सतां हि स्वशाखावर्तनमेव फलवदिति श्लेषालङ्कारः। वसन्ततिलकावृत्तम् ॥ १५ ॥

सुमैर्दिव्यैराम्रेडितसहजसौरभ्यसुभगं
कचं ते कल्याणि भ्रमति परितो भृङ्गनिचयः।
ध्रुवं तत्सारूप्यं स्वयमभिलषन् झङ्कृतिमिषात्
स्तुवन् प्रादक्षिण्यक्रममखिलमातः कलयति ॥ १६ ॥

सुमैरिति। हे कल्याणि, हे अखिलमातः! यद्यस्माद्दिवि

---

शाखमेव (शाखामकृतमेव) फलवद् दृष्टम्, परं भवत्याः केशपाशेन बहिराहृतमपि कल्पवृक्षसम्बन्धि पुष्पं सफलं (कृतार्थं, फलयुक्तं च) इति चित्रमिति वदन् पण्डितकुलमपरित्यक्तनिजवंशशाखमेव शुभफलसाधकमिति श्लेषेण सूचयन् कल्पवृक्षकुसुमानां त्वत्केशपाशाश्रयणात् कृतार्थत्वं सम्पन्नमिति बोधयन् केशपाशे कल्पद्रुमकुसुमभूषितत्वं वर्णयति।

१६ हे कल्याणि लोकमातः! यत् भृङ्गसमूहः कल्पवृक्षसम्बन्धिभिः कुसुमैर्द्विगुणितसौगन्ध्यसुन्दरं ते केशपाशं परितो भ्रमति तत् केशपाशस्य समानरूपतां स्वयं वाञ्छन्, झङ्कारकपटात् स्तुतिं वितन्वन् प्रदक्षिणविधानरीतिं करोतीति केशपाशमललोभात् भ्रमरकुलस्य भ्रमणमतिकृष्णकेशपाशसावर्ण्याऽभिलाषहेतुकमिति वदन् भ्रमराऽधिककार्ष्ण्यं केशपाशे बोधयन्नाह।

भवानि दिव्यानि तैः कल्पवृक्षसम्बन्धिभिः सुमैः पुष्पैराम्रे-डितं पुनः पुनः स्तुतं सहजं स्वाभाविकं सौरभ्यसुभगं सौगन्ध्यमाहात्म्यं यस्य तं ते तव कचं परितः केशस्याऽभितः । अभितः परितः समयेत्यादिना द्वितीया । भृङ्गाणां भ्रमराणां निचयः समूहः भ्रमति भ्रमणं करोति, तत्तस्मात्तस्य त्वत्कचस्य सारूप्यं सादृश्यम् अभिलषन् इच्छन् सन् झङ्कृतिमिषात् झङ्कारकापट्यात् स्तुवन् स्तुतिं कुर्वन् प्रादक्षिण्यस्य प्रदक्षिणाकरणस्य क्रमं रीतिं कलयति करोति ध्रुवमिति असिद्धविषया फलोत्प्रेक्षा ऽलङ्कारः । शिखरिणीवृत्तम् ॥ १६ ॥

प्रभोर्नाभीपद्मं भ्रमरततिरुत्सृज्य पतति
स्थिराऽऽमोदाऽऽलम्बे चिकुरनिकुरम्बे जननि ते ।
मनागब्धेः कन्ये मधुरिपुसमीपे परिचयो
न रोचेत प्रायो ननु मधुपवर्गस्य मनसे ॥ १७ ॥

प्रभोरिति । हे अब्धेः कन्ये, हे जननि ! इयं भ्रमराणां ततिः पङ्क्तिः प्रभोः श्रीहरेः नाभीपद्मं नाभीकमलम् उत्सृज्य त्यक्त्वा स्थिरं सततम् आमोदम् अत्यन्ताकर्षिगन्धम् आलम्बते आश्रयते तस्मिन् । कस्तूरिकायामामोदः कर्पूरे मुखवासनः । वकुले स्यात् परिमलश्चम्पके सुरभिस्तथेति शब्दार्णवः ।

---

१७ हे अब्धेः कन्ये ! भ्रमरसमूहो हरेर्नाभीकमलं विहाय स्थिरसुगन्धाश्रयं तव केशपाशे पततीति मधुपवर्गस्य ( भृङ्गसङ्घस्य, मद्यपसमूहस्य च ) मनसे मधुरिपोः ( हरेः, मधुद्वेषिणश्च ) समीपे ईषदपि सम्बन्धः प्रायो न रोचतेति समर्थयन् भगवन्नाभीपद्मादपि तव कुन्तलकलापे सौरभाऽऽधिक्यमित्याह ।

चिकुराणां केशानां निकुरम्बे समूहे पतति । कुत ? इति चेत् मधुपानां भ्रमराणां मद्यपानकर्तॄणां च वर्गस्य सङ्घस्य मनसे मधुनो मद्यस्य मधुनामदैत्यस्य च रिपोः समीपे परिचयो वसतिर्न रोचेत ननु निश्चयेन । शिखरिणीवृत्तं काव्यलिङ्गमलङ्कारः ॥ १७ ॥

क्षममिदं कलशोदधिकन्यके
तव कचस्थिरसौरभलोभतः ।
विकचसूनविशेषपरीमलं
जहदिह भ्रमति भ्रमरव्रजः ॥ १८ ॥

क्षममिति । हे कलशोदधिकन्यके ! भ्रमराणां भृङ्गाणां कामुकानां च व्रजः गणः । भ्रमरः कामुके भृङ्गे इति मेदिनी । तव कचानां स्थिरस्य सौरभस्य लोभतः विकचस्य प्रफुल्लस्य सूनस्य पुष्पस्य विशेषपरीमलं जहत् त्यजन्निह कचे भ्रमतीति क्षमम् । कुत ? इति चेत् स कचः मङ्गलः, सूनं तु विकचं कचरहितम् । अतः अमङ्गलं मुण्डितमिति यावत् । अत इति भावः । द्रुतविलम्बितं वृत्तम् । समालङ्कारः । अत्र "क्षममिदं तव साग-

---

१८ हे अमृतोदधिपुत्रि ! भ्रमरव्रजः ( भृङ्गसङ्घः, कामुकसमूहश्च ) कचसम्बन्धिनः स्थिरस्य सौगन्ध्यस्य लोभात् विकचानां ( विकसितानां, विगतकचानां मुण्डितानां च ) सूनानां ( पुष्पाणां, सुतरां न्यूनानां च ) विशेषं परिमलं जहदत्र भ्रमतीति योग्यमिति को वा रसिको मुण्डितकचां विहाय सकचायामङ्गनायां न रमेतेति तदौचित्यं सूचयन् विकसितपुष्पाऽपेक्षया केशपाशेऽधिकं सौरभमिति प्रतिपादयति ।

रकन्यके मुकचमालतिसौरभगौरवात् । विकचपाटलमूनपरीमलं जहदिह भ्रमति भ्रमरव्रजः" इति पाठे कल्पिते रमणीयताविशेषः सहृदयहृदयङ्गमः ॥ १८ ॥

निहितास्तव कुन्तलाऽन्धकारे
निबिडेमारजनिस्थिरप्रकर्षे ।
कलयन्ति नवस्रजो विचित्रं
कमले कामपि सौरभानुवृत्तिम् ॥ १९ ॥

निहिता इति । हे कमले ! तव अमाया रजन्यां रात्र्यां स्थिरः प्रकर्षो यस्य, मारस्य जनेरुत्पादनस्य स्थिरः प्रकर्षो यस्मादन्यत्र नास्ति तत्र । अनुत्तमवत्प्रयोगः । तस्मिन्निबिडे कुन्तलरूपाऽन्धकारे निहिता नवस्रजः सूरस्य सूर्यस्येमे सौरास्ते च ते भानवः किरणाश्च तेषां वृत्तिं वर्तनं, यद्वा सौरभायाः अनुवृत्तिं सौरभस्य सुगन्धस्य चाऽनुवृत्तिं कलयन्तीति प्रथमार्थे चित्रम् । औपच्छन्दसिकं वृत्तम् । श्लेषविरोधाभासविभावनाः ॥ १९ ॥

---

१९ हे कमले ! मारस्य कामस्य जनिरुत्पत्तिस्तया स्थिर उत्कर्षो यस्य तथाविधे तव केशरूपे ऽन्धकारे स्थापिता नवीना मल्लिकाऽनिर्वचनीयां सौगन्ध्याऽनुवृत्तिं कुर्वन्तीति, अमारजनिरमावास्यारात्रिस्तत्र स्थिरोत्कर्षे ( कुन्तलरूपे ) अन्धकारे निहिता मालिकाः सूरस्य इमे सौरा ये भानवस्तेषु वृत्तिं वर्तनं कुर्वन्तीति अमावास्यारात्रिप्रकृष्टाऽन्धकारे निहितानां स्रजां सूर्यकिरणेषु स्थितिरनुपपन्नेति वैचित्र्यप्रदर्शनपूर्वकम् अन्धकारसदृशकार्ष्ण्ये केशपाशे निहितानां स्रजां सौगन्ध्याऽनुवृत्तिरनिर्वचनीयेत्याह ।

कुन्तलो नियमितो ऽपि भवत्या
चञ्चलो भवति तामसरुच्या ।
न्यक्करोति परिशोभितमालो-
त्कर्षमम्ब परिपुष्यति चैनम् ॥ २० ॥

कुन्तल इति । असौ कुन्तलः भवत्या नियमितो ऽपि तामसरुच्या नीलकान्त्या तमोगुणप्रीत्या च चञ्चलो भवति, यतः परितः शोभिनां तमालानां वृक्षाणाम् उत्कर्षं न्यक्करोति तिरस्करोति अथ च परितः शोभितानां मालानाम् उत्कर्षं परिपुष्यति पुष्टं करोति । अनवस्थितचित्तस्य युक्तमिदमिति भावः । स्वागतावृत्तम् । श्लेषविभावने काव्यलिङ्गं च ॥ २० ॥

अथ मातुर्भालं वर्णयति—

कञ्जाऽऽलये कमपि तावकफालभागं
सञ्जातशोभमलकाऽऽवलिमेलनेन ।

---

२० हे अम्ब ! कुन्तलो भवत्या बद्धो ऽपि तामसरुच्या ( तमःसम्बन्धिन्या नीलकान्त्या, तमोगुणप्रीत्याच ) चञ्चलो भवति, यतः परितः शोभिनां तमालवृक्षाणां वर्णोत्कर्षं तिरस्करोति परिपुष्यति चेति तमालतिरस्करणपोषणयोः करणाच्चञ्चलत्वं तस्मिन् वर्णयन् परितः शोभितानां मालानां स्रजामुत्कर्षं पुष्यतीत्यर्थान्तरेण विरोधं परिहरन् तव संयतः केशपाशो निजकान्त्या नीलं तमालं तिरस्करोति स्रग्भिः शोभाऽतिशयं च पुष्णातीत्याह ।

२१ एवं केशपाशमुपवर्ण्य साम्प्रतं हे कमलालये ! अलकपङ्क्तिसम्बन्धेन समासादितशोभं ते ललाटभागं समुद्रादाविर्भावसमये

उत्प्रेक्षते भुवि न कस्तरुणेन्दुमब्धे-

रुत्थानकालभवशैवलभारयोगम् ॥ २१ ॥

कञ्जेति। हे कञ्जाऽऽलये! अलकावलेः केशपङ्क्तेर्मेलनेन सञ्जाता शोभा यस्य तं कमप्यनिर्वाच्यं तावकफालभागं त्वदीयभालस्थलम्। अब्धेः सकाशात् उत्थानकाले भव उत्पन्नः शैवलभारयोगो यस्मिन् तं तरुणेन्दुं भुवि कः पुमान्नोत्प्रेक्षते? वसन्ततिलकावृत्तम्। काव्यलिङ्गमलङ्कारः ॥ २१ ॥

अथ वदनं वर्णयति—

चिरं ते वक्त्रेण श्रितचिकुरवर्गेण कमले

तुलां चेदारोढुं तुहिनकिरणोऽयं स्पृहयते।

तदा गाढं सख्यं तिमिरनिकरैर्विन्दतु जवा-

दवाप्नोतु प्रावृड्जलमुगविनाभावमपि वा ॥ २२ ॥

चिरमिति। हे कमले! श्रितः चिकुरवर्गः केशसमूहो येन तेन ते तव वक्त्रेण मुखेन सह तुलां साम्यमारोढुं प्राप्तुम् अयं तुहिनकिरणश्चन्द्रः स्पृहयते वाञ्छति चेत् तदा तर्हि तिमिराणामन्धकाराणां निकरैः समूहैः सख्यं गाढं विन्दतु, अपि

---

सञ्जातशैवालजालसम्बन्धं तरुणमिन्दुं को वा नोत्प्रेक्षते? इति भाले चन्द्ररूपतामुत्प्रेक्षते।

२२ हे कमले! चिकुरकलापसङ्गतेन ते वदनेन यदि चन्द्रः साम्यमाप्तुमिच्छेत तर्हि स्वभावविरुद्धां तमोमैत्रीं प्रावृषेण्यमेघनियतसाहचर्यमसम्भूतं वा शीघ्रमाप्नोत्विति वदन् अन्धकारसंहितस्य प्रावृट्कालमेघसहचरितस्य वा चन्द्रस्य सचिकुरस्य त्वद्भालस्य साम्यलाभः स्यात्, तच्च सर्वथाऽसम्भवीति भालस्य निरुपमत्वं बोधयन्नाह।

वा जवात् प्रावृट्कालीनेन जलमुचा मेघेनाऽविनाभावं सम्बन्धं तदधः स्थितिमिति यावत् । अवाप्नोतु प्राप्नोतु । शिखरिणी-वृत्तम् । सम्भावनालङ्कारः ॥ २२ ॥

पुरुषनयनयुग्मं पुष्पवन्ताऽऽत्मकं ते
सह निवसति हर्षात् सन्ततं वक्त्रबिम्बे ।
तदिह जलधिकन्ये तन्महादर्शलीलां
भजतइति कवीनां भारती सूनृतैव ॥ २३ ॥

पुरुषेति । हे जलधिकन्ये ! ते वक्त्रबिम्बे पुष्पवन्तौ चन्द्र-सूर्यावात्मानौ स्वरूपे यस्य तत् 'चन्द्रसूर्यौ च नेत्रे' इति विराड्रूपे वर्णनात् आदिपुरुषस्य नयनयुग्मं सततं सह एककाले निवसतीति यद् यस्मात् तत्तस्माद्वक्त्रं महादर्शस्याऽमायाः महत आदर्शस्य च लीलां भजते इति कवीनां भारती अमा सह वसतोऽस्यां चन्द्राऽर्कौ इति अमावास्येति व्युत्पत्त्या अथ च 'चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशती'तिं बह्वृचब्राह्मणश्रुत्या सूनृता सत्यैव । पुष्पवच्छब्दो ऽदन्तोपि । वसन्ततिलकावृत्तम् । समालङ्कारः ॥ २३ ॥

---

२३ हे जलधिकन्ये ! सूर्यचन्द्रात्मकं हरिनयनद्वन्द्वं ते मुख-बिम्बे सर्वदा हर्षान्निवसतीति मुखं महादर्शलीलाम ( महतीं दर्पणशोभां, महतीं दर्शस्य सूर्यचन्द्रयोगस्य लीलाञ्च ) भजतीति कविवाक् सत्यैवेति वदन् त्वन्मुखे सूर्यचन्द्रात्मकभगवन्नेत्रयोः सह वासात् सूर्यचन्द्रसङ्गमस्यैव दर्शपदार्थत्वेन कवयो मुखं महादर्शलीलां धारयतीति सत्यमेव वदन्तीति श्लेषेण त्वन्मुखे मुकुरसमा शोभा राजते इत्याह ।

आदर्शे प्रतिबिम्बमेव धृतवत्यारोप्य मुग्धा जना
मातस्त्वन्मुखकान्तिचौर्यमनघे मृद्नन्ति तं पाणिभिः ।
हा संक्रामति साधु तन्मलिनिमा हस्तेषु तेषां स्वयं
दध्यान्नूनमनंहसां हि कलुषं मिथ्या ऽभिशंसन् जनः॥ २४॥

आदर्शे इति । हे मातः ! मुग्धजना अनभिज्ञलोकाः प्रतिबिम्बमेव धृतवति आदर्शे दर्पणे त्वन्मुखसम्बन्धिन्याः कान्तेश्चौर्यं कृतमित्यारोप्य हे ऽनघे ! तमादर्शं पाणिभिर्हस्तैर्मृद्नन्ति संघर्षयन्ति । हा खेदे । तस्य दर्पणस्य मलिनिमा मालिन्यं तेषां हस्तेषु साधु युक्तं संक्रामति लगति । युक्तमिदं नूनं, नास्ति अंहः पापं येषां तेषां पुण्यवतां मिथ्याकलुषं वृथादोषम् अभिशंसन् कथयन् जनः हि निश्चयेन तत्कलुषं स्वयमेव दध्यात्प्राप्नुयात् ।

मिथ्याऽभिशंसिनो दोषो द्विः समो भूतवादिनः ।
मिथ्याऽभिशस्तदोषं च समादत्ते मृषा वदन् ॥

इति याज्ञवल्क्यस्मृतिः । शार्दूलविक्रीडितं वृत्तम् । गूढोत्प्रेक्षाऽर्थान्तरन्यासालङ्कारौ ॥ २४ ॥

---

२४ हे मातः ! केवलं त्वन्मुखप्रतिबिम्बं धृतवति दर्पणे मूर्खा जनास्त्वदास्यकान्तिचौर्यं मिथ्यैवाऽऽरोप्य तं करैर्मर्दयन्ति, ततश्च तन्मर्दनप्रवृत्तानां तेषां हस्तेष्वेव प्रत्युत तन्मालिन्यमुपसंक्रामति, इति जनो निष्पापं मिथ्या ऽभिशंसन् स्वयं तत्पापमाप्नोतीति धर्मशास्त्रसिद्धमर्थमुपन्यस्य समर्थयन् दर्पणे नास्ति त्वन्मुखकान्तिलेशस्यापि संसर्ग इति मुखस्य लोकोत्तरं नैर्मल्यं प्रतिपादयति ।

विकचस्य कचोज्ज्वलेन पद्मे
विकलङ्केन कथं नु पङ्कभाजः।
सरसेन गतस्य नीरसत्त्वं
जलजातस्य भवेन्मुखेन सख्यम् ॥ २५ ॥

विकचस्येति। विकचस्य विकसितस्य कचरहितस्य च कचैः उज्ज्वलेन शोभमानेन सह, तथा पङ्कभाजः कर्दमभाजः कल्मषभाजश्च, पङ्को ऽस्त्री कर्दमे पाप इति मेदिनी। विकलङ्केन अङ्काऽपवादाभ्यां रहितेन नीरसत्त्वम् उदकस्थितिं रसाऽभावं च गतस्य प्राप्तस्य रसेन सौन्दर्येण शृङ्गारादिना च सहितेन जलजातस्य उदकोत्पन्नस्य मूर्खसमूहस्य च मुखेनाऽऽननेन श्रेष्ठेन च सख्यं सौहृदम्। अथ मित्रं सखा सुहृदित्यमरः। कथं नु भवेदपि तु न भवेदिति द्वितीयार्थेन सख्याऽभावो ज्ञेयः। औपच्छन्दसिकं वृत्तम्। समालङ्कारः ॥ २५ ॥

विजिते सति ते मुखेन राज-
न्यपि दुर्गेश्वरमौलिपूज्यपादे।

---

२५ हे पद्मे! विकचस्य, (विकसितस्य, कचरहितस्य च) पङ्कभाजः, (कर्दमभाजः, पापभाजश्च) नीरसत्त्वं (नीरे जले सत्त्वं सत्तां गतस्य, शृङ्गारादिरसशून्यस्य च) जलजातस्य (कमलस्य, जडसङ्घस्यच लडयोरैक्यात) कचोज्ज्वलेन, कलङ्करहितेन, शृङ्गारादिरससहितेन सर्वथा तद्विपरीतगुणेन त्वन्मुखेन मैत्री कथं स्यात्? इति कमले मुखोपमित्यसामञ्जस्यं प्रदर्शयति।

२६ तव मुखेन दुर्गेश्वरमौलिपूज्यपादे (दुर्गायाः पार्वत्या ईश्वरस्य शिवस्य मौलिना पूज्याः पादाः किरणा यस्य तादृशे चन्द्रे,

वनवासितयातपस्पृहाणां

विजये को विषयः कुशेशयानाम् ॥ २६ ॥

विजिते इति। ते मुखेन दुर्गायाः ईश्वरस्य सदाशिवस्य पक्षे दुर्गस्य 'किल्ले'ति लोके ख्यातस्य ईश्वरस्य राज्ञः मौलिना मूर्ध्ना पूज्याः पादाः किरणाः पादौ चरणौ च यस्य। यद्वोभयत्रापि पूज्यपादः श्रेष्ठस्तस्मिन् राजनि चन्द्रे भूभृति च। राजा मृगाङ्के क्षत्रिये नृपे इत्यमरः। विजिते सति वने उदके ऽरण्ये च। वने सलिलकानने इत्यमरः। वासितया स्थित्या आतपे उष्णे तपसि च स्पृहा येषां तेषां कुशेशयानां कमलानां मुनीनां च। कुशो दर्भः कुशं जलमित्यनेकार्थमञ्जरी। विजये को विषयः? अपि तु नास्तीति कैमुत्येनाऽर्थसिद्धेः काव्याऽर्थापत्तिः। औपच्छन्दसिकं वृत्तम् ॥ २६ ॥

नदवनजमहो महातपश्री-

कृतरुचि ते मुखजन्म लिप्समानम्।

---

दुर्गेश्वरस्य सुदृढदुर्गाऽधिपस्य बलीयसो राज्ञो मौलिना पूज्यौ चरणौ यस्य तादृशे राजमानिने च) राजनि (चन्द्रे, महाराजे च) विजिते सति वनवासितया (जलवासितया, अरण्यवासितया च) आतपस्पृहाणां तपःस्पृहाणां च कुशेशयानां (शतपत्राणां कमलविशेषाणां, दर्भशायिनां व्रतिनां च) विजये को विषयः का कथेति श्लेषेण त्वन्मुखं चन्द्रकमलाऽधिकसुन्दरमिति प्रतिपादयति।

२७ हे कमले! नदस्य वने जले जातं कमलं ते मुखजन्म लब्धुं वाञ्छत् महातपश्रीकृतरुचि (महत आतपस्य कान्त्या कृतशोभं, महत्या तपोलक्ष्म्या कृततेजश्च) अधःशिरः (अधोमुखं) सत् तपः कुर्याद्यद्यपि

अपि यदि तदधःशिरस्तपस्ये-
ज्जनवदनं कमले भवेत्तथापि ॥ २७ ॥

नदेति । अहो कमले ! नदवने नदोदके जातं कमलमित्यर्थः । यद्यपि त्वन्मुखस्य जन्म लिप्समानं सत् महत आतपस्य तपसश्च श्रियि कृता रुचिर्येन तत् अधःशिरः अधोमुखं यदि तपस्येत् तथापि अधःशिरः विपरीतवर्णं जनवदनं भवेत् । यथा— अत्रेष्टाऽनवाप्तिरूपविषमालङ्कारः । पुष्पिताग्रा ॥ २७ ॥ न द व न ज

तदब्जमब्जश्च तवाऽऽननद्विषौ
मुरारिपत्नि व्रजतः पराभवम् ।
द्विषा सहैकेन मिथो विरोधिनो-
र्न योद्धुमस्ति प्रभुता द्वयोरपि ॥ २८ ॥

तदिति । हे मुरारिपत्नि ! तवाऽऽननद्विषौ मुखस्पर्धिनौ तदब्जं कमलं सो ऽब्जश्चन्द्रश्चेत्युभौ पराजयमेव व्रजतः प्राप्नु-

---

तथापि जनवदनं भवेन्न तु त्वन्मुखमिति नदवनजस्य अधोमुखीभूय दुष्करे तपश्चरणे कृते ऽपि लोकमुखात्मना जन्म स्यान्न तु त्वन्मुखात्मनेति "नदवनज" शब्दस्य अधोभागाद् वैपरीत्येनोच्चारणे "जनवदन" मित्येव निष्पद्यते इति श्लेषवैचित्र्येण वर्णयन् कमलस्य साधारणजनवदनसादृश्यलाभे ऽपि न त्वन्मुखकान्तिलाभ इत्याह ।

२८ हे मुरारिपत्नि ! प्रसिद्धं कमलं चन्द्रश्च त्वन्मुखद्वेषिणौ पराजयं प्राप्नुत इति एकेन शत्रुणा सह परस्परवैरिणोरुभयोर्योद्धुं सामर्थ्यं न भवतीति अन्योन्यवैरिणोश्चन्द्रकमलयोर्बलीयसा ते मुखेन युद्धे नास्ति सामर्थ्यमिति तयोः पराभवो योग्य एवेति समर्थयन् त्वन्मुखं चन्द्रकमलोभयाऽधिकशोभमिति ब्रूते ।

तः । तथा हि–मिथोविरोधिनोः परस्परद्विषोर्द्वयोर्द्विषतोरपि एकेन द्विषा सह योद्धुं प्रभुता नास्तीति । वंशस्थं वृत्तम् । अर्थान्तरन्यासालङ्कारः ॥ २८ ॥

त्वदास्यवसुतस्करं ध्रुवमवैमि जैवातृकं
पयोजनिलये यतः पिहितमन्दिरायां त्वयि ।
असौ निशि विजृम्भते पुनरपावृते धाम्नि ते
पराऽचलवने रवेर्घृणिषु वा दिवा लीयते ॥ २९ ॥

त्वदिति । हे पयोजनिलये ! यतः पिहितम् आच्छादितं मन्दिरं कमलगृहं यया तादृश्यां त्वयि सत्याम् असौ चन्द्रः निशि रात्रौ विजृम्भते उल्लसति, पुनस्ते धाम्नि कमलरूपे ऽपावृते उद्घाटिते सति पराऽचलस्याऽस्ताचलस्य वने ऽरण्ये वा रवेर्घृणिषु प्रकाशमानकिरणेषु लीयते, ततः जैवातृकं चन्द्रं त्वदास्यवसुनः त्वन्मुखकान्तिद्रव्यस्य तस्करं चौरं, तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्चेति निपातनात्साधुः । ध्रुवं निश्चयेनाऽवैमि । जैवातृकत्वान्न निहन्यते इति च(?)। पृथ्वी वृत्तम् । उत्प्रेक्षापरिकराङ्कुरौ ॥ २९ ॥

---

२९ हे कमलनिलये ! चन्द्रं त्वन्मुखस्य वसूनां ( किरणानां, धनानां च ) चोरं जानामि, यतस्त्वयि रात्रौ पिहितगृहायां ( कमलमङ्कोच ) सत्यां विजृम्भते, पुनश्च त्वदीये गृहे ( कमले ) उद्घाटिते सति दिवा पश्चिमाऽचलारण्ये सूर्यकिरणेषु वा लीयते इति कस्य चिद्धनचौरस्य स्वामिनो गृहे पिहिते निर्भयं बहिः सञ्चारस्तस्मिंश्चाऽपावृते निलयनं प्रसिद्धमतश्चन्द्रस्य तथा करणात् त्वन्मुखवसुतस्करो ऽयमिति तर्क्यते इति वदन् चन्द्राऽधिककान्तिमत्त्वं मुखे आह ।

जन्ममन्दिरमशोकसम्पदः
सालकालिं नवकान्तिकन्दलम् ।
आननं मदनकेलिकाननं
मन्यते जननि माधवस्तव ॥ ३० ॥

जन्मेति । हे जननि ! अशोकसंपदः अशोकश्रियः पक्षे अशोकवृक्षसमुदायस्य जन्ममन्दिरम् उद्भवगृहं, तथा अलकपङ्क्तिसहितं पक्षे सालान् सर्जवृक्षान् कलयति एवंशीलं सालकालिं पुनर्नवकान्तीनां कन्दलं नवाऽङ्कुररूपं पक्षे नवकान्तीन् कन्दान् सूरणादीन् लाति तत् च तवाऽऽननं माधवः श्रीहरिर्वसन्तश्च मदनकेलिकाननम् अनङ्गक्रीडावनं यद्वा मदनस्य केलेरेव केलेर्वा ।कस्य सुखस्य अननं प्राणनं मन्यते । रथोद्धता वृत्तम् । श्लेषोत्प्रेक्षालङ्कारौ । अत्र सालकान्तमिति पाठो ऽलकनाशसहितमिति विरुद्धार्थान्तरसम्भवाद्धेयः ॥ ३० ॥

---

३० हे जननि ! माधवः (हरिः, वसन्तश्च) अशोकसंपदः (सुखसंपदः, अशोकवृक्षषण्डस्य च) जन्मस्थानं, सालकालि (अलकपङ्क्तिसहितं, सालकानां वृक्षाणामालिर्यस्मिन् तथाविधञ्च) नवकान्तिकन्दलं (नवीनां कान्तिं कन्दलयत्यङ्कुरयतीति तथाविधं, रलयोरैक्यान्नवीनकान्तिकन्दरस्वरूपं वा, प्रत्यग्रकान्तिविशिष्टान् कन्दान् लाति आदत्ते तादृशञ्च) ते मुखं कामक्रीडावनं मन्यते इति वदन् वदनस्य माधवीयक्रीडाकाननरूपत्वं बोधयन् शृङ्गारभङ्गिपूर्णत्वं वर्णयति ।

१ सालकान्तमिति पाठान्तरम् ।

स्वरूपतस्त्वद्वदनात्मना तथा
द्विधा सुधांशुर्जलधावजायत ।
तदेष राजा द्विजराज इत्यदः
पदं दधात्यर्थवदच्युतप्रिये ॥ ३१ ॥

स्वरूपेति । अच्युतप्रिये ! एष राजा चन्द्रः स्वरूपतः स्वाऽऽकारेण त्वन्मुखात्मना चेति द्विधा द्विप्रकारेण सुधांशुः अब्जः जलधौ समुद्रे अजायत जातः । द्वाभ्यां स्वरूपवदनात्मभ्यां जातः राजा द्विजराजः इति पदं नाम अर्थवदन्वर्थं दधाति धत्ते इत्यर्थः । उत्प्रेक्षाकाव्यलिङ्गालङ्कारौ । वंशस्थं वृत्तम् ॥ ३१ ॥

अथ तिलकं प्रस्तौति—

मातः सरोजसदने वदने त्वदीये
संफुल्लमुत्पलमिवाऽच्छसरोविशेषे ।
चन्द्रे कलङ्क इव भृङ्ग इवाऽरविन्दे
मन्देतरद्युतिरसौ तिलकः समिन्धे ॥ ३२ ॥

मातरिति ! हे सरोजसदने, हे मातः ! चन्द्रे कलङ्क इव,

---

३१ हे अच्युतप्रिये ! सुधांशुः स्वरूपेण त्वद्वदनरूपेण चेति द्विधा समुद्रादजायत, तत एवाऽयमात्मनि द्विधा जातत्वाद् द्विजराज इति अन्वर्थं शब्दं वहतीति मुखे चन्द्ररूपत्वं प्रतिपादयति ।

३२ हे कमलगृहे, मातः ! त्वदीये मुखे विरचितो ऽधिककान्तिरसौ मृगमदतिलकः स्वच्छे सरसि विकसितं नीलोत्पलमिव, चन्द्रमसि लाञ्छनमिव, कमले भ्रमर इव च दीप्यते इत्याह ।

अच्छे स्वच्छे सरोवरविशेषे संफुल्लं विकसितम् उत्पलं नीलकमलमिव, त्वदीये वदने मन्देतरा शोभना द्युतिः कान्तिर्यस्य सो ऽसौ कस्तूरीतिलकः समिन्धे प्रकाशते । वसन्ततिलकावृत्तम् । उपमालङ्कारः ॥ ३२ ॥

उपाश्रितानवयवमुद्गताश्रियं
प्रियङ्गुणाधिकमणुमध्यमाशुभम् ।
त्वमेयुषी वरतिलकानना रमे
सुधान्यभूरुचिरसुधाधराप्यसि ॥ ३३ ॥

उपाश्रितेति । हे रमे ! अणुमध्यमा तनुमध्या, उपाश्रितः अनवयवः अवयवाऽभावो येन तम् । 'अपाणिपादो जवनो गृहीते'ति श्रुतेः । उद्गता प्रसृत्वरी श्रीः कान्तिर्यस्य तं गुणाऽधि-

---

३३ हे रमे ! अणुमध्यमा सूक्ष्माऽवलग्ना, उपाश्रितः अनवयवो ऽनङ्गः कामो येन तम्, उद्गता श्रीर्यस्य तमुत्तमशोभं, गुणैर्दयादाक्षिण्यसौन्दर्यादिभिरधिकं, शुभं प्रियं हरिमुपेयुषी, वरं तिलकं यस्मिंस्तथाभूतमाननं मुखं यस्याः सा, असुधा असून् जनप्राणान् दधाति पोषयति सा, त्वं शोभनेभ्यो धान्येभ्यः भूरुत्पन्ना रुचिः शोभा यस्यास्तथाविधा नानाशोभनधान्यैः शोभमाना धरा पृथ्वी असि । धान्यपूर्णा धरा च नवेभ्यो यवेभ्यो मुद्गेभ्यश्च प्रियङ्गुणा धान्यविशेषेणच श्रियमुपाश्रिता, आशूनां व्रीहीणां भा शोभा यस्मिन्नेवंविध,मथ वा व्रीहिविशेषा मध्ये मध्यभागे यस्य तथाविधम् अधिकं जलमेयुषी, वरं श्रेष्ठं तिलानां काननं वनं यस्याम् एवंभूता असुधा धान्यद्वारेण जनप्राणपोषिका भवसीति भगवत्या धान्यपूर्णधराकृपत्वं श्लेषेण वर्णयन् सुधाऽन्यभूरपि सुधाधरा ऽसीति विरोधमाभासयन् प्रासङ्गिके भगवतीमुखे तिलकशोभां प्रतिपादयन्नाह ।

कमनन्तगुणं शुभं कल्याणकरं 'मङ्गलानां च मङ्गल'मिति स्मृतेः। प्रियं श्रीहरिम् एयुषी प्राप्तवती, वरः तिलकः आनने भाले यस्याः सा। अत्राऽऽननशब्देन तदेकदेशो भालं ग्राह्यं, प्रकरणवशात्। एवमुत्तरत्रापि बोध्यम्। त्वं रुचिरा सुधा ऽधरे यस्याः सा तादृश्यपि सुधा अमृतम् अन्यम् अनेभ्यः प्राणेभ्यः हितम् अन्यं जलं यस्य स सुधोदः तस्माद्भवतीति तथोक्ता सुधोदधिकन्या ऽसि। प्राणानामन्नमयत्वं श्रुतिसिद्धम्। अत्र या सुधाधरा सुधाभूमिः सा सुधाऽन्यस्य सुधेतरपदार्थस्य भूमिरिति विरोधे उक्तार्थेन परिहारः। अन्यच्च या सुधाधरा चूर्णखटकभूमिरपि सुष्ठुधान्यस्य भूरिति चित्रे पूर्वोक्त एव परिहारः। अथ धान्यभूपक्षे ऽर्थः—नवा ये यवा मुद्गाश्च तैरिति ततः। प्रियङ्गुणा च श्रियम् उपाश्रिता, अणुर्व्रीहिविशेषः मध्ये यस्य तत् आशुभिः व्रीहिविशेषैः भा शोभा यस्य तत् अधिकमधिकजलम् एयुषी, वरं तिलानां काननं वनं यस्याः सा। अतिरुचिरावृत्तम्। श्लेषविरोधाऽऽभासौ॥ ३३॥

अथ भ्रुवं वर्णयति—

नलिनशशिनौ सिन्धोः कन्ये सरोगनभोगता-
त्यजनकुतुकादेतौ जातौ त्वदक्षिमुखात्मना।

———

३४ हे सिन्धुकन्ये! कमलचन्द्रौ सरोगनभोगतयोः (सरोगता सरोवरगामिता, रोगसाहित्यं च, नभोगता ऽऽकाशगामिता, नास्ति भोगो यस्य स नभोगस्तस्य भावस्तत्ता, भोगाऽभाववत्ता च तयोः) त्यागकौतूहलाद्यथायथं त्वन्नेत्रात्मना मुखात्मना च जातौ सन्तौ अन्तरे मध्ये भ्रुवोर्द्वयं संतूकृत्य सह वसतः, यतः स्वभाव-

सह निवसतः सेतूकृत्य भ्रुवोर्युगमन्तरे
सहजरिपुताभाजोर्जन्मान्तरेऽपि न सङ्गतिः ॥ ३४ ॥

नलिनेति। हे सिन्धोः कन्ये! सरः कासारे गच्छति तत्सरोगं, पक्षे रोगेणाऽऽमयेन सहितं, नभसि गच्छतीति नभोगः, पक्षे नास्ति भोगः सुखं यस्य सः, तयोर्भावस्तत्ता तया हेतुना यत् त्यजन[illegible]कं प्रयागे शरीरत्यागकौतुकं(?) तस्मात् तव अक्ष्णोर्मुखस्य चाऽऽत्मना स्वरूपेण नलिनं शशी च यथाक्रमं जातौ सन्तौ अन्तरे मध्ये यतः भ्रुवोर्युगं, सेतुं कृत्वा इति सेतूकृत्य। अभूततद्भावे च्विः। निवसतः ततः सहजां स्वतः सिद्धां रिपुतां भाजोः पुंसोः, अन्यज्जन्म जन्मान्तरं, मयूरव्यंसकादित्वात्समासः। तस्मिन्नपि सङ्गतिर्नैति युक्तम्। अत्राऽक्ष्णोः भालस्य चात्मना नलिनशशिनौ जाताविति यथासंख्यलापनेन स एवालङ्कारः। स चाऽर्थान्तरन्यासश्लेषोत्प्रेक्षासङ्कीर्णः। हरिणीवृत्तम् ॥ ३४ ॥

नयनयुगलाऽऽक्रान्तं कर्णान्तयुग्ममधोक्षज-
प्रणयिनि तव स्रष्टा स्पृष्ट्वा भयाऽऽकुलमानसः।

---

वैरिणोर्जन्मान्तरेपि मैत्री न भवतीति वदन् भगवतीनेत्रस्य कमलतुल्यत्वं मुखस्य च चन्द्रतुल्यत्वं भ्रुवोश्च सेतुसाम्यं प्रतिपादयति।

३५ हे अधोक्षजप्रिये! स्रष्टा नेत्रद्वयेनाऽऽक्रान्तं तव कर्णान्तं स्पृष्ट्वा आभ्यां नेत्राभ्यां कर्णान्तवन्निखिलं मुखमपि मा क्रामि आक्रान्तं मा भूदिति भयाऽऽकुलमनाः सन् तयोरुपरि भ्रुवौ सीमाविभाजकाश-

अहह मुखमप्याभ्यां मा क्रम्यशेषमिति व्यधात्
किमुपरि तयोर्धीमान् सीमाविभागशिले भ्रुवौ ॥३५॥

नयनेति। हे अधोक्षजप्रणयिनि! हरिप्रिये! नयनयुगलं नेत्रद्वयं तदाक्रान्तं व्याप्तं तादृशं ते कर्णान्तयोर्द्वयं दृष्ट्वा(?) भयेनाऽऽकुलं विव्हलं मानसं यस्य सः स्रष्टा ब्रह्मा। अहहेत्यद्भुते खेदे च। आभ्यां नयनाभ्याम् अशेषं भाल(?)मपि आक्रम्य आक्रान्तप्रायमेव(?) इति भिया धीमान्बुद्धिमान्सः तयोरुपर्यूर्ध्वं सीमाया मर्यादाया विभागशिलाभूते भ्रुवौ न्यधात्कृतवान् किमित्युत्प्रेक्षालङ्कारः। हरिणीवृत्तम् ॥ ३५ ॥

यत्किङ्कराः सरसिजाऽऽसनशङ्कराद्या
देवाः स एष दनुजाऽरिरपि भ्रुवोस्ते।
जागर्ति किङ्करतया जगदम्ब नित्यं
छन्दाऽनुवर्तनकृतः कुटिलस्य सर्वे ॥ ३६ ॥

यत्किङ्करा इति। हे जगदम्ब! सरसिजं कमलम् आसनं विष्टरं यस्य स ब्रह्मा शङ्करः शिवश्च तावाद्यौ मुख्यौ येषां ते देवाः

---

लारूपेण स्थापयामास किमित्युत्प्रेक्षमाणो नयनयोरतिविशालत्वं बोधयन्नाह।

३६ हे जगदम्ब! ब्रह्मशिवाद्या देवा यस्य किङ्कराः स दैत्यारिरपि ते भ्रुवोः किङ्करतया (आज्ञाप्रतीक्षकतया) जागर्तीति कुटिलस्य सर्वे एव जना अभिप्रायमनुसरन्तीत्यनेन समर्थयन् भ्रुवोः कौटिल्यं हरिवशीकरणञ्च बोधयन्नाह।

१ आभ्यामाक्रम्य शेषमिति असंबद्धं पाठमाश्रित्य कथं चिदेवं व्याख्यातम्(?)

स्य हरेर्वा सा। । इत्ये दासेरदासेयदासेत्यमरः । स एव दनुजानां दैत्यानामरिः श्रीकृष्णोऽपि ते भुवो। किङ्करतया वालत्वेन जागर्ति । तथा हि—कुटिलस्य क्रूरस्य वक्रस्य च सर्वे जना नित्यं प्रतिदिनं छन्दस्य तदभिप्रायस्याऽनुवर्तनं कुर्वन्ति ते । अभिप्रायश्छन्द आशय इत्यमरः । भवन्तीति शेषः । उदात्ताऽर्थान्तरन्यासावलङ्कारौ । वसन्ततिलकावृत्तम् ॥ ३६ ॥

अथ नयनस्तुतिं करोति—

श्रुत्यन्तजुष्टममलोत्तमकान्तियोगा-
दत्यन्तसुन्दरमनङ्गजनेर्निदानम् ।
उल्लासितामरसभामहितं मदम्ब
को न स्तुवीत नयनं तव कृष्णरूपम् ॥ ३७ ॥

श्रुतीति । हे जगदम्ब ! श्रुतेः कर्णस्याऽन्तः प्रान्तो जुष्टः सेवितो येन, अन्यत्र श्रुतेर्वेदस्याऽन्तेन शिरोभागवेदान्तेन च जुष्टं स्तुतं, जुषी प्रीतिसेवनयोरित्यस्माद्धातोः । एवममलायाः स्वच्छाया मलरहिताया श्चोत्तमाया उत्कृष्टायास्तमोगुणरहि-

---

३७ हे मदम्ब ! श्रुत्यन्तजुष्टं ( श्रवणान्तव्याप्तं, वेदान्तप्रतिपाद्यं च ) अमलोत्तमकान्तियोगात् ( निर्मलश्रेष्ठकान्तिसम्बन्धात्, सुरवररुचिसम्बन्धाद्दिव्यकान्तिसंबन्धाद्वा वा )अतिरमणीयम्, अनङ्गजनेः ( कामोत्पत्तेः, अनिरुद्धरूपसुतत्वेन तदुत्पत्तेश्च ) आदिकारणं, उल्लासितामरसभामहितम् ( विकसितकमलकान्तिमहितम्, उल्लासितायाममराणां देवानां सभायां च पूजितं ) कृष्णरूपं ( कृष्णवर्णं, हरिस्वरूपं च ) ते नयनं को वा न स्तुवीत?ति नेत्रयोः कर्णान्ताऽऽयतत्वं, निर्मलकान्तिमत्त्वं, कामोद्दीपकत्वं कमलकान्तिमत्त्वे कृष्णवर्णत्वं च वर्णयति ।

तावाश्चैतस्मिन् पक्षे 'ये सान्तास्ते अदन्ता' इत्यदन्तत्वं प्राप्तम्। कान्तेश्छवेर्योगादत्यन्तसुन्दरं, तथा ऽनङ्गस्य मारस्य जनेरुत्पत्तेर्निदानमादिकारणं मदनस्योद्दीपकं जनकं चेत्यर्थः। किं चोद्भासिनस्तामरसस्य कमलस्य भाभिर्महितं पक्षे ऽमरसभायां महितं कृष्णरूपं नीलस्वरूपं श्रीकृष्णरूपं च (तव नयनं) कः पुरुषः न स्तुवीत? अपि तु स्तुवीत सर्वो ऽपीत्यर्थः। वसन्ततिलकावृत्तम्। श्लेषालङ्कारः॥ ३७॥

दुग्धाऽम्भोधिसुते त्वदक्षिविजितो राजानमेणो गत-
स्त्यक्त्वा ऽसावपि मण्डलं मुखजितो दुर्गेशमेणाऽन्वितः।
स त्वेकं करतः परं च शिरसा धृत्वा दृगास्यद्विषो-
र्दुर्गेशः स्वयमीश्वरो ऽप्ययमटत्यद्यापि भिक्षामहो॥३८॥

दुग्धेति। हे दुग्धाऽम्भोधेः सुते! तवाऽक्ष्णा नेत्रेण विजितो ऽयमेणो हरिणः राजानं चन्द्रं नृपं च गतः। असौ राजापि तव मुखेन जितः सन्मण्डलं त्यक्त्वा एणेनाऽन्वितो युक्तः सन् दुर्गस्य 'किला' इति ख्यातस्य पक्षे दुर्गाया भवान्या ईशं स्वामिनं शिवं प्रति च गतः। स तु शिवो ऽपि दृशः आस्यस्य

---

३८ हे दुग्धाऽब्धिसुते! एणो हरिणस्त्वन्नेत्रविजितो राजानं (चन्द्रं नृपं च) शरणं गतः, असौ तदाश्रितो राजा त्वन्मुखेन जितः सन् हरिणेन साकं दुर्गेशं (दुर्गाया ईशं शिवं, दृढदुर्गाधिपं महाराजं च) स्वीयं मण्डलं (बिम्बं, राष्ट्रं च) त्यक्त्वा गतः। स च दुर्गेशस्त्वन्नेत्रमुखवैरिणोश्चन्द्रहरिणयोर्मध्ये हरिणं करेण चन्द्रं च शिरसा धृत्वा स्वयमीश्वरो ऽपि सन् अद्यापि भिक्षामटतीति त्वदङ्गवैरिणांराश्रयदातुर्महेश्वरस्यापि भिक्षाटनवृत्तिः समपद्यतेति वदन् नेत्रे हरिणाऽधिकं सौन्दर्यं मुखे च चन्द्राऽधिकं तदिति प्रतिपादयति।

च द्विषोर्मृगचन्द्रयोर्मध्ये एकं मृगं करतः परं चन्द्रं शिरसा धृत्वा महदपराधकर्तृपक्षपातदोषात् स्वयं दुर्गेश ईश्वरो ऽपि सन् अद्याऽपि भिक्षाम् अटति खलु नियतम् । अहो आश्चर्यम् । उत्प्रेक्षाश्लेषालङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥ ३८ ॥

नयनं तव देवि वर्णरीते-
र्विपरीते ऽपि विपर्ययं न याति ।
कमलं तु समेति कञ्जगेहे
कथमाहुः समतां तयोः कवीन्द्राः ॥ ३९ ॥

नयनमिति । हे कञ्जगेहे ! हे देवि ! तव नयनं वर्णानां ब्राह्मणादीनां रीतेर्विहितमर्यादां मुक्त्वेत्यर्थः । ल्यब्लोपे पञ्चमी । विपरीते ऽपि वैपरीत्ये सत्यपि विपर्ययं स्वरूपान्तरं न याति, परमकारुणिकत्वेन जीवानां विध्यपराधमगणयित्वैव हितमाचरतीति भावः । शब्दतो ऽपीदं वर्णानां नकारयकारनकाराक्षराणां वैपरीत्ये ऽपि स्वरूपं न मुञ्चति अनर्थकञ्च भवतीति यावत् । कमलं तु वर्णरीतेः रक्तश्वेतनीलादेर्वैपरीत्ये म्लान्यादौ

---

३९ हे देवि ! कमलगृहे ! तव नयनं वर्णरीतेः ( अक्षरक्रमस्य, ब्राह्मणादिवर्णपद्धतेश्च ) विपरीते ऽपि वैपरीत्ये ऽपि विपर्ययं ( प्रातिलोम्यं, प्रातिकूल्यंच ) न याति, कमलं तु तद् याति, एवं स्थिते नयनकमलयोः साम्यं जनाः कथं वदन्तीति वदन् ब्राह्मणादिषु वर्णेषु स्वरीतिमुत्सृजत्सु सापराधेष्वपि दयार्द्रा ते दृष्टिः प्रातिकूल्यमगत्वा करुणामेव करोति, एवं "नयन" शब्दस्य प्रातिलोम्येनोच्चारणेऽपि "नयन" मित्येव निष्पद्यते, "कमल" शब्दस्य च वैपरीत्येन पाठे "लमक" मिति निरर्थकः शब्दः सिध्यतीति कमलापेक्षया नयनस्य व्यतिरेकं शब्दवैचित्र्येण बोधयन्नाह ।

विपर्यये स्वरूपाऽभावं प्रयोजनाऽभावं वा याति गच्छति । कु-न्दतोपि वर्णानां ककारमकारलकाराणां वैपरीत्ये लमक इति निष्पद्यते तच्चाऽनर्थकमेव । क्वापि लमकशब्दस्य प्रयोगादर्शनात् । एवमुपमाविधावपेक्षितस्योभयोः साधारणधर्मस्याऽभावे ऽपि कवीन्द्राः कथमौपम्यं वर्णयन्ति स्मेति न जानीमः । औपच्छ-न्दसिकं वृत्तम् । श्लेषकाव्यलिङ्गे अलङ्कारौ ॥ ३९ ॥

निशायामम्ब त्वन्नयनसुषमामोषकमिति
क्रुधा राज्ञा नूनं कुवलयमिहाऽकारि विकचम् ।
चकोरास्तच्चोराश्चकितमनसः प्रेक्ष्य तदिदं
सुतप्तास्तत्पादग्रहणमभितन्वन्त्यशरणाः ॥ ४० ॥

निशायामिति । हे अम्ब ! निशायां रात्रौ त्वन्नयनस्य सुषमायाः परमशोभायाः मोषकं हारकमिति हेतोः क्रुधा कोपेन राज्ञा नृपेण चन्द्रेण इहाऽस्मिन् लोके कुवलयमुत्पलं विकचं कचशून्यं मुण्डितमिति यावत् । विकसितं च । व्याकोचविकचस्फुटा इत्यमरः । अकारि कृतम् । तदानीं तस्या नयनसुषमायाश्चोराश्चकोरा अपि चकितं भीतं मनो येषां ते तादृशाः

---

४० हे अम्ब ! कुवलयं निशायां त्वन्नयनकान्तिस्तेनमिति क्रुधा राज्ञा ( चन्द्रेण, नृपेण च ) सद् विकचं ( विकसितं, विकेशं मु-ण्डितं वाऽकारि । ततश्च नयनकान्तिचौरास्तत्समानशीलाश्चको-राश्च कुवलयस्येमां दशामवेक्ष्य आत्मनोऽपि तां सम्भाव्य च-किताः सन्तो राज्ञः ( चन्द्रस्य, नृपस्य च ) पादग्रहणं ( किरणपानं, चरणप्रणामं च ) अशरणाः कुर्वन्तीति उत्प्रेक्षमाणः नेत्रस्य कुवलयचकोराऽधिककान्तिमत्त्वं दर्शयन्नाह ।

सन्तः तादिदं कुवलयविकचीकरणं प्रेक्ष्य अशरणा निराश्रया निरालयाश्चाऽत एव सुष्ठु तस्मात्तस्मात्ते तस्य नृपस्य चन्द्रस्य च पादग्रहणं चरणग्रहणं किरणग्रहणं चाऽभितन्वन्ति कुर्वन्ति। चोरा नमस्क्रियां चकोराश्चन्द्रकरभक्षणं कुर्वन्तीति प्रसिद्धम्। शिखरिणीवृत्तम्। गूढोत्प्रेक्षाश्लेषालङ्कारौ ॥ ४० ॥

अमर्षाल्लोकाम्ब स्ववसुहरनीलोत्पलभृतो-
रपि श्रुत्योः सीमां कबलयति ते नेत्रयुगलम्।
कृतः कल्पेष्वार्तैरपरमपराधः फलति तं-
द्विपक्षाणां पक्षीकृतिरपि विषादाय भवति ॥ ४१ ॥

अमर्षादिति। हे लोकाम्ब! स्वस्य वसुनो द्रव्यस्य तेजसश्च हारके नीलोत्पले बिभ्रतस्तादृश्योः श्रुत्योरपि सीमां नेत्रयुगलम् अमर्षाद्रोषात्कबलयति ग्रसते। तथा हि। कल्पेषु समर्थेषु कृतः साक्षाद्रचित आर्तैर्दीनैः अपराधः अमरं संहारम्(?) अमरस्त्रिदशेष्वस्त्री संहारे इति मेदिनी। फलति। अपि पुनः तेषां समर्थानां शत्रूणां पक्षीकृतिः पक्षपातकरणं विषादाय खेदाय भवति कल्पते। शिखरिणीवृत्तम्। श्लेषविभावनोत्प्रेक्षाकाव्यलिङ्गालङ्काराः ॥ ४१ ॥

---

४१ हे अम्ब! तव नेत्रद्वन्द्वं स्वस्य वसुहरे (कान्तिहरे, द्रव्यहरे च) नीलोत्पले बिभ्रतोः श्रुत्योरपि सीमां रोषात् कबलयति ग्रसते आक्रामति, इति कल्पेषु बलीयस्सु दीनैः कृतो ऽपराधो ऽपरमपराधं फलतीति शत्रूणां पक्षपातो ऽपि दुःखाय कल्पते इत्युक्त्या समर्थयन् बलीयसो नेत्रद्वन्द्वस्य शोभाऽपहारिकुवलयाऽऽश्रयदानेन श्रोत्रयोः स्वसीमाऽऽक्रान्तिर्जातेति वदन् नेत्रद्वन्द्वे ऽतिविशालतां ब्रूते।

चक्षुष्प्रमाणेन समुद्रकन्ये
सीमा श्रुतेः संकुचिता तवाऽभूत् ।
न तत्र कैमुत्यनयात् कथं चि-
दुन्मेषमृच्छत्युपमानवार्ता ॥ ४२ ॥

चक्षुरिति । हे समुद्रकन्यके ! ते चक्षुःप्रमाणेन नेत्रमर्यादया ऽन्यत्र चक्षूरूपप्रमाणेन श्रुतेः सीमा नेत्रमर्यादा ऽन्यत्राऽऽगमप्रमाणता संकुचिता ऽभूत् । तत्र कैमुत्यन्यायात् कथं चिदप्युपमानस्य दृष्टान्तस्याऽन्यत्रोपमितेश्च वार्ता प्रवृत्तिः कथं चिदप्युन्मेषमुदयं न गच्छति न प्राप्नोति। उपमितिर्नाम केन चिदारण्यकेन गोसदृशो गवयपदवाच्य इति ज्ञापितो ग्रामीणो वनं गत्वा गोसदृशस्य पिण्डं पश्यति ततश्च स्मरणज्ञानपूर्वकम् अयं गवय इति तस्योपमितिर्जायते । एवं च यत्र चाक्षुषप्रमाणेन श्रौतं प्रमाणं निरस्तं तत्रोपमानप्रमाणस्य का कथेति कैमुत्यन्यायः । अनेन लक्ष्म्याश्चक्षुष उपमानाऽभावः काव्याऽर्थापत्तिरलङ्कारश्च सूचितः । अत्र चाक्षुषप्रमाणमुख्यत्वे बृहदारण्यकश्रुतिः 'चक्षुर्हि सत्यं तद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एव ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्या'मिति । उपजातिवृत्तम् ॥ ४२ ॥

---

४२ हे समुद्रकन्ये ! चक्षुष्प्रमाणेन ( नेत्रविशालपरिमाणेन, प्रत्यक्षप्रमाणेन च ) तव श्रुतेः ( कर्णस्य, शब्दप्रमाणस्य च ) सीमा ( प्रान्तभागः, मर्यादा च ) सङ्कुचिता ऽभूत् । एवं प्रत्यक्षेण शब्दप्रमाणं दूरीकृते तत्र चक्षुष्प्रमाणे उपमानवार्ता ( सादृश्यकथा, उपमानप्रमाणचर्चा च ) कैमुतिकन्यायादेवोदयं न प्राप्नोतीति वदन् निरुपमा ते नेत्रविशालतेत्याह ।

त्रैलोक्यसंत्रायिणि तावकीनो
ध्रुवं कटाक्षो धृतराष्ट्रजातः ।
कल्याणि कर्णप्रणयी कथं वा
पुष्णाति कृष्णाऽर्जुनदीप्तियोगम् ॥ ४३ ॥

त्रैलोक्येति । त्रैलोक्यस्य संत्रायिणि रक्षिके ! तवायं तावकीनः । युष्मदस्मदोरन्यतरस्यामिति खञि तवकममकावेकवचने इति तवकादेशः । कटाक्षो ऽपाङ्गदर्शनं धृतं राष्ट्रजातं राज्यसमूहो येन स सन्नपि धृतराष्ट्राज्जातो दुर्योधनश्च कर्णो । कर्णः पृथाज्येष्ठसुते सुवर्णालौ श्रुताविति मेदिनी । प्रणयी सन् कृष्णाऽर्जुनयोर्दीप्तियोगं कथं पुष्णातीति विरोधे कृष्णधवलदीप्तिमिति परिहारः । उपजातिवृत्तम् । श्लेषविभावनालङ्कारौ ॥ ४३ ॥

आकर्णदेशादुदितप्रकर्षं
तवाऽक्षि मन्ये ऽतनुबाणरूपम् ।

---

४३ हे कल्याणि ! त्रैलोक्यरक्षिके ! त्वदीयः कटाक्षः ध्रुवं निश्चयेन धृतराष्ट्रजातः ( धृतं राष्ट्रजातं राज्यसमूहो येन, धृतराष्ट्रपुत्रो दुर्योधनश्च ) कर्णप्रणयी ( श्रवणान्तलग्नः, राधेयस्नेहवांश्च ) सन्नपि कृष्णार्जुनदीप्तियोगं ( कृष्णशुक्लकान्तिसम्बन्धं, वासुदेवपार्थतेजःसम्बन्धं च कथं करोति ? इति राधेयपक्षपातिनो दुर्योधनस्य वासुदेवकिरीटितेजःसंबन्धकरणमसमञ्जसमिति वदन् नेत्रे राज्यसमूहपालकत्वं कृष्णशुक्लकान्तिमत्त्वं च श्लेषेणाह ।

४४ हे सिन्धुकन्ये ! आकर्णभागात उदितप्रकर्षम् ( उत्पन्नोत्कर्षम्, जाताऽऽकर्षणं च ) तव नेत्रं कामबाणरूपं मन्ये, यतस्तव

यत्कङ्कटं वेङ्कटनायकस्य
धैर्यात्मकं कृन्तति सिन्धुकन्ये ॥ ४४ ॥

आकर्णेति । हे सिन्धुकन्ये ! कर्णदेशं मर्यादीकृत्येत्याकर्णदेशात् । नाऽव्ययीभावादित्यत्राऽपञ्चम्या इत्युक्तत्वादमभावः । उदितः प्रकर्ष उत्कर्ष आकर्षणं च यस्य तत्तवाऽक्षि नेत्रम् अतनोर्मदनस्य बाणरूपं महाबाणरूपं च मन्ये । तत्र हेतुः यद्यस्माद्वेङ्कटनायकस्य हरेर्धैर्यात्मकं कङ्कटं कवचं कृन्तति भिनत्ति । उपजातिवृत्तम् । रूपकश्लेषकाव्यलिङ्गालङ्काराः ॥ ४४ ॥

गुप्ता वनेषु विहरन्ति सुहृद्यमीनाः
कस्यापि नो कुवलयेषु दिवा प्रकाशः ।
राज्ञो बिभेति जगदम्ब कुशेशयाऽऽलिः
कर्णेजपे जयति नेत्रयुगे भवत्याः ॥ ४५ ॥

गुप्ता इति । हे जगदम्ब ! कर्णेजपे सूचके । स्तम्बकर्णयो

---

वेङ्कटपतेर्धैर्यरूपं कङ्कटं कवचं भिनत्तीति नेत्रे कर्णान्तव्यापित्वं, हरिधैर्यभञ्जकत्वं च प्रतिपादयति ।

४५ हे जगदम्ब ! कर्णेजपे ( कर्णान्ताऽऽयते, खले च ) ते नेत्रयुगे जाग्रति सति सुहृद्यमीनाः ( सुतरां हृद्या रमणीया मीना मत्स्याः, सुहृदो यमिषु इनाः श्रेष्ठयोगिनश्च ) गुप्ता विलीनाः सन्तो वने ( जले, ऽरण्ये च ) विहरन्ति, एवं कुवलयेषु ( नीलोत्पलेषु, भूमण्डलेषु च ) कस्यापि ( कस्य चिदपि नीलोत्पलस्य, पुरुषस्य च ) दिवा प्रकाशः ( विकाशः, प्राकट्यं च ) नो भवति; तथा कुशेशयाऽऽलिः ( शतपत्रराजिः, दर्भशायिनां व्रतिनां पङ्क्तिश्च ) राज्ञः ( चन्द्रात, नृपतेश्च ) बिभेतीति श्लेषेण नेत्रे खलत्वमुपपादयन् तत्र कर्णान्तायतत्वं, मीनकुवलयसहस्रपत्राऽधिकसौन्दर्यं वर्णयन्नाह ।

रमिजपोरित्यत्र तत्पुरुषे कृतीति हलदन्तादिति वा ङेरलुक्। अन्यत्र कर्णान्तगे ते नेत्रयुगे जयति सति सुहृदां यमिनां संयमिनाम् इनाः पतयः, पक्षे सुहृद्याः शोभना मीनाश्च वनेष्वरण्येष्वम्भःसु च गुप्ताः सन्तो विचरन्ति, कुवलयेषु नीलोत्पलेषु कुत्सितसमूहचोरादिषु च मध्ये कस्यापि दिवा प्रकाशो न, कुशेशयानां कमलानां निन्द्यकर्मरतत्वेन पुरगृहहीनत्वात्कुशसदृशतृणेशयचोराणामालिः राज्ञो नृपाच्चन्द्राच्च बिभेतीति। वसन्ततिलका। श्लेषसमालङ्कारौ ॥ ४५ ॥

आस्वादने कृतरसौ मुखसौरभस्य
मातस्त्वदक्षिमधुपौ बत मार्गमध्ये।
नासाख्यचम्पकमवेक्ष्य निवृत्तयत्नौ
दृष्टेप्सिताऽग्रहणतस्तरलौ सदा स्तः ॥ ४६ ॥

आस्वादने इति। हे मातः! मुखसौरभस्याऽऽस्वादने कृतरसौ कृताऽभिलाषौ तवाऽक्षिरूपौ मधुपौ बत खेदे मार्गमध्ये नासाख्यं चम्पकस्य पुष्पं चम्पकं, पुष्पमूलेषु बहुलमित्यणो लुक्। अवेक्ष्य निवृत्तयत्नौ सन्तौ दृष्टस्य ईप्सिताऽधरामृतस्या(?)ऽग्रहणतो ऽलाभात्तरलौ स्तो भवतः। अत्र प्रमाणं 'भ्रमन् वनान्ते वनमञ्जरीषु न षट्पदो गन्धफलीमजिघ्रत्। सा

---

४६ हे मातः! वदनसौगन्ध्याऽऽस्वादने साऽभिलाषौ त्वन्नेत्रभ्रमरौ गन्तव्यमुखमार्गमध्ये नासिकारूपां चम्पककलिकामवेक्ष्य तद्गन्धाऽसहनतया निवृत्तमुखसमीपगमनोद्योगौ सन्तौ प्रत्यक्षस्य चित्तविलोभकस्य मुखसौरभस्याऽप्राप्तेर्हेतोर्निरन्तरं चञ्चलौ भवत इति उत्प्रेक्षमाणो नेत्रयोरतिचाञ्चल्यं द्योतयन्नाह।

किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छे'ति ।
गूढोत्प्रेक्षाविषादरूपकाऽपह्नुत्यलङ्काराः । वसन्ततिलका ॥ ४६ ॥

जातोन्मेषौ मुखरुचिसुधासागरे तावकीनौ
नेत्रात्मानौ जननि भुवनोज्जीवनौ दिव्यमीनौ ।
न्यूनाऽऽकारौ भगवति निजाऽपेक्षया राक्षसाऽरे-
श्चक्षुर्मीनौ कबलयत इत्येष जातिस्वभावः ॥ ४७ ॥

जातेति । भो भगवति ! मुखरुचिरेव सुधासागरस्तस्मिन् जातोन्मेषौ कृतोदयौ तावकीनौ त्वदीयौ नेत्रात्मानौ नेत्रस्वरूपौ भुवनेनोदकेनोज्जीवनं वर्तनं ययोस्तावपि भुवनस्य जगत उज्जीवनौ भो भगवति ! (!)निजाऽपेक्षया स्वस्मात् न्यूनाकारावल्पौ राक्षसारेर्विष्णोश्चक्षुषी एव मीनौ कबलयतो भक्षयतः वशीकुर्वत इति भावः । एष जातिस्वभाव इति । अत्र प्रमाणं भागवतप्रथमस्कन्धे धर्मं प्रत्यर्जुनोक्तिः—

जलौकसां जले यद्वन्महान्तो ऽदन्त्यणीयसः ।
दुर्बलान्बलिनो राजन्महान्तो बलिनो मिथः ॥ इति ।

मन्दाक्रान्तावृत्तम् । रूपकश्लेषसमालङ्काराः ॥ ४७ ॥

---

४७ हे जननि ! वदनकान्तिरूपे ऽमृतसागरे समुदितौ तावकौ नयनरूपौ भुवनोज्जीवनौ ( जगदुज्जीवकौ, जलजीविनौ च ) दिव्यमीनौ कर्तारौ स्वापेक्षया न्यूनप्रमाणौ दैत्यारेर्नेत्रमत्स्यौ कबलयतः ( आकर्षयतः, भक्षयतश्च ) इत्ययं बलीयसा दुर्बलभक्षणे मत्स्यजातिस्वभाव एवेति वदन् भगवतीनेत्रयोर्विशालत्वं भगवन्नयनाऽऽकर्षकत्वं च प्रकटयन्नाह ।

अथ कर्णभूषां वर्णयति—

सौवर्णं ते सिन्धुकन्ये निरुन्ध्या-
दातङ्कं नः कर्णताटङ्कयुग्मम् ।
नृत्यन्तीनां यत्र नेत्रद्युतीनां
जालं नीलग्रावभावं बिभर्ति ॥ ४८ ॥

सौवर्णमिति । हे सिन्धुकन्ये ! यत्र यस्मिन्नृत्यन्तीनां नेत्रयोर्द्युतीनां जालं मण्डलं नीलग्राव्णाम् इन्द्रनीलमणीनां भावं तत्त्वं बिभर्ति तत्ते तव सौवर्णं सुवर्णमयं कर्णयोस्ताटङ्कयुग्मं 'तानवडे' इति प्रसिद्धभूषायुगलं नोऽस्माकमातङ्कं भयं पीडां च निरुन्ध्याद् दूरीकरोतु। शालिनीवृत्तम्। परिणामालङ्कारः॥४८॥

पूषा कर्णे स्वर्णताटङ्कभूषा-
वेषादिन्धे पुत्रनामाऽऽदरेण ।
तत्सामीप्यादेव देवि प्रसादं
नित्यं धत्ते नेत्रपङ्केरुहं ते ॥ ४९ ॥

पूषेति । हे देवि ! पूषा रविः पुत्रस्य स्वसुतकर्णस्य नाम्नोऽभिधेयस्याऽऽदरेण स्वर्णमयताटङ्कभूषाया वेषात् इन्धे समु-

———

४८ अथ कर्णालङ्कारं वर्णयन्नाह हे सिन्धुकन्ये ! यत्र विसृत्वरीणां नयनकान्तीनां समूहो नीलमणित्वं धत्ते तत्ते कर्णयोस्ताटङ्कयुगलमस्माकं भीतिं प्रतिबध्नात्वित्याह ।

४९ हे देवि ! सुवर्णकर्णभूषणमिषात् निजपुत्रस्य कर्णस्य ( राधेयस्य ) समाननामताऽऽदरेण ते कर्णे सूर्य एव दीप्यते, तत्सामीप्यादेव च ते नेत्रकमलं प्रसादं ( विकासं, प्रसन्नतां च ) धत्ते इत्याह।

उज्वलति तस्य ताटङ्कपूष्णः सामीप्यात्सान्निध्यादेव ते तव नेत्रपङ्केरुहं कमलं नित्यमहोरात्रं प्रसादमनुग्रहं प्रफुल्लतां च धत्ते धारयति । शालिनीवृत्तम् । अपन्हुतिरुत्प्रेक्षा हेतुश्चालङ्काराः॥४९॥

त्रैलोक्याऽम्ब त्वद्वतंसोत्पलान्ते
गुञ्जं गुञ्जं सञ्चरंश्चञ्चरीकः ।
किं व्याचष्टे कान्तसन्देशहारी
कर्णाऽभ्यर्णे काममन्त्राऽर्थतत्त्वम् ॥ ५० ॥

त्रैलोक्येति । हे त्रैलोक्याम्ब ! त्वद्वतंसभूतस्य कर्णभूषाभूतस्योत्पलस्याऽन्ते समीपे गुञ्जं गुञ्जं, नित्यवीप्सयोरित्याभीक्ष्ण्ये द्वित्वम् । गुञ्जित्वा गुञ्जित्वेत्यर्थः । णमुलन्तमेतत् । सञ्चरन् अयं चञ्चरीकः भृङ्गः इन्दिन्दिरश्चञ्चरीको रोलम्बो द्वारुदारक इति व्याडिः । प्रायः तव कर्णस्याऽभ्यर्णे समीपे कान्तस्य हरेः सन्देशहारी दूतः काममन्त्रस्याऽर्थतत्त्वं व्याचष्टे कथयति किम ? इत्युत्प्रेक्षा । शालिनीवृत्तम् ॥ ५० ॥

का चिद्भाति वतंसकोत्पलमयी कल्याणताटङ्कसत्प्राकाराऽऽश्रितकर्णधिष्ण्यनिहिता प्रायः शतघ्नी रमे ।

---

५० हे त्रैलोक्यमातः ! त्वदीयाऽवतंसभूतोत्पलसमीपे भूयो गुञ्जारवं कृत्वा सञ्चरन् भ्रमर एव प्रियदूतः कर्णाऽन्तिके काममन्त्राणामर्थस्य रहस्यं व्याख्याति किमित्युत्प्रेक्षते ।

५१ हे रमे ! शोभनताटङ्करूपसत्प्राकाराऽऽश्रिते कर्णरूपे धिष्ण्ये उच्चस्थले निहिता कर्णभूषणोत्पलस्वरूपा का चित् शतघ्नी भाति, तस्याः शतघ्न्या मुखात् कामेन ताटङ्करत्नरूपाऽग्निदीप्त्या रक्तो दयितस्य हरेर्दुरपनेयस्य मानकवचस्य भेदको भ्रमररूपो लौहगोळकः

तद्रत्नाऽग्निरुचा ऽरुणः स्मृतिभुवा तस्या मुखात् प्रेर्यते
रोलम्बाऽऽयसगोलकः प्रणयिनो दुर्मानवर्माऽर्दनः ॥५१॥

का चिविति। हे रमे ! कल्याणताटङ्कावेव सत्प्राकारौ वरत्नौ ताभ्यामाश्रिते कर्णरूपे धिष्ण्ये । धिष्ण्यमोको निवसनमिस्त्रमरः। निहिता स्थापिता। वतंस एव वतंसकः। वष्टि भागुरिरल्लोपमित्यल्लोपः। तद्रूपं यदुत्पलं तन्मयी शतघ्नी । अत्र यद्यपि लोहकण्टकयुतचतुस्तालकाष्ठविशेष इति हेमचन्द्रकोशे उक्तं तथापि महाकविप्रयोगाद्वर्णनाऽनुरोधेन शतं हन्तीति योगेन 'तोफ' इति लोके तदायुधं प्रायो भवति। यतस्ताटङ्करत्नान्येवाऽग्निस्तद्रुचा ऽरुणो रोलम्ब एवाऽऽयसस्य(?) गोलकः प्रणयिनः प्रियस्य दुर्मानरूपस्य वर्मणः कवचस्याऽर्दनो भेत्ता तस्याः शतघ्न्या मुखात्स्मृतिभुवा कामेन प्रेर्यते । शार्दूलविक्रीडितम् । उत्प्रेक्षारूपकतद्गुणाऽलङ्काराः ॥ ५१ ॥

कंसारातेश्चाटुमाध्वीझरैस्ते
कर्णौ पूर्णावर्णवेन्द्रस्य कन्ये।
जानन्तस्तत्सन्निधौ चञ्चरीका-
श्चञ्चूर्यन्ते नोत्पलं तत्र हेतुः ॥ ५२ ॥

कंसेति। हे ऽर्णवेन्द्रकन्ये ! ते कर्णौ कंसाऽरातेर्हरेश्चाटूनि

---

प्रेर्यते इत्युत्प्रेक्षमाणः कर्णोत्पलशोभाया हरेर्विलोभकतया तद्धैर्यहरत्वं प्रकटयन्नाह।

५२ हे अर्णवेन्द्रस्य कन्ये ! तव कर्णौ कंसदमनस्य प्रियोक्तिरूपमधुपरिपूर्णौ जानन्तो भ्रमराः कर्णसमीपे तद्ग्रहणायेव गर्हितं चरन्ति, न तत्सञ्चरणे कर्णोत्पलं कारणमित्याह।

प्रेमभिथ्योक्तय एव माध्वीझरास्तैः पूर्णाविस्येवं जानन्तश्चञ्चरी-का भृङ्गाः तत्सांनिधौ कर्णसमीपे चञ्चूर्यन्ते ऽभीक्ष्णं प्रचरन्ति(?) तत्र तत्प्रचारे उत्पलं हेतुर्न भवति इति पर्यस्ताऽपह्नुतिगर्भो-त्प्रेक्षा। शालिनीवृत्तम् ॥ ५२ ॥

> प्रस्तवतंसकुवलयं[१] दृग्युगमुपकूजदलिरवमिषात्ते ।
> मद्वसुचोर[२] इहेति प्रवदति किल कर्णपत्रमित्राय ॥५३॥

न्यस्तेति। ते न्यस्तं कर्णस्थापितं वतंसकुवलयं कर्तृ(?) कर्णपत्रं ताटङ्कं तदेव मित्रं सुहृत्तस्मै उपकूजतः। कूज अव्यक्ते शब्दे इत्य-स्माच्छतृप्रत्ययः। अलेः रवस्य मिषाच्छलादिह दृग्युगं तत्र वसोः शोभाद्रव्यस्य चोर इति प्रवदति कथयति। गीतिवृत्तम्। अप-ह्नुतिश्लेषाऽलङ्कारौ ॥ ५३ ॥

अथ कर्णौ वर्णयति—

> इमामवामां श्रुतिमिन्दिरे तव-
> स्तुवन्ति सन्तः स्मृतिजन्मकारणम् ।

———

५३ प्रस्तमाक्रान्तमवतंसकुवलयं येनैतादृशं ते दृग्युगलं समीपे गुञ्जतां भ्रमराणां झङ्कारकपटात् मम (दृग्युगस्य) वसुनः (का-न्तेः, द्रव्यस्य च) चौरः कर्णोत्पलरूपोऽत्र कर्णेऽस्ति, इति ताटङ्क-रूपसूर्याय सुहृदं प्रवदतीव, (यथा चौरेणाऽपहृतद्रव्यः कश्चित्समा-क्रम्य स्वसुहृदे तत्स्थितिस्थानं प्रदर्शयति तद्वत्) इत्याह।

५४ हे इन्दिरे! अवामां (दक्षिणामप्रतिकूलां च) इमां श्रुतिं (श्रोत्रं, वेदं च) स्मृतिजन्मकारणम् (कामोत्पादकं, मन्वादिस्मृतिमूलं च)

---

१ न्यस्तवतंसकुवलयमिति १ पु० ।

२ त्वद्वसुचोर इति । पु० ।

३ उपरिप्रदर्शित १ पु० पाठभेदानुसारिणीयं व्याख्या संकुलेव प्रतिभाति ।

२—३ पुस्तकयोः पाठं समीचीनमवधृत्याऽवतरणं प्रवृत्तम् ।

शिरस्यमुष्याः सुमनोभिरञ्चिते
चकास्ति दृष्टिर्जगतामधीशितुः ॥ ५४ ॥

इमामिति। भो इन्दिरे! तत्राऽत्रामामपनठ्याम् अप्रतीपामनुकूलां चेति भावः। श्रुतिः श्रवणां वेदश्च स्मृतिजन्मनो मदनस्याऽन्यत्र मन्वादिस्मृतीनां जन्मनश्च कारणम्। 'श्रुतेरिवार्थं स्मृतिरन्वगच्छ'दिति कालिदासोक्तेः। शारीरके ऽपि 'अथोपि च स्मर्यते' इति सन्तः स्तुवन्ति, अतः सुमनोभिर्देवैः पुष्पैश्चाऽञ्चिते पूजिते ऽमुष्याः शिरसि उपानिषद्भाग च जगतामधीशितुर्विष्णोर्दृष्टिर्नेत्रं पक्षे ज्ञानं चकास्ति। चकासृ दीप्तावित्यस्माल्लिट्। वंशस्थं वृत्तम्। श्लेषालङ्कारः ॥ ५४ ॥

तव द्वितीया श्रुतिरुच्चकैरसा-
वनङ्गभावाऽनुगुणा गुणाऽम्बुधे ।

---

जनाः स्तुवन्ति। यदमुष्याः श्रुतेः सुमनोभिः (पुष्पैः, देवैश्च) अञ्चिते शिरसि (उपरि, उपनिषत्सु च) जगदधीश्वरस्य विष्णोः दृष्टिः (दर्शनं, तत्त्वज्ञानं च) चकास्तीति श्लेषेण दक्षिणश्रुतेर्वेदतुल्यत्वमाह।

५५ हे गुणाऽम्बुधे! मातः! तव द्वितीया (वामा) असौ उन्नता अनङ्गभावाऽनुगुणा (कामाऽभिप्रायाऽनुकूला, कामभावानां शृङ्गारभावानामनुरूपा, विदेहकैवल्याऽनुरूपा च) श्रुतिः (श्रवणं, वेदश्च) अशेषशेषिणं सर्वप्रधानं हरिं वशे कृत्वा एनम् (आत्मनः) स्तवकर्मणः (स्तोत्रकरणस्य) कर्तारं करोतीति श्रोत्रे भगवत्स्तोत्रविषयतां वर्णयन् श्लेषेण—अनङ्गं प्रधानभूतो यो भावः क्रिया तदनुकूला द्वितीयाविभक्तिश्रुतिरशेषशेषिणं सर्वप्रधानं कर्तारं वशे विधाय स्वाऽनुकूलतामा-

वशे निधायैतमशेषशेषिणं
करोति मातस्तवकर्मकारकम् ॥ ५५ ॥

तवेति । हे गुणाऽम्बुधे ! तव द्वितीया वामा श्रुतिः श्रवणम् अनङ्गस्य कामस्य यो भावो भवनमुत्पत्तिरित्यर्थः । तत्राऽनुकूला गुणा यस्याः सा । अशेषस्य सर्वस्य जगतः शेषिणमधिष्ठानभूतं निर्गुणं हरिं वशे स्वाधीनं विधाय कर्मणां सृष्ट्यादीनां कारकं कर्तारं विधत्ते करोतीत्याश्चर्यम् तथा हि—या हि द्वितीयस्या विभक्तेः श्रुतिः श्रवणं सा अनङ्गभावे प्रधानत्वेन अनुगुणा नास्ति । स्वतन्त्रः कर्तेति कर्तुरेव तदनुगुणत्वात् इत्येकं चित्रम् । किं च शेषिणं प्रधानमपि श्रीहरिं कर्मकारकं कर्मरूपं कारकं करोतीत्यपरं ज्ञेयम् । वंशस्थं वृत्तम् । विभावनाभेदोऽलङ्कारः ॥५६॥

दीप्यत्कर्णसुवर्णकुण्डलमये दीप्ताऽग्निकुण्डे ज्वलद्रत्नाऽङ्गारघने हरेर्धृतिमयीं हुत्वा ऽऽहुतिं तावके ।
भृङ्गाऽध्वर्युरनङ्गदीक्षितवृतो झङ्कारमन्त्रान् जपन्
वाराशेर्दुहितः प्रदक्षिणविधिं वारान् विधत्ते बहून् ॥५६॥

दीप्यदिति । हे वाराशेर्दुहितः ! ज्वलद्भिः रत्नरूपैरङ्गारैर्घने

---

पाद्य कर्मकारकं करोति कर्मवाचिका भवतीति व्याकरणप्रसिद्धमप्यर्थं बोधयन्नाह ।

५६ हे समुद्रपुत्रि ! अनङ्गः काम एव दीक्षितो यजमानस्तेन वृतो भृङ्गरूपो ऽध्वर्युर्झङ्काररूपान् मन्त्रान् जपन् सन् त्वदीये दीप्यमाने सौवर्णकुण्डलात्मनि ज्वलद्रत्नरूपाऽङ्गारपरिपूर्णो ऽग्निकुण्डे भगवतो हरेर्धैर्यात्मिकामाहुतिं हुत्वा भूयः प्रदक्षिणविधिमनुतिष्ठतीति रूपकमुखेनोत्प्रेक्षमाणो रत्नखचितसौवर्णकुण्डलस्य भगवद्धैर्यभञ्जकत्वेनाऽतिसुन्दरत्वं प्रकटयन्नाह ।

---

१ अनुदात्तेत्वलक्षणस्याऽऽत्मनेपदस्याऽनित्यत्वात् परस्मैपदप्रयोगः ।

दीप्यद्यत्कर्णसंबन्धि सुवर्णकुण्डलं तन्मये दीप्ते ऽग्निकुण्डे हरेर्धृतिमयीं धैर्यरूपामाहुतिं हुत्वा ऽनङ्गो मदन एव दीक्षितः तेन वृतो ऽयं भृङ्गरूपो ऽध्वर्युर्झङ्काररूपान् मन्त्रान् जपन् सन् बहून्वारान् बहुवेलं प्रदक्षिणाविधिं विधत्ते । शार्दूलविक्रीडितम् । रूपकाऽलङ्कारः ॥ ५६ ॥

देवानां मधुरं स्वतः स्तुतिवचो देवि स्वतो ऽसुन्दरं
माद्दग्बालकजाल्पितं च जगतीमातः श्रुती याति ते ।
तत्राऽऽद्यं तदवस्थमेव चरमं तत्तुल्यतां गाहते
मुक्तं शुक्तिषु मौक्तिकं घनपयो मुक्ता तु नैवाऽन्यथा॥५७॥

देवानामिति । हे देवि ! जगतीमातः ! स्वतो मधुरं देवानां, कर्तरि षष्ठी । देवकर्तृकमित्यर्थः । स्तुतिरूपं वचः चेत्यपरं स्वतः असुन्दरं माद्दशो बालकस्य जल्पितं भाषितं ते श्रुती कर्णौ प्रति याति । तत्रोभयोर्मध्ये ह्याद्यं देववचः तदवस्थं सुन्दरमेव, चरमं मज्जल्पितं तु तत्तुल्यतां देववचःसमतां गाहते । दृष्टान्तः शुक्तिषु मुक्तं घनपयो मुक्ता भवति । मुक्ता त्वन्यथा नैव, किं तु स्वरूपेणैवाऽस्तीति भावः । शार्दूलविक्रीडितम् । विभावनादृष्टान्ताऽलङ्कारौ ॥ ५७ ॥

---

५७ हे जगतीमातः ! स्वभावमधुरं देवानां स्तुतिवचनं, सहजाऽसुन्दरं माद्दशशिशुजनजल्पितं च ते कर्णयोः प्रविशति, तयोर्मध्ये देववचनं स्वभावमधुरतया स्वरूपेणैवाऽवतिष्ठते, असधुरं माद्दग्जल्पितं च माधुर्यमापद्यमानं देववचनसाम्यमुपयातीत्यत्र शुक्तिषु मुक्तं मेघजलं मुक्ताफलत्वमापद्यते, मौक्तिकं तु शुक्तिनिहितं स्वरूपेणैव तिष्ठति न कञ्चनोत्कर्षमेतीत्युदाहरणं प्रदर्शयन् असधुरस्यापि निजवचसो भगवतीकर्णप्रवेशेन माधुर्यप्राप्तिं विनयेन दर्शयन्नाह ।

स्फुरन्मुक्ताकान्तिस्फुटसलिलमग्र्याऽरुणमणि-
प्रभाकल्हाराऽऽढ्यं प्रियनयनमीनैकशरणम् ।
हृताऽशेषक्लान्ति हरिदुपलनीलोत्पलघनं
तटाकं ताटङ्काऽन्तरमुषसि सेवे तव रमे ॥५८॥

स्फुरदिति । हे रमे ! स्फुरन्त्यो मुक्ताकान्तय एव स्फुटं सलिलं यस्मिन् तत्, एवमग्र्यैररुणमणीनां माणिक्यमणीनां प्रभारूपकल्हारैराढ्यं, प्रियस्य हरेर्नयनमीनयोरेकशरणं मुख्याऽऽश्रयं, हृता अशेषा क्लान्तिः क्लमो येन तत्, हरिदुपला इन्द्रनीला एवोत्पलानि तैर्घनं तव ताटङ्काऽन्तरं ताटङ्काऽपरपर्यायं तटाकम् उषसि सेवे भजे। शिखरिणीवृत्तम्। रूपकाऽलङ्कारः॥५८॥

सुवर्णताटङ्कमुनिः श्रुतौ स्थिरः
प्रपन्नमुक्ताऽभ्युदयो दयोदधे ।

---

५८ हे रमे ! समुल्लसन्मौक्तिकद्युतिरूपस्पष्टजलम, उत्तममाणिक्यमणिकान्तिरूपसौगन्धिकपूर्णं, हरिनेत्ररूपमीनैकाश्रयं, विनाशितसकलक्लमं, मरकतमणिरूपकुवलयसान्द्रं तव ताटङ्कमध्यभागरूपं तटाकं प्रातर्भजे इति ताटङ्कमध्यस्य तटाकरूपत्वं विशेषणैरनुगुणैः साधयन्नाह ।

५९ हे दयाऽम्बुधे हरिप्रिये ! श्रुतौ ( श्रोत्रे, वेदे च ) स्थिरः, प्रपन्नः प्राप्तो मुक्तानां ( मौक्तिकानां, मुक्तपुरुषाणां च ) अभ्युदयः ( सम्बन्धः, मोक्षाऽविर्भावश्च ) येन तथाभूतः, प्रकाशिताऽर्चिःसरणिः ( प्रकटितकान्तिमार्गः, प्रकाशाभूतोऽर्चिरादिमार्गश्च ) चक्रधराऽभि-

प्रकाशिताऽर्चिःसरणिः प्रिये हरे-

श्चकास्ति ते चक्रधराऽभिनन्दितः ॥ ५९ ॥

सुवर्णेति । हे हरेः प्रिये ! हे दयोदधे ! ते श्रुतौ कर्णे वेदे च स्थिरः प्रपन्नः प्राप्तः मुक्तानां मौक्तिकानां मुक्तपुरुषाणां चाऽभ्युदयो येन सः । एवं प्रकाशिता ऽर्चिषः कान्तेः 'अग्निर्ज्योतिरहः शुक्ल' इत्याद्यर्चिरादिमार्गस्य च सरणिर्येन, तथा चक्रधरेण हरिणा चक्रवर्तिना राज्ञा शेषेण वा ऽभिनन्दितः पूजितः सुवर्णताटङ्क एव मुनि स्तापसश्चकास्ति । उपेन्द्रवज्रा वृत्तम् । रूपकश्लेषालङ्कारौ ॥ ५९ ॥

अथ नासां प्रशंसयति—

तिलप्रसूनं तुलयत्यसौ जग-

त्सवित्रि नासा तव सारसालये ।

तदञ्चलोदञ्चितुषारविप्रुषा

समानतामेति तदग्रमौक्तिकम् ॥ ६० ॥

हे सारसालये, हे जगतः सवित्रि ! असौ ते नासा तिलस्य प्रसूनं तुलयति समीकरोति । णिजन्तात्तुल उन्माने इत्यस्माल्लट् । तस्या नासाया अग्रमौक्तिकं च तस्य तिलपुष्पस्याऽञ्चले ऽग्रे उदञ्चिना शोभमानेन तुषारस्य हिमस्य विप्रुषा बिन्दुना समानतां तुल्यताम् एति प्राप्नोति । इत्युपमालङ्कारः । वंशस्थं वृत्तम् ॥६०॥

---

नन्दितः ( श्रीकृष्णश्लाघितः, चक्रवर्तिपूजितश्च ) सुवर्णताटङ्करूपो मुनिर्दीप्यतेतरामिति श्लेषेण ताटङ्कं मुनिरूपेण वर्णयति ।

६० हे जगन्मातः, कमलवासिनि ! तव नासिका तिलपुष्पमनुकरोति, तदग्रगतं नासामौक्तिकं च तिलपुष्पाऽग्रगतहिमबिन्दुना साम्यं प्राप्नोतीत्याह ।

नासा तवाऽसौ नववंशवल्ली
कासारजाऽऽवासिनि का ऽत्र शङ्का ।
प्रलम्बते तत्र यदम्ब मुक्ता-
फलं बतेदं गलितं हि तस्याः ॥ ६१ ॥

नासेति । हे कासारजावासिनि, हे सरोजालये ! तवाऽसौ नासा वंशस्य वेणोर्वल्ल्येव, अत्र का शङ्का ? न का चिदस्ति । मुक्तासम्बन्धित्वेन तादूप्यं दर्शयति । यद्यस्मात् हे ऽम्ब ! तस्या वल्ल्याः सकाशाद्गलितमिवेदं मुक्ताफलं तत्र नासायां प्रलम्बते, बत हर्षे । हि प्रसिद्धम् । अत्र प्रमाणं—

शुक्तिः शङ्खो गजः क्रोडः फणी मत्स्यश्च दर्दुरः ।
वेणुरेते समाख्यातास्तज्ज्ञैर्मौक्तिकयोनयः ॥

इति भावप्रकाशे रत्नमारणप्रकरणे । उपजातिवृत्तम् । उत्प्रेक्षाकाव्यलिङ्गमलङ्कारौ ॥ ६१ ॥

श्रीरास्यकान्तिजलधौ स विभाति नासा-
सेतुस्तवाऽद्भुतगतिः कलनेन यस्य ।

---

६१ हे कमलवासिनि ! असौ तव नासिका नवीना वंशलतैवा-ऽत्र का शङ्का ? यतो हि तस्या गलितं मुक्ताफलमेतदग्रे प्रलम्बते इति वदन् नासाया वंशत्वं तदग्रलम्बमानमौक्तिकस्य च तद्गलितत्व-मुत्प्रेक्षमाण आह ।

६२ हे श्रीः ! तव मुखकान्तिसमुद्रे विचित्ररीतिर्नासिकारूपः सेतुर्विभाति, यस्य सम्बन्धेन नाथो रामचन्द्रो लङ्केशस्य रावणस्य नागपाशसम्बन्धादपगतधैर्यः सन् विदेहजया ( सीतया ) सम्बन्धं न समेति, प्रसिद्धसेतुसम्बन्धात्तु रामः सीतया सम्बन्धं

नाथः समेति न विदेहजयाऽन्वयं हा-
लङ्केशपाशकलनादपयातधैर्यः ॥ ६२ ॥

श्रीरिति। हे श्रीः! तवाऽऽस्यकान्तिरूपे जलधौ अद्भुतः नासासेतुर्विभाति शोभते। तदेव समर्थयति–प्रसिद्धसेतोः कलनेन नाथो रामः लङ्केशस्य पाशानां नागपाशानां कलनात्स्वीकारात् अपयातं गतं धैर्यं यस्य तादृशो भूत्वा विदेहानां देशानां राजानो विदेहाः, तद्राजस्य बहुषु तेनैवाऽस्त्रियामित्यणो लुक्। तेभ्यो जाता विदेहजा सीता तया ऽन्वयं योगम् एति स्म प्राप्नोति स्म। अस्य नासासेतोः कलनेन तु लङ्केशपाशकलनाऽभावादपयातधैर्यः सन् विदेहजयस्याऽन्वयं न प्राप्नोति इति विरोधः। अलम् अत्यर्थः, अलं भूषणं वा तद्युक्तो यः केशपाशो धम्मिल्लस्तस्य कलनाद्ग्रहणाद्विदेहः अनङ्गः तस्य जययोगमिति परिहारेण विरोधाभासालङ्कारः काव्यलिङ्गश्लेषौ च। वसन्ततिलकावृत्तम् ॥ ६२ ॥

भ्रूसूत्राभ्यामूर्ध्वमाबध्य मिन्वन्
नासावंशस्तम्भमम्भोधिजे ते।

---

प्राप्नोतीति विचित्ररीतिमत्त्वं प्रदर्श्य श्लेषेण यत्सम्बन्धादत्यन्तं केशपाशदर्शनादधीरो रामो विदेहस्य कामस्य जयाऽन्वयायं जयसम्बन्धं न प्राप्नोति कामवशत्वादिति प्रकृतार्थं बोधयन्नाह।

६३ हे अम्भोधिजे! नाट्योपजीवी कामस्ते नासारूपं वंशं भ्रूरूपाभ्यां सूत्राभ्यामूर्ध्वमाबध्य मिन्वन् तत्र भ्रूसूत्रयोः स्थित्वा चित्रं यथा तथा क्रीडन् नाट्यं करोतीति भ्रुवोः कामनृत्यस्थान-

तत्र स्थित्वा ताण्डवं संविधत्ते

चित्रं क्रीडंश्चित्तभूर्नाट्यजीवी ॥ ६३ ॥

भ्रूसूत्राभ्यामिति । हे अम्भोधिजे, समुद्रसुते ! चित्तभूः कामरूपो नाट्येन नर्तनेन जीवतीति नाट्यजीवी । नट इत्यर्थः । ते नामारूपं वंशस्तम्भं वेणुस्तम्भं भ्रूरूपाभ्यां सूत्राभ्याम् ऊर्ध्वम् आबध्य मिनोतीति मिन्वन् । डुमिञ् प्रक्षेपणे इत्यस्माच्छतृप्रत्ययः । निखन्येत्यर्थः । आसीनो जपतीतिवत् । तत्र स्थित्वा क्रीडन् क्रीडां कुर्वन् सन् ताण्डवं संविधत्ते करोति । प्रसिद्धनर्तकस्तु वेणुं भूम्यां निक्षिप्य बद्ध्वा चोपरि नर्तति(?) अयं तूर्ध्वमाबध्य नर्ततीति(?) चित्रम् । शालिनीवृत्तम् । रूपकालङ्कारः ॥ ६३ ॥

दिव्यं ददाति नवचम्पकमम्ब गन्धं

त्वद्घ्राणजन्मनि तदेव सुधाऽब्धिकन्ये ।

गृह्णाति ते बहुविधं कृतिनो ददाना

जन्मान्तरे समधिकं विभवं लभन्ते ॥ ६४ ॥

दिव्यमिति । हे सुधाऽब्धिकन्ये, हे ऽम्ब ! नवचम्पकं पुष्पं यं सुगन्धं ददाति सर्वेषामित्यर्थः । तदेव तव घ्राणजन्मनि नासात्मनेति यावत् । बहुविधं तं गन्धं गृह्णाति, घ्राणेन्द्रियग्रा-

---

त्वं ख्यापयन् सौन्दर्याऽतिशयमाविष्करोति ।

६४ हे अम्ब ! सुधासागरकन्ये ! नवीनं चम्पकपुष्पं लोकेभ्यो दिव्यं गन्धं ददाति, अत एव त्वद्घ्राणात्मना लब्धजन्म तत् शोभनं गन्धं लभते इति 'दातारो जन्मान्तरे समधिकां भूतिं लभन्ते' इति धर्मशास्त्रसिद्धार्थप्रदर्शनेन समर्थयन् घ्राणस्य चम्पकाकारत्वं सुरभिगन्धवत्त्वं च प्रदर्शयन्नाह ।

त्त्वादिति भावः। तथा हि—ददाना दातारः कृतिनः अन्यज्जन्म जन्मान्तरं तस्मिन्नधिकं विभवं लभन्ते। अत्र प्रमाणं दानधर्मे फलिकाख्याने भीष्मोक्तिः—

यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम्।
तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि॥

तैत्तिरीयश्रुतिरपि 'एतद्वै मुखतोऽन्नꣳ राद्धं मुखतोऽस्मा अन्नꣳ राध्यते' इत्यादि। वसन्ततिलकावृत्तम्। अर्थान्तरन्यासालङ्कारः॥ ६४॥

मदनजननि नासामौक्तिकं वेद्मि मल्ली-
मुकुलमिति सुगन्धिश्वाससमन्दाऽनिलेन।
तदुपरि यदजस्रं तद्विकासप्रतीक्षं
दृगलियुगलमेतद् दृश्यते साऽवधानम्॥ ६५॥

मदनेति। हे मदनजननि! यतः श्वासरूपमन्दाऽनिलेन सुगन्धि शोभनगन्धाढ्यं नासासम्बन्धि मौक्तिकं मल्लीमुकुलं जातीकलिकां वेद्मि यतस्तस्योपरि तस्य मुकुलस्य विकासस्य प्रतीक्षा यस्य तद् दृग्रूपमलियुगलं भृङ्गयुग्मम् अजस्रं सततं सावधानं दृश्यते ऽवलोक्यते। मालिनीवृत्तम्। उत्प्रेक्षाकाव्यलिङ्गं चालङ्कारः॥ ६५॥

हसितरुचिसितांशुकं वसाना
श्वसितसमीरनटेन नाट्यमाना।

---

६५ हे काममातः! सुरभिनिःश्वासमन्दमारुतेन लिङ्गेन ते नासामौक्तिकं मल्लिकाकुसुममिति जानामि, यतस्तदुपरि निरन्तरं तस्य मुकुलस्य विकासप्रतीक्षं दृग्द्वन्द्वरूपं भ्रमरयुगलं सावधानं दृश्यते इति नासामौक्तिकं मल्लिकामुकुलत्वेनोत्प्रेक्षमाण आह।

६६ हे जननि! हास्यकान्तिरूपं शुभ्रं वसनं परिदधती, निःश्वा-

जनयति जननि त्वदीयनासा-

मणिगणिका मधुसूदनस्य मोदम् ॥ ६६ ॥

हसितेति । हे जननि ! हसितरुचिर्हास्यकान्तिरेव सितांशुकं शुभ्रवस्त्रं वसाना श्वसितसमीरनटेन श्वासवायुनर्तकेन नाट्यमाना त्वदीया नासामणिरूपा गणिका वेश्या मधुसूदनस्य मोदमानन्दं जनयत्युत्पादयति । पुष्पिताग्रावृत्तम् । रूपकालङ्कारः ॥ ६६ ॥

मुखविधुमधुराऽधरोष्ठसंध्या-

परिसरसीम्नि हरिप्रिये भवत्याः ।

भजति जननि नासिकाऽग्रमुक्ता-

फलमिह तारमुदारतारलीलाम् ॥ ६७ ॥

मुखेति । हे हरिप्रिये, हे जननि ! भवत्याः मुखविधुनाऽऽननचन्द्रेण मधुराया अधरोष्ठरूपसन्ध्यायाः परिसरसीम्नि पर्यन्तभागे इह ते तारमतिसुन्दरं नासिकाऽग्रसंबन्धि मुक्ताफलम् उदारतारस्य महतो नक्षत्रस्य लीलां भजति । नक्षत्रे नेत्रमध्ये च तारा स्यात्तार इति व्याडिः । नक्षत्रे चाऽक्षिदेशे च तारकं तारकेति शाश्वतोऽपि । पुष्पिताग्रावृत्तम् । रूपकनिदर्शने अलङ्कारौ ॥ ६७ ॥

---

समारुतरूपेण नटेन नाट्यमाना तव नासामुक्तारूपा वारवनिता भगवतो हरेस्तोषमुत्पादयतीत्याह ।

६७ हे हरिप्रिये ! मुखचन्द्रेण सुन्दरी या ऽधरोष्ठरूपा सन्ध्या तत्प्रान्तभागे भवत्या नासाऽग्रलम्बमानं मुक्ताफलं महतो नक्षत्रस्य शोभां वहतीत्याह ।

स्वरिपुरदभिया विविक्षु नासा-
बिलमिव मौक्तिकमेतदग्रलग्नम् ।
सरसिजभवने निजप्रतीप-
श्वसितनिवारितमम्ब कम्पमेति ॥ ६८ ॥

स्वेति । हे ऽम्ब, हे सरसिजभवने ! शुभ्रत्वेन रिपूणां रदानां भिया नासाया बिलं विविक्षु प्रवेष्टुमिच्छु इव तदग्रलग्नं मौक्तिकं निजस्य स्वस्य प्रतीपेन प्रतिकूलेन श्वसितेन श्वासवायुना निवारितं सत् कम्पम् एति प्राप्नोति । पुष्पिताग्रावृत्तम् । उत्प्रेक्षालङ्कारः ॥ ६८ ॥

अथ हसितं वर्णयति—

भवती स्मितचन्द्रिका ऽम्ब ते
भवती सुन्दरदन्तरश्मिभिः ।
भवतीयमकिञ्चनस्य मे
भवतीव्राऽऽतपखेदशान्तये ॥ ६९ ॥

भवतीति । हे अम्ब ! भवती भातीति भवती शोभमाना

---

६८ हे अम्ब ! कमलगृहे ! अतिशुभ्रतया निजशत्रुरूपदन्तभीत्या नासारूपं बिलं प्रवेष्टुं वाञ्छदिवैतन्नासाग्रलग्नं मौक्तिकं स्वप्रतिकूलश्वासमारुतनिवारितमिव कम्पं प्राप्नोतीति शत्रुभिया कुत्र चिन्निलयनाय प्रविविक्षुरपरेण शत्रुणा निवार्यमाणो यथा कम्पते तथैतदपीति उत्प्रेक्षमाण आह ।

६९ हे अम्ब ! भवती ( शोभमाना, ) रम्यदन्तकान्तिभिर्भवती ( नक्षत्रयुक्ता ) इयं ते मन्दहास्यज्योत्स्ना दरिद्रस्य मे भवतीव्रद्योतदुःखशमनाय भवतीत्याह।

भातेर्ङवतौ उगितश्चेति ङीप् । स्मितरूपा चन्द्रिका । पुनः सुन्दरैर्दन्तानां रश्मिभिः किरणैर्भानि नक्षत्राण्यस्यां सन्ति सा भवती नक्षत्रवती सतीति मतुबन्तमेतत् । नास्ति किञ्चन यस्य तस्य दरिद्रस्येत्यर्थः । मयूरव्यंसकादित्वात्साधुः । मे कवेर्भवतीत्रातपस्य संसारखरोष्मणः खेदस्य दुःखस्य शान्तये भवति सम्पद्यते । अत्र 'भवतीस्मितचन्द्रिका रमे' इति पाठे भवत्यास्तव स्मितचन्द्रिकेति समासे सर्वनामप्रयुक्तपुंवद्भावस्य दुर्वारत्वात् अयमपप्रयोग इति न शङ्कनीयम् । यतः ठक्छसोश्चेति वार्तिकाऽऽरम्भेण सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति भाष्यकारेष्टेरनित्यत्वज्ञापनेन मतान्तरे साधुत्वमिति शेखरे दक्षिणापश्चात्पुरसस्त्यक् इति सूत्रे स्पष्टतरत्वादिति तत्रैव द्रष्टव्यमिति अलं विस्तरेणेति विरम्यते ऽस्माभिः । पुष्पिताऽग्रावृत्तम् । उत्प्रेक्षाऽलङ्कारः ॥ ६९ ॥

हसितं भवदीयमाद्यवर्णं
जहदेतज्जननि स्वरूपगत्या ।
विदधे विधुपादजातमैत्री-
मतिमन्दस्य किलोचिता ऽधराऽऽप्तिः ॥ ७० ॥

हसितमिति । हे जननि ! भवदीयं हसितं स्वरूपगत्या स्व-

---

७० हे जननि ! भवदीयं हसितम् आद्यं वर्णमक्षरं जहत् सितं सत् ( हसितशब्दे 'ह'कारे त्यक्ते सितमित्यवशिष्यते ) विधुपादजातमैत्रीं ( चन्द्रकिरणसमूहसाम्यं ) विदधे तदुचितैवाऽतिमन्दस्य स्मितस्य अधरोष्ठप्राप्तिरिति वदन् श्लेषेण आद्यवर्णो ब्राह्मणं परित्यजतो विधोर्नारायणस्य पादजातानां शूद्राणां सख्यं विदधतो मन्दस्य ( जडस्य ) अधराऽऽप्तिर्नीचगतिसम्बन्धः समुचित एवेति ब्रुवन् मन्दहासस्य ज्योत्स्नासाम्यं वर्णयति ।

भावेनाऽऽद्यं वर्णं ब्राह्मणरूपं 'ह'काररूपं च जहत्यजत् अर्थात्सितमित्यर्थः। हसितशब्दे हि आद्यवर्णस्य हकारस्य परित्यागे सितमित्यवशिष्यते । तच्च सितत्वं किञ्जातीयमित्यपेक्षायां विधोश्चन्द्रस्य पादजातस्य किरणगणस्य मैत्रीं सख्यं विधत्ते शरच्चन्द्रचार्वित्यर्थः। इदमेकं गुणवत्त्वम् । अथाऽपरं तस्याऽतिमन्दस्य अधरे ओष्ठे एवाऽऽप्तिः स्थितिः 'स्मितं कुलनतभ्रुवामधर एव विश्राम्यती'ति रसमञ्जर्युक्तेः । अथाऽन्यत्र यो हि स्वभावेनाऽऽद्यं वर्णं ब्राह्मणं जहत् स सितो बद्ध एव न मुमुक्षुः स विधोर्विष्णोः पादाभ्यां जातैः शूद्रैः सह मैत्रीं सख्यं विधत्ते विधुर्विष्णौ चन्द्रमसीत्यमरः। 'पद्भ्यां शूद्रो ऽजायतेति श्रुतेः'। तस्य अतिमन्दस्य अधराप्तिर्नीचलोकप्राप्तिश्च उचिता योग्यैव किल निश्चयेन। औपच्छन्दसिकं वृत्तम्। श्लेषसमाऽलङ्कारौ ॥ ७० ॥

मनोजमातस्तव मन्दहासं
मन्ये मधुध्वंसनकीर्तिभासम् ।
किं वा लसत्त्वद्रसनाऽग्रवृत्ते-
र्वाग्देवताया वपुरंशुपूरम् ॥ ७१ ॥

मनोजमातरिति। हे मनोजस्य मदनस्य मातः ! तव मन्दहासं स्मितं मधुध्वंसनस्य हरेः कीर्तेर्भासं सर्वदा तत्कीर्तिवर्णनकारित्वादिति भावः । किं वा लसन्त्याः शोभमानायास्तव रसनाया अग्रवृत्तेरग्रवर्तिन्याः वाग्देवतायाः सरस्वत्या वपुषः

---

७१ हे कामजननि ! तव मन्दहासं हरिकीर्तिकान्तिरूपं, अथ वा स्फुरज्जिह्वाऽग्रवासिन्या वाग्देव्या देहकान्तिपूररूपं वा मन्ये इति उत्प्रेक्षमाणो ऽतिविशदत्वं मन्दस्मितस्य बोधयन्नाह ।

अंशुपूरं किरणसमूहं मन्ये जानामि इत्यर्थः । कीर्तेरदृश्यत्वेऽप्यत्र सितत्वं वर्णितम् । तत्र प्रमाणम् 'अप्यदृश्यां सितां कीर्तिमकीर्तिं च ततोऽन्यथा' इति वाग्भट्टालङ्कारः । उपजातिवृत्तम् । उत्प्रेक्षाऽलङ्कारः ॥ ७१ ॥

नासोरुमौक्तिकघृणिद्विगुणीकृतेन
हासोदयेन हसता सुषमां हिमांशोः ।
हा हन्त सुन्दरि तवाऽधरबन्धुजीवः
पद्मे परिस्फुटमटीकत पाटलत्वम् ॥ ७२ ॥

नासेति । हे सुन्दरि पद्मे ! नासाया उरुमौक्तिकघृणिभिर्विपुलमुक्ताकिरणैः द्विगुणीकृतेन अत एव हिमांशोश्चन्द्रस्य सुषमां परमशोभां हसता तिरस्कुर्वता ते हासोदयेन । हा हन्त खेदे । अधर एव बन्धुजीवः 'दुपारी'ति ख्यातं पुष्पं परिस्फुटं स्पष्टं पाटलत्वं श्वेतरक्तत्वं पाटलपुष्पत्वं चाऽटीकताऽलभत । अत्राऽन्यदीयगुणग्रहणात्तद्गुणाऽलङ्कारः । स च पूर्वाऽर्धगतेनाऽनुगुणालङ्कारेण सङ्कीर्यते । वसन्ततिलकावृत्तम् ॥ ७२ ॥

बालेन्दुकान्तिरिव पश्चिमसान्ध्यरागे
पद्मालये स्फटिकभा इव पद्मरागे ।

---

७२ हे सुन्दरि ! पद्मे ! नासिकाऽप्रलम्बमानमुक्ताफलकिरणद्विगुणितेन चन्द्रकान्तिं हसता हासस्योदयेन तवाऽधरोष्ठरूपो (अतिरक्तो) बन्धुजीवः (तन्नामकं कुसुमं) पाटलत्वं (श्वेतरक्तत्वं पाटलपुष्पत्वं च) स्फुटं प्राप्तवानिति बन्धुजीवस्य पाटलपुष्पत्वप्राप्तिराश्चर्यकरीति हा हन्तेत्यनेन बोधयन्नाह ।

७३ हे पद्मगृहे ! तवाऽधरोष्ठे ऽसौ मन्दस्मितकान्तिः, सायं सन्ध्यारागे बालचन्द्रकान्तिरिव, पद्मरागे स्फटिकद्युतिरिव, पल्लवाऽग्रे

प्रत्यग्रपुष्पसुषमेव च पल्लवाऽग्रे
भाति स्मितद्युतिरसावधरे भवत्याः ॥ ७३ ॥

बालेन्दुरिति । हे पद्मालये ! भवत्या अधरे असौ स्मितद्युतिर्मन्दहास्यकान्तिः पश्चिमसन्ध्यासम्बन्धिनि रागे बालेन्दोः कान्तिरिव, एवं पद्मरागे स्फटिकमेव, तथा पल्लवस्य किसलयस्याऽग्रे प्रत्यग्रस्य नूतनस्य पुष्पस्य सुषमा शोभेव भाति शोभते । वसन्ततिलकावृत्तम् । उपमाऽलङ्कारः ॥ ७३ ॥

अथ वाणीं वर्णयति—

स्वाद्वी सुधा स्मितमिषेण सुधाऽब्धिकन्ये
प्रत्यक्षतस्त्वदधरे परिदृश्यते ऽसौ ।
सिक्ता यया तव सदा स्वदते चटूक्ति-
र्मातः शुभाय मनसे मधुवैरिणो ऽपि ॥ ७४ ॥

स्वाद्वीति । सुधाऽब्धिकन्ये, हे मातः ! यया स्मितसुधया सिक्ता ते चटूक्तिर्मधुरभाषणरीतिः मधोर्दैत्यस्य वैरिणः शत्रोर्हरेः पक्षे माध्वीकद्वेषिणो ऽपि शुभाय शुभप्राप्तये(?) मनसे सदा स्वदते रोचते सा स्वाद्वी मधुरा असौ सुधा स्मितस्येषद्धासस्य मिषेण कपटेन तवाऽधरे प्रत्यक्षतः परिदृश्यते अवलोक्यते इत्यर्थः । कैतवाऽपह्नुतिरलङ्कारः । वसन्ततिलकावृत्तम् ॥ ७४ ॥

---

नूतनकुसुमशोभेव भातीति अधरोष्ठस्य रक्तत्वं मन्दस्मितस्य च शुभ्रत्वं प्रतिपादयन्नाह ।

७४ हे सुधाऽब्धिकन्ये ! तवाऽधरे मन्दस्मितकैतवेन मधुरा सुधैव प्रत्यक्षतः कृतवसतिर्दृश्यते, ऽत एव यया सिक्ता ते चाटूक्तिर्मधुद्वेषिणोऽपि ( हरेरपि, माध्वीकद्विषोऽपि च ) मनसे समधिकमधुरस्वाद्रोचते, अरुचितमाध्वीकस्यापि सविशेषमाधुर्यायां सुधायां रुचिरुचितैवेति वदन् मन्दस्मितस्याऽतिरमणीयत्वं वक्ति ।

मृद्वीकेयं न खलु भजते मृद्विकाराद्विशेषं
मन्ये पूरं मालिनमलिनामाकरं माकरन्दम् ।
मातर्नैवाऽऽकलयति सुधामाधुरी साधुरीतिं
हन्ताऽहन्तां तव सुवचने भाति मोचा मुमोच ॥७५॥

मृद्वीकेति। हे मातः! तव सुवचने भाति शोभति(?)साति हन्त विस्मये। इयं मृद्वीका, मृद्वीका गोस्तनी द्राक्षेत्यमरः। मृदो मृत्तिकाया विकाराद्विशेषं भेदं न भजते । एवमलिनां भृङ्गाणां, मधुलिण्मधुपाऽलिन इत्यमरादिन्नन्तोऽपि । आकरोत्याकारयति आह्वयति तम्। अत्र करोतिरन्तर्भावितण्यर्थः(?) मकरन्दः पुष्परसस्तस्याऽयं माकरन्दस्तं पूरं मलिनं मन्ये । तथा सुधाया अमृतस्य माधुरी माधुर्यं साधुरीतिं सुपद्धतिं नैवाऽऽकलयति न गृह्णाति । तथा मोचा कदली । रम्भा मोचांशुमत्फलेत्यमरः । अहन्तामहङ्कारं मुमोचेत्यतिमाधुर्यं तवोक्त्यामिति भावः । मन्दाक्रान्तावृत्तम् । अतिशयोक्तिरलङ्कारः ॥ ७५ ॥

हृत्वा वाचां रसमसदृशं हन्त पुण्ड्रेक्षवस्ते
गूढं मध्येजठरकुहरं पाटवाद्रूढवन्तः ।

---

७५ हे मातः ! तव मधुरतरे वचसि भाति सति द्राक्षा मृद्विशेषा, भ्रमरसङ्क्रितया तदाकररूपो मकरन्दसन्दोहश्च मलिनः, पीयूषमाधुर्यमप्यसाधु, एवं कदलीफलमपि माधुर्याऽहङ्कारं मुमोचेति मन्ये इति वदन् वचने निरतिशयं माधुर्यं प्रतिपादयति ।

७६ हे मातः ! निरुपमं ते वाचां रसमपहृत्य कौशलान्मध्येजठरं वहन्तः पुण्ड्रेक्षवो द्राक्षयन्त्रसम्पीडिताः सन्तस्तं रसं प्रतिददतीति

तं कृच्छ्रात्ते ददति च पुनर्दारिता दारुयन्त्रे
मातर्देयं स्वयमददतां मर्दनं मार्दवाय ॥ ७६ ॥

हृत्वेति। हे मातः! ते तव वाचाम् असदृशं निरुपमं रसं हृत्वा चौर्येणाऽपहृत्य ते पुण्ड्रेक्षवः जठरकुहरस्य मध्ये इति मध्ये-जठरकुहरं पाटवाद्गोपनकौशल्याद्दधन्तो धारयन्तस्ते पुनश्च दारुयन्त्रे 'घाणा' इति ख्याते दारिता निष्पीडिताः सन्तः तं रसं कृच्छ्रात्सङ्कटेन ददति। स्यात्कष्टं कृच्छ्रमाभीलमित्यमरः। तथा हि—स्वयं स्वतः देयं वस्तु अददतामयच्छतां मर्दनं मार्दवाय मृदुत्वप्राप्तये भवति। 'इक्षुदण्डास्तिलाः शूद्राः कान्ता स्वर्णं च मेदिनी। चन्दनं दधिताम्बूले मर्दनं गुणवर्धनम्' इत्यभिधानात्। अपि च 'तन्वी बाला मृदुतनुरियं त्यज्यतामत्र शङ्का लोके मत्तभ्रमरपतनान्मञ्जरी किं नु भग्ना। तस्मादेषा रहसि भवता निर्दयं मर्दनीया मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः समन्तात्' इति सुभाषितमप्यत्र प्रमाणं ज्ञेयम्। मन्दाक्रान्तावृत्तम्। उत्प्रेक्षार्थान्तरन्यासावलङ्कारौ॥ ७६॥

अभ्यातञ्च्य क्षीरधिमिन्दोरमृतौघै-
रामथ्यैनं देवि मथा चेक्षुमयेन।

---

स्वयं देयमददतां पीडनमेव मार्दवाय भवतीत्युक्त्वा समर्थयन् पुण्ड्रेक्षुरसादपि त्वद्वाग्रसः समधिकमधुर इत्याह।

७७ हे श्रीः! देवैश्चन्द्रमण्डलाहृतैः सुमधुरैरमृतैः क्षीरोदमातञ्च्य।प्रतिमधुरेणेक्षुरूपेण मन्थनदण्डेन तं विलोक्य तत्साररूपं नवनीतं

तस्माद्देवैर्यद्युपनीतं नवनीतं
तिक्तीकुर्यादुक्तिरियं ते तदपि श्रीः ॥ ७७ ॥

अभीति । हे श्रीः, हे देवि ! क्षीरधिम इन्दोश्चन्द्रस्याऽमृतौघैः अभ्यातश्चयाऽऽसिच्य 'विरजणमिति' लोके । अथेक्षुमयेन मथा मन्थनदण्डेनाऽऽमथ्य मन्थयित्वा तस्माद् दुग्धोदधेः नवनीतं यदि निष्कासितं तथाऽपि तन्नवनीतमपि ते उक्तिः । व्याहार उक्तिर्लपितमित्यमरः । तिक्तीकुर्यात् कटूकुर्यात् । मत्तमयूरं वृत्तम् । प्रौढोक्त्यतिशयोक्त्यलङ्कारौ ॥ ७७ ॥

मातः समस्तजगतामसि माधवी त्वं
मन्ये तवाऽधरदलं मृदुलं प्रवालम् ।
दन्ताऽऽवलिं सुमनसां ततिमुल्लिखामि
स्वादूनि वेद्मि च मधूनि सुभाषितानि ॥ ७८ ॥

मातरिति । हे समस्तजगतां मातः ! त्वं माधवी माधवपत्नी । पुंयोगादाख्यायामिति ङीष् । वासन्ती लता च । वासन्ती माधवीलतेत्यमरः । असीति मन्ये । तवाऽधरदलमधरोष्ठविभागं मृदुलं प्रवालं मन्ये । तथा दन्तानामावलिं पङ्क्तिं सुमनसां पुष्पा-

---

यद्युद्धृतं स्यात् तथाऽपि त्वद्वचनाऽग्रे तत्कटु प्रतीयेतेति सुधाऽधिकमधुरिमधुरीणं ते वचनमित्याह ।

७८ हे समस्तलोकानां मातः ! त्वं माधवी ( माधवपत्नी, वासन्तीलता च ) असि, तव अधरं कोमलं पल्लवं मन्ये, दन्तपङ्क्तिं कुसुमसमूहमुत्प्रेक्षे, स्वादूनि सुवचनानि च मकरन्दरूपाणि संभावयामीति भगवत्यां माधवीलतारूपणमुखेनाह ।

णां ततिम् उल्लिखामि तर्कयामि । एवं स्वादूनि सुष्ठुभाषितानि मधूनीति वेद्मि। वसन्ततिलकावृत्तम । उत्प्रेक्षालङ्कारः ॥७८॥

मातर्भवन्मुखमयूखसुधाऽब्धिमध्ये
बिम्बाधराऽमृतमभूद्वचनाऽमृतं च ।
आद्यं तयोः पिबति साऽऽदरमाननेन
श्रोत्रद्वयेन चरमं परमः पुमान् सः ॥ ७९ ॥

मातरिति। हे मातः! भवत्या मुखस्य मयूखाः किरणा एव सुधाऽब्धिस्तन्मध्ये बिम्बाधराऽमृतं तथा वचनाऽमृतं चेति द्वयम् अभूदुत्पन्नं, तयोर्द्वयोर्मध्ये आद्यमधरोष्ठं प्रति(?) स परमः पुमान् विष्णुः आननेन मुखेन सादरं पिबति प्राशनं करोति, चरमं वचनाऽमृतं श्रोत्रद्वयेन पिबति सादरं शृणोतीति भावः । वसन्ततिलकावृत्तम । रूपकालङ्कारः ॥ ७९ ॥

परिहृतभवशब्दा भारती तावकीना
परिहसतु निकामं कालकण्ठाऽभिलापम् ।

---

७९ हे मातः! त्वदीयमुखकान्त्यमृतसागराऽन्तराले बिम्बाऽधराऽमृतं वचनाऽमृतं चेत्यमृतद्वयमभूत, तयोर्मध्ये प्रथमं बिम्बाऽधराऽमृतं पुरुषोत्तमो मुखेन पिबति, द्वितीयं वचनाऽमृतं तु श्रवणयुगलेन पिबतीति विशेष इत्याह ।

८० हे सिन्धुकन्ये! परिहृतः भवशब्दः (संसारशब्दः) यया एतादृशी ते वाक् कालकण्ठाभिलापं (कोकिलसंबन्धिनमालापं, कालकण्ठस्य यमकण्ठास्याऽऽलापं च परिहसतु, श्रुतिपथे (श्रोत्रमार्गे, वेदमार्गे च) मधुरा इयं वाक् शुकमुखफणितीनां (कीराऽऽननवचनानां, शुकयोगिप्रभृतिवचनानां च) दोषं कथमाविष्करोति?ति संसाराऽपहायाः यमकण्ठशब्दपरिहासस्यौचित्येऽपि शुकादिमुनी-

श्रुतिपथमधुरेयं सिन्धुकन्ये कथं वा
शुकमुखफणितीनां दोषमाविष्करोति ॥ ८० ॥

परीति । सिन्धुकन्ये ! परिहतः भक्तस्य भव इति संसार इति शङ्कर इति च शब्दो यया सा तावकीना त्वदीया भारती वाणी कालकण्ठस्य यमगलस्य पक्षे कालकण्ठस्य शिवस्याऽभिलापं कठोरशब्दं गानं च निकामं यथेष्टं परिहसतु निन्दतु, परं तु श्रुतिपथस्य वेदमार्गस्य कर्णमार्गस्य च मधुरेयं भारती शुकस्य शुकयोगीन्द्रस्य कीरस्य च मुखसम्बन्धिफणितीनामुक्तीनां दोषं कथं वा ऽऽविष्करोति प्रकटीकरोति? इत्याक्षेपे द्वितीयार्थेन परिहारो ज्ञेयः । मालिनीवृत्तम् । श्लेषसमविभावनालङ्काराः । श्रुतिपथमधुराणामिति पाठः श्रेयान् ॥ ८० ॥

असंकोचां मोचामधुरिममदोन्मोचनविधा-
वनीचां ते वाचामहमहरहर्नौमि लहरीम् ।
उदूहे यां श्रोतुं कुतुकमुदधेः पुत्रि दधती
श्रुतीभावं चक्षुःश्रुतिपतिदृशां विंशतिशती ॥ ८१ ॥

असङ्कोचामिति । हे उदधेः पुत्रि ! यां वाग्लहरीं श्रोतुं कुतुकं

---

न्द्रशब्ददोषाऽऽविष्करणं कथमुपपद्यते ? इति वदन् श्लेषेण संसारविनाशकानां त्वद्वचसां माधुर्याऽतिशयेन कोकिलशब्दपरिहासः कीरशब्ददोषाऽऽविष्करणं च युक्तमेवेति प्रकृतार्थबोधनपुरस्सरं पिकशुकवचनादपि समधिकमधुरं ते वचनमित्याह ।

८१ हे समुद्रपुत्रि ! कदलीफलमाधुर्यगर्वपरिहारपटीयसीं ते वाक्परम्परां नौमि, यां श्रोतुं कौतुकिनी शेषदृक्सहस्रद्वयी श्रोत्ररूपत्वमुवाह ( चक्षुःश्रवत्वात् ) इति वाचामतिमधुरत्वं बोधयन्नाह ।

कौतुकं दधती चक्षुःश्रुतीनां सर्पाणां पत्युः शेषस्य दृशां नेत्राणां विंशतिशती सहस्रद्वयमित्यर्थः । श्रुतीभावं श्रोत्रेन्द्रियत्वम् । उदूहे स्वीचकार । कुत ! इति चेत् । मोचायाः कदल्याः मधुरिम्णा माधुर्येण यो मदो ऽहङ्कारस्तस्य उन्मोचनविधौ उन्मूलनकरणे असङ्कोचां निःसन्देहाम् अनीचां श्रेष्ठां ते वाचां लहरीं परम्पराम् अहरहः प्रतिदिनं नौमि नमस्करोमि इत्यर्थः । अत्र पूर्वार्धे उत्प्रेक्षालङ्कारः, द्वितीयार्धे उदात्तालङ्कारः । शिखरिणीवृत्तम् ॥ ८१ ॥

पर्यायः शर्करायाः प्रतिकृतिरमृतस्रोतसां तादृशाना
साक्षी गोक्षीरभूम्नां सुरतरुसुमनोमाक्षिकाणां विकारः ।
पुण्ड्रेक्षूणां प्रणाली परिणतिरतुला नारिकेलोदकानां
सोयं नालीकगेहे जयति तव वचःसंपदां संप्रदायः ॥८२॥

पर्याय इति । हे नालीकगेहे ! शर्करायाः पर्यायो भेदः, एवममृतस्रोतसां पीयूषप्रवाहाणां प्रतिकृतिः प्रतिमा, तथा तादृशानां लोकोत्तराणां गोक्षीरस्य गोदुग्धस्य भूम्नां महिम्नां साक्षाद्द्रष्टा साक्षी, साक्षाद्द्रष्टरि संज्ञायामिति निपातनात्साधुः । पुनः सुरतरुसुमनोमाक्षिकाणां कल्पद्रुमपुष्पमधूनां विकारः, पुण्ड्रसंज्ञकानामिक्षूणां प्रणाली 'पद्माल' इति लोके प्रसिद्धा । किं बहुना नारिकेलफलस्य तदुदकानामतुला निरुपमा परिणतिः प-

---

८२ हे कमलगृहे ! सिताया रूपान्तरं, पीयूषप्रवाहाणां प्रतिच्छाया, गव्यपयोमाहात्म्यस्य प्रत्यक्षद्रष्टा, कल्पतरुकुसुममधुविकारः, पुण्ड्रेक्षुप्रणालिका, नारिकेलरसानां निरुपमः परिणामः, प्रसिद्धतरस्तव वाक्संपत्तिसंप्रदायः सर्वोत्कर्षेण राजते इति वदन् वचसां निखिलमधुरपदार्थसाररूपतां प्रकटयति ।

रिणामः, सो ऽयं प्रसिद्धः तव वचःसंपदां वचनश्रीणां संप्रदायो जयति सर्वोत्कर्षेण वर्तते इत्यर्थः। उल्लेखालङ्कारः। स्रग्धरावृत्तम् ॥ ८२ ॥

सुता सुधाऽब्धेः सहजा हिमांशो-
मातः प्रिया त्वं मधुराऽधिपस्य ।
तथाविधायास्तव के नु वीची-
माचान्तमोचां न वदन्ति वाचाम् ॥ ८३ ॥

सुतेति। हे मातः जननि ! त्वं सुधाऽब्धेः क्षीरसागरस्य सुता कन्या, तथा सुधांशोश्चन्द्रस्य सहजा भगिनी, पुनः मधुरायास्तत्संज्ञकनगर्या अधिपस्य विष्णोः अथ च मधुरस्य सुन्दरस्य स्वामिनः प्रिया वल्लभा, तथाविधायास्तादृग्भूतायास्तव वाचां वीचीं परम्पराम्। आचान्ता निर्जिता मोचा कदली यया तादृशीं के नु काः नार्यः के पुरुषास्त्यदादीनि सर्वैर्नित्यमित्येकशेषः। न वदन्ति न ब्रुवन्तीत्यर्थः। उपजातिवृत्तम्। परिकरालङ्कारः॥८३॥

द्राक्षालिरादौ किल रूपयुक्ता
मध्ये ऽधिकेक्षुप्रभवा सिता च ।

---

८३ हे मातः ! त्वं सुधासमुद्रस्य दुहिता, चन्द्रस्य स्वसा, मधुराऽधिपस्य ( मधुराख्यपुरेशस्य विष्णोः, मधुररसनायकस्य च ) प्रिया, एवं मधुरनिखिलपरिवारायास्तव वाक्परम्परां कवलीकृतकदलीं के वा न वदन्ती?ति वचसां माधुर्योऽतिशयं सूचयन्नाह।

८४ हे रमे ! स्वादुतरे ते वाग्रसे जागरूके सति आदौ रूपयुक्तापि ( मधुररूपापि ) द्राक्षालिः तथैवाऽऽदौ 'रु'शब्देन समीपभागे आद्यवयवतया युक्ता रुद्राक्षालिः (तद्वन्नीरसा) भाति, एवं म-

हास्या सुधाप्यग्रजनाभियुक्ता
स्वादौ रमे जाग्रति वाग्रसे ते ॥ ८४ ॥

द्राक्षालिरिति। आदौ त्वद्वाग्रसप्रवृत्तेः पूर्वं द्राक्षालिर्द्राक्षापङ्क्तिः रूपयुक्ता माधुर्यात्मकेन स्वेन रूपेणोपयुक्ता ऽऽसीत् स्वादुरभूदित्यर्थः। तत्र प्रवृत्ते तु तादृश्येनाऽभूत्। आदौ रूपयुक्ता आदौ आरम्भे 'रु'वर्णेनोपयुक्ता रुद्राक्षाऽऽलिरित्यर्थः। नीरसत्वेन रुद्राक्षालिवदनास्वादनीया ऽभूदिति भावः। अथ मध्ये इक्षुप्रभवा सिता शर्करा अधिका स्वादुरभूत्। ततो मध्ये त्वया वाग्रसे किंचिदुन्मेषिते तादृशी सिता मध्ये अधिकैवाऽभूत्। मध्ये ऽधिगतः कः ककारो यस्यां सा सिकता ऽभूदित्यर्थः। नीरसत्वेन वालुकावदनास्वादनीया ऽभूदिति भावः। अथ अग्रे उपरि भवने स्वर्गे स्थिता जना देवाः अभियुक्ताः कृतोद्यमा यस्यां सा सुधा हेति हर्षे आस्या आस्याय हिता आस्या, शरीरावयवाद्यत्। मुखप्रिया ऽऽसीत्। ततस्त्व स्वादौ वाग्रसे जाग्रति सति पूर्णदशायामित्यर्थः। तादृश्येवाऽग्रजनाऽभियुक्ता सुधा हास्या ऽऽसीत्। अग्रे प्रान्ते जातो यो 'ना'शब्दस्तेनाऽऽभियुक्ता सुधा सुधाना संपन्ना ऽत एव हास्योपहसनी ऽयाप्यभूत् सुष्ठुभ्रष्टयववन्नीरसत्वादिति भावः। अयं वाग्रसस्याऽवस्थाविशेषो

---

स्याऽवस्थायामधिका (विशेषमधुरा) इक्षूद्भवा सिता (शर्करा) ऽपि तथैव मध्ये ऽधिका (अधिगतककारा सिकता) तद्वद्रुक्षा आसीत्, तथा अग्रजनैः श्रेष्ठजनैर्देवैरभियुक्ता (समादृता) हा हाते खेदे आस्याय हिता वदनप्रियापि सुधा तथैव हास्या परिहसनीया ऽग्रे ऽन्ते जातेन नाशब्देन युक्ता सती (सुधाना) भ्रष्टयववद्विरसा भाति इमेति वचनरसस्य माधुर्यं निखिलातिशायत्याह।

बयःकृतो वा प्रकटनकृतो वा बोध्यः । इन्द्रवज्रावृत्तम् । रूपकालङ्कारः ॥ ८४ ॥

अथ दन्तान् स्तौति—

निःसारवंशजठरे न्यविशन्त हन्त
दन्तद्युतिप्रातिभटास्तव मौक्तिकौघाः ।
मातर्द्विजव्रजविरोधितया स्थितानां
मातङ्गमौलिकलना ऽप्युचितैव तेषाम् ॥ ८५ ॥

निरिति । हे मातः! तव दन्तद्युतीनां प्रतिभटाः शत्रवः मौक्तिकानां मुक्तानां मुक्तियोग्यानां चौघाः निःसारवंशजठरे हीनाऽन्वयमध्ये ऽसारवेणूदरे च न्यविशन्त, द्विजानां दन्तानां ब्राह्मणानां च व्रजस्य विरोधितया स्थितानां तेषां मौक्तिकौघानां मातङ्गानां गजानां चण्डालानां च मौलिषु कलना स्थितिरुचिता युक्तैव । वसन्ततिलका श्लेषो ऽर्थान्तरन्यासश्च । अत्र पद्ये 'त्वद्दन्तपङ्क्तिरिपवः किल मौक्तिकौघा निःसारवंशजठरे न्यविशन्त के चित् । मातङ्गकेषु कतिचि च हितं कथं हि मातर्द्विजव्रजविरोधितया स्थितेभ्य' इति पाठे विरचिते सौष्ठवसाक्षिणः सुधियः ॥ ८५ ॥

---

८५ हे मातः! तव दशनकान्तिरिपवो मौक्तिकसङ्घा निःसारवंशजठर ( असारवेणुमध्ये, तुच्छकुलमध्ये च ) न्यविशन्त हन्त, द्विजविरोधितया ( दन्तविरोधेन, ब्राह्मणद्वेषेण च ) स्थितानामेषां मौक्तिकसङ्घानां मातङ्गमौलिकलना ( गजकुम्भस्थितिः, चण्डालश्रेष्ठतया स्थितिश्च ) योग्यैवेति मौक्तिकविशदत्वं दन्तानां प्रतिपादयति ।

रमे रसज्ञाऽञ्चलशारदाया
रदावली ते रमणीयरूपा ।
मधुप्रतिक्षेपिमनोऽनुकूले
मन्दारमालेव शुभा विभाति ॥ ८६ ॥

रमे इति । हे मधुप्रतिक्षेपिमनोऽनुकूले मधुरिपुचित्ताऽनुसारिणि रमे ! रमणीयरूपा ते रदावलिः रसज्ञाऽञ्चलशारदाया जिह्वाऽग्रवर्तिसरस्वत्याः शुभा मन्दारमालेव विभाति। उपजातिवृत्तम् । उत्प्रेक्षालङ्कारः ॥ ८६ ॥

प्रकाशते सज्जघनागमे त्वयि
प्रगल्भशोभोदयिनीरदावलिः ।
रमे मुकुन्देन किलाऽमुना ऽऽदृता
द्युतिर्यदीया सहसोन्मिषन्मुदा ॥ ८७ ॥

प्रकाशते इति । हे रमे, हे सन् जघनस्य नितम्बस्य आगमः प्राप्तिर्यस्यास्तत्संबुद्धौ त्वयि प्रगल्भः शोभाया उदयो यस्या

---

८६ हे मधुरिपुचित्ताऽनुकूले रमे! सुन्दररूपा ते दशनपङ्क्तिः जिह्वाऽग्रवर्तिन्याः सरस्वत्याः शिवा मन्दारकुसुममालिकेव शोभते इति दन्तावलेरतिविशदत्वं बोधयति ।

८७ हे सन् जघनस्याऽऽगमो यस्यास्तादृशि रमे ! त्वयि प्रौढशोभाविर्भावा रदाऽऽवलिः दन्तपङ्क्तिः राजते । यदीया कान्तिरुत्कर्षेण अमुना ( मुशब्दरहितेन ) मुकुन्देन ( कुन्देन ) महमा ऽऽदृता । एवं सज्जघनाऽऽगमे संनद्धवर्षर्तुस्वरूपायां त्वयि समधिकशोभाशालिनी नीरदानां ( मेघानाम् ) आवलिः शोभते, यदीया नीलद्युतिरुद्यत्प्रमोदेनाऽनेन मुकुन्देन भगवता स्वीकृता ( भगवतो नीलवर्णत्वात् ) इति श्लेषेण वदन् दन्तानां कुन्दसुन्दरत्वं प्रतिपादयति ।

अस्ति सा चासौ रदानाम् आवलिः पङ्क्तिः प्रकाशते उन्मिषन्ती मुद् विकासो यस्य तेनाऽमुना मुकाररहितेन मुकुन्देन कुन्देनेत्यर्थः । कृताऽऽदरेत्यर्थः । अन्यत्र अयि रमे ! सज्जः जलदाने सन्नद्धो यो घनागमो वर्षाकालः तत्र तु प्रगल्भः शोभोदयो ऽस्ति यस्याः सा नीरदावलिर्मेघपङ्क्तिः प्रकाशते, यदीया द्युतिः श्यामला उन्मिषन्मुदा विकसदानन्देनाऽमुना ऽनेन मुकुन्देन हरिणा ऽऽदृता स्वदेहे स्वीकृतेत्यर्थः । वंशस्थं वृत्तम् । श्लेषालङ्कारः ॥ ८७ ॥

आप्तीकृतानाममुकेन विन्द-
न्मुदा मुकुन्देन सदादृतानाम् ।
शुचिद्विजानां ननु तावकानां
मुक्ताऽऽकृतिर्विश्वसवित्रि युक्ता ॥ ८८ ॥

आप्तीति । हे विश्वसवित्रि ! विन्दतां मुद् यस्मिन् स तेन अमुकेन मुकाररहितेन मुकुन्देन कुन्दकुड्मलेन आप्तीकृतानां मित्रीकृतानां, साजात्यात् । सद्भिर्नक्षत्रैरादृतानाम्, अतितेजस्कत्वात् । तावकानां शुचीनां धवलानां द्विजानां दन्तानां मुक्ताकृतिः मौक्तिकतुल्याकारः युक्ता । एतदेव श्लेषेण समर्थयति

---

८८ हे जगन्मातः ! विन्दन्मुदा ( प्राप्तविकासेन ) अमुकेन ( मुकाररहितेन ) मुकुन्देन ( कुन्देन ) आप्तीकृतानां मित्रीकृतानां सद्भिर्नक्षत्रैरादृतानां तावकानां शुचिवर्णानां द्विजानां दन्तानां मुक्ताकृतिः ( मुक्ताफलाऽऽकारः ) युक्ता । एवं विन्दन्मुदा प्राप्तहर्षेणाऽमुकेनाऽमुना मुकुन्देन स्वीयपक्षे कृतानां सत्पुरुषैरादृतानां पवित्राणां द्विजानां ( ब्राह्मणानां ) मुक्ताकृतिः ( मुक्तपुरुषाऽऽकारः ) युक्तैवेति श्लेषेण ब्रुवन् दन्तानां कुन्दनक्षत्रमौक्तिकतुल्यतां वक्ति ।

विन्दन्मुदा अमुना मुकुन्देन आप्नीकृतानां स्वीयत्वेन परिगृहीतानां सद्भिः साधुभिरादृतानां शुचीनां शुद्धानां द्विजानां विप्राणां मुक्तानां सनकादीनामिव तेजोमयी दिव्या आकृतिः युक्तैवेति भावः । उपजातिवृत्तम् । श्लेषसमालङ्कारौ ॥ ८८ ॥

हन्तारस्तमसां दिशन्तु कमले दन्ता मुदं तावका
येषूद्दामजपासपक्षरसनाच्छायोपरक्तांशुषु ।
उच्चैःपक्विमदाडिमभ्रमवशादुत्पित्सुकेलीशुक-
प्रत्यावर्तनखेदनिःसहतया पाणिर्विशेषाऽरुणः ॥ ८९ ॥

हन्तार इति । भोः कमले ! उद्दामाया विकसिताया जपायाः 'जाश्विनी' इति ख्यातपुष्पस्य सपक्षायाः सदृश्या रसनायाश्छायया कान्त्या उपरक्ता अंशवः किरणा येषां तेषु येषु दन्तेषु उच्चैराधिक्येन पक्विमानि पक्वानि यानि दाडिमानि दाडिमफलानि तेषां भ्रमवशात् उत्पित्सूनां उड्डानेच्छूनां केलीशुकानां क्रीडाकीराणां प्रत्यावर्तनस्य निराकरणस्य खेदेन यो निःसहः असहमानः श्रान्त इति यावत् । तस्य भावस्तत्ता तया पाणिरपि विशेषाऽरुणः अतिरक्तो जातः ते तमसां तिमिराणाम् अज्ञानानां च हन्तारस्तावका दन्ता मुदं दिशन्तु ददतु । अत्र तद्गुणाऽतिशयोक्तिभ्रान्त्यलङ्काराः । शार्दूलविक्रीडितं वृत्तम् ॥८९॥

---

८९ हे कमले ! तमसाम् ( अन्धकाराणाम्, अज्ञानानां च ) नाशकास्त्वदीया दन्ता नो मुदं ददतु, विकसितजपाकुसुमसदृशजिह्वाकान्तिरक्तीकरणेषु येषु ( दन्तेषु ) उन्नतपरिपक्वदाडिमफलभ्रान्त्या ( तदाकर्षणाय ) उत्पतितुमिच्छूनां क्रीडाकीराणामपसारणाऽऽयासपरिश्रान्ततया ते करो ऽधिकाऽरुणो भवतीत्याह ।

अथ रसज्ञां वर्णयति—

कन्ये सिन्धोः का ऽपि मृद्वी सुहृद्यां
दद्याद्विद्यां त्वद्रसज्ञा मनोज्ञा ।
यत्र व्यक्तो रक्तिमा वक्ति मात-
र्वाचां देव्या नित्यनृत्ताऽभिघातम् ॥ ९० ॥

कन्ये इति । हे सिन्धोः कन्ये, भो मातः ! यत्र यस्यां व्यक्तः स्फुटो रक्तिमा लौहित्यं कर्तृ वाग्देवताया सरस्वत्याः नित्यं प्रत्यहं नृत्तस्य नर्तनस्य नृत्तेन वा अभिघातं प्रहारं वक्ति कथयति सा प्रसिद्धा का ऽपि निरुपमा मृद्वी मृदुला मनोज्ञा । मनोज्ञं मञ्जु मञ्जुलमित्यमरः । तव रसना जिह्वा सुष्ठु हृदयस्य प्रियां सुहृद्यां, हृदयस्य हृल्लेखपदण्लासेष्विति हृदादेशः । विद्यामात्मज्ञानरूपां दद्यात् । अत्र देवीरसनारक्तिम्नि वाग्देवतानृत्ताऽनुमानादनुमानालङ्कारः । शालिनीवृत्तम् ॥ ९० ॥

प्रह्वा जिह्वां तव तु शरणीकुर्महे शर्महेतुं
रागादागांस्युपचितवतो रक्षितुं या रमे नः ।

---

९० हे समुद्रकन्ये ! अनिर्वचनीयस्वरूपा मृदुला सुन्दरी ते जिह्वा विद्यां ददातु, यत्र स्फुटा ऽरुणिमगुणो वाग्देवतायाः सार्वदिकनृत्यजातमभिघातं बोधयतीति जिह्वाया वाग्देवीनृत्यरङ्गत्वमारुण्यं च प्रतिपादयन्नाह ।

९१ हे रमे ! या ( जिह्वा ) प्रेम्णा ऽर्जिताऽपराधानस्मान् रक्षितुं वैकुण्ठाऽचलपतेः कोपाविलोपनाऽनुकूलाः शोभना वाचो भूय उक्त्वा श्रमेण प्रभूतमारुण्यं दधाति सुखहेतुं तां ते रसनां नम्राः सन्तो वयं

वारं वारं वृषगिरिपतेः कोपलोपाऽनुरूपाः
सूक्तीरुक्त्वा नियतमयते शोणिमानं श्रमेण ॥ ९१ ॥

यद्वा इति । भो रमे ! या रागात् कामादिदोषात् आगांस्य-पराधान् उपचितवतः संपादयतो नो ऽस्मान् रक्षितुं वारं वारं पुनः पुनः कोपलोपे क्रोधशान्तौ अनुरूपा योग्याः सूक्तीः उक्त्वा नियतं निश्चितं शोणिमानं लौहित्यम् अयते प्राप्नोति, अय गतावित्यस्माल्लट् । तां शर्मणो हेतुं तव जिह्वां यद्वा नम्राः सन्तः शरणीकुर्महे आश्रयामः । मन्दाक्रान्तावृत्तम् । उत्प्रेक्षा-लङ्कारः ॥ ९१ ॥

कंसद्विषो महिषि काननचान्द्रिकेति
दोषाप्ययाय रसनामवनात्मिकां ते ।
प्राप्ता ऽपि पद्मजवधूर्वनजौकसस्ते
सङ्गादिवाऽधिकवनस्थितिमेति भूयः ॥ ९२ ॥

कंसेति । हे कंसद्विषो हरेर्महिषि पट्टवनिते ! पद्मजस्य ब्र-

---

शरणीकुर्महे इति जिह्वायामारुण्यप्राप्तौ स्वाऽपराधक्षमापकभूयोवा-ग्गुम्फारणश्रमस्य कारणत्वमुत्प्रेक्षमाण आह ।

९२ हे कंसरिपुप्रधाननायिके ! पद्मजवधूः ( शारदा ) कान-नचन्द्रिका ( कस्य ब्रह्मणो मुखे ज्योत्स्ना रूपा, अत एव अरण्ये प्रसृता ज्योत्स्नारूपा ) इति दोषपरिमार्जनाय अवनात्मिकां ( वनभिन्नस्वरू-पाम, रक्षकरूपां च ) ते रसनां प्राप्तापि तत्रापि वनजौकसः ( पद्म-निलयायाः, अरण्यसञ्जातवासायाश्च ) ते सङ्गादिव पुनरपि अधि-कवनस्थितिम ( विशेषां कवितास्थितिम, अधिकामरण्यस्थितिम ) एतीति श्लेषेण कथयन् जिह्वायाः सरस्वतीनिवासायाः समधिकक-वितापटुत्वं बोधयति ।

ह्मणः वधूः सरस्वती चन्द्र इव चन्द्रिका श्वेतत्वेन चन्द्रप्रतिमा ऽहं कस्य ब्रह्मण आनने स्थितेति काननचन्द्रिका जाता ऽस्मि सा कविप्रसिद्ध्या अरण्यरोदनवन्निष्फलत्वरूपो दोषः प्राप्तः तस्याप्ययाय नाशाय अवनात्मिकां वनाऽभावरूपाम्, अवनं जगद्रक्षणं तत् आत्मनि यस्याश्च तां तव रमनां रसज्ञां प्राप्ता, ततश्च अवनचन्द्रिकेति संपद्यमानत्वात् पुनरुक्तदोषनिरासः। तत्रापि भूयः पुनः वनजे कमले ओकः वासस्थानं यस्यास्तस्याः वने जातम् ओकः यस्याश्च तस्याः। धिष्ण्यमोको निवसनमित्यमरः। ते तव समागमात् मेलनात् अधिकवनस्थितिर्जाता युक्तं विधिविमुखायाः दैवप्रत्यङ्मुखायाः ब्रह्मपराङ्मुखायाश्चेति कवने कवितायाम् इत्यधिकवनं तत्र स्थितिरेतीति विरोधपरिहारः(?)वसन्ततिलकावृत्तम्। श्लेषविरोधाभासविषादनालङ्काराः॥ ९२॥

अभ्यर्चतामनघवाङ्मयपारदाया
रूपं रुचा तुलितशारदनीरदायाः।
वन्दीभवत्प्रथिततुम्बुरुनारदाया
वन्दे तवाऽम्ब रसनाऽञ्चलशारदायाः॥ ९३ ॥

अभीति। हे अम्ब! अभ्यर्चतां पूजकानाम् अनघवाङ्मयस्य निर्दोषशब्दजातस्य पारदायाः पर्यवसानदायिन्याः रुचा कान्त्या तुलितः शरदि भवः शारदः, सन्धिवेलाद्यृतुनक्षत्रेभ्य इत्यण्। नीरदो मेघो यया तस्याः वन्दीभवन्तौ

---

९३ हे अम्ब! स्वपूजकानामनिन्द्यवाक्प्रपञ्चपारप्रापिण्याः कान्त्या (धवलया) ऽनुकृतशरत्कालजमेघायाः, वैतालिकीभवत्प्रसिद्धतुम्बुरुनारदायास्ते जिह्वाऽग्रवर्तिन्याः सरस्वत्याः रूपमभिवादये इत्याह।

स्तावकीभवन्तौ प्रथितौ प्रख्यातौ तुम्बुरुनारदौ यस्यास्तस्यास्तव रसनाऽञ्चलस्य जिह्वाऽग्रसम्बन्धिन्याः शारदायाः सरस्वत्याः रूपं वन्दे नमामीत्यर्थः। वसन्ततिलकावृत्तम् ॥ ९३ ॥

अथौष्ठं वर्णयति—

मुकुन्दकान्ते मुखपद्मकान्ते-
स्तवाऽधरो ऽयं तरुणाऽऽतपो वा।
आनन्दकल्याऽवसरे मुरारे-
राविर्भवन् प्रागरुणोदयो वा ॥ ९४ ॥

मुकुन्देति। हे मुकुन्दस्य कान्ते प्रिये! तवाऽयमधरोष्ठः मुखपद्मकान्तेः तरुणश्चासावातपश्च प्रकाशः वा, मुरारेरानन्द एव कल्यावसरः प्रातःसमयः, प्रत्यूषो ऽहर्मुखं कल्यमुषः प्रत्युषसी इत्यमरः। तत्र प्रागाविर्भवन् प्रकटीभवन्नरुणोदयो वा। यद्दर्शनानन्तरं हरेरानन्दो भवति तादृगिति भावः। उपजातिवृत्तम्। सन्देहालङ्कारः॥ ९४ ॥

बिम्बोष्ठयोः पृथगवस्थितयोः कदा चित्
सन्धौ कृते जननि साधुपदे निविष्टैः।

---

९४ हे मुकुन्दप्रिये! अयं तवाऽधरोष्ठो मुखकमलकान्तेर्नवीनाऽऽतपः किं? यद्वा मुरजित आनन्दप्रभातसमये प्रथममाविर्भवन्नरुणोदयो वा? इति विकल्पनाऽधरं रक्तिमाऽतिशयं बोधयन्नाह।

९५ हे जननि! विरुद्धतया स्थितयोः बिम्बफलतावकौष्ठयोः शुभपदाऽवस्थितैर्महापुरुषैः सन्धौ (सामप्रयोगे) कृते सति अयं तवौष्ठो बिम्बफलाय स्वीयं प्रधानमरुणिमवर्णं ददानो बिम्बफलस्य तुच्छं वर्णं विनाशयति। एवं पदविभागेन स्थितयोर्बिम्बौष्ठशब्दयोः साधुपदे निविष्टैः (वैयाकरणैः) 'ओत्वोष्ठयोः समासे वे'ति शास्त्रा-

ओष्ठस्तवैष वितरन्निजमुख्यवर्णं

बिम्बाय लुम्पति च तस्य जघन्यवर्णम् ॥ ९५ ॥

बिम्बेति । भो जननि ! पृथङ्मिथो विरुद्धत्वेन स्थितयो- बिम्बत्वदोष्ठयोः साधुपदे सम्यग्व्यवसाये निविष्टैः संभावित- जनैरित्यर्थः । सन्धौ सामनि कृते सति तवैष ओष्ठः निजं मु- ख्यम् उत्तमम् वर्णं रक्तिमानं बिम्बाय ददत् तस्य जघन्यं हीनं वर्णम् ईषद्रक्ततां लुम्पति विनाशयति उभयोः सारूप्यं संप- न्नमिति भावः । एतच्छ्लेषेण समर्थयति—बिम्बशब्दे ओष्ठशब्दे च पृथग्भिन्नतया स्थितयोः साधूनि पदानि यस्मिन् तस्मिन् व्या- करणे निविष्टैर्जनैः सन्धौ मेलने कृते ओष्ठशब्दः निजं मुख्यं वर्णम् ओकारं ददद् बिम्बस्य जघन्यं चरमं वर्णम् अकारं लुम्पति बिम्बोष्ठ इति। ओत्वोष्ठयोः समासे वेति शास्त्रेण पररूपा- ऽऽपादनात् एकः पूर्वपरयोरित्यधिकारात्पररूपमुभयोः स्थाने जातम्, एवं च परस्परशत्रुभूतस्यौष्ठस्य रूपं रक्तिमा उभयत्र संपन्न इत्यपि युक्तिसामञ्जस्यम् । एतत्कविना पररूपसद्भावपक्ष- मवलम्ब्योच्यते । बिम्बौष्ठ इति पक्षे ऽपि स्वं मुख्यं वर्णं वृद्धं कृत्वा ददातीति विच्छित्तिविशेषः । यदन्यस्मै देयं तत्सम्यक् कृत्वा दातव्यमिति संभावितानां शैली । वसन्ततिलकावृत्तम् । श्लेषालङ्कारः ॥ ९५ ॥

वैकुण्ठकान्ते वचनाऽधरौ द्वौ

वक्त्रे तवाऽऽस्तामममृताऽवतारौ ।

---

ऽनुसारेण पररूपरूपे सन्धिकार्ये कृते ओष्ठशब्दो निजमाद्यवर्णमो- कारं बिम्बशब्दीयाऽकाराय ददत् तस्य बिम्बशब्दस्य चरममकारं लु- म्पतीति श्लेषेण ब्रुवन् ओष्ठे बिम्बफलाऽधिकमारुण्यं प्रकटयति ।.

९६ हे विष्णुप्रिये ! तव मुखे द्वौ वचनाऽधरोष्ठौ पीयूषाऽवतारा-

आद्ये तु वर्णः शुकलालितो ऽभू-

दन्त्ये पुनः किंशुकलालनीयः ॥ १६ ॥

वैकुण्ठेति। भो वैकुण्ठस्य हरेः कान्ते! वैकुण्ठो विष्टरश्रवा इत्यमरः। तव वक्त्रे मुखे वचनं चाऽधरश्चेति द्वौ अमृतस्याऽवतारौ आस्तां बभूवतुः, तयोर्मध्ये आद्ये वागमृते वर्णो ऽक्षरसमूहः शुकपक्षिणा लालितो ऽभिलषितः, तु पुनरन्त्ये ऽधरे वर्णः रक्तकान्तिस्तु किंशुकेन पलाशपुष्पेण लालनीयः श्लाघ्यो ऽभूत्। इन्द्रवज्रावृत्तम्। उत्प्रेक्षाश्लेषावलङ्कारौ ॥ १६ ॥

रागाऽवनेरपि तवाऽधरजीवकस्य

राजीववासिनि निराकृतपल्लवस्य।

अच्छैर्द्विजैः परिचयादमृतस्य रीति-

मारोहतः समुचितो ऽरुणबिम्बभेदः ॥ १७ ॥

रागेति। भो राजीववासिनि! रागस्य रक्तताया: विष-

---

बभूवतां, तयोर्मध्ये आद्ये वर्णः ( अक्षरसङ्घः ) शुकलालनीयः ( कीराऽऽदरणीयः ) अन्त्ये ऽधरे च वर्णः रक्तिमा किंशुकलालनीयः ( पलाशकुसुमकालनीयः ) अभूदिति अधरस्य पलाशकुसुमाऽरुणत्वं बोधयति।

१७ हे कमलवासिनि! रागाऽवनेरपि ( रक्तिमस्थानस्य, विषयाऽनुरागाश्रयस्य चापि ) निराकृतपल्लवस्य ( निर्जितकिसलयस्य, तिरस्कृतविटस्य च ) अच्छैः ( विशदवर्णैः, पवित्रैश्च ) द्विजैः ( दन्तैः, ब्राह्मणैश्च ) सम्बन्धात् अमृतस्य ( पीयूषस्य, मोक्षस्य च ) रीतिं ( समतां, पद्धतिं च ) आरोहतस्तवाऽधरजीवकस्य ( बन्धुजीवकुसुमतुल्यस्याऽधरोष्ठस्य, नीचजन्तोश्च ) अरुणबिम्बभेदः ( आरक्तबिम्बफलाद् भिन्नत्वं, सूर्यमण्डलभेदश्च ) युक्त एवेति श्लेषेणाऽधरस्य बन्धुजीवकुसुमबिम्बफलाभ्यामप्यधिकमारुण्यमस्त्यह।

यप्रीतेश्चाऽवनेर्भूमेरपि निराकृतः निषिद्धः पल्लवः किसलयो विटश्च येन। षिङ्गः पल्लविको विट इत्यमरः। तव अधरजीवकस्य ओष्ठस्य नीचप्राणिनश्च अच्छैः शुक्लैः पवित्रैश्च द्विजैर्दन्तैर्विप्रैश्च परिचयात् समागमात् अमृतस्य सुधाया मोक्षस्य च। अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते, अयाचिते च मोक्षे चेति मेदिनी। रीतिं मादृश्यं पद्धतिं चाऽऽरोहतः अरुणस्य रक्तस्य बिम्बस्य फलस्य पक्षे ऽरुणबिम्बस्य सूर्यबिम्बस्य च भेदः समुचितो युक्त एवेति। अत्र प्रमाणं पूर्वं लिखितम्। वसन्ततिलकवृत्तम्। श्लेषसमालङ्कारौ ॥ ९७ ॥

तव रदवसने गुणोत्तरे ऽस्मि-
न्नधरपदस्य विरोधिलक्षणैव।
अमृतकृदपि माधवो मुनीना-
ममृतमुपैतुममुं निषेवते यत् ॥ ९८ ॥

तवेति। गुणैस्तन्तुभिर्माधुर्यादिभिश्चोत्तरे श्रेष्ठे तव रदवसने ओष्ठे ऽधरो नीच इति पदं तस्य विरोधिलक्षणैव। कुतः? यद्यस्मान्मुनीनाममृतकृन्मोक्षदो माधवो हरिरमृतं सुधां मुक्तिं

---

९८ गुणैः (रक्तिममाधुर्यादिभिः, तन्तुभिश्च) उत्तरे (श्रेष्ठे, उत्तरीयस्वरूपे च) तवाऽस्मिन् रदवसने (दन्तच्छदे, दन्तरूपे पटे च) अधरपदस्य विरोधिलक्षणैव, गुणोत्कर्षोद्देशेन नीचपदप्रयोगे उत्तरीये अधराऽम्बरपदप्रयोगे च मुख्यार्थबाधाद् विरोधिलक्षणैव, यतो हि मुनीनाममृतस्य (मोक्षस्य पीयूषस्य च) प्रतिपादको माधवोऽमृतं (मुक्तिं सुधां, च) प्राप्तुमेनमधरं निषेवते इति श्लेषेण पराऽमृतप्रदेन माधवेनाऽमृतलाभाय नितरां सेविततया श्रेष्ठतमे दन्तवाससि अधरशब्दप्रवृत्तिर्विरोधिलक्षणयैवेति वदन् अधरस्याऽमृताऽधिकमधुरत्वं प्रतिपादयति।

च उपैतुं प्राप्तुम् अमुमधरं निषेवते भजते तत इति पूर्वेण संबन्धः । विरोधिलक्षणा नाम शक्यार्थाऽसंभवे तत्प्रतियोग्यर्थग्रहणमित्यद्वैतसिद्ध्यादौ वेदन्तशास्त्रे प्रसिद्धम् । अत्र भगवत्सेव्यस्याऽधरत्वमसंभवीति तद्विरोधिन्युत्तमत्वरूपार्थे प्रवृत्तिरिति । अतो महतामपि श्लाघ्यस्यौष्ठस्य नाऽधरपदमुचितमिति भावः । औपच्छन्दसिकं वृत्तम् । श्लेषकाव्यलिङ्गालङ्कारौ ॥९८॥

हरिगृहिणि हरिद्रालिप्तया शम्पया ते
तनुमतनुत वेधास्तप्तकार्तस्वराऽऽभाम् ।
अधरमथ च तत्राप्यम्ब लिम्पन् सुधौघै-
रनयदनाणिमानं शोणिमानं किलैनम् ॥ ९९ ॥

हरीति । हे हरिगृहिणि ! वेधा ब्रह्मा ते तनुं हरिद्रया लिप्तया शम्पया विद्युता तप्तकार्तस्वराभां तप्तस्वर्णसदृशीमतनुत चकार । अथ च हे ऽम्ब ! तत्र तनौ अधरमपि सुधाया अमृतस्य चूर्णस्य चौघैर्लिम्पन् सन् नास्ति अणिमा यत्र तं महान्तं शोणिमानं रक्तत्वमनयत् प्रापयामास किल । सिद्धविषया हेतूत्प्रेक्षा ऽलङ्कारः । मालिनीवृत्तम् ॥ ९९ ॥

---

९९ हे हरिकुटुम्बिनि ! ब्रह्मा हरिद्राऽनुलिप्तया विद्युता प्रतप्तकनकगौरीं ते तनुं निर्ममे किम ? तदनु तस्यां तनौ अधरोष्ठं सुधौघैः ( पीयूषैः, चूर्णसङ्घैश्च ) लिम्पन् सन् एनमधरं महान्तं रक्तिमानं प्रापयामास किं ?इत्युत्प्रेक्षमाणो हरिद्रालिप्तायां तनौ वर्तमानस्याऽधरस्य चूर्णलेपे हरिद्राचूर्णयोगे रक्तिमप्राप्तिरुचितैवेति बोधयन् तनोर्हरिद्रालिप्तविद्युत्साम्य,मधरस्य चाऽमृततुल्यत्वं सूचयन्नाह ।

प्रायस्ते जगदम्ब चुम्बनविधौ बिम्बाधराऽऽलम्बनं
संक्रान्तं मधु नन्दनन्दनमुखे सङ्गीतकाले पुनः ।
तस्माद्वेणुमवाप तद्गतरसाऽऽस्वादी तदादित्सया
वंशान् कृष्णपुरन्ध्रि रन्ध्रयति किं तद्वंशजातानलिः ॥१००॥

प्राय इति । भो जगदम्ब ! ते चुम्बनविधौ बिम्बाऽधराऽऽलम्बनं बिम्बाऽधरसम्बन्धि मधु अमृतं नन्दनन्दनस्य मुखे प्रायः संक्रान्तं मिश्रितं, तदेव पुनः सङ्गीतकाले तस्मान्नन्दनन्दनमुखाद्वेणुमवाप प्राप, ततश्च तद्गतरसस्य वेणुगताऽमृतस्याऽऽस्वादी तस्य मधुन आदित्सया ग्रहणेच्छया हे कृष्णपुरन्ध्रि ! तद्वंशजातान्मुरल्यन्वयजातान्वंशान्वेणूनलिर्भृङ्गो रन्ध्रयति छिद्रयुक्तान्करोति किम्?इत्युत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥१००॥

विद्वज्जनै रुचिरविद्रुमपङ्क्तिरेषा
विज्ञायतां मदधरादधरा किलेति ।

---

१०० हे जगन्मातः ! कृष्णपत्नि ! तव मुखचुम्बनाऽवसरे ऽधरबिम्बवर्ति मधु भगवन्मुखे प्राय उपसंक्रान्तम्, ततश्च वंशीवादनसमये तद् भगवन्मुखाद्वेणुं प्राप, अत एव तद्गतरसाऽऽस्वादी भ्रमरस्तस्य रसस्य जिघृक्षया भगवद्वेणुवंशोत्पन्नान् वंशान् छिद्रयति किम्? इति दीर्घपरम्परोपसंक्रान्तत्वदधरमधुसमास्वादनाय भ्रमरः साधारणवंशाच्छिद्रकान् करोति किम्?इत्युत्प्रेक्षमाणो ऽधरे निरतिशयं माधुर्यं सूचयन्नाह ।

१०१ हे समुद्रकन्ये ! पण्डितैरेषा विद्रुमपरम्परा ममाऽधरोष्ठान्न्यूनरक्तिमगुणा ज्ञायतामिति प्रत्यक्षतः प्रकाशनाय त्वं कण्ठे विद्रु-

प्रत्यक्षतः प्रकटनाय पयोधिकन्ये
कण्ठे बिभर्षि किल विद्रुममालिकां त्वम् ॥ १०१ ॥

विद्वज्जनैरिति। हे पयोधिकन्ये! एषा विद्रुमाणां पङ्क्तिः। अथ विद्रुमः पुंसि प्रवाल इत्यमरः। विद्वज्जनैः किल निश्चये ममाऽधरादधरोष्ठाऽपेक्षया अधरा न्यूनकान्तिरिति विज्ञायताम् इत्येवं प्रत्यक्षतः साक्षात्प्रकटनाय विद्रुममालिकां कण्ठे बिभर्षि किमिति। उत्प्रेक्षालङ्कारः। वसन्ततिलकावृत्तम् ॥ १०१ ॥

अथ कपोलौ कवयति—

कपोलौ ते भातः कनकमयताटङ्कसुषमा-
झराऽऽघाताऽऽरक्तौ जनजननि यत्रैव निहिताः।
अपि प्रौढेन्द्रद्विट्परिवृढवपुःपाटनखराः
समाख्यामन्वर्थां दधति नरसिंहस्य नखराः ॥१०२॥

कपोलाविति। हे जनानां लोकानां जननि मातः! प्रौढेन्द्रद्विषां दैत्यानां परिवृढस्य नायकस्य हिरण्यकशिपोः। प्रभुः परिवृढोऽधिप इत्यमरः। वपुःपाटने शरीरविदारणे खरास्तीक्ष्णाः। तिग्मं तीक्ष्णं खरमित्यमरः। नरसिंहस्य हरेर्नखरा नखाः

---

मत्कण्ठं वहसीत्युत्प्रेक्षमाणो विद्रुमाऽधिकरक्तत्वमधरस्य प्रकटयति।
१०२ हे जननि! यत्र कपोलयोः निहिताः प्रौढहिरण्यकशिपूरोविदारणतीक्ष्णा नरहरेर्नखरा (नखाः) अनुगतार्था न खराः (तीक्ष्णाः न) भवन्ति तौ सौवर्णकर्णाभरणकिरणप्रवाहाऽऽघाताऽरुणौ त कपोलौ विराजेते इति खरा अपि नरकेसरिनखरा यत्र न खरा भवन्ति (सदयं पतन्ति) तयोः कपोलयोः शोभा कापि विलक्षणैवेति वदन् कपोलयो राकिमाऽतिशयं सुकुमारतरत्वं च बोधयन्नाह।

यत्र यत्कपोलयोः निहिताः स्थापिताः सन्तः खरास्तीक्ष्णा न भवन्तीति न खराः इति अन्वर्थां यथार्थां समाख्यामभिधां दधाति तौ कनकमयताटङ्कयोः सुषमाणां परमकान्तीनां झरैः। प्रवाहो निर्झरो इत्यमरः । आघातेन प्रवाहेनाऽऽरक्तौ ते तव कपोलौ गल्लौ भातो दीप्येते इति । अत्र नखरा नखा न खरा न तीक्ष्णा इत्यर्थेन नखरशब्दस्याऽन्यार्थत्वकल्पनान्निरुक्त्यलङ्कारः। शिखरिणी ॥ १०२ ॥

कान्तौ भातः कपोलौ तव यदुपगतां कर्णमाणिक्यकान्तिं
संप्राप्तं चुम्बनेषु प्रियतमवदनादम्ब ताम्बूलरागम् ।
मत्वा हस्ताऽङ्गुलीभिस्त्वमरुणरुचिभिर्मार्जनैर्द्वित्रिरुक्तं
तं दृष्ट्वा दर्पणेह्रीभरनमितमुखी हास्यसे प्रातराल्या ॥ १०३ ॥

कान्ताविति । हे अम्ब ! ययोः उपगतां प्राप्तां कर्णयोर्माणिक्यकान्तिं चुम्बनेषु वक्त्रसंयोगेषु प्रियतमस्य हरेर्वदनात्संप्राप्तं ताम्बूलस्य रागं रक्तिमानं सक्तं मत्वा तं रागम् अरुणरुचिभिरारक्ताभिर्हस्ताऽङ्गुलीभिर्मार्जनैः द्वित्रिरुक्तं द्विगुणितं त्रिगुणितं, पुनश्च दर्पणे दृष्ट्वा ह्रीभरेण लज्जाऽऽधिक्येन नमितं मुखं यस्याः सा त्वं प्रातःकाले आल्या सख्या हास्यसे तौ कान्तौ मनोज्ञौ तव कपोलौ भातः । स्रग्धरा वृत्तम् । भ्रान्त्यनुगुणाऽलङ्कारौ ॥ १०३ ॥

---

१०३ हे अम्ब ! ययोः कपोलयोरुपसंक्रान्तां कर्णाऽऽभरणमाणिक्यद्युतिं चुम्बनाऽवसरेषु संक्रान्तं भगवन्मुखताम्बूलरागं भ्रान्त्वा रक्तकान्तिभिरङ्गुलीभिर्भूयः प्रोञ्छनैर्द्वित्रिगुणितं तं रागं मुकुरे ऽवलोक्य लज्जानम्रमुखी त्वं प्रभाते सख्या मुधा लज्जिता परिहास्यसे तौ ते कपोलौ शोभेते इत्याह ।

अथ कण्ठं वर्णयति—

पाण्डिम्ना हसतेव कैटभरिपुः पाणिस्थशङ्खेन तं
पद्मावासिनि पर्यजीहसदसौ श्यालं हि जैवातृकम्।
हित्वेशं प्रभुरित्यमुं प्रति परीहासाय वक्त्रात्मना
जातेनैवमधः कृतो हिमरुचा त्वत्कन्धरात्मा दरः॥१०४॥

पाण्डिम्नेति। पद्मावासिनि! कैटभस्य रिपुर्हरिः पाण्डिम्ना शुभ्रत्वेन हसता इव पाणिस्थेन हस्तगतेन शङ्खेन प्रयोज्यकर्त्रा श्यालं त्वद्भ्रातरं जैवातृकं चन्द्रं पर्यजीहसदिव परिहासयांचक्रे इव। परिपूर्वाण्णिजन्ताद्धसे हसने इत्यस्माल्लुङि सन्वल्लघुनीति सन्वद्भावे सन्यत इति इत्वे दीर्घोलघोरिति दीर्घः। एवं त्वद्वक्त्रात्मना जातेन हिमरुचा चन्द्रेणाऽयं प्रभुरप्रतिकार्य इति हेतोरमुम् ईशं हित्वा त्यक्त्वा त्वत्कन्धरात्मा दरः शङ्खः प्रतिपरीहासाय प्रतिविनोदाय अधः कृतः अवहेलितः, पक्षे ऽधोदेशे कृत इति प्रत्यनीकालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥१०४॥

अन्तःस्थोष्मोद्गाराद् गृहीतमखिलाम्ब कंसदमनेन।
पाञ्चशरजन्यमभितः प्रतिगर्जति कन्धरा त्वदीयेयम्॥५॥

अन्तःस्थेति। भो ऽखिलाम्ब! अन्तस्थोष्मणो मदनोष्मणो

---

१०४ हे पद्मालये! कैटभजित् पाण्डुतागुणेन हसतेव स्थितेन निजहस्तस्थेन पाञ्चजन्येन त्वद्भ्रातृतया ऽऽत्मनः श्यालं चन्द्रं परिहासयामासेव, एवं परिहासितेन त्वन्मुखाऽऽत्मना जातेन चन्द्रेणाऽयं भगवान् प्रभुरिति तं विहाय प्रतिपरीहासं कर्तुं भगवत्पत्न्यास्तव कण्ठात्मा शङ्खो ऽधरीकृतः (अधोभागे कृतः, निरस्कृतश्च) इति मुखस्य चन्द्रतुल्यत्वं कण्ठस्य च शङ्खतुल्यतां च सूचयन्नाह।

१०५ हे जगदम्ब! कंसरिपुणा ऽन्तर्वर्तिमदनोष्मण उद्गारादतिरेकात् गृहीतं स्वीकृतं पञ्चशरसंबन्धि यज्जन्यं (युद्धं) त-

युद्धगर्वस्य वोद्धारात्कंसदमनेन कृष्णेन गृहीतं स्वीकृतं पञ्चश-रस्य कामस्येदं पाञ्चशरं यज्जन्यं युद्धं त्वदीयेयं कन्धरा कण्ठः प्रतिगर्जति कूजितेनाऽऽविष्करोति। अथ पाञ्चशरजन्यशब्दे या-वन्तस्थोष्माणौ 'यरलवा अन्तस्था रेफः ऊष्मा शकारः तयो-र्वर्णयोरुद्धारान्निष्कासनात्कंसदमनेन गृहीतं पाञ्चजन्यमिति या-वत्। युद्धसमये शङ्खवादनेन योद्धुः स्फुरणं भवति तदर्थं त-स्याऽऽवश्यकत्वात् तं प्रति कन्धरा प्रतिगर्जति प्रतिस्पर्धते। श्ले-षोपमालङ्कारौ गीतिर्वृत्तम् ॥ १०५ ॥

चक्राङ्कतामुपगतं स्तनमुन्नतं ते
वीक्ष्याऽतितिक्षुरयमुच्छ्रयवांस्ततो ऽपि।
कण्ठत्वमेत्य शिरसा निजभुक्तमुक्ता-
हारं च वाहयति तेन तवाऽम्ब शङ्खः ॥ १०६ ॥

चक्रेति। हे ऽम्ब! चक्रस्य चक्रवाकस्य सुदर्शनस्य चाङ्कतां

---

दभितस्ते ग्रीवेयं प्रतिगर्जति, कामयुद्धे रतिसमये कूजति। एवम् पाञ्चशरजन्यशब्दे ऽन्तस्थावर्णौ रेफः, शकारश्च ऊष्मा, तयोरुद्धा-रादुद्वासनाद् अवशिष्टतया गृहीतं पाञ्चजन्यं भगवच्छङ्खमभित-स्त्वदीयेयं कन्धरा प्रतिगर्जति (पाञ्चजन्यसादृश्यं प्राप्नोति) इति कण्ठे पाञ्चजन्यतुल्यतां प्रतिपादयन्नाह।

१०६ हे ऽम्ब! तुल्ययोरन्यतरोत्कर्षे ऽपरः स्पर्धते इति लोक-व्यवहारात् तव स्तनं कोकसादृश्याच्चक्रतामोपगम्याऽत्युन्नतं समीक्ष्य शङ्खस्त्वत्कण्ठरूपतामवाप्य ततो ऽप्युन्नतः सन् विजितेन तेन स्त-नकोकेन स्वोपभुक्तं मुक्ताहारं शिरसा वाहयतीति वदन् श्लेषेणा-ऽऽत्मना पूर्वमुपभुज्य परिमुक्तमाहारमुच्छिष्टं तेन वाहयन् तस्य निजभृत्यत्वमापादयतीति कथयन् स्तनस्य चक्रवाकतुल्यत्वं मुक्ताहा-रलसितत्वं च प्रतिपादयन्नाह।

नामनाय उपगतं ते स्तनं वीक्ष्य अतितितिक्षुरक्षमी। तितिक्षुः क्षमिता क्षमी इत्यमरः। शङ्खस्ते कण्ठत्वमेत्य ततः चक्रादपि उच्छ्रयवानुन्नतः सन्। ऊर्ध्वदेशवर्तित्वादिति भावः। तेन चक्राह्वेन पयोऽपकर्त्रा निजभुक्तः स्वयं गृहीतोपभुक्तः यो मुक्ताहारः पक्षे भुक्तं सन्तं मुक्तमाहारम् उच्छिष्टमित्यर्थः। वाहयति इति। गूढोत्प्रेक्षालङ्कारः। अन्यो ऽपि स्वसमानं प्राप्तोच्चपदं दृष्ट्वा तदीर्ष्यया स्वयमपि तदधिकोच्चतरं पदं लब्ध्वा तेन भृतिं कारयतीति प्रसिद्धम्। वसन्ततिलकावृत्तम् ॥ १०६ ॥

अथ कुचौ कवयति—

जनास्त्रिलोकीजननि स्तनौ ते
कथं पयोजे कथयत्यशेषः।
चतुर्मुखाद्यर्भकजीवनाय
जातं तयोरेव पयो हि भूयः ॥ १०७ ॥

जन इति। भो त्रिलोकीजननि! अशेषो जनः ते स्तनौ पयोजे कमले तोयजे च कथं कथयति? हि यस्माच्चतुर्मुखादीनां, दुर्भरोदराणामिति भावः। ब्रह्मादीनामर्भकाणां जीवनाय तयोः स्तनयोरेव भूयः पुनः पय उदकं दुग्धं च जातमिति प्रथमार्थेन विरोधे द्वितीयार्थेन परिहारः। उपजातिवृत्तम्। श्लेषकाव्यलिङ्गे अलङ्कारौ ॥ १०७ ॥

---

१०७ हे त्रिलोकीमातः! निखिलो जनः, यतः स्तनयोर्ब्रह्मादिशिशुप्राणनाय भूयो दुग्धं समजनि तौ ते स्तनौ पयोजे (कमले, दुग्धजाते च) कथं कथयती?ति श्लेषेण पयःसमुत्पादकयोः स्तनयोः पयोजत्वमनुपपन्नमिति ब्रुवन् तयोः कमलसाम्यं प्रकटीकुर्वन्नाह।

अमृतकलशव्यूहेष्वात्मोद्भवेषु पयोधिना
त्वयि कुचमिषौ निक्षिप्तौ द्वौ विवर्धयितुं जगत् ।
अमृतसहजे यद्दुग्धाऽऽस्वादनोल्बणपाण्डिम-
द्रुहिणरसनावासाद्गौरी बभूव सरस्वती ॥ १०८ ॥

अमृतेति । अमृतसहजे ! पयोधिना ऽऽत्मोद्भवेषु स्वोत्पन्नेषु अमृतकलशानां व्यूहेषु समूहेषु मध्ये कुचमिषौ स्तनरूपौ द्वावमृतकलशौ जगद्विवर्धयितुं त्वयि निक्षिप्तौ, ययोर्दुग्धस्याऽऽस्वादनेनोल्बण उत्कटः पाण्डिमा यस्यां तस्यां द्रुहिणरसनायां ब्रह्मजिह्वायाम् आवासात्सरस्वती गौरी बभूव । कैतवापह्नुत्युत्प्रेक्षोदात्तालङ्काराः । हरिणीवृत्तम् ॥ १०८ ॥

न जातुचिद्वर्णविपर्ययं गते
गुणोत्तरे कन्दुककञ्चुके तयोः ।

---

१०८ हे अमृतसोदरि ! पयोधिना स्वोत्पन्नेषु पीयूषकलशेषु मध्ये द्वौ जगद्वर्धनाय कुचव्याजात् त्वयि विन्यस्तौ, यत्क्षीरास्वादनेनाऽधिकविशदायां ब्रह्मणो जिह्वायां नित्यनिवासात् शारदा गौरी (गौरवर्णा, पार्वती च) बभूवेति शारदायाः गौरीरूपता ऽद्भुतेति वैचित्र्यमाविष्कुर्वन् सरस्वत्या गौरवर्णत्वे त्वत्कुचक्षीरपानावशात्ब्रह्मरसनानित्यनिवास एव हेतुरिति कथनद्वारा चतुर्मुखादीनां भगवतीस्तनन्धयतया जगन्मातृत्वं कुचयोश्चाऽमृतकलशात्मतां प्रतिपादयन्नाह ।

१०९ हे रमे ! कन्दुककञ्चुकशब्दयोः प्रातिलोम्येनोच्चारणे ऽपि न वर्णाऽऽनुपूर्वीव्यत्यय इत्यभिसन्धाय, गुणोत्तरे ( तन्तुरचिते, विनयादिगुणश्रेष्ठे च ) कन्दुककञ्चुके कदा चिदपि वर्णविपर्ययम् ( अक्षरक्रमवैपरीत्यं, ब्राह्मणादिवर्णप्रातिकूल्यं च ) न गते इति हेतोस्त्वत्कुच एव भूमिभृत् ( पर्वतो, राजा च ) उभयोस्तयोर्मध्ये प्र-

स्वमित्रमाद्यं कुरुते रमे ऽन्तिमं
बिभर्ति मूर्ध्ना त्वदुरोजभूमिभृत् ॥ १०९ ॥

नेति । हे रमे ! गुणैर्दाक्षिण्यादिभिस्तन्तुभिश्च उत्तरं कन्दुकं च कञ्चुकं च ते । अनयोः क्लीबत्वस्य हेमचन्द्रेण स्वकोशव्याख्यायामुक्तत्वात् । वर्णस्य रङ्गस्याऽक्षराणां च विपर्ययं विपरीतत्वं जातु चित्कदा चिदपि न गते । कन्दुकं कञ्चुकमेतयोर्विपरीतवाचने ऽपि न स्थितिभङ्ग इति भावः । अत एव तयोराद्यं कन्दुकं स्तन एव भूभृद्राजा गिरिश्च स्वमित्रं कुरुते अन्तिमं कञ्चुकं मूर्ध्ना शिरसा बिभर्ति । अत्र कन्दुकस्य केवलं विनोदौपयिकत्वेन मित्रता, कञ्चुकस्य तु पररक्षणार्थं स्वयं बन्धमनुभवतीत्युत्तमस्वभावत्वात् शिरसा श्लाघनमिति गूढो ऽभिप्रायः । अत्र पुल्लिङ्गपाठस्तु अपपाठः । श्लेषालङ्कारः । वंशस्थं वृत्तम् ॥ १०९ ॥

पुरस्त्वदीयाऽङ्गपुरप्रवेशे
पुराणगोपालभृतावनङ्गः ।

---

थमं ( कन्दुकं ) निजमित्रं कुरुते, ऽन्तिमं ( कञ्चुकं च ) मूर्ध्ना बिभर्तीति श्लेषेण विनयादिगुणसम्पन्नयोर्वर्णवैपरीत्यमनापन्नयोस्तयोः राज्ञा स्वमित्रीकरणाद्यरोवहने योग्ये एवेति ब्रुवन् स्तनयोः कन्दुकसाम्येन सकञ्चुकतया चाऽतिरमणीयत्वं प्रकटयन्नाह ।

११० हे समुद्रपुत्रि ! कामस्तावकशरीररूपनगरप्रवेशाऽवसरे पुराणगोपालभृतौ ( पुराणपुरुषेण गोपालेन भगवता, वृद्धेनाऽऽभीरेण

उरोरुहक्षीरघटौ स पश्य-

न्नुच्चैस्तरां नन्दति सिन्धुकन्ये ॥ ११० ॥

पुर इति। हे सिन्धुकन्ये ! त्वदीयाऽङ्गमेव पुरं नगरं तस्मिन्प्रवेशे तत्समये पुराणगोपालेन पुराणपुरुषश्रीकृष्णेन जरद्गोपेन च भृतौ धृतौ उरोरुहौ कुचावेव क्षीरघटौ पुरो ऽग्रे पश्यन् सः अनङ्गः नन्दति हृष्यति इति शुभशकुनः सूचितः। 'मृच्चाऽम्भोऽर्थघटान्विते' इति मुहूर्तमार्तण्डे शुभशकुनगणनायाम्। रूपकश्लेषालङ्कारौ। उपजातिवृत्तम् ॥ ११० ॥

पुष्पेषुपूजाविधिमाचरिष्यन्

पुण्याहकुम्भाविव पद्मनाभः।

पयोनिधेः पुत्रि महाक्षतैस्ते

पयोधरावम्ब परिष्करोति ॥ १११ ॥

पुष्पेष्विति। हे पयोनिधेः पुत्रि, हे ऽम्ब ! पुष्पेषोः पूजाविधिम् आचरिष्यन्पद्मनाभः पुण्याहकुम्भाविव ते पयोधरौ घटौ स्तनौ च महाक्षतैर्वृहदक्षतैर्नखक्षतैश्च परिष्करोत्यलङ्करोतीव। उत्प्रेक्षाश्लेषरूपकालङ्काराः। उपजातिवृत्तम् ॥ १११ ॥

---

च धारितौ ) कुचरूपौ क्षीरकलशौ पश्यन् शुभशकुनं विचिन्त्याऽतीव सन्तोषं प्राप्नोतीत्याह।

१११ हे सागरसुते ! भगवान् पद्मनाभः कामपूजाविधिं करिष्यन् आदौ पुण्याहकलशाविव ते स्तनौ महाक्षतैः ( महद्भिर्नखक्षतैः, महद्भिरक्षतैश्च ) अलङ्करोतीत्याह।

परामिमावुन्नतिमश्नुवाते
स्मराम्ब सद्यस्तनभूभृतौ ते ।
चराऽचराणामधिपोऽपि चक्री
कराऽर्पणं देवि ययोः करोति ॥ ११२ ॥

परामिति । हे स्मराम्ब, भो देवि ! इमौ ते स्तनाविव भूभृतौ सार्वभौमौ च सद्यः परां श्रेष्ठामुन्नतिं महत्त्वम् अश्नुवाते प्राप्नुतः । यतः चरन्तीति चराः तद्भिन्ना अचराश्च तेषामधिपः चक्रमस्यास्तीति चक्री विष्णुः सम्राट् च ययोः स्तनभूभृतोः करस्य हस्तस्य बलेश्चाऽर्पणं करोति बलिहस्तांशवः करा इत्यमरः । उपेन्द्रवज्रावृत्तम् । श्लेषरूपककाव्यलिङ्गालङ्काराः ॥११२॥

हन्त स्तनौ तव विभागकथाऽनभिज्ञौ
कन्दर्पमातरत एव करादिषु त्वम् ।
अङ्गान्तरेषु पृथगाभरणं ददाना
हारं द्वयोरपि तयोरपृथग् ददासि ॥ ११३ ॥

हन्तेति । हे कन्दर्पमातः ! तव स्तनौ विभागकथायाः पृ-

---

११२ लोके हि चक्रवर्ती राजा यस्मै कराऽर्पणं ( राजग्राह्यधनाऽर्पणं ) करोति स सार्वभौमो महोन्नतो भवतीत्यर्थान्तरमभिसन्धाय श्लेषेण चराऽचराऽधिपो भगवान् चक्रपाणिर्ययोः स्तनयोर्हस्ताऽर्पणं करोति तौ ते इमौ स्तनाविव भूभृतौ ( पर्वतौ, राजानौ च ) उत्कृष्टामुन्नतिम ( औन्नत्यम, उत्कर्षं च ) प्राप्नुत इत्याह ।

११३ लोके ऽविभक्तयोर्भ्रात्रोर्देयं संहततयैव दीयते न पृथगित्यर्थं मनसि निधाय हे कामजननि ! हस्तादिषु विभक्ततया ऽवस्थितेष्ववयवेषु पृथक् पृथगलङ्कारं ददाना ऽपि त्वम अविभक्तयोः ( निरन्तरयोः ) कुचयोर्हाररूपमेकमेवाऽलङ्कारं प्रयच्छसीति हाराऽलङ्कृतयोः स्तनयोः संश्लिष्टत्वेनाऽतिपीवरत्वं वर्णयति ।

थग्वार्ताया अनभिज्ञौ हन्त, अत एव त्वं करादिष्ववयवान्तरेषु पृथक् आभरणमलङ्कारं दत्से ऽसौ ददाना सती। दद दाने इत्यस्माच्छानच्। द्वयोरपि तयोः स्तनयोरपृथगेकमेव हारं भूषामाहारं च ददास्यर्पयसि। वसन्ततिलकावृत्तम्। काव्यलिङ्गमलङ्कारः॥ ११३॥

मुष्णाति मेदिनिभृतां श्रियमुन्नतानां
सूर्याश्रितं परिहसत्यपि साधुचक्रम्।
ऊर्ध्वं च पश्यति रमे त्वदुरोजयुग्म-
मीदृक् चरित्रमविवेकिनि नैव चित्रम्॥ ११४॥

मुष्णातीति। हे रमे रमणीये! त्वदुरोजयुग्मं भवत्कुचद्वन्द्वं उन्नतानामुच्चानां पूज्यानां च मेदिनिभृतां पर्वतानां राज्ञां च श्रियं शोभां मुष्णाति। मुष स्तेये इत्यस्मात्कर्तरि लट्। तथा सूर्येण सूरिभिर्विद्वद्भिश्चाश्रितं साधुचक्रं सुन्दरचक्रवाकं सज्जनसमूहं च परिहसति। शोभाधिक्यादिति भावः। एवमूर्ध्वं पश्यत्युन्नतत्वादिति भावः। अविवेकिन्यविचारिणि विविक्तताशून्ये च ईदृक्परश्रीमोषणादिचरित्रं नैव चित्रमाश्चर्यम्। विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयोरिति मेदिनी। श्लेषार्थान्तरन्यासावलङ्कारौ। वसन्ततिलकावृत्तम्॥ ११४॥

---

११४ विचारशून्यो हि नरो राजधनं चोरयति, विद्वदाश्रितं साधुजनमुपहसति, ऊर्ध्वदृष्टिश्च भवतीत्यर्थान्तरमभिसन्धाय श्लेषेण ते कुचद्वन्द्वमुन्नतानां गिरीणां शोभां हरति, रविमुपाश्रितं चक्रवाकयुगलं साधु हसति, ऊर्ध्वमुखं च भवतीति अविवेकिनि (निबिडे) तस्मिन्नेतद्विचित्रं न भवतीति कुचद्वन्द्वस्य शैलचक्रवाकसादृश्यमुन्नतचूचुकत्वं निरन्तरतया पीनत्वं च प्रतिपादयन्नाह।

उच्चैरतन्वाज्यवतीर्णशक्त्यो-
र्भूयांसि पातुं क्षमयोः पयांसि ।
मातर्महाहारसमृद्धिभाजो-
र्युक्तं हि पीनत्वमुरोजयोस्ते ॥ ११५ ॥

उच्चैरिति । भो मातः ! उच्चैरतनोः कामस्याऽऽजौ युद्धे पक्षे अतनुना बहुना ऽऽज्येन घृतेन चाऽवतीर्णा प्राप्ता च शक्तिर्ययोस्तयोः पुनः भूयांसि बहूनि पयांसि दुग्धानि पातुं रक्षितुं प्राशितुं च क्षमयोः शक्तयोः । पा रक्षणे पा पाने चेत्याभ्यां तुमुन् । महतो हारेणाऽऽहारेण च समृद्धिं भजतस्तयोः ते उरोजयोः पीनत्वं पुष्टत्वं युक्तमित्यर्थः । इन्द्रवज्रावृत्तम् । श्लेषकाव्यलिङ्गे अलङ्कारौ ॥ ११५ ॥

विवेकवार्ताविरहे ऽपि पद्मे
गुरुत्वभाजो ऽस्य कुचद्वयस्य ।

---

११५ बहुलघृतप्रतिपादितशक्त्योर्दुग्धपानक्षमयोर्महत आहारस्य ( अशनीयस्य ) समृद्धिभाजोः पीनत्वमुचितमित्यर्थान्तरबोधनपूर्वकं, कामयुद्धदत्तसामर्थ्ययोः क्षीरपालन( धारण )क्षमयोर्महत्या हारसमृद्ध्या समृद्धयोः स्तनयोः पीवरत्वमुचितमिति कुचयोरतिपीनत्वं बोधयन्नाह ।

११६ विचारचर्चाऽभावे ऽपि देशिकस्य गिरि उत्तमा अपि ( पण्डिता अपि ) छात्रत्वं धारयन्तीति शान्तानां तेषामेतदुचितमिति प्रसिद्धार्थमनुसृत्य श्लेषेण निबिडतमस्य गुरुभूतस्य ते कुचद्वन्द्वस्य गिर्युत्तमाः ( पर्वतेन्द्राः ) अपि शासनीयतामाप्नुवन्ती-

गिर्युत्तमा बिभ्रति शिष्यभावं
क्षमाधराणां क्षममेतदेषाम् ॥ ११६ ॥

विवेकेति । भो पद्मे ! विवेकस्य पृथग्भावस्य विचारस्य पृथग्वार्तायाः कथाया विरहे ऽभावे सत्यपि गुरुत्वभाजः महत्त्वधारिण आचार्यत्वभृतश्चाऽस्य कुचद्वयस्य गिरिषु पर्वतेषु गिरि वाचि च उत्तमाः श्रेष्ठा निपुणाश्च शिष्यभावं नीचत्वं छात्रत्वं च बिभ्रति धारयन्ति तल्लघुत्वग्रहणं क्षमाधराणां पर्वतानां सहनशीलानां च क्षमं 'क्षमासारा हि साधव' इत्युक्तेर्युक्तमिति भावः । उपजातिवृत्तम् । श्लेषाऽतिशयोक्त्यर्थान्तरन्यासालङ्काराः॥११६॥

रमे कराभ्यां रचिताऽर्दनस्य
त्रैलोक्यभिक्षोरतनुप्रदानम् ।
स्तनावुदारौ तनुतस्तवेमौ
तृणीकृताऽष्टापदशैलशृङ्गौ ॥ ११७ ॥

रमे इति । हे रमे ! तृणीकृते तुच्छीकृते ऽष्टापदशैलस्य मेरोः शृङ्गे याभ्यां तौ अतः उदारौ । उदारो दातृमहतोरित्यमरः । इमौ तव स्तनौ कराभ्यां रचितं कृतम् अर्दनं पीडनं

---

ति पृथ्वीधराणां तेषामेतदुचितमिति प्रकृतार्थं बोधयन् कुचद्वन्द्वस्य गिरीन्द्रतोऽप्युन्नतत्वं व्यवस्थापयति ।

११७ धनवान् दानशूरो हि पुरुषः सहस्तप्रसारं याचकाय महते भिक्षुकाय महादानं ददातीत्यपरमर्थं श्लेषेण प्रकाशयन् जितसुवर्णशैलशृङ्गौ महान्तौ ते कुचौ कराभ्यां कृतमर्दनस्य त्रैलोक्यभिक्षोः ( वामनस्य ) कामप्रदानं कुरुत इति स्तनयोः सुमरुपर्वताऽधिकोन्नतत्वमाह ।

याचनं च येन तस्य त्रैलोक्यभिक्षोर्वामनस्य अथाऽद्वितीयस्य। लोकत्रयेऽप्येतत्समो भिक्षुर्नेति भावः। अतनुप्रदानं महादानं च तनुतः। श्लेषपरिकरतुल्ययोगितालङ्काराः। उपजातिवृत्तम्॥ ११७॥

कुचौ हिरण्याऽचलसंपदं ते
प्रह्लादहेतू नियतं भजेते।
तनोति मातस्तत एव नूनं
नृकेसरी तत्र नखक्षतानि॥ ११८॥

कुचाविति। भो मातः! प्रह्लादस्य तत्संज्ञकाऽसुरस्याऽऽनन्द-स्य च हेतू कारणभूतौ ते कुचौ हिरण्यस्य, विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोप इति वार्तिकेन 'नामैकदेशे नामग्रहण'मिति न्यायाच्च हिरण्याक्षस्याऽग्रजत्वात्सुवर्णस्य चाऽचलां स्थिरां, कुचपक्षे हिरण्याऽचलस्य मेरोः सम्पदं सम्पत्तिं नियतं यतः भजेते तत एव हेतोर्नृकेसरी हरिस्तत्र कुचयोर्नखक्षतानि दत्ते नूनमित्युत्प्रेक्षा। उपजातिवृत्तम्। श्लेषोत्प्रेक्षाहेतवोऽलङ्काराः। अत्र "प्रह्लादहेतुर्वक्षोजो हिरण्यकशिपुस्तव। नखक्षतान्यतस्तत्र तनोतीव नृकेसरी" इति श्लोके विरचिते सारल्यं विदन्तु विबुधाः। हिरण्मयः कशिपुराच्छादनम् आच्छादकवसनं यस्येत्यर्थः। कशिपुर्भक्ताच्छादनयोरेकोक्त्या पृथक्तयोः पुंसीति मेदिनी॥ ११८॥

---

११८ हे मातः! प्रह्लादस्य (प्रकृष्टाऽऽनन्दस्य, तन्नामकस्य दैत्यस्य च) कारणभूतौ ते स्तनौ हिरण्याऽचलसंपदं (सुमेरुगिरुरुचिं, हिरण्यकशिपुनामकदानवशोभां च) आप्नुतः, अत एव नरहरिस्तत्र नखव्रणानि करोमीति प्रह्लादजनकस्य हिरण्यकशिपोरुरसि नृसिंहस्य प्रसिद्धं नखव्रणकारित्वं प्रकटयन् आनन्दहेत्वोः सुमेरुतुल्ययोस्ते स्तनयोर्हरिर्नखक्षतानि विधत्ते इति श्लेषेणाह।

उत्तुङ्गयोस्तुल्यमुरोजयोस्ते
गदन्ति खर्वं कथमम्ब कुम्भम् ।
तत्कार्यभूतः कथयत्यगस्त्य-
स्तत्र स्वहेतौ परिमाणमेतत् ॥ ११९ ॥

उत्तुङ्गयोरिति । हे ऽम्ब ! खर्वं ह्रस्वपरिमाणं कुम्भं ते उत्तुङ्गयोः स्थूलपरिमाणयोरुरोजयोस्तुल्यं समं कवयः कथं गदन्ति नाम कुम्भस्तनीत्यादि ? कुम्भस्य ह्रस्वत्वे मानं तु तत्कार्यभूतो घटकार्यभूतस्तत्सम्भवो ऽगस्त्यः स्वहेतौ स्वकारणे तत्र घटे एतत्खर्वपरिमाणं कथयति । अगस्त्यो हि नभसि पूगीफलतुल्यो लक्ष्यते तत्कारणं घटस्तदपेक्षया महानपि तृणीकृतमेरुशैलभृङ्गयोस्तुल्यतां कथमियात्? उपजातिवृत्तम् । काव्यलिङ्गं च ॥११९॥

एतव्रताऽऽरम्भकृते रतीशो
हारिद्र्या लिप्तमधोक्षजाय ।

---

११९ अल्पपरिमाणस्याऽल्पपरिमाणकादेवोत्पत्तेः प्रसिद्धत्वादगस्त्यस्य नक्षत्ररूपस्य ( कुम्भजस्य ) अल्पपरिमाणतया तत्कारणस्य घटस्यापि अल्पपरिमाणकत्वस्योचितत्वादुत्तुङ्गतया महापरिमाणयोस्त्वत्कुचयोरल्पपरिमाणकघटसादृश्यं लोकैर्वर्ण्यमानमसमञ्जसमिति ब्रुवन् कुचयोर्महापरिणाहतां प्रकटयति ।

१२० माङ्गलिककार्यप्रारम्भे तदारब्धे माङ्गल्यं नारिकेलफलं बुधाः प्रददतीति लोकव्यवहारमभिसन्धाय एतव्रतारम्भे भगवते

माता रमे मङ्गलनारिकेल-
युगं ददौ किं त्वदुरोजयुग्मम् ॥ १२० ॥

रतेति । भो मातः, रमे ! रतव्रतस्य सुरतव्रतस्याऽऽरम्भकृते प्रारम्भार्थं रतीशो मारः हरिद्रया लिप्तं तव उरोजरूपं मङ्गलार्थं नारिकेलयुग्मं ददौ किम्? अत्र रेफलोपे ढ्रलोपे पूर्वस्येति दीर्घः । उपजातिवृत्तम् । रूपकोत्प्रेक्षालङ्कारौ ॥ १२० ॥

तत्राऽयमम्ब स्तनयोः सखायौ
दधाति कुम्भौ शिरसेति नूनम् ।
ग्राहग्रहात् त्रातुमहो गजेन्द्रं
त्वरा हरेः का ऽपि पुरा ऽऽविरासीत् ॥ १२१ ॥

हे ऽम्ब ! अयं गजेन्द्रः तव स्तनयोः सखायौ मित्रे कुम्भौ गण्डौ शिरसा दधाति नूनम् इयतो हेतोः ग्राहो नक्रस्तत्कृताद्ग्रहणादहो गजेन्द्रं त्रातुं हरेः पुरा कापि त्वरा आविरासीत्प्रकटी-बभूव । उपजातिवृत्तम् । उत्प्रेक्षालङ्कारः ॥ १२१ ॥

उरोजयुग्मं तव युक्तिभूम्ना
करीन्द्रकुम्भौ कथयन्ति मातः ।

---

कामो हरिद्राऽनुलिप्तं मङ्गलभूतं नारिकेलफलयुगलं ददौ किमित्युत्प्रेक्षमाणः स्तनयोर्नारिकेलफलतुल्यतां प्रतिपादयन्नाह ।

१२१ पुरा किल ग्राहगृहीतस्य गजेन्द्रस्य मोक्षे भगवतः सत्वरा प्रवृत्तिस्तस्य गजस्य त्वत्कुचमित्रयोः कुम्भयोः शिरोवहनादेवेति उत्प्रेक्षमाणः कुचयोः कुम्भिकुम्भसाम्यं प्रकटयति ।

१२२ अथ हे जननि ! जनैरुच्यमानं त्वत्कुचयोः करिकुम्भता-

आभाति तत्रोपरि मौक्तिश्री

रोमाऽऽलिशुण्डा च लसत्युपान्ते ॥ १२२ ॥

उरोजेति । यतो रोम्णामालिरेव शुण्डा तस्योरोजयुग्मस्योपान्ते समीपे लसति तत्रोत्तमानां मौक्तिकानां श्रीरप्याभाति ततः तवोरोजयोः कुचयोः युग्मं युक्तीनां भूम्ना महिम्ना करीन्द्रस्य कुम्भाविति कथयति । उपजातिवृत्तम् । अपह्नुतिकाव्यलिङ्गालङ्कारौ ॥ १२२ ॥

चन्द्रेण चक्रमिथुनं कृतविप्रयोगं

त्रासादपेक्षिततदीयजनाऽवलम्बम् ।

वक्षोरुहद्वयमिषेण विधुस्वसस्ते

प्राप्याऽङ्गमृच्छति निरन्तरसगतिं तत् ॥१२३॥

चन्द्रेणेति । हे विधुस्वसः ! चन्द्रेण त्वद्भ्रात्रा कृतविप्रयोगं विहितपरस्परवियोगं चक्रयोः कोकयोर्मिथुनं त्रासाद्भयादपेक्षितः तदीयजनस्य चन्द्रसम्बन्धिजनस्याऽवलम्बो येन तदस्ति तत्तस्माद्वक्षोरुहद्वयस्य मिषेण छलेन ते अङ्गं प्राप्य निरन्तरं सततं सङ्गतिं समागमम् ऋच्छति प्राप्नोति। ऋच्छ गताविस्समाव कर्तरि लट् । वसन्ततिलकावृत्तम् । उत्प्रेक्षाऽपह्नुतिपरिकरालङ्काराः ॥ १२३ ॥

---

द्वयं तत्रोपरि मौक्तिकदर्शनाद् रोमपङ्क्तिरूपशुण्डादण्डदर्शनाच्च युक्तिसिद्धमेव न केवलं काल्पनिकमित्याह ।

१२३ चन्द्रेण कृतविरहं चक्रवाकमिथुनं तत्सम्बन्धिसमाश्रयमापेक्षं सत् तद्भगिनीं त्वां कुचरूपेणाऽऽश्रित्य निरन्तरं सङ्गतिं प्राप्नोतीति वदन् स्तनयोः कोकसादृश्यं निबिडत्वं चाह ।

सोढुं कराऽभिहतिमप्रभवन् वधूनां
द्राक् कन्दुकः स्तनतया ऽम्ब तवाऽवतीर्णः।
तत्राप्यहो भजति शौरिकरोपमर्दं
क्षिप्तः सुदृग्भिरयते क्व न मर्दनानि ॥ १२४ ॥

सोढुमिति। हे ऽम्ब! कन्दुकः स्त्रीणां कराऽभिहतिं हस्तताडनं सोढुम् अप्रभवन्नसमर्थः सन् द्राक् शीघ्रं तव स्तनतया कुचरूपेणाऽवतीर्णः, अहो तत्रापि शौरिकराभ्यां कृष्णहस्ताभ्यामुपमर्दं भजति। तथा हि–सुदृग्भिः स्त्रीभिः साधुभिश्च क्षिप्तः त्यक्तः मर्दनानि क्व नाऽयते न प्राप्नोति? अपि तु अशुभवासनापन्नत्वात्सर्वत्र मर्दनं प्राप्नोति। तदुक्तं श्रीभागवते सप्तमस्कन्धाऽऽरम्भे 'ऊतिश्च वासना प्रोक्ता तत्तत्कर्माऽनुसारिणी। अशुभा च शुभा चेति द्विधा सा हेतुभेदतः। अशुभा महतां कोपाच्छुभा महदनुग्रहा'दिति। वसन्ततिलकावृत्तम्। विषमोत्प्रेक्षार्थान्तरन्यासाः ॥ १२४ ॥

नित्योल्लसद्घुसृणधातुनिवेशहृद्यो
मातस्तव स्तनगिरिः कठिनो विभाति।

---

१२४ कन्दुको ह्यङ्गनानां कराऽऽघातसहने ऽसमर्थः सन् तन्निवृत्तये त्वत्कुचरूपतामापन्नो ऽपि भगवत्करमर्दनं सहतएवेति सुदृग्भिः (स्त्रीभिः, पण्डितैश्च) परिक्षिप्तः क्व मर्दनानि न सहते इत्यर्थान्तरन्यासेन समर्थयन् स्तनयोः कन्दुकसाम्यं कथयति।

१२५ हे मातः! अरुणकाश्मीररूपधातुरुचिः कठिनस्तव स्तनपर्वतो विराजते, येनाऽऽलिङ्गनाऽवसरेषु भगवतो वक्षः

अध्यापितं कठिनतामरविन्दनाभे-

रालिङ्गनेषु किल येन भुजाऽन्तरालम् ॥ १२५ ॥

नित्यमिति । हे मातः ! येन कुचगिरिणा ऽरविन्दनाभेर्विष्णोर्भुजान्तरालं प्रयोज्यकर्तृ आलिङ्गनेषु कठिनतां कठोरत्वं प्रति अध्यापितं पाठितं मः नित्यं सततम् उल्लसतः घुसृणधातोः, केशररूपधातोरित्यर्थः । निवेशेन स्थापनेन हृद्यो ऽपि कठिनः कर्कशः तव स्तन एव गिरिः पर्वतः विभाति शोभते इत्यर्थः । अधिपूर्वादिङ् अध्ययने इत्यस्माण्णिचि क्रीङ्जीनां णावित्यात्वे अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णाविति पुकि प्रयोज्यकर्मणि निष्ठा । 'प्रयोज्यकर्मण्यन्येषा'मित्युक्तेः । वसन्ततिलकावृत्तम्। रूपकं काव्यलिङ्गमुदात्तं चालङ्कारः॥१२५॥

घटिकाशतकश्रुतोच्छ्रयं

घनसाहित्यमदः स्तनद्वयम् ।

कुरुते कविचक्रकौतुकं

कमले कान्तगुरुप्रभोदयम् ॥ १२६ ॥

घटिकेति । हे कमले ! स्तनपक्षे घटिकाशतके ऽनेकघ-

---

काठिन्यमध्याप्यतेति भगवद्वक्षःस्थलादपि स्तनस्याऽतिकठिनत्वं, काश्मीरालिप्ततया सुन्दरतरत्वं, पर्वतसमोन्नत्यं च प्रतिपादयति ।

१२६ एकस्यां नाडिकायां श्लोकशतकस्य रचयिता साहित्यशास्त्रतत्त्ववित् बृहस्पतिसमप्रतिभोदयः कविः कविजनकुतुकमुत्पादयतीत्यर्थान्तरमभिसंधाय कलशीशतादपि समधिकोन्नतं निरवकाशं सुन्दराऽधिककान्त्युदयमेतत्ते स्तनद्वन्द्वं कविचक्रकौतुकं (केजले वयः पक्षिणां ये चक्रवाकास्तत्कुतूहलं चक्रवाकभ्रान्तिमिति यावत्) करोतीति स्तनयोर्घटकोकसादृश्यमाह ।

टिरित्यर्थः। श्रुतः उच्छ्रयो यस्य, कविपक्षे घटिकामध्ये शतके शतपद्यनिर्माणे श्रुतः उच्छ्रयो यस्य तत्, घन उभयोः सहितयोः भावः साहित्यशास्त्रं च यस्मिन् तत्, कान्तगुरुप्रभाया रम्यपृथुरुचः देशिकत्विषश्च उदयो यस्मिन् तत्, अदः स्तनयोर्द्वयं के जले वयः पक्षिणः कोका इत्यर्थः। पक्षे कवयः काव्यकर्तारः तत्संज्ञकचक्रस्य तेषां चक्रस्य च कौतुकं कुरुते। वैतालीयं वृत्तम्। श्लेषोपमालङ्कारौ ॥ १२६ ॥

सुरतरुचिरलीलाशोभितोऽसाविति श्रीः
पृथुलकुचयुगं त्वं प्रेयसे देवि दत्से।
स तु तदपि गृहीत्वा चापलादम्बरं ते
हरति परहिरण्यं हर्तुरेष स्वभावः ॥ १२७ ॥

सुरतेति। हे श्रीः! असौ माधवः सुरते रुचिरया लीलयाऽन्यत्र सुरतरोः कल्पद्रोश्च चिरं लीलया शोभित इति हेतोः प्रेयसे हरये पृथुलयोर्बृहतोः कुचयोर्युगं पृथ्वोर्लकुचयोश्च युगं दत्से ददासि, स प्रेयांस्तु तदपि गृहीत्वा चापलाच्चाञ्चल्येन ते अम्बरं वस्त्रमपि हरति। नेदं चित्रं, यतः परस्य हिरण्यं सुवर्णं परं शत्रुभूतं हिरण्यकशिपुं च हर्तुः एष स्वभाव एव, चौ-

---

१२७ परधनापहर्तुर्नाऽऽशा कदाचिदपि शाम्यतीति तत्स्वभावनिर्देशेन त्वं दिव्यवृक्षशोभितोऽयमिति पृथुलकुचाख्यवृक्षयुगलं प्रियतमाय ददासि, स च तद् गृहीत्वा त्वदीयमम्बरम् (वृक्षविशेषं कार्पासं) हरतीत्यर्थान्तरं वदन् हे श्रीः! त्वं प्रियायाऽयं सुरतस्य सुन्दरलीलया शोभित इति तस्मै पृथुलं कुचयुगलं ददासि, स च तावताऽतृप्यन् ते वस्त्रमपहरतीति महतो हिरण्याक्षदानवस्य हन्तुर्भगवत एष स्वभाव इति श्लेषेण प्रकटयन् कुचयोर्लकुचसाम्यं प्रतिपादयति।

र्येरूप इति भावः । मालिनीवृत्तम् । श्लेषाऽर्थान्तरन्यासौ ॥१२७॥

उन्नमत्सरमनुन्नमत्सरं
कन्दुके कलशसिन्धुकन्यके ।
पीनतोषितमपीततोषितं
भाति ते युगमुरोरुहो रहो ॥ १२८ ॥

उन्नमदिति । हे कलशसिन्धुकन्यके ! ते उरोरुहोः कुचयोर्युगम् उन्नमन्तः सरा माला यस्मिन् तथापि कन्दुके अनुन्नः पूर्णः मत्सरः शुभद्वेषो यस्य, पीनता पुष्टता उषिता यस्मिन् तथापीनेन पया तोषितं लालितं यद्वा इनस्तोषितो येन तद्भाति । अहो इति आश्चर्यद्योतकेन विरोधाभासालङ्कारः । रथोद्धता ॥१२८॥

उदग्रहारं कुचमण्डलं ते
जनार्दनो देवि जगत्यधीशः ।
निपीडयत्येष करग्रहेण
कारुण्यवार्ता क्व हिरण्यहर्तुः ॥ १२९ ॥

उदग्रेति । हे देवि ! जगत्या अधीशोऽपि जनार्दनो लोक-

---

१२८ अथ लम्बमानहारमपि कन्दुके समत्सरं, पीनतयाऽध्युषितमपि इनेन भगवता तोषितं ते पयोधरयुगं भातीति विरोधाभासवैचित्र्येणाह ।

१२९. परहिरण्यापहारी निष्करुणः प्रजापीडको राजा करग्रहणेन उत्कृष्टा अग्रहारा ब्राह्मणादिभ्यो दत्ता ग्रामभागा यस्मिन्नीदृशं राष्ट्रं पीडयतीति लोकसिद्धमर्थं प्रतिपादयन् तथाऽधीशो हिरण्यहन्ता जनार्दनो भगवान् उच्चहारं ते कुचमण्डलं हस्तग्रहणेन निर्दयं मर्दयतीत्याह ।

पीडक एष विष्णुः राजा च उदग्रहारम् उत्कृष्टहारं पक्षे उत्कृष्टा अग्रहारा देवद्विजदत्तग्रामाद्यग्रहाराश्च यस्मिन् तत्ते कुचमण्डलं करेण हस्तेन करस्य करभारस्य च ग्रहणेन निपीडयति। बलिहस्तांशवः करा इत्यमरः। तथा हि–हिरण्यासुरस्य कनकस्य च हर्तुर्नाशयितुः ग्रहीतुः कारुण्यवार्ता क्वेति। उपजातिवृत्तम्। श्लेषार्थान्तरन्यासावलङ्कारौ॥ १२९॥

अथ हारं वर्णयति—

मदम्ब भोग्यायतमाल्यजुष्टे
तव स्तनद्वन्द्वगिरीशमौलौ।
निकाममुद्वृत्ततया निपत्य
लुठत्यसौ हारसुरस्रवन्ती॥ १३०॥

मदिति। हे मदम्ब! भोगमर्हतीति भोग्यं, तदर्हतीति यत्। आयतं दीर्घं माल्यं माला तेन जुष्टे, पक्षे भोगिनां सर्पाणामायतेन माल्येन च जुष्टे प्रीते सेविते च तव स्तनद्वयरूपस्य गिरीशस्य हरस्य मौलौ निकामं पर्याप्तम् उद्वृत्ततया वर्तुलत्वेन उन्मार्गगामितया च निपत्याऽसौ हाररूपा सुरस्रवन्ती भागीरथी निकामं लुठति। उपेन्द्रवज्रावृत्तम्। श्लेषरूपकालङ्कारौ॥१३०॥

पीतस्तनस्ते कमले शिशुत्वे
पद्मासनः सो ऽजनि नित्यतृप्तः।

---

१३० मन्दाकिनी किल सर्पवेष्टितमाल्यजुषि गिरीश( शिव )मौलौ समुद्धतं निपत्य लुठतीति ते हारयष्टिर्भोगयोग्यैः आयतैर्माल्यैर्जुष्टे तव स्तनगिरीशे ( पर्वते ) वर्तुलतया निपत्य विलुठतीति श्लेषरूपकाभ्यामाह।

१३१ हे जगदम्ब! बाल्ये जगत्पितामहो ऽपि त्वच्छिशुः पद्मासन-

सदा तदास्वादकरस्तु मुक्ता-
हारो न केनाऽपि तथाऽभिधानः ॥ १३१ ॥

पीत इति । अयि कमले ! शिशुत्वे पीतः स्तनो येन स पद्माऽऽसनो ब्रह्मा नित्यतृप्तो ऽजनि, सदा तयोः स्तनयोरास्वादकरो मौक्तिकहारः तथाऽभिधानो नित्यतृप्तः केन हेतुना नाऽजनि । यदि तादृशः अभविष्यत्तर्हि स्तनावत्यक्षत तथा ऽकृत्वा मुक्त इतर आहारो येन तथा सन् स्तनावेवाऽऽस्वादयति । पितामह इति पाठो रसभञ्जकत्वादपपाठः । उपजातिवृत्तम् । विशेषोक्तिश्च ॥ १३१ ॥

रमे तवोत्तुङ्गकुचाऽग्रजाग्रत्-
प्रत्यग्रहारस्फुटमौक्तिकानि ।
प्रायः सुमेरुं परितश्चरन्ति
पटून्युडूनीव परिस्फुरन्ति ॥ १३२ ॥

रमे इति । हे रमे ! तवोत्तुङ्गकुचाग्रजाग्रतां प्रत्यग्रहाराणां नव्यहाराणां स्फुटमौक्तिकानि प्रायो बहुधा सुमेरुं परितः सुमेरोरभितः । अभितः परितः समयेत्यादिना द्वितीया । चरन्ति पटून्युडूनि नक्षत्राणीव परिस्फुरन्ति जयन्ति । उपजातिवृत्तम् । उपमालङ्कारः ॥ १३२ ॥



स्ते स्तनौ पीत्वा नित्यतृप्तो विराजते, परं मुक्ताहारस्तु सकलाऽऽहारपरित्यागपुरःसरं सदा स्तनास्वादकोऽपि तत्रैव संलग्नः कथं न तृप्तः? इत्याह ।

१३२ हे रमे ! त्वदुत्तुङ्गकुचाऽग्रविराजन्नवहारमुक्ताफलानि सुमेरुमभितश्चरन्ति नक्षत्राणीव भान्ति इत्याह ।

स्तनयोरनयोस्तवाऽम्बुराशे-
स्तनये दीव्यति दिव्यहारयष्टिः ।
परितः पृथुलाऽरविन्दकोशौ
प्रचलन्ती कलहंसमालिकेव ॥ १३३ ॥

स्तनयोरिति । हे ऽम्बुराशेस्तनये ! पृथुलौ महान्तावरविन्दकोशौ परितस्तस्य समन्तात्प्रचरन्ती संचरन्ती कलहंसानां कादम्बानां मालिका पङ्क्तिरिव तवाऽनयोः स्तनयोरुपरि दिव्या हारयष्टिर्दीव्यति क्रीडति । औपच्छन्दसिकं वृत्तम् । उपमालङ्कारः ॥ १३३ ॥

अथ करौ कवयति—

अम्भोजबन्धुरयमम्बुरुहाद्दवीया-
स्तत्सन्निधिं जिगमिषुस्तनये पयोधेः ।
अम्भोजमम्ब तव हस्ततया ऽवतीर्णं
सौवर्णकङ्कणमिषान्निकषा समिन्धे ॥ १३४ ॥

अम्भोजेति । हे पयोधेस्तनये ! अम्बुरुहादतिशयेन दूरः दवीयान् । द्विवचनविभज्योपपदे इतीयसुनि स्थूलदूरेत्यादिना यणादिलोपो गुणश्च । अयमम्भोजबन्धुः सूर्यस्तस्याऽम्बुरुहस्य सन्निधिं गन्तुमिच्छुर्जिगमिषुः सन् हे अम्ब ! तव हस्ततया

---

१३३ अथ कुचयोः कमलमुकुलसादृश्येन तत्सन्निधौ विलोला हारमुक्ता अरविन्दकोशसविधचरत्कलहंसपङ्क्तिरिव भातीत्याह ।

१३४ कमलबन्धुः सूर्यो दूरवर्तित्वात्तद्विरहव्याकुलस्तत्सन्निधौ वस्तुमिच्छन् तव कररूपस्य पद्मस्य सविधे त्वदीयसौवर्णकङ्कणरूपतया विभातीति करयोः पद्मसादृश्यं कङ्कणद्वयस्य च सूर्यत्वं प्रतिपादयति ।

कररूपेण अवतीर्णम् अम्भोजं निकषा पद्मस्य समीपे इति भावः। अभितःपरितःसमयानिकषेति द्वितीया । सौवर्णकङ्कणस्य मिषाच्छलेन समिन्धे प्रदीप्यते। रुधादेः ञिइन्धी दीप्ताविसस्माल्लटि आत्मनेपदे श्नमि श्नान्नलोप इति नकारलोपे श्नसोरिरल्लोपे झषस्तथोर्धोऽधेति धत्वे सिद्धं रूपम्। वसन्ततिलकावृत्तम्। उत्प्रेक्षाकैतवाऽपह्नुतिरूपकाण्यलङ्कारा ज्ञेयाः॥१३४॥

आम्रेडितैस्त्वत्करपद्मरागै-
रत्युज्ज्वलैः कङ्कणपद्मरागैः।
लीलाशुको दाडिमबीजलुब्धो
विश्वम्भरप्रेयसि विप्रलब्धः॥ १३५॥

आम्रेडितैरिति। हे विश्वम्भरप्रेयसि! तव करपद्मस्य रागैः रक्तिमभिः आम्रेडितैर्वर्धितैरत्युज्ज्वलैर्निर्मलैः कङ्कणसम्बन्धिपद्मरागमणिभिर्लीलाशुकः दाडिमबीजानीति विप्रलब्धो वञ्चित आसीत्। इन्द्रवज्रावृत्तम्। रूपकाऽनुगुणभ्रान्तिमदलङ्काराः॥ १३५॥

कृताऽञ्चनौ काञ्चनकङ्कणस्थ-
संक्रन्दनग्रावमहस्तरङ्गैः।

---

१३५ त्वत्करकमलाऽरुणिम्ना पुनरुक्ताऽरुणिमभिः कङ्कणजटितपद्मरागमणिभिः परिपक्वदाडिमीबीजभ्रान्त्या तत्र लुब्धस्ते विलासशुको वञ्चित इत्युक्त्या करयोररुणकमलसादृश्यं कङ्कणपद्मरागमणीनां च दाडिमीबीजसादृश्यं प्रदर्शयति।

कल्याणि पाणी कनतस्तरां ते
शैवालमालाभिरिवाऽरविन्दे ॥ १३६ ॥

कृतेति । हे कल्याणि ! काञ्चनकङ्कणस्थैः सक्रन्दनग्राव्णाम् इन्द्रनीलमणीनां महस्तरङ्गैस्तेजोलहरीभिः कृताऽञ्चनौ कृतसङ्गतौ ते पाणी शैवालमालाभिः कृताऽञ्चने कृतपूजने अरविन्दे इव कनतस्तरामतिशयेन दीप्यतः(?) कनी दीप्तिकान्तिगतिष्वस्माल्लट् । उपजातिवृत्तम् । उपमालङ्कारः ॥ १३६ ॥

इन्धे ताबकपाणिशोणिमभरः कल्याणि नैसर्गिकः
पद्मे कङ्कणपद्मरागकिरणश्रेणीभिराप्यायितः ।
तत्संरूढबिडाललोचनसुहृद्वैदूर्यवीक्षाभयो-
द्गच्छद्विभ्रमकीरवारणघनायासेन चाऽऽम्रेडितः ॥१३७॥

इन्धे इति । हे पद्मे! हे कल्याणि ! कङ्कणगतपद्मरागमणीनां किरणानां श्रेणीभिः पङ्क्तिभिः आप्यायितः पूरितः तथा तत्संरूढानि कङ्कणखचितानि यानि बिडाललोचनसुहृन्दि मार्जारनेत्रसमानि वैदूर्याणि रत्नविशेषास्तेषां वीक्षया ऽवलोकनेन यद्भयं तेन उद्गच्छतामुड्डीयमानानां विभ्रमकीराणां क्रीडाशुकानां वारणे निवारणे घनाऽऽयासेन दृढयत्नेनाऽऽम्रेडितो

---

१३६ हे कल्याणि ! त्वत्करौ सुवर्णकङ्कणगतेन्द्रनीलकान्तिवीचिभिः शैवालपरिगते कमले इव शोभेते इत्याह ।

१३७ अथ त्वत्करयोः स्वाभाविकी ऽरुणिमा कङ्कणपद्मरागमणिकान्त्या द्विगुणीकृतोपि कङ्कणगतमार्जारनयनसदृशवैदूर्यमणिदर्शनसाशङ्कात्पित्सुलीलाशुकनिवारणाऽऽयासेन द्विगुणीकृत इति करकमले शोणिमातिशयं वर्णयति ।

विशेषतो रक्त इत्यर्थः । नैसर्गिकः स्वभावसिद्धः तावकपाण्योस्त्वत्करयोः शोणिमभरः रक्तिमविशेषः इन्धे समुज्ज्वलति । शार्दूलविक्रीडितं वृत्तम् । अनुगुणोत्प्रेक्षालङ्कारौ ॥ १३७ ॥

काञ्चीकवीन्द्रकवनादपि कोमलं ते
कल्याणि पाणितलमम्बुजनाभकान्ते ।
अश्रान्तमर्थिषु बहुष्वभितन्यमान-
दानश्रमादरुणिमानमुपैति नूनम् ॥ १३८ ॥

काञ्चीति । हे कल्याणि ! हे अम्बुजनाभकान्ते ! काञ्चीनाम नगरी तत्रत्यकवीन्द्रस्य वेङ्कटाध्वरेर्ममेत्यर्थः । कवनादपि कोमलं ते पाणितलम् अश्रान्तं सततं यथा तथा बहुष्वर्थिषु अभितन्यमानस्य विस्तार्यमाणस्य दानस्य श्रमान्नूनं नियतमरुणिमानमुपैति प्राप्नोति । वसन्ततिलकावृत्तम् । उत्प्रेक्षालङ्कारः ॥ १३८ ॥

न केवलं नागनगेशकान्ते
हस्तो ननु स्वर्णगतोऽधिकस्ते ।

---

१३८ अथ करयोः सौकुमार्यं समधिकाऽऽरुण्यं निरन्तरदानशालित्वं च वर्णयन् कविर्मत्काव्यादपि मद्गुरुवेङ्कटनाथ वेदान्ताचार्यकाव्यादपि वा पेलवं ते करतलं निरन्तरं याचकेभ्यो वाञ्छितार्थदानादिवाऽधिकाऽरुणं भातीत्युत्प्रेक्षते ।

१३९ हे रमे ! न केवलं ते करः स्वर्णगतः ( कल्पवृक्षात् ) अर्थिवाञ्छितदानादधिको, यतो यं याचकमयं दानसंप्रदानीकुरुते सोऽपि स्वर्णगतः ( सुवर्णं प्राप्तः ) अधिकः ( आधिक्यं

यं संप्रदनीकुरुते स निःस्वं
सो पि क्षितौ स्वर्णगतो ऽधिकः स्यात् ॥ १३९ ॥

नेति। हे नागनगेशकान्ते ! नन्विति वितर्के । ते हस्तः स्वर्णगतः कल्पवृक्षादधिक इति न। अत्र पूर्वपदात्संज्ञायामिति णत्वम् । तर्हि यं निःस्वं दरिद्रं संप्रदानीकुरुते दानकर्मणाऽभिप्रैतुमिच्छति स नरो ऽपि स्वर्णगतः कल्पद्रोरधिक इति विरोधे सुवर्णं प्राप्तः सन् अधि बहु कं सुखं यस्य सः स्याद्भवेत् । उपजातिवृत्तम् । श्लेषालङ्कारः ॥ १३९ ॥

असावनष्टापदमर्थिनं द्रा-
गष्टापदाऽऽवासमहो विधाय ।
आपत्कथादूरगमब्धिकन्ये
करोति कल्याणि करस्त्वदीयः ॥ १४० ॥

असाविति। हे अब्धिकन्ये, हे कल्याणि ! असौ त्वदीयः करः अहो इत्याश्चर्ये। अनष्टा आपाद्विपत्तिर्यस्य तं, पक्षे नास्ति अष्टापदं सुवर्णं यस्य च तमर्थिनं द्राक् शीघ्रम् अष्टापदस्य सुवर्णस्याऽऽवासो यस्मिन् अत एव अष्टापदस्य शारिफलस्य आवासो यस्मिन् तादृशं विधाय कृत्वा आपत्कथाया

---

कं सुखं यस्य तादृशः ) स्यादिति कल्पवृक्षाऽधिकत्वं करयोः प्रतिपादयति ।

१४० अथ विरोधाभासेन तव करः साऽऽपदमकिञ्चनं नरं सुवर्णावासं कृत्वा ऽऽपत्कथादूरगतं करोतीति त्वत्करस्य सुवर्णदातृत्वमापन्निवारकत्वं चेत्याह ।

विपद्रोष्ट्या: दूरं गच्छति तं विपत्तिरहितं सम्पत्तिमन्तं चेति भावः। करोति। उपजातिवृत्तम। विरोधाभासालङ्कारः ॥१४०॥

दीना दानैस्त्वत्कराब्जादुपात्तै-
र्दैत्रि स्थाने स्वर्णवत्त्वं प्रपन्नाः।
आसन्नेते सिन्धुकन्ये नदीना-
श्चित्रं नित्यं भान्ति लक्ष्मीकुमाराः ॥ १४१ ॥

दीनेति। भो सिन्धुकन्ये ! तव कराब्जात् उपात्तैः प्राप्तैर्दानैर्वितरणैर्दीनाः स्वर्णवत्त्वं हेमसम्पन्नत्वं, पक्षे शोभनसमुद्रत्वं च प्रपन्नाः सन्तः नदीनाः नैकधेतिवन्नशब्देन समासः। दीनत्वशून्या इत्यर्थः। पक्षे नदीनाम् इनाः समुद्राश्च एते आसन्। इदं स्थाने युक्तम्। युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। तथापि लक्ष्म्याः कुमाराः पुत्राः प्रियाश्च भान्तीति प्रथमार्थे चित्रं ज्ञेयम्। शालिनीवृत्तम। समविशेषोक्त्यलङ्कारौ। अत्र 'चित्रं नैते यज्जलध्यात्मकास्ते' इति पाठे कल्पिते सौष्ठवं विदन्तु सुधियः ॥ १४१ ॥

---

१४१ इदानीं त्वत्करात्प्राप्तैर्दानैः स्वर्णवत्त्वं (समुद्रत्वं) प्राप्ता दीना नदीनाः (सरित्पतयः) अपि लक्ष्म्याः कुमारा भवन्तीति विचित्रमर्थं पुरस्कृत्य त्वत्तः प्राप्तसंपदो दीनाः स्वर्णवत्त्वं (सुवर्णवत्त्वं) प्राप्य लक्ष्मीप्रीतिपात्रतया पुत्रतुल्याः सन्तो न दीना दैन्यरहिता भवन्तीति श्लेषवैचित्र्येणाह।

क्वणत्कनककङ्कणोज्ज्वलमणीघृणिश्रेणिका-
महासरिदुदञ्चितं मकरमत्स्यरेखावृतम् ।
प्रसह्य मधुनाशनं कृतवतेव कृष्णेन ते
कराम्बुरुहमिन्दिरे कलितपीडनं राजते ॥ १४२ ॥

क्वणदिति । हे इन्दिरे ! क्वणतां शब्दायमानानां कनककङ्कणानाम् उज्ज्वलमणीनां घृणिश्रेणिः किरणपङ्क्तिरेव महासरित्तस्याम् उदञ्चितं शोभितं, मकरमत्स्यरेखाभिश्चिह्नीभूताभिः पक्षे मकरमत्स्यपङ्क्तिभिश्चाऽऽवृतं ते कराऽम्बुरुहं प्रसह्य बलान्मधुनामदैत्यस्य नाशनं मधुना पुष्परसेन अशनं च कृतवता कृष्णेन भ्रमरेण च कृष्णवर्णत्वात्कलितपीडनं कृतमर्दनं राजते पृथ्वीवृत्तम् । रूपकश्लेषालङ्कारौ ॥ १४२ ॥

स्वर्णस्फुरद्बहुविधोर्मिकमब्धिकन्ये
रत्नाकरं तव करं निगदन्ति सन्तः ।
आक्रान्तसर्वभुवनो हि जनार्दनोऽसौ
दुर्धर्षतां व्रजति यस्य परिग्रहेण ॥ १४३ ॥

स्वर्णेति । हे ऽब्धिकन्ये ! हि यस्मादाक्रान्तं सर्वभुवनं जलं

---

१४२ समुल्लसत्सुवर्णकङ्कणमणिकिरणपरम्परारूपमहासरिति शोभितं त्वत्कराऽम्भोजं तत्स्थमकरन्दाऽशनं कृतवतेव भृङ्गेण मधुनाशनेन भगवता च कृतपीडं कृतपरिग्रहं च राजतइत्याह ।

१४३ सुवर्णविलसन्नानाविधाऽङ्गुलीयकं ते करं जलविलसन्नानाविधतरङ्गं रत्नाकरं ( रत्नानामाकरं, समुद्रं च ) निगदन्ति, यस्य करस्य जलधेश्च परिग्रहेण आक्रान्तसकललोकः समाक्रान्तसर्वजलश्च जनार्दनो दुर्धर्षो भवतीति श्लेषेण समुद्ररूपत्वं करस्य ब्रूते ।

लोकश्च येन स जनार्दनो जनपीडकश्च यस्य करस्य रत्नाकरस्य च परिग्रहेण स्वीकारेण दुर्धर्षतामजय्यतां व्रजति तं तव करं रत्नाकरं च सन्तः स्वर्णस्य स्फुरन्त्यो बहुविधा ऊर्मिकाः, पक्षे सुष्ठु अर्णसस्तोयस्य स्फुरन्त्यो बहुविधा ऊर्मयश्च यस्मिन् तं स्वार्थे कः। रत्नाकरं रत्नखनिं सिन्धुं च निगदन्ति रूपकश्ले० वस०॥१४३॥

पालकं सुमनसां तव स्थिर-
च्छायमब्धितनये समाश्रये ।
पञ्चशाखमिह भव्यकल्पकं
दानवारिपदपोषणक्षमम् ॥ १४४ ॥

पालकमिति । हे ऽब्धितनये! सुमनसां देवानां पुष्पाणां च पालकं रक्षकम्, एवं स्थिरा छाया कान्तिरनातपश्च यस्य तं पुनर्दानवारेरिन्द्रस्य दानस्य वारिणश्च पदपोषणे राज्यरक्षणे मूलसंवर्धने च क्षमम् । अत इह भव्यं कल्याणं कर्तुं क्षमं कल्पद्रुं च तव पञ्चशाखं हस्तं विस्तृतशाखं चोपाश्रये । रथोद्धतावृत्तम्। श्लेषालङ्कारः ॥ १४४ ॥

जननि मरकतादिः सार्धमारक्तरत्नै-
र्विधुमुखि निहितस्ते व्यर्थ एवोर्मिकासु ।

———

१४४ सुमनसां देवानां पुष्पाणां च पालकं स्थिरकान्तिमखिलाऽनातपं, शुभप्रदं शुभकल्पवृक्षरूपं च दानोदकपोषणपटुमिन्द्रपदपोषकश्च शाखापञ्चककलितं करं च समाश्रये इति श्लेषेण करस्य कल्पवृक्षरूपत्वमाह ।

१४५ मातस्तवाऽङ्गुलीयकेषु गारुत्मतादिनानावर्णमणिनिधानमङ्गुलिविसृत्वराकिरणाङ्कुरैररुणतां भजतामेषां केवलपद्मरागरूपता-

प्रसृमरकरदीधित्यङ्कुरैरङ्गुलीनां
परिभजति यतोऽसौ पद्मरागाऽविशेषम् ॥ १४५ ॥

जननीति । हे विधुमुखि, जननि ! ते ऽङ्गुलीनामूर्मिकासु निहितो मरकतादिर्यतः प्रसृमरैः कराणां दीधितीनाम् अङ्कुरैः पद्मरागेण माणिक्येनाऽविशेषम् अभेदं भजति ततः व्यर्थ एव निहितः । मालिनीवृत्तम् । काव्यलिङ्गतद्गुणालङ्कारौ ॥ १४५ ॥

रागं रमे तव शुभाऽङ्गुलिसङ्गलब्धं
वीटी मुरान्तकमुखे प्रकटीकरोति ।
मुक्तासुचूर्णनवपूगगनागवल्ली-
पर्णात्मनो न खलु रागकथाऽन्यथाऽस्याः ॥ १४६ ॥

रागमिति । हे रमे! तव शुभाऽङ्गुलिसङ्गेन लब्धं रागं रक्तिमानं वीटी कर्त्री मुरान्तकस्य हरेर्मुखे प्रकटीकरोति । अन्यथैवं नो चेत् मुक्तासुचूर्णं नवपूगश्च तौ गच्छति तस्या नागवल्ल्याः पर्णान्येवात्मा स्वरूपं यस्यास्तस्या अस्याः वीट्याः रागकथा रक्तिमवार्तापि न खलु । वसन्ततिलका । तद्गुणकाव्यलिङ्गे अलङ्कारौ ॥ १४६ ॥

---

पद्या व्यर्थमेवेत्यङ्गुलीनां रक्तिमाऽतिशयं वर्णयन्नाह ।

१४६ मातस्त्वया भगवतो मुखे समर्पिते ताम्बूले शुभ्रचूर्णक्रमुकहरितनागवल्लीपत्ररूपे रक्तिमाऽसम्भवात्त्वदङ्गुलीसङ्गादेवाऽरुणिमसङ्क्रान्तिरतस्ताम्बूलरागोत्पादकतया ततोऽधिकमारुण्यं ते कराङ्गुलीनामिति वर्णयति ।

भवाऽन्धकूपे पतिताय मह्यं
दुर्मोचकर्मोत्करकर्कशाय ।
कराऽवलम्बं कमले ददासि
तदञ्चलं ते तत एव रक्तम् ॥ १४७ ॥

भवेति । हे कमले ! भव एवाऽन्धप्रधानः कूपस्तस्मिन् । शाकपार्थिवादित्वान्मध्यमपदलोपिसमासः । पतिताय तथा दुःखेन मोक्तुं शक्यानां कर्मणाम् उत्करेण समूहेन कर्कशाय कठिनाय मह्यं वेङ्कटकवये करावलम्बं करग्रहं ददासि तत एव हेतोः तदञ्चलं कराग्रं रक्तमिति भावः । उपजातिवृत्तम् । उपमालङ्कारः ॥ १४७ ॥

अथ नखवर्णनम्—

दधति नखास्तवाऽम्ब तनुहेमलताभभुजा-
रुचिरकराऽरविन्दचलदङ्गुलिकोटिजुषः ।
सरयसरस्वतीझरसमापतनोपनत-
ह्रदतनुवीचिकाऽञ्चलसमुज्ज्वलफेनतुलाम् ॥ १४८ ॥

दधतीति । हे ऽम्ब ! तन्व्याः हेमलताभायाः सुवर्णवल्लीतुल्यायाः भुजायाः सम्बन्धिनि रुचिरकराऽरविन्दे चलताम-

---

१४७ अथ दुस्त्यजकर्मौघकठिनतराय संसाराऽन्धकूपपतिताय मह्यं यतः करावलम्बं ददासि तत एव सुकुमारतरे ते करे ऽरुणिमोपगम इत्याह ।

१४८ इदानीं कृशसुवर्णवल्लरीसमबाहुसुन्दरपाणिकमलाग्रचलदरुणाङ्गुल्यग्रगताः शुभ्रास्तव नखाः सरस्वतीसरिन्निर्झराजस्रवीचिविलसत्फेनसाधर्म्यं दधतीत्याह ।

ङ्गुलीनां कोटीरग्राणि जुषन्ते ते तव नखा नखराः श्येन सहितस्य सरस्वत्या नद्याः झरस्य समापतनेनोद्गतस्य जातस्य ह्रदस्य तनुवीचिकानां सूक्ष्मलहरीणां समुज्ज्वलानां फेनानां डिण्डीराणां तुलां दधति । नर्कुटकं वृत्तम् । उपमारूपकालङ्कारौ ॥ १४८ ॥

समाननामा स विधुः समानशे
दशेह भावानिति मातरीर्ष्यया ।
प्रशस्तयोस्तावकहस्तयोर्विधु-
र्दशाऽवतारान्विदधे नखात्मना ॥ १४९ ॥

सेति । समानं नाम यस्य स इति बहुव्रीहौ कृते ज्योतिर्जनपदेत्यादिना सभावस्य दुर्निवारत्वात् मानेन तुलया सहितं समानं नामाऽभिधा यस्य स विधुर्विष्णुः दश भावान्मत्स्यादिरूपाणि समानशे संप्राप इति ईर्ष्यया ऽक्षमया । अक्षान्तिरीर्ष्येत्यमरः । विधुश्चन्द्र इह प्रशस्तयोस्तावकयोर्हस्तयोर्नखात्मना नखरूपेण दशाऽवतारान्विदधे । उपेन्द्रवज्रावृत्तम् । श्लेषोत्प्रेक्षालङ्कारौ ॥ १४९ ॥

विभाति वाराशिवरेण्यकन्या-
प्रशस्तहस्तोल्लसितो नखात्मा ।

---

१४९ विधुत्वेन समानाऽभिधो विष्णुर्दशाऽवतारान्विदधे इतीर्ष्ययेव विधुः ( चन्द्रः ) त्वत्करनखदशकरूपेणाऽवतीर्ण इति करं नखानां विशदानां चन्द्ररूपत्वमुत्प्रेक्षते ।

१५० भगवतीकरविराजमानो नखात्मा चन्द्रो विगतचिह्नानक्ष-

विधुर्विचित्रागम एव नूनं
नाऽसौ तुलामेति यतः कदापि ॥ १५० ॥

विभातीति । वाराशिवरेण्यस्य सिन्धुश्रेष्ठस्य कन्यायाः प्रशस्ते हस्ते उल्लसितः शोभितः असौ नखात्मा विधुर्नूनं निश्चये उत्प्रेक्षायां वा । यतो विशिष्टः चित्रागमः वृद्धिह्रासाऽपक्षयशून्यरूपाऽऽश्चर्यप्राप्तिर्यस्मात्ततस्तुलामन्यसाम्यं नैति । अथ च यतः कन्याराशियुक्ते प्रशस्ते हस्तनक्षत्रे उल्लसितोऽप्ययं विधुर्विगतः चित्रागमः चित्रानक्षत्रप्राप्तिर्यस्य सः अतस्तुलाराशिं नैति न प्राप्नोति। उपेन्द्रवज्रावृत्तम् । श्लेषोत्प्रेक्षालङ्कारौ ॥१५०॥

क्षत्रं तदेव कथयन्ति बुधाः क्षतेभ्यो
यत्त्रायते यदुपतेर्दयिते ततोऽहम् ।
यत्प्रत्युत क्षतशतं तनुते प्रियाऽङ्गे
नक्षत्रमत्र तदवैमि नखं त्वदीयम् ॥ १५१ ॥

क्षत्रमिति । हे यदुपतेर्दयिते ! यत्क्षतान्नाशात्त्रायते तदेव क्षत्रं क्षत्रिय इति बुधाः कथयन्ति प्रत्युत पुनर्यत्त्वदीयं नखं नास्ति खं सुखं यस्मान्नखरं च प्रियाङ्गे क्षतानां शतं वितनुते ततो हेतोस्तन्नखं क्षत्रमिति नाऽवैमि । तर्हि नक्षत्रं तारकैव जानामीति युक्त्युक्त्या निरुक्तिरलङ्कारः । वसन्ततिलकावृत्तम् ॥ १५१ ॥

---

त्रसमागमस्तुलाराशिगो न भवतीति वैचित्र्यमाविष्कुर्वन् प्रसिद्धचन्द्राद्विचित्रोऽयं नखचन्द्रो निरुपम इत्याह ।

१५१ क्षतात् त्रायते यत्तत् क्षत्रमिति क्षत्रपदव्युत्पत्तेः प्रसिद्धत्वात् क्षतात् त्राणं तु दूरे वैपरीत्येन यो भगवतोऽङ्गे क्षतान्युत्पादयति स कथं क्षत्रपदवाच्यः स्यादतस्तं न क्षत्रं कलये इति सचमत्कारं नखस्य नक्षत्ररूपत्वं प्रतिपादयति ।

अथ करकमले कवयति—

पाथोजाक्षभुजान्तरालवसतेः पद्मालयायाश्चिरं
पाण्योर्दक्षिणवामयोः स्थितिमती पद्मे दिशेतां श्रियम्।
तत्रैकं हरिदृश्ययोर्मुकुलितं खेदाददाक्षिण्यव-
द्योगोत्थाद् ध्रुवमन्यदेति हसितं दाक्षिण्यशाल्याश्रयात्॥१५२॥

पाथोजेति। पाथोजाऽक्षस्य कञ्जनेत्रस्य हरेर्भुजाऽन्तराले वसतिर्यस्यास्तस्याः पद्माऽऽलयाया लक्ष्म्याः दक्षिणवामयोः पाण्योः करयोः स्थितिमती पद्मे कमले श्रियं दिशेतां, तत्र पद्मद्वयमध्ये हरिणा द्रष्ट्रा दृश्ययोर्द्रष्टुं योग्ययोर्ययोर्मध्ये एकं सा संमुखे स्थिता ऽतो वामकरगं तदेव मुकुलितं हरेर्दक्षिणचक्षुषः सूर्यत्वादिति भावः। अत्र प्रमाणानि 'अग्निर्मूर्धा चक्षुषी चन्द्र-सूर्यौ दिशः श्रोत्रे' इति मुण्डकश्रुतिः। नन्वत्र कस्य सूर्यत्वं कस्य वा चन्द्रत्वम्? इति चेच्छृणु युक्तिम्। दक्षिणचक्षुषो मुख्यत्वात्सूर्यत्वं ग्राह्यं, याजुषसर्वानुक्रमारम्भे श्रुतिरपि 'अथ मण्डलं दक्षिणमक्षि हृदयं चाऽधिष्ठितं शुक्लानि यजूंषि भगवान्याज्ञवल्क्यो यतः प्राप विवस्वन्तम्' इति। तत्र ध्रुवमित्युत्प्रेक्षा। अदाक्षिण्यं वामाङ्गत्वमनौदार्यं चाऽस्यास्तीति तद्वतो योगात् तत्थादुत्पन्नात्खेदाद्दुःखादिति। अन्यद्दाक्षिण्येन दक्षिणत्वेनौदार्येण

———

१५२ हरिवक्षःस्थलविराजमानभगवतीकरगते कमले श्रियं दद्यातां, हरिणा दृश्ययोर्ययोः पद्मयोर्मध्ये वामकरगतं निजसंमुखाऽवस्थितचन्द्ररूपहरिनेत्रकिरणसंपर्कान्मुकुलितं, दक्षिणकरस्थं च सूर्यात्मकहरिनेत्रसांमुख्याद्विकसितमिति सचमत्कारं दर्शयति।

च शालते तस्य । ताच्छील्ये णिनिः । आश्रयाद्धसितमेति । त्रि-कामित्वे उत्प्रेक्षा । शार्दूलविक्रीडितम् ॥ १५२ ॥

अथ रोमालिं वर्णयति—

रोमालिं द्रागुद्गतां नाभिरन्ध्राद्
व्यालीं विद्मः पद्मगेहे भवत्याः ।
गाढोरोजस्मेरहाराऽग्रजाग्र-
द्रत्नं नूनं तच्छिरःस्थं प्रतीमः ॥ १५३ ॥

रोमालिमिति । हे पद्मगेहे ! नाभेः रन्ध्राद्बिलात् उद्गतां रोमालिं व्यालीं विद्मः जानीमः यतः ततो नूनं गाढयोरुरोजयोः स्मेरस्य विकसितस्य हारस्याऽग्रे जाग्रद्दीप्यमानं रत्नं मणिं तच्छिरःस्थं व्यालीशिरःस्थम् इति प्रतीमः विद्मः । शालिनीवृत्तम् । उत्प्रेक्षालङ्कारः ॥ १५३ ॥

शौरेः सूरात्मनोऽक्षणः समजनि यमुनेत्युद्गतेर्ष्येव गङ्गा
जाताङ्घ्रौ तस्य गौणी किल तदपि तवापत्यतेत्यत्र निन्दाम् ।

———

१५३ हे रमे ! तव नाभिरन्ध्रान्निःसृतां नीलां रोमालिं सर्पिणीं जानीमः, पीवरकुचतटविलुठद्धारनायकमणिं च तच्छिरःस्थं भासुरं रत्नं प्रतीम इति रोमालीं व्यालीत्वेन वर्णयति ।

१५४ हे मातः ! भगवतः सूर्यात्मकान्नेत्राद्यमुनाऽजनीति सञ्जातेर्ष्येव गङ्गा तत्पादादुद्भूता, पुनरात्मसाम्यगर्वं वहन्तीं तां निन्दितुमिव पादजायास्तस्या औरसत्वाऽभावेन गौणाऽपत्यतां प्रख्यापयन्ती

तस्याः कर्तुं तवाऽसौ किमभवदुदरे भानुजा रोमराजि-
व्याजाद्विश्वाम्ब पत्न्याविदुरुदरभवं मुख्यवृत्त्या ह्यपत्यम्॥१५४॥

शौरेरिति। हे विश्वाऽम्ब! शौरेः श्रीकृष्णस्य सूर्यात्मनः सूर्यरूपस्य अक्ष्णः सकाशाद्यमुना समजनि उत्पन्ना इति उद्धता ईर्ष्या अक्षमा यस्याः सैव गङ्गा भागीरथी तस्य शौरेरङ्घ्रौ चरणे जाता, तथापि तदपि तवाऽपत्यता तोकता गौणी गुणादागता किल। कुत? इति चेत् हि यस्मात् पत्न्याः उदरभवं साक्षाज्जठरभवं मुख्यवृत्त्या शक्तिवृत्त्या अपत्यम् औरसं विदुः। तदुक्तं विज्ञानेश्वरे दायभागविभागावसरे दशविधपुत्राणाम् 'औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुत' इति। इति तस्या भागीरथ्याः निन्दां कुत्सां, निन्दा स्यादपवादे ऽपि कुत्सायामपि योषिति इति मेदिनी। कर्तुं तव लक्ष्म्याः उदरे रोमराजेः रोमावलेर्व्याजात्कपटात् अभवदुत्पन्ना किम्? उत्प्रेक्षाकैतवापन्हुत्यलङ्कारौ। स्रग्धरावृत्तम्॥ १५४॥

जेतुं कंसारिमुष्टी व्यवसितमधिकामाजि सद्यस्तनक्ष्मा-
भृद्भ्यामभ्याशदेशे तव जयति रमे रोमरूपा शतघ्नी।

---

यमुना त्वदुदरे रोमावलिरूपेणोद्भूयौरसत्वेन तां निन्दतीयेति चातुर्येण रोमावल्या यमुनारूपत्वं प्रतिपादयन्नाह।

१५५ सुरतसङ्गरे भगवतो मुष्टी जेतुं ते स्तनपर्वतरूपराजभ्यामुद्युक्त,मत एव तत्समीपे रोमावलिरूपा शतघ्नी न्यस्ता भाति, त्वङ्गघनरूपे सङ्गे घने च पर्वतमण्डले नाभौ यच्छतमुखानिगत्वरतमा-

दत्ते नाभी रमे सज्जघनधरणिभृन्मण्डले यन्मुखोद्य-
त्सायःपिण्डपातस्थलनियमकृते क्लृप्तगर्तप्रतीतिम् १५५।

जेतुमिति। हे रमे! कामाऽजौ इत्यधिकामाजि मदनयुद्धे सुरते इत्यर्थः। शत्रुभूतौ कंसारेर्भगवतः मुष्टी प्रति जेतुं सद्यो भवौ सद्यस्तनौ यौ क्ष्माभृतौ राजानौ पक्षे सद्यः यौ स्तनक्ष्माभृतौ कुचपर्वतौ ताभ्यां कर्तृभ्यां व्यवसितं निश्चितमित्यर्थः। ततस्तयोः अभ्याशदेशे समीपे तव रोमरूपा शतघ्नी जयति। यन्मुखोद्यत्सायसः पिण्डः गोलकः तस्य पातस्थलस्य नियमकृते निश्चयार्थं कल्पिते सज्जे सन्नद्धे घने निबिडे धरणिभृन्मण्डले नितम्बपर्वतदेशे च शरण्यरूपे नाभिः क्लृप्तस्य गर्तस्य प्रतीतिं प्रत्ययं दत्ते ददातीत्यर्थः। स्रग्धरावृत्तम्। श्लेषरूपकोत्प्रेक्षालङ्काराः। अत्र रोमरेखाख्ययन्त्रमित्यपि पाठः॥ १५५॥

अभ्युद्यता ऽऽस्यसुरभिग्रहणाय रोम-
रेखाषडङ्घ्रिततिरम्ब पथि प्ररूढम्।
उत्तुङ्गसङ्गतमुरोजगिरीन्द्रयुग्म-
मुल्लङ्घितुं चिरमुपायमुदीक्षते किम्॥ १५६॥

अभीति। हे अम्ब! रोमरेखैव षडङ्घ्रीणां भ्रमराणां ततिः

---

ऽयोगोलपाताय विरचितगर्तभ्रान्तिं जनयतीति रोमालिं शतघ्नीरूपेण वर्णयति।

१५६ अधररसस्य सौरभग्रहणाय प्रवृत्ता रोमरेखारूपा मधुकरपटली मार्गमाक्रम्य स्थितमुन्नतकुचगिरियुग्ममुल्लङ्घितुमूर्ध्वमुखी भूत्वा समुद्वीक्षते किमित्युत्प्रेक्षमाणो भृङ्गालिरूपतां रोमपङ्क्तेः प्रतिपादयति।

पङ्क्तिः आस्यस्य मुखस्य सुरभिः सुगन्धः तस्य ग्रहणाय अभ्युद्यता उद्युक्ता सती पथि मार्गे प्ररूढमुद्भूतम् उत्तुङ्गसङ्गतम् उच्चं परस्परसंलग्नं यदुरोजगिरीन्द्रयुग्मं स्तनपर्वतद्वयम् उल्लङ्घितुमतिक्रामितुम् उपायमुद्योगं चिरं बहुकालम् उदीक्षते अवलोकयति किम् ? उत्प्रेक्षारूपकालङ्कारौ । वसन्ततिलकावृत्तम् ॥ १५६ ॥

रत्नावली तव रमे वरमेखलाया-
मङ्गारपङ्क्तिरविदूरगता तु तस्याः ।
रोमावली तदुपजातविशीर्णमूल-
धूमाऽऽकृतिं वहति शक्रमणीव नीला ॥ १५७ ॥

रत्नेति । हे रमे ! तव वरमेखलायां रत्नावली अङ्गारपङ्क्तिरिव तस्या अङ्गारपङ्क्तेः अविदूरगता निकटवर्तिनी शक्रमणीव नीला रोमावली तदुपजातस्याऽङ्गारपङ्क्तिभवस्य विशीर्णमूलस्य च्छिन्नमूलस्य धूमस्याऽऽकृतिं साम्यं वहति । वसन्ततिलकावृत्तम् । रूपकनिदर्शनालङ्कारौ ॥ १५७ ॥

निःश्रेणिका नाथदृशोरुरोज-
दुर्गाऽधिरोहे तव रोमरेखा ।

---

१५७ अथ मेखलागतरत्नावल्या भासुरतया अङ्गाररूपत्वं, तत्समीपगताया नीलमणिनीलाया रोमावल्यास्तदुद्गतविच्छिन्नमूलधूमरूपत्वं वर्णयन्नाह ।

१५८ अथ भगवद्दृष्टेः स्तनदुर्गाऽधिरोहणे सोपानपरम्परा या, त्व-

लावण्यलक्ष्मीवरवेणिका वा
रतीशभूपालकृपाणिका वा ॥ १५८ ॥

निःश्रेणिकेति । हे रमे ! तव वरमेखला नाथस्य हरेर्दृशः उरोजदुर्गे स्तनपर्वते ऽधिरोहस्याऽऽरोहणस्य निःश्रेणिका ऽधिरोहिणी 'जिना' इति लोके वा । लावण्यलक्ष्म्याः वरवेणिका वा । रतीशभूपालस्य कृपाणिका करवालः 'तरवार' इति लोके । अत्र सर्वत्र वाशब्देन उपमानाऽनिर्णयवर्णनात्ससन्देहालङ्कारः । रूपकं च । उपजातिवृत्तम् ॥ १५८ ॥

स त्वद्गर्भसमुद्भवो ऽपि हि शुचः संदायकैः सायकैः
पञ्चेषुः पितरं च वञ्चयति यत्पञ्चायुधं माधवम् ।
लग्ना नूनमतो जगज्जननि ते रोमावलिच्छद्मना
तातद्रोहिसुतप्रसूत्युपनता दुष्कीर्तिरेवोदरे ॥ १५९ ॥

स इति । स पञ्चेषुः तव गर्भात्समुद्भवो यस्य सो ऽपि शुचः शोकस्य सन्दायकैर्दातृभिः सायकैः बाणैः पञ्च शङ्खचक्रगदापद्मशार्ङ्गाख्यान्यायुधानि यस्य तं माधवं पितरं यद्यस्माद्वञ्चयति विप्रलम्भयति अतो हे जगज्जननि ! ताताय द्रुह्यतीति तातद्रोही स चासौ सुतश्च तस्य प्रसूत्या उपनता उद्गता दुष्कीर्तिर-

---

लावण्यलक्ष्मीवेणी वा, कामभूपखड्गलतिका वेति रोमावल्यां रूपत्रयमुत्प्रेक्षते ।

१५९ त्वद्गर्भसमुद्भूतः कामः पीडादायिभिः शरैः पञ्चायुधसञ्ज्ञमपि स्वोत्पादकं माधवं पञ्चायुधत्वेन स्पर्धमानः पीडयति, अत एवेदृशपितृवञ्चकप्रसवजन्या दुष्कीर्तिः रोमावलिरूपेण तदुत्पत्तिभूमौ तवोदरे संलग्ना किमिति चातुर्येणोत्प्रेक्षते ।

पयश एव लग्ना सक्तेत्यर्थः। नूनमित्युत्प्रेक्षालङ्कारः । कैतवापह्नुतिश्च। शार्दूलविक्रीडितं वृत्तम्॥ १५९॥

रज्जुं रोमालिरूपां गुरुकुचकलशालम्बिनीं जीवनार्थी
मातस्त्वन्नाभिवापीपरिसरमनयन्मन्मथो जाततृष्णः।
दृष्ट्वा तामत्यगाधामिह न पुनरलं दैर्घ्यमस्या इति श्री-
स्तामौज्झत्तत्र रज्जुं न तृष उपरतिः शम्बरध्वंसिनः स्यात्॥१६०॥

रज्जुमिति। हे मातः ? जाता तृष्णा तृषा यस्य स मन्मथः जीवनमुदकमर्थयति प्रार्थयति तादृशः सन् रोमालिः रूपम् आकृतिर्यस्यास्तां रज्जुं गुरुकुचकलशालम्बिनीं महतोः स्तनघटयोः आलम्बिनीं कृत्वा नाभिवाप्याः परिसरं प्रान्तम् अनयत्, ततस्तां नाभिवापीम् अत्यन्तमगाधामनलस्पर्शिनीं दृष्ट्वा हे श्रीः! पुनरस्या रज्ज्वाः दैर्घ्यम् अलं पर्याप्तं न इति तां रज्जुं तत्र औज्झत् । उज्झ उत्सर्गे अस्माल्लङ्। शम्बरस्य तदभिधाऽसुरस्य उदकस्य च ध्वंसिनो नाशकस्य तृष उपरतिः शान्तिः न स्यात्कापि न भवेदित्यर्थः । अत्र वापीकलशानां समृद्धावपि रज्ज्वा अपूर्णता विघ्न इति भावः। स्रग्धरावृत्तम्। उत्प्रेक्षार्थान्तरन्यासश्लेषालङ्काराः॥ १६०॥

---

१६० अत्र रोमालिं रज्जुरूपेण नाभिं चाऽगाधवापीरूपेण, कुचौ च कलशरूपेण वर्णयिष्यन् जीवनार्थी (निजप्राणनकामो, जलार्थी च) कामः कुचकलशालम्बिनीं रोमावलिरूपां रज्जुं सञ्जातस्पृहो जातपिपासश्च सन् त्वन्नाभिवापीप्रान्ते प्रापय्य तामतीव गभीरामालोक्य रोमालिरूपरज्जुदैर्घ्यं न पर्याप्तमिति पर्यालोच्य तत्समीपएवात्याक्षीत्, यतः शम्बरविनाशकस्य (कामस्य, जलविध्वंसकस्य च) तृषः शान्तिः न कदापीत्याह।

ऋत्विग्रमे रतिमखे ननु यौवनात्मा
नाभीबिलाऽवटयुतोदरवेदिकायाम् ।
यूपं तनोति तव लोमलतास्वरूपं
शङ्के ऽस्य सङ्गतमुरोजयुगं चषालम् ॥ १६१ ॥

ऋत्विगिति । हे रमे ! नन्विति वितर्के । रतिमखे सुरतयज्ञे यौवनात्मा तारुण्यरूपः ऋत्विक् नाभीबिलमेव अवटो गर्तस्तया युतायां(?) युक्तायामुदरवेदिकायां रोमलतारूपं यूपं तनोति शाययति(?) रोपणार्थमित्यर्थः । अतो ऽस्य संगतं संबद्धम् उरोजयुगं कुचद्वन्द्वं चषालम् इति यूपशिरसि वलयाऽऽकारः काष्ठविशेषः । चषालो यूपकटक इत्यमरः । वसन्ततिलकावृत्तम् । रूपकोत्प्रेक्षालंकारौ ॥ १६१ ॥

रतीशमातस्तव रोमवल्लिका-
मयी मनोज्ञा यमुना पुनातु माम् ।
वलित्रयं यत्र तरङ्गविभ्रमं
बिभर्ति हारांशुचयश्च फेनताम् ॥ १६२ ॥

रतीशेति । हे रतीशमातः ! यत्र यमुनायां वलित्रयी तरङ्गभावं चेत्यपरं हारांशुचयः फेनतां बिभर्ति सा तव रोमवल्लिकामयी मनोज्ञा यमुना मां पुनातु पावयत्वित्यर्थः । वंशस्थं वृत्तम् । रूपकालङ्कारः ॥ १६२ ॥

---

१६१ हे रमे ! सुरताऽध्वरे ऽध्वर्युर्यौवनं नाभीगर्तयुतोदरवेदिकायां रोमलतारूपं कुचकटकोपशोभितं यूपं ( पशुबन्धनस्तम्भं ) तनोतीति शङ्के इति रोमावलिं यूपरूपेण वर्णयति ।

१६२ अथ वलित्रयतरङ्गाऽलङ्कृता हारकान्तिफेनविलसिता ते रोमावलिरूपा कालिन्दी मां पुनात्विति नारूपेण रोमालिं वर्णयति।

स्तनाऽद्रिभाजि स्थिरहारशोभा-

सुधाऽम्बुधौ रोमलता मुरारिः ।

वटच्छदः स्यादुदरं तवाऽम्ब

वलित्रयं चित्रमिहोपधानम् ॥ १६३ ॥

स्तनेति । हे ऽम्ब ! स्तनाद्रिभाजि स्तनपर्वतस्थे स्थिरहारशोभारूपे सुधाम्बुधौ तव रोमलतारूपो मुरारिर्हरिः, उदरं वटस्य च्छदः पर्णं, दलं पर्णं छदः पुमानित्यमरः । एवं वलीनां त्रयम् इह उपधानम् उपबर्हं स्याद्भवेदित्यर्थः । उपेन्द्रवज्रावृत्तम् । रूपकालङ्कारः ॥ १६३ ॥

नाभीसरोरोधसि नारिकेल-

द्रुमभ्रमं रोमलता ददाति ।

तदग्रलग्नौ तनुतस्तव श्रीः

स्तनौ पुनस्तत्फलयुग्मशङ्काम् ॥ १६४ ॥

नाभीति । हे श्रीः ! तव नाभिरूपस्य सरसः रोधसि । कूलं रोधश्च तीरं चेत्यमरः । रोमलता नारिकेलद्रुमस्य भ्रमं ददाति । पुनस्तस्याऽग्रे लग्नौ इमौ स्तनौ तस्य द्रुमस्य फलयुग्मस्य शङ्कां तनुतः विस्तारयतः । उपजातिवृत्तम् । भ्रान्तिमदलङ्कारः ॥ १६४ ॥

---

१६३ कुचगिरिपरिशोभिते हारकान्तिसुधोदधौ तव रोमालिरूपस्य मुररिपोस्तवोदरमेव वटपत्रं, वलित्रयं च चित्रमुपधानं शङ्क इत्याह ।

१६४ नाभी रूपसरस्तटे रोमलता नारिकेलतरुरूपा भाति, तदग्रसंलग्नौ ते कुचौ च नारिकेलफलयुगलशङ्कां जनयत इति नारिकेलतरुरूपेण रोमावलिं वर्णयति ।

नाभीसरश्चिरमगाधतरं विधाय
नारायणप्रणयिनि श्रमिणा विधात्रा ।
रोमावली तव विभाति तटे तदीये
क्षिप्तेव तत्खननहेतुरियं शलाका ॥ १६५ ॥

नाभीति । हे नारायनप्रणयिनि ! अतिशयेनाऽगाधमित्यगाधतरम् । अत्यन्ताऽतलस्पर्शमित्यर्थः । तव नाभीसरश्चिरं विधाय कृत्वा श्रमिणा श्रमवता विधात्रा ब्रह्मणा तदीये तटे तस्य सरसः खननस्य हेतुः कारणभूता क्षिप्ता स्थापिता शलाका इषीकेवेयं रोमावली विभाति । वसन्ततिलकावृत्तम् । उत्प्रेक्षालङ्कारः ॥ १६५ ॥

सरितो गिरितोऽवतीर्य निम्नं
प्रविशन्त्यम्ब तवाऽत्र नाभिगर्तात् ।
तनुलोमलताकलिन्दजाऽहो
स्तनशैलाऽन्तिकमारुरुक्षतीव ॥ १६६ ॥

सरित इति । हे ऽम्ब ! सरितः नद्यः गिरितः पर्वतसकाशादवतीर्य निम्नं प्रविशन्ति अत्र तव नाभिगर्तात् तनुलो-

———

१६५ नाभीरूपं सरश्चिरखननेनाऽगाधतरं विधाय श्रान्तेन विधिना तत्तीरे क्षिप्ता तत्खननसाधनं लौहशलाकेव तव रोमावली विभातीति रोमावलिं लोहशलाकारूपेण वर्णयति ।

१६६ लोके हि नद्यः पर्वतादधोऽवतीर्य निम्नं देशं विशन्तीति दृष्टचर, परं तव रोमावलिरूपेयं लोकोत्तरा यमुना कुचगिरिपरिसरमारोढुमिच्छतीत्याश्चर्यमिति विलक्षणयमुनारूपेण रोमावलिं वर्णयति ।

मलतारूपा कलिन्दजा यमुना स्तनशैलयोः अन्तिकम् । उप-कण्ठान्तिकाभ्यर्णेत्यमरः । आरुरुक्षत्यारोढुमिच्छतीवेत्यहो इ-त्याश्चर्ये । उत्प्रेक्षासङ्करोऽयम् । औपच्छन्दसिकं वृत्तम् ॥ १६६ ॥

दायादः पितुरेष नाभिकमले दामोदरस्यैधते
धातेत्येवमसूययेव जननि प्रेप्सुस्ततोऽप्युच्छ्रयम् ।
नाभीकूपसमुत्थरोमलतिकानालाऽग्रजाग्रद्भव-
त्सारोरोजसरोजकोशयुगमध्यास्ते सुतस्ते स्मरः ॥ १६७ ॥

दायादेति । हे जननि ! एष धाता दायादः । दायादौ सु-तबान्धवौ इत्यमरः । पितुर्दामोदरस्य नाभिकमले एधते दीप्यते इत्येवमसूयया गुणदोषाविष्करणेनेव ततो धातुरप्युच्छ्रयमौन्नत्यं प्राप्तुमिच्छुस्ते सुतः स्मरः क्रीडाकलहे भगवद्वशीकरणेना-ऽस्याः प्रियसुत इति भावः । नाभीकूपात्समुत्थाया रोमल-तिकाया नालाऽग्रे जाग्रत्स्थिरं यद्भवत्याः सारमुरोजरूपं सरो-जकोशयोर्युगं तस्मिन्नध्यास्ते ऽधितिष्ठति । शार्दूलविक्रीडितम् । उत्प्रेक्षालङ्कारः ॥ १६७ ॥

अथ त्रिवलिवर्णनम्—

जगत्त्रयीजीवनजन्महेतौ
वलित्रयी भाति तवोदरेऽस्मिन् ।

---

१६७ ब्रह्माणं निजभ्रातरं दामोदरनाभिकमलाऽवस्थितं दृष्ट्वा संजातमत्सरस्तत उत्कर्षमिच्छुस्ते सुतः स्मरो भवत्या रोमालिरूपना-लाऽग्रलग्नसारभूतपयोधरसरोजकोशद्वन्द्वं समुच्छ्रितमध्यास्ते इति उत्प्रेक्षमाणो रोमावलिं कुचकमलनालतया वर्णयति ।

१६८ जगत्त्रय्या जीवनं (प्राणनं, जलं च), तस्य हेतौ तवाऽस्मिन्नु-

नारायणप्रेयसि नाभिरूप-
निपानसोपानपरम्परेव ॥ १६८ ॥

जगदिति । हे नारायणप्रेयसि ! जगत्त्रय्या जीवनस्य प्राणनस्योदकस्य च जन्मनो हेतौ तवाऽस्मिन्नुदरे नाभिरूपस्य निपानस्य कूपोद्धृताऽम्बुसमावेशार्थं शिलादिकृतगर्तस्येत्यर्थः । सोपानस्य परम्परेवेयं वलित्रयी भाति । उपजातिवृत्तम् । श्लेषरूपकोत्प्रेक्षाः ॥ १६८ ॥

जित्वा जगन्ति विशिखैर्जगदम्ब जैत्र-
स्तम्भं तवाऽङ्गभुवि रोमलताच्छलेन ।
मिन्वन् मनोजनृपतिर्जितलोकसंख्यां
मूले किमस्य तिसृभिर्व्यलिखद्वलीभिः ॥ १६९ ॥

जित्वेति । हे जगदम्ब ! मनोजरूपो नृपतिः विशिखैर्जगन्ति जित्वा तवाऽङ्गभुवि रोमलताच्छलेन जयनशीलं जैत्रं स्तम्भं यूपं मिन्वन् प्रक्षिपन्सन्नस्य मूले तिसृभिर्वलीभिः जितलोकसंख्यां व्यलिखत्किम् ? इत्यत्र च्छलपदोक्त्या कैतवाऽपह्नुत्यलङ्कारः । उत्प्रेक्षा च । वसन्ततिलकावृत्तम् ॥ १६९ ॥

---

दरे वलित्रयी नाभिकूपाऽऽहावसोपानश्रेणिरिव विभातीति वलित्रयीं सोपानश्रेणिरूपेण वर्णयति ।

१६९ हे अम्ब ! कामरूपो नृपतिः शरैर्जगत्त्रयं विजित्य रोमलताकपटेन जयस्तम्भं तवाऽङ्के निखायाऽस्य मूलभागे तिसृभिर्वलीभिर्जितलोकसङ्ख्यां व्यलिखत् किमित्युत्प्रेक्षते ।

स्नातस्य नाभिसरसि ध्रुवमब्धिकन्ये
संजग्मुषो रतिपतिव्रतिनः समाधिम् ।
आषाढमेव कलये तव रोमराजि-
मस्या वलित्रितयमस्य च दर्भकूर्चम् ॥ १७० ॥

स्नातस्येति। हे ऽब्धिकन्ये ! नाभिसरसि स्नातस्यैव समाधिं जगामेति जग्मुषः प्राप्तस्येत्यर्थः। रतिपतिसंज्ञस्य व्रतिन आषाढं, पालाशो दण्ड आषाढ इत्यमरः । रोमराजिं रोमावलिं कलये जानामि । अस्यास्तव वलित्रयम् अस्य दर्भानां कूर्चं जानामि । वसन्ततिलकावृत्तम् । उत्प्रेक्षालङ्कारः ॥ ७० ॥

नाभीवापीसविधभुवि ते यौवनाऽऽरामवृद्ध्यै
न्यस्तं रोमावलिमयघटीयन्त्रदारु स्मरेण ।
मूले तस्य स्फुरति रचितं पादविन्यासहेतोः
सोपानानां त्रितयमुदधेः पुत्रि वल्यात्मना किम्॥ १७१॥

नाभीति। हे उदधेः पुत्रि ! स्मरेण मदनक्षेत्राजीवेन ते नाभीरूपाया वाप्याः सविधभुवि सन्निधिभूमौ यौवनाऽऽरामस्य तारुण्योपवनस्य वृद्ध्यै वर्धनार्थं रोमावलिमयं तद्घटीयन्त्रं कु-

---

१७० नाभिरूपसरसि कृताऽवगाहस्य समाधिं ( समाधानं, योगञ्च ) जग्मुषः कामरूपब्रह्मचारिणस्तव रोमावलिम् आस्यसंमितं पालाशदण्डं, वलित्रयं च दर्भकूर्चं जाने इति पालाशदण्डत्वेन रोमालिं वर्णयति ।

१७१ तव नाभीरूपदीर्घिकासविधे तारुण्यरूपोपवनवृद्ध्यै स्मरेण रोमावलिरूपं घटीयन्त्रं विन्यस्तं, तस्य च मूले पादविन्यासार्थं वलित्रयरूपं सोपानत्रितयं रचितं किमित्युत्प्रेक्षितं ।

पजलोद्वाहनयन्त्रं 'राहाट्घाटगे'इति लोके। तस्य दारुकाष्ठं न्यस्तं, तस्य दारुणो मूले पादानां विन्यासस्य स्थापनस्य हेतोः रचितं सोपानानां त्रितयं वल्यात्मना त्रिवलीरूपेण स्फुरति किम् ? रूपकोत्प्रेक्षालङ्कारौ। मन्दाक्रान्तावृत्तम् ॥ १७१ ॥

अथ नाभिं वर्णयति—

दीर्घं नाभीविवरसरसो देवि गम्भीरिमाणं
स्पष्टं द्रष्टुं वृषगिरिपतेरक्षमावक्षमीनौ ।
गाम्भीर्यैकास्पदमपि रसैः पूरितं मानसं यत्
तस्य स्वैरं पतति जलधेः पुत्रि तत्रैव नित्यम् ॥१७२॥

दीर्घमिति। हे देवि ! नाभीविवरसरसः दीर्घं गम्भीरिमाणं गाम्भीर्यं स्पष्टं द्रष्टुं वृषगिरिपतेर्हरेः अक्षरूपौ मीनौ असमर्थौ, अतो गाम्भीर्यस्यैकास्पदमद्वितीयस्थानं रसैः कारुण्यशृङ्गारादिभिस्तोयैश्च पूरितमपि तस्य हरेर्मानसं सरः स्वान्तं च नित्यं स्वैरं यथेष्टं तत्र नाभौ पतति। मन्दाक्रान्तावृत्तम्। श्लेषालङ्कारः॥ १७२ ॥

———

१७२ भगवतो नयनमीनौ दीर्घं नाभीविवरसरसो गाम्भीर्यं प्रच्छन्नत्वात् स्पष्टं द्रष्टुमसमर्थौ, यतस्तत्र नाभीसरसि गाम्भीर्यैकास्पदं (अचञ्चलं, गभीरं च) रसैः (शृङ्गारादिभिर्जलैश्च) परिपूर्णं भगवतो मानसं (मनो, महासरश्च) नित्यं पतति। एवं च गभीरतरं मानसमपि यत्र पति तदगाधत्वं कथं नाम वर्णयितुं शक्यमित्याह।

आश्रित्य सज्जघनहस्तिगिरिस्थितायां
पञ्चायुधो भृशमुदञ्चति देवि काञ्च्याम् ।
नाभीमनन्तसरसीं कमले खगेन्द्र-
स्तम्भं च रोमलतिकां वलिधिष्ण्यभाजम् ॥ १७३ ॥

आश्रित्येति । हे देवि, हे कमले ! पञ्चायुधः कामो विष्णुश्च सदुत्तमं जघनमेव हस्तिगिरिः, पक्षे सज्जा घना यस्मिन्स यो हस्तिगिरिस्तस्मिन् स्थितायां काञ्च्यां मेखलायां पुर्यां चाऽनन्तसरसी तदभिधं सरः चेत्यपरं वलय एव धिष्ण्यं स्थानम् अन्यत्र बलेरुपहारस्य धिष्ण्यं स्थानं भजति तं खगेन्द्रस्तम्भं गरुडस्तम्भरूपां रोमलतिकाम् आश्रित्य भृशमुदञ्चति शोभते । अत्रैकत्र वलिरिति तालव्यः स एव पुरीपक्षे बलिरिति ओष्ठ्यः शब्दः । तत्र प्रमाणं वाग्भट्टालङ्कारे 'यमकश्लेषचित्रेषु वबयोर्डलयोर्न भित्' इति । श्लेषालं० वसन्ततिलकावृत्तम् ॥ १७३ ॥

जघनपुलिनवत्यां केशशैवालभाजि
त्रियुगनयनमीनैस्तृष्णया सेवितायाम् ।

---

१७३ पञ्चायुधो भगवानेव कामः सज्जघनमेघावृतहस्तिगिरिरूपं समीचीनजघनरूपहस्तिसंकुलं गिरिम, अनन्तसरसीरूपां नाभिम, पूजास्थानं त्रिवलिस्थानोल्लसितं गरुडस्तम्भरूपां रोमावलिं चाश्रित्य स्थितायां काञ्चीपुरीरूपायां रशनायां विराजतइत्याह ।

१७४ हे कमलमुखि ! जघनरूपसैकतपरिगतायां केशरूपशैवालालंकृतायां भगवन्नयनमीनैस्तृष्णया (पिपासया, परमाऽनुरा-

त्वयि रसभरितायां देवि सौन्दर्यसिन्धौ
नलिनमुखि विधत्ते नाभिरावर्तशोभाम् ॥ १७४ ॥

जघनेति । हे नलिनमुखि, हे देवि ! जघनमेव पुलिनम् अस्यामस्ति तस्याम् । एवं केशा एव शैवालानि तानि भजति तस्यां त्रियुगस्य भगवतो नृसिंहस्य नयनान्येव मीनास्तैः सेवितायां रसेन तोयेन शृङ्गारादिना च भरितायां पूर्णायां सौन्दर्यस्य सिन्धौ नद्यां त्वयि नाभिः आवर्तशोभां वहते । मालिनीवृत्तम् । रूपकानदर्शने अलङ्कारौ ॥ १७४ ॥

अथ काञ्चीं कवयति—

त्वन्मध्ययष्टिं परिवेष्ट्य शेते
नाभीबिलाऽन्ते रशनापृदाकुः ।
असावपूर्वः कमले यदीया-
न्यङ्गानि सर्वाणि च रत्नवन्ति ॥ १७५ ॥

त्वदिति । हे कमले ! असौ अपूर्वः रशनापृदाकुः काञ्चीरूपः सर्पः त्वन्मध्यरूपां यष्टिं परिवेष्ट्य वेष्टयित्वा नाभीबिलस्याऽन्ते समीपे शेते निद्राति । अपूर्वत्वमेव दर्शयति यदीयानि सर्वाणि चाङ्गानि रत्नवन्ति रत्नयुक्तानि सन्ति । अत्र शेते इति क्रियार्थसंपत्तये रशनायाः पृदाकुत्वेन परिणामकथनात्परिणामालंकारः । उपजातिवृत्तम् ॥ १७५ ॥

---

गेण च ) सेवितायां रसैः ( शृङ्गारादिभि,र्जलैश्च ) भरितायां त्वद्रूपायां सरसि ते नाभिरावर्तरूपा विराजते इत्यावर्तरूपेण नाभिं वर्णयति।

१७५ काञ्चीरूपः सर्पस्त्वन्मध्यरूपां यष्टिं परिवेष्ट्य नाभीविलान्ते शयानः रत्नालंकृतसर्वाङ्गो भातीति फणामात्रे रत्नयुतात् लौकिकात्सर्पादतिरिक्तत्वमस्येत्याह ।

मध्यात्मना जननि शब्दगुणेन योगा-
ज्जग्राह शब्दमतुलं रशनागुणस्ते।
शौरेः श्रवोवियति सौति सुखं स शब्दै-
स्तुष्ट्यै विशिष्य किल शिष्यगिरो गुरोः स्युः॥१७६॥

मध्येति। हे जननि ! मध्यो वलग्नम् आत्माऽदृश्यत्वेन स्वरूपं यस्य तेन शब्दगुणेनाऽऽकाशेनेति यावत्। योगात्समागमात्ते यो रशनागुणः काञ्चीरज्जुः शब्दगुणकमाकाशमित्युक्तत्वात् तस्मादतुलं शब्दं जग्राह अध्यैत, सः शौरेः श्रवोवियति कर्णाऽऽकाशे सुखं सौति ददाति। तथा हि—शिष्यगिरश्छात्रवाण्यः गुरोः विशिष्य विशेषेण तुष्ट्यै हर्षाय स्युः भवेयुः किल। अनुगुणार्थान्तरन्यासावलङ्कारौ वसन्ततिलका॥१७६॥

रतितन्त्ररहस्यमम्ब शब्दै
रमणीयैर्विशदं प्रकाशयन्ती।
रसनैव रतिप्रियस्य नूनं
रशनाऽसाविति लेखकप्रमादः॥ १७७॥

रतीति। हे ऽम्ब ! असौ रशना रमणीयैः सुन्दरैः शब्दैः र-

---

१७६ मध्यरूपेण शब्दगुणेन (शून्यरूपतया आकाशेन) सम्बन्धात् ते काञ्चीगुणः शब्दगुणात् तस्माच्छब्दविद्यां गृहीत्वा भगवतः श्रोत्राकाशे सुखं जनयतीति गुरोः शिष्यगिरोऽधिकां मुदं दधते इत्युक्त्या समर्थयन् त्वन्मध्यशिष्यस्य रशनाकलापस्य रवा भगवतोऽतिप्रिया इत्याह।

१७७ निजशब्दैः कामशास्त्रसिद्धान्तप्रतिपादिका ते काञ्ची न रशना, ऽपि तु कामस्य रसना, लेखकप्रमादात्सकारस्थाने शकारः पठ्यते इति वदन् रशनाया भगवत्कामोद्दीपकत्वं प्रतिपादयति।

तितन्वस्य रहस्यं प्रकाशयन्ती रतिप्रियस्य कामस्य नूनं रसना जिह्वेव, रशना काञ्चीति लेखकस्य प्रमाद इति । रसज्ञा रसना जिह्वा, काञ्ची सप्तकी रशनेति चोभयत्राप्यमरः । अत्र रशनाया मेखलाया धर्मनिह्नवेन शब्दकरणे हेतूक्त्या रसनात्वारोपाद्धेत्वपन्हुतिरलङ्कारः । औपच्छन्दसिकं वृत्तम् ॥ १७७ ॥

उपाश्रिता मध्यममब्धिकन्यके
निजप्रभाभिः शमितोत्तमस्थितिः ।
असौ कृतश्रीमदनादरा रमे
न मेखला न प्रतिभाति मे खला ॥ १७८ ॥

उपेति । भो अब्धिकन्यके । मध्यमं वलग्नं मध्यमपुरुषं च । मध्यमः स्यात्स्वरे मध्ये मध्यदेशे च मध्यजे इति विश्वः । उपाश्रिता सती निजप्रभाभिः स्वकान्तिभिः स्वोत्कर्षैश्च शमिता उत्कृष्टस्य तमसः उत्तमस्य श्रेष्ठस्य च स्थितिर्यया सा कृतः श्रीमदनस्य आदरः पक्षे श्रीमतां विदुषामनादरो यया सा । अनादरः परिभव इत्यमरः । असौ मेखला मे वेङ्कटाध्वरेः(?)खला दुर्जना न प्रतिभातीति न, इति नञ्द्वयस्य प्रकृतार्थदार्ढ्यतया खलत्वं निश्चितम् । तदत्र द्वितीयार्थे द्रष्टव्यम् । वंशस्थं वृत्तं, श्लेषोत्प्रेक्षे अलङ्कारौ ॥ १७८ ॥

---

१७८ मध्यभागमुपाश्रिता निजकान्तिभिर्विनाशिताऽन्धकारस्थितिः कृतकामादरा न मेखला, माध्यमिकं नास्तिकमाश्रिता स्वप्रभावेण विनाशितसाधुस्थितिः श्रीमतामनादरकारिणी खलैव मे प्रतिभाति तात्कर्म्यादिति श्लेषणाह ।

यदनन्तपाणिनिहितं सुमध्यमे
वलते सुवर्णमयसूत्रमम्ब ते।
गुणवृद्धिमान् प्रकृतिशोभनोऽमुना
नियतं सुशब्दनिचयोऽभिधीयते ॥ १७९ ॥

यदिति। हे अम्ब! यद्यस्मात्ते सुमध्यमे वलग्ने अनन्तस्य भगवतः पाणिना करेण निहितं स्थापितं, पक्षे अनन्ताय भाष्यकाराय पतञ्जलये पाणिनये सूत्रकारमुनये च हितम्, एवं सुवर्णमयं हेमप्रचुरं सूत्रं काञ्चीरज्जुः, पक्षे सुष्ठुवर्णमयमक्षरमयं सूत्रं च 'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्। अस्तोभ्यमनवद्यं च सूत्रं सूत्रविदो विदुः' इति लक्षणात्। वलधातोः कर्तरि लट्। तत्तस्मात् अमुना पूर्वोक्तेन दिव्यसूत्रेण गुणेन माधुर्यादिना वृद्धिमान् पक्षे अदेङ् गुणः, वृद्धिरादैच् इति द्वे गुणवृद्धी अस्मिन् स्तः सः प्रकृत्या स्वभावेन धातुरूपया च शोभनः सुष्ठुशब्दानां स्वनानां सुप्तिङन्तपदानां च निचयः समूहः नियतम् अभिधीयते कथ्यते। अभिपूर्वाद्धाञो यकि रूपम्। मञ्जुभाषिणीवृत्तम्। श्लेषालङ्कारः ॥ १७९ ॥

---

१७९ हे मातः पतञ्जलिपाणिनिमुनिहितकारकं भगवत्करनिहितञ्च स्वक्षरं सावर्णं च, सूत्रं (काञ्चीदाम, इको यणचीत्यादि सूत्रकदम्बं च) यच्छोभते ऽमुना काञ्चीदाम्ना सूत्रेण च प्रवृद्धगुणो गुणवृद्धियुक्तश्च प्रकृतिसुन्दरः प्रत्ययविधानावध्यादिना च शोभनः मञ्जुलं शिञ्जितं साधुशब्दौघश्च क्रियते साध्यते चेत्यर्थः श्लेषेणाभिधत्ते।

श्रुतिमञ्जुनादनिचयैरभिरामा
सवलग्ननाभिजघनद्युतिहेतुः ।
विलसत्यनन्तसरसाऽक्षियुगाय
स्वदते मुकुन्ददयिते तव काञ्ची ॥ १८० ॥

श्रुतीति । भो मुकुन्ददयिते ! तव काञ्ची मेखला काञ्चीपुरीव श्रुतेः कर्णस्य श्रुत्या वेदस्य च मञ्जुभिः सुन्दरैर्नादनिचयैरभिरामा वलग्नेन सहितं नाभिजघनं प्राण्यङ्गत्वादेकवद्भावः । पक्षे सवे लग्नस्य प्रवृत्तस्य नाभिजस्य ब्रह्मणो घनायाश्च द्युतेर्हेतुः । इयं ब्रह्मयज्ञकथा पद्मपुराणस्थकार्तिकमाहात्म्ये । तां चाऽत्र संक्षेपतः पद्येन बध्नामि—

सह्याऽद्रौ क्रतुदीक्षिते ऽम्बुजभवे किञ्चिद्विलम्बात्स्वरां
नायातामवलोक्य तत्प्रतिनिधिं हर्याज्ञया तां भृगुः ।
गायत्रीं परिकल्प्य यज्ञमकरोत्तद्वीक्ष्य भूयः स्वरा
यातैवं जडरूपतामिति सुरव्राताय शापं ददौ ॥

नेत्रपरमनन्तस्य सरसायाऽक्षियुगाय, पक्षे ऽनन्ताभिधं यत्सरस्तेन अक्षियुगाय सर्वेषामपवर्गदानात् स्वदते रोचते । श्लेषालङ्कारः । कुटजाख्यं वृत्तम् ॥ १८० ॥

———

१८० वेदसुन्दरनादैर्मनोहरा यागप्रवृत्तब्रह्माऽधिकद्युतिकारिणी अनन्तसरोऽभिधसरोवरविराजिता काञ्चीपुरीव श्रवणमञ्जुलशिञ्जितसुन्दरा समध्यनाभिजघनशोभासम्पादिका तव काञ्ची अनन्तस्य भगवतः सानुरागनेत्रयुगलाय अनन्तसरोवरेण हेतुना जननयनद्वन्द्वाय च रोचते इति भगवतीकाञ्च्यां काञ्चीपुरीसाम्यं श्लेषेण प्रतिपादयति ।

काञ्चीं मुक्तिक्षेत्रमाहुर्जगत्या-
मिन्धे चित्रा तावकी देवि काञ्ची ।
अप्यार्याणां योगिनां मुक्तिहेतो-
श्चेतो यस्यां बध्यते तार्क्ष्यकेतोः ॥ १८१ ॥

काञ्चीति हे । देवि ! जगत्यां काञ्चीपुरीं मुक्तिक्षेत्रमित्याहुः इति सति यस्यां ते काञ्च्यां योगिनां मुक्तिहेतोरपि तार्क्ष्यकेतोर्विष्णोः चेतः बध्यते स्वयमेव बद्धं भवति । कर्मकर्तरि यक् । अतस्तावकी काञ्ची चित्रा इन्धे प्रकाशते । शालिनीवृत्तम् । विरोधाभासः ॥ १८१ ॥

लब्धवासमधिकाञ्चि देवि स-
द्रत्नजातमभिजातदीप्तिकृत् ।
कंसहिंसनकटाक्षपात्रतां
विन्दतीति क इवाऽत्र विस्मयः ॥ १८२ ॥

लब्धेति । हे देवि ! अधिकाञ्चि मेखलायां पुर्यां च लब्धवासं प्राप्तवसति अभिजातां प्राप्तरूपां, पक्षे अभिजातानां

---

१८१ काञ्चीपुरीं हि 'अयोध्या मथुरा काञ्ची'त्यादिपुरीसप्तकान्तर्गतां मुक्तिक्षेत्रमाहुः, परं तद्विलक्षणेयं कापि तव काञ्ची, यस्यां समाधिमतामपि मुक्तिदातुर्भगवतो ऽपि चेतो निबध्यते इति मुक्तिपुर्या बन्धनहेतुत्वमाश्चर्यकरमिति वदन् भगवच्चित्तबन्धनेन लोकोत्तरं सौभाग्यं ते काञ्च्या इत्याह ।

१८२ हे देवि ! अधिकाञ्चि ( काञ्चीपुरे, रशनायां च ) वर्तमानः कुलीनदीप्तिकारी सुन्दरकान्तिकारी च साधुसमूहः समीचीनमणिगणश्च भगवत्प्रीतिपात्रं भवतीत्युचितमेवेत्याह ।

कुलीनानां दीप्तिं करोति तत् सद्रत्नानां हीरकादीनां साधुश्रेष्ठानां च जातं कंसहिंसनस्य कटाक्षस्य पात्रतां योग्यतां भाजनतां च विन्दति अत्र कः विस्मयः ? न को ऽपीति । रथोद्धतावृत्तम् । श्लेषालङ्कारः ॥ १८२ ॥

अथाऽम्बरवर्णनम्—

अल्पादल्पं त्वद्वलग्नं च लग्नं
वासस्तस्मिन्नर्थतः शब्दतश्च ।
अम्ब स्नेहादम्बरं वीक्ष्य काञ्ची-
दम्भाद्विद्युत्तत्र विद्योतते हि ॥ १८३ ॥

अल्पेति । हे ऽम्ब ! अल्पादल्पमतिसूक्ष्मं त्वद्वलग्नं, तस्मिन्वलग्ने लग्नं वासश्चाऽल्पादल्पमित्यन्वयः । तत्र वासस्तु शब्दतः अम्बरसंज्ञम, अर्थतः सौक्ष्म्यादप्यम्बरमिदं वीक्ष्य स्नेहादम्बरमिदं मम विद्योतनस्थानमिति मैत्र्या तत्राऽम्बरे काञ्चीदम्भान्मेखलामिषेण विद्युद्विद्योतते हि निश्चयेन । दम्भादित्यत्र विभाषा गुणे ऽस्त्रियामित्यत्र विभाषेति योगविभागादियं हेतुपञ्चमी । शालिनीवृत्तम् । श्लेषकैतवापह्नुत्यलङ्कारौ । अत्र पद्ये 'अल्पाल्पकं तव वलग्नमिहापि लग्नं वासो ऽर्थतो ऽम्बरमिदं ननु शब्दतश्च । तद्दर्भ्यसज्जघनयोगवशेन काञ्चीदम्भान्मदम्ब किमु तत्र विभाति विद्युत्' इति कल्पिते विच्छित्तिविशेषः॥१८३॥

---

१८३ सूक्ष्मात्सूक्ष्मतरं ते मध्यं तल्लग्नं तथाविधं वसनञ्च वस्त्राकाशरूपाऽपार्थद्वयवाचित्वादम्बरं वीक्ष्य तत्स्नेहात् काञ्चीरूपा विद्युत्तत्र विद्योतते इति काञ्चीं विद्युद्रूपेण वर्णयति ।

अक्षपदादणुतस्तव मध्या-
दम्ब रमे वरमम्बरमेव।
अस्य हि वैभवमस्तविवादं
विप्रतिपन्नमनैन्द्रियकत्वम् ॥ १८४ ॥

अक्षेति। हे ऽम्ब! अक्षपदान्मुहुर्मुहुर्दर्शनीयत्वेन नेत्रस्थानादासेचनकादित्यर्थः। अणुतः सूक्ष्मात्तव मध्यात् अम्बरं वरं श्रेष्ठम्। अतिसूक्ष्ममित्यर्थः। एव निश्चयेन। युक्तं चैतत्। अक्षपदाज्जालान्तरगतरविप्रकाशे दृश्यमानात् अणुतो मध्यान्मध्यमपरमाणुरूपात्त्रसरेणोः अम्बरम् आकाशं वरमेव निरवयवत्वेन सूक्ष्मतमत्वात्। किं चाऽस्याम्बरस्य वैभवं कनकतन्तुविनिर्मितवाल्लिपुष्पशुकमयूरादिरचनारूपम् ऐश्वर्यं मध्यव्यापकत्वं च अस्तविवादं निर्विवादम्। आकाशस्य वैभवं विभुत्वमपि तथैव, मध्यस्य तु अवयवत्वेन व्यापकत्वं नास्ति अक्षपदत्वाच्च सर्वमते ऐन्द्रियकत्वम्। अम्बरस्याऽनैन्द्रियकत्वं विप्रतिपन्नं विवादग्रस्तं, केचनाहुर्विश्वकर्मानिर्मितमिदम्, अपरे पुनरीदृशरचनाकरणे सः असमर्थ इति भगवता मायानिर्मितमिदमिति आकाशस्यापि इन्द्रियाऽगोचरत्वं तार्किकादयो वदन्ति, रूपोपहितस्य तस्य प्रत्यक्षत्वं वेदान्तैकदेशिनो वद-

---

१८४ इन्द्रियग्राह्यादणुरूपात्तव मध्यात्तनोऽपि सूक्ष्ममम्बरं (दुकूलं) श्रेष्ठमेव, यदस्य दुकूलस्यैश्वर्यं निर्विवादमिन्द्रियग्राह्यत्वं तु विप्रतिपत्तिग्रस्तं कादाचित्कमिति दृश्यात् मध्यात् अणुतः मध्याऽणुपरिमाणान्निरवयवमम्बरं वरं यत् आकाशस्य विभुत्वं सर्वसम्प्रतिपन्नमिन्द्रियाऽगोचरत्वं च वादिविप्रतिपन्नमिति श्लेषेण दुकूलस्याऽतिसूक्ष्मत्वं वर्णयन्नाह।

न्तीति विप्रतिपत्तिविषयत्वाद्विप्रतिपन्नत्वमिति । तस्मादणुतो मध्यात्तवाऽम्बरं बरीमीति । दोधकं वृत्तम् । श्लेषकाव्यलिङ्गालङ्कारौ ॥ १८४ ॥

अण्वप्यदस्तव वलग्नमिवाऽम्ब काञ्ची-
मप्यम्बरं स्तनभरं च बिभर्ति युक्तम् ।
आहुर्यतो द्व्यणुककारणमप्यणुं त-
माधारमत्र कति चिज्जगतोऽखिलस्य ॥ १८५ ॥

अण्विति । हे ऽम्ब ! अण्वप्यदः तव वलग्नं मध्यं यथा महान्तौ स्तनगिरी बिभर्ति तथा वस्त्रमपि तादृक्काञ्चीं तन्नामिकां पुरीं च बिभर्ति, न चैतच्चित्रं, यतो द्व्यणुककारणमपि सन्तम् अणुमखिलस्य जगत आधारं के चित्तार्किका आहुरेवेति । वसन्ततिलकावृत्तम् । उपमा काव्यलिङ्गं चालङ्कारौ ॥१८५॥

कार्श्यं दृष्ट्वा कमलनयने नेत्रमेकं भवत्या
दत्तं मध्यं प्रति तव पतिस्तत्र तु स्पर्धयेव ।

———

१८५ अणुरूपमप्येतत्तवाऽवलग्नं काञ्चीं ( रशनां, काञ्चीपुरीं च ) अम्बरं ( वसन,माकाशं च ) स्तनरूपपर्वतं च बिभर्तीति स्थाने, यतो द्व्यणुककारणीभूतमणुं निखिलजगत्कारणत्वेन तदाधारमाहुः । अणुसंयोगाद् द्व्यणुकस्य तत्त्रितयाच्च त्रसरेण्वादिक्रमेणाऽणोरेव जगत्कारणतायाः प्रसिद्धत्वादिति लोकमातुर्मध्यस्य लोककारणत्वेन तदाधारत्वमणुत्वं च युक्तं, तस्यैवास्य काञ्च्याद्याधारत्वे न कोपि विस्मय इत्याह ।

१८६ भवत्या मध्यस्य कार्श्यं ( कृशत्वं, दारिद्र्यञ्च ) दृष्ट्वा तस्मै एकं नेत्रं ( वस्त्रं, नयनं च ) दत्तं, तत्र च सासूय इव ते दयितो रुचिरं नेत्रयुग्मं ( वस्त्रद्वयं, नयनयुगलं च ) ददौ, एवं त्रिनेत्रो ( व-

नेत्रद्वन्द्वं रुचिरमदिशत्ताद्विचित्रं त्रिनेत्रो
जातोऽप्येष प्रथयति कथं संपदं शम्बरारेः ॥ १८६ ॥

कार्श्यमिति। हे कमलनयने कञ्जनेत्रे! कार्श्यं दृष्ट्वा मध्यं प्रति भवत्या लक्ष्म्या नेत्रमंशुकं नयनं च दत्तं, तत्र पतिः स्पर्धया नेत्रयोर्नयनयोर्द्वन्द्वम् अदिशत्, अतस्त्रिनेत्रः शिवो जातो ऽपि शम्बरारेर्मदनस्य संपदं कथं प्रथयतीति विचित्रमलङ्करणमस्य मध्यस्य लोकस्य च जातमित्यर्थः। मन्दाक्रान्तावृत्तम् ॥ १८६ ॥

पयोजनाभप्रियपत्नि विष्णु-
पदारविन्दव्यपदेशमेव।
निरीक्ष्य मध्यं नियमेन तत्र
नेत्रं मुदा त्वं निदधासि नूनम् ॥ १८७ ॥

पयोजेति। हे पयोजनाभस्य पद्मनाभस्य प्रियपत्नि दयिते! विष्णुपदाऽरविन्दस्य अनन्तचरणकमलस्य, पक्षे अत्यन्ताऽसत्त्वेन खपुष्पस्य च व्यपदेशो व्यवहारो यस्य सः तं मध्यमवलग्नं निरीक्ष्याऽवलोक्य तत्र मध्ये एव त्वं नेत्रं वस्त्रं

---

स्त्रत्रयवान्, शिवश्च) कामसंपदं कथं वर्धयति? शिवस्य तद्वैरित्वादिति स चमत्कारं श्लेषेण वर्णयन् सूक्ष्मवस्त्रावृतं ते वलग्नं भगवतो नेत्राऽऽकर्षणपूर्वकं तत्कामसम्पदं विस्तारयतीत्याह।

१८७ भवत्या मध्ये क्रियमाणं नेत्रदानं (वस्त्रदानं, नयनदानं च। तस्य विष्णुपदाऽरविन्दव्यपदेशं (गगनकुसुमरूपं, नारायणचरणारविन्दरूपत्वं च) विचिन्त्यैव शून्यरूपे तत्र वस्त्रावरणमुचितमेवैवं नारायणचरणरूपे तस्मिन् पतिव्रतायास्ते नेत्रदानमुचितमेवेत्याह।

चक्षुश्च मुदा हर्षेण निदधासि स्थापयसि नूनमित्युत्प्रेक्षालङ्कारः। उपजातिवृत्तम् ॥ १८७ ॥

नेत्रेण नीरनिधिपुत्रि नितान्तयोगा-
न्मध्यं न चाक्षुषमिति क्षममेव मातः।
आसन्नता ऽपि नितरामतिदूरता वा
प्रत्यक्षतां प्रतिरुणद्धि यथा ऽञ्जनादौ ॥ १८८ ॥

नेत्रेणेति। हे नीरनिधिपुत्रि सिन्धुकन्ये! हे मातः! यतो नितरामासन्नता निकटवर्तितापि अत्यन्तं दूरतापि वा प्रत्यक्षतां निरुणद्धि यथा ऽञ्जनादौ, अञ्जनं कज्जलं हि शलाकया निहित नेत्रस्याऽत्यासन्नमपि न दृश्यते। आदिशब्दाद्योजनान्तरितगिरिवृक्षादयो ऽतिदूरत्वान्न दृश्यन्ते। वसन्ततिलकावृत्तम्। विकस्वरालङ्कारः ॥ १८८ ॥

अत्यल्पभावात्तव देवि मध्यो
हरेः कटाक्षाऽविषयो यतो ऽभूत्।

---

१८८ हे रमे! तव वलग्नस्य नेत्रेण (वस्त्रेण, नयनेन च) अत्यन्तसम्बन्धात्तन्न तत्प्रत्यक्षगोचर इति युक्तमेव, यतः शास्त्रज्ञा विषयस्याऽतिसामीप्यं दवीयस्त्वं वा प्रत्यक्षं प्रति प्रतिबन्धकं वदन्ति, निदर्शयन्ति चाऽतिसामीप्यादप्रत्यक्षं नेत्रस्थमञ्जनमित्याह।

१८९ हे देवि! तव मध्यो ऽत्यल्पत्वात् (सूक्ष्मत्वात्, तुच्छत्वाच्च) हरेः कटाक्षपाताऽगोचरो यतो ऽभूत्, ततो निरुपमकाञ्चीगुणाश्रयस्य निस्तुलसौन्दर्यादिगुणशालिनश्चाऽस्य निरन्तरं बन्धः (बन्धनं,

अतुल्यकल्याणगुणाश्रयस्या-

प्यजस्रबन्धोऽस्य किलाऽनुरूपः ॥ १८९ ॥

अतीति । हे देवि ! अस्वल्पभावान्नीचत्वात्सूक्ष्मत्वाच्च तव मध्यो वलग्नः यतो हरेः कटाक्षस्याऽपाङ्गस्याऽविषयः अदृश्यः अभूत् ततः अतुल्यानां असाधारणानां कल्याणानां शुभानां गुणानामाश्रयस्यापि निरुपमं सुवर्णतन्त्वाश्रयं वस्त्रं यस्मिन् तस्याप्यस्य अजस्रं सन्ततं बन्धः काञ्चीबन्धः संसारबन्धश्चाऽनुरूपो युक्त इत्यर्थः । उपजातिवृत्तम् । श्लेषसमालङ्कारौ ॥१८९॥

सुराशनश्रीप्रथने निदान-

मुपेन्द्रसंतोषकृदब्धिकन्ये ।

वलग्नमेतद्रुचिरोरुरम्भा-

विलग्ननेत्रं कलये बलघ्नम् ॥ १९० ॥

सुरेति । हेऽब्धिकन्ये ! एतद्वलग्नं बलघ्नमिन्द्रं कलये जानामि । तथा हि—सुष्ठु रशनाया इयं राशनी या श्रीस्तस्याः प्रथने प्रख्यापने पक्षे सुराणां देवानामशनं सुधादिः श्रीर्वस्त्रालङ्कारादिस्तयोः प्रथने च निदानम् । उपेन्द्रस्य विष्णोः पक्षे

———

संसारबन्धश्च ) उचित एव, न खलु भगवत्कटाक्षपातं विना भवबन्धनिवृत्तिरित्याह ।

१९० शोभना या रशनासम्बन्धिनी श्रीस्तत्प्रथने आदिकारणम्, उपेन्द्रस्य भगवतः सन्तोषकारि, तथा रुचि[illegible]रूरुरम्भयोः संलग्नदुकूलं तव वलग्नं, देवानामशनस्य या श्रीस्तस्या विस्तारकारणमुपेन्द्रस्याऽवरजत्वात्सन्तोषकारिणं सुन्दरोरौ रम्भायामप्सरस्सु लग्ननेत्रं बलाऽरातिम ( इन्द्रं, भगवतो बलापहारि च ) कलय इत्याह ।

इन्द्रस्योप समीपे सन्तोषकृत्। रुचिरे ऊरू रम्भे इवेति उपमित-समासः। तयोर्लग्नं नेत्रं वस्त्रं यस्याः, पक्षे रुचिरौ ऊरू यस्यास्तस्यां रम्भायां विलग्नं नेत्रं चक्षुर्यस्य तमिति। उपेन्द्रवज्रा-वृत्तम्। उत्प्रेक्षाश्लेषावलङ्कारौ। उपमा वा ॥ १९० ॥

परमादिषु मातरादिमं यदिदं कोशकृदाह मध्यमम्।
अमरः किल पामरस्ततः स बभूव स्वयमेव मध्यमः॥१९१॥

परमेति। हे मातः! तवेदं वलग्नं परमा ये आदयः द्व्यणुकादिक्रमेण जगदारम्भकत्वादणवः तेषु परमाणुषु आदिमं श्रेष्ठं अतिसूक्ष्मत्वात् मध्यस्य हि यावद्यावत्सूक्ष्मत्वं तावत्तावदुत्तमत्वं ततश्चात्युत्तमोत्तममित्यर्थः सम्पन्नः। युक्तश्चायं, ये परमेषूत्तमेषु आदय उत्तमास्तेष्वपि यदादिमं तदत्युत्तमोत्तममेव, एवं मुनिजनवादं शृण्वन् अमरः कोशकृत्प्रायेण शब्दाऽनुशासनपरः न त्वर्थविचारनिपुणपरः अत एव वर्णदृष्टिं कुर्वन् पर इतरवर्णाऽपेक्षया मकारो यत्र तादृशः परम इति शब्द एव तदादयस्तत्प्रकारा ये शब्दा उत्तमाऽधमचरमादयो मकारान्तास्तेषु सदपि यदादिमम् आदौ मकारो यस्य तादृशं वलग्नमिति तदनुरूपं मकारादिमकारान्तं मध्यममिति तन्नामाहाऽनुशशास तनुमध्यमत्वान्मध्यममिति योगो ऽप्यत्राऽनुकूल इति

---

१९१ हे मातः! श्रेष्ठेषु मकारादिषु च आदिमं (प्रथमम्, आदौ मकारघटितं च) ते वलग्नं मध्यमं (नातिश्रेष्ठं, मध्ये मवर्णघटितं च) अमरः कोशकारो यदाह तेन हेतुना अमध्यमस्यापि मध्यमत्वकथनेन पामरः स्वयमेव मध्यमः (अविवेचको माध्यमिकः, मध्ये मकार घटितश्च) अभूदिति श्लेषचातुर्येण वदन् मध्यस्य सर्वातिशायित्वं प्रतिपादयति।

इदमस्य केवलं वाक्चापलमेव न तु सर्वथा सुन्दरी योजना । अत्युत्तमोत्तमस्य मध्यमत्वोक्त्यसङ्गतेः । मध्यमकाराऽभावाच्च । अमरस्याप्यस्याऽसामञ्जस्येन नामाऽनुशासनं त्वमरोत्तमाऽभावत्वेन सार्वज्ञ्याऽसत्त्वात् । ततश्चाऽयममरो मध्यम एव देवेष्वपि तारतम्यसत्त्वात् निकृष्ट इति तु वक्तुमशक्यम् । उक्तयोजनाकारित्वात् मध्ये मकारदर्शनाच्च । ततो वाक्चापल्यजनितदोषात्तव वलग्नेन मध्यमो भवेति शप्त इव स्वयमेव मध्यमः प्रबभूव पुरैव देवेषु मध्यमोयं स्वर्गं त्यक्त्वा मध्यलोकं गतो ऽभूदित्यर्थः । स किल पूर्वममरेषु मध्यमोपि मध्यलोकवासित्वेन पामरो नीचो ऽभूत् स्वर्वास्यपेक्षया मध्यमस्य नीचत्वात् पामरस्य मध्यमकारत्वाच्च । वैतालीयं वृत्तम् । उत्प्रेक्षाऽतिशयोक्तिश्लेषविषमालङ्काराः ॥ १९१ ॥

अधिकाञ्चितया ऽभिवृद्धिमत्या
ऽप्यभिजातश्रुतिमञ्जुशब्दपङ्क्त्या ।
अतिभङ्गुर एव शून्यवादं
न जहौ माध्यमिकक्रमस्त्वदीयः ॥ १९२ ॥

अधीति । त्वदीयस्त्वत्सम्बन्धी मध्यमस्य वलग्नस्याऽयं माध्यमिकः स चासौ क्रमः स्थितिः अभिवृद्धिमत्या बहलया अधिकाञ्चि काञ्च्यामित्यर्थः । तया प्रसिद्धया ऽभिजा-

---

१९२ देवि ! त्वदीयो यो माध्यमिकक्रमः मध्यमसम्बन्धी क्रमः स काञ्च्यां प्रसिद्धया प्रचुरया कर्णसुन्दरशिञ्जितेन अतिभङ्गुरोपि शून्यरूपत्वं न जहाविति प्रकृतेर्थे माध्यमिकक्रमः शून्यवादी बौद्धोऽतिपूजितया प्रवृद्धया रमणीयवैदिकशब्दपरम्परया सम्नोपि शून्यवादं न जहाविति अप्रकृतार्थे श्लेषेणाह ।

तोत्पन्ना श्रुत्योः कर्णयोर्मञ्जुर्मञ्जुला या शब्दपङ्क्तिः किङ्किणीजनितशिञ्जितपरम्परा तया उपलक्षितः । इत्थंभूतलक्षणे तृतीया । अतिभगुङ्र एवाऽत्यन्तं भङ्गशीलोपि शून्यवादं नास्त्येवायमिति लोककृतवादं न जहौ न त्यक्तवान् । ओ हाक् त्यागे ऽस्मात्कर्तरि लिट् । यथा माध्यमिकानां बौद्धैकदेशिनां क्रमः परिपाटी अधिकम् अञ्चितया पूजितया अभिवृद्धिमत्या शब्दाऽल्पतायामप्यर्थबहुलतया अभिजाताः पण्डितास्तदुदीरिता या श्रुतीनां वेदानां मञ्जुपङ्क्तिः रम्यशब्दरचना तया अतिभङ्गुरोपि पराजितोपि स्वसिद्धान्तं शून्यवादं न जहाति तद्वत् । औपच्छन्दसिकं वृत्तम् । श्लेषालङ्कारः ॥ १९२ ॥

जननि स्मृतिजन्ममूलभूतं
तनु मध्यं तव सन्तताऽनुमेयम् ।
तदिहोपनतं पुरस्तनाऽङ्गी-
कृतसद्गौरवदर्शनाऽनुरोधात् ॥ १९३ ॥

जननीति । हे जननि ! तव तनु सूक्ष्मं परमाणुतुल्यं मध्यं स्मृतिजन्मनः कामस्य जन्मनो मूलभूतम् अधिष्ठानं तच्च स्मृतेः स्मरणस्य जन्मनः मूलभूतं विषयः । मानसविषयत्वादप्रत्यक्षमित्यर्थः । यद्धि प्रत्यक्षं तद्दर्शनप्रतियोगि न त्वेतत्तादृशम्, अत एव सन्ततमनुमेयमनुमातुं योग्यमेव तथापि तदुपनतं धृताऽवतारमिव मन्ये । कुत ! इति चेत् पुरः पुरतः स्तनाभ्याम् अङ्गीकृतस्य सतो गुरुत्वस्य दर्शनस्याऽनुरोधात् मत्तो

१९३ हे मातः ! स्मृतिजन्ममूलभूतं ( कामोत्पत्तिकारणं, स्मरणोत्पादमूलं च ) कृशमत एवाऽप्रत्यक्षं ते मध्यं पुरः स्तनगुरुत्वदर्शनान्मध्यं विना गुरुकुचभारधारणाऽसम्भवादनुमेयमुपनतम् अनुमितिविषयतामासमनुमेयमिति मध्यस्याऽतिसूक्ष्मत्वमाह ।

ऽर्वाचीनाभ्यां बाल्यात्परमित्यर्थः । तादृग्गौरवं सम्पादितं तत्र वरं ममाऽतिलाघवेनाऽवस्थानमिति हेतोरिति भावः । पुरस्तनत इति पुरस्तनौ पचाद्यच् । बाल्यानन्तरमित्यर्थः । औपच्छन्दसिकं वृत्तम् । काव्यलिङ्गश्लेषोत्प्रेक्षालङ्काराः ॥ १९३ ॥

न परं तव रम्यसीधुमित्रं
वचनं पञ्चमभूतमब्धिकन्ये ।
अपि तु स्फुटमेखलाकलाप-
प्रसरच्छब्दगुणोज्ज्वलं वलग्नम् ॥ १९४ ॥

नेति । हे अब्धिकन्ये ! तव सीधुमित्रं मद्यसुहृत् मोहकत्वेन पञ्चमभूतकोकिलशब्दरूपम् इति न, अपि तु स्फुटेन स्पष्टेन मेखलाकलापात्काञ्चीभूषणात्प्रसरता शब्दगुणेन उज्ज्वलं वलग्नमपि पञ्चमभूतमदृश्यत्वेनाऽऽकाशमिति भावः । औपच्छन्दसिकं वृत्तम् । तुल्ययोगितालंकारः ॥ १९४ ॥

अथलक्ष्मीकटिपश्चाद्भागं वर्णयति—

प्रबुद्धदीप्तौ प्रबलागमं ते
हसत्यशेषाऽम्ब गुरौ नितम्बे ।

---

१९४ मादकत्वेनाऽऽसवसुहृत्ते वचनमात्रं न पञ्चमभूतं ( पञ्चमकारान्तर्गततया मद्यरूपं, कोकिलस्वररूपपञ्चमाऽभिधस्वरविशेषरूपं च ) किन्तु काञ्चीकलापप्रसरच्छब्दरूपगुणोज्ज्वलं वलग्नमपि शब्दगुणत्वात् पञ्चमहाभूतेषु पञ्चमाऽऽकाशस्वरूपमिति सचमत्कारं मध्यस्य शून्यरूपत्वं प्रदर्शयति ।

१९५ विलसत्कान्तौ बुद्धसिद्धान्तस्फूर्तिमति च गुरौ ( कुम्भे, देशिके च ) ते नितम्बे प्रबलाऽगमं ( महापर्वतं, सर्वतः प्रबलां श्रुतिं च ) हसति, तस्य समीपे वसन् शिष्यश्च मध्यमः ( वलग्नं माध्य-

अन्ते वसंस्तस्य तु मध्यमोऽयं
स्थाने समातिष्ठत शून्यवादम् ॥ १९५ ॥

प्रबुद्धेति । प्रबुद्धोज्ज्वला दीप्तिः कान्तिर्यस्य तस्मिन्गुरौ महति नितम्बे, अन्यत्र प्रकृष्टोत्कृष्टा बुद्धे तच्छास्त्रे दीप्तिः प्रतिभा यस्य तस्मिन् गुरौ देशिके प्रबलः आगमो विशालता तं हसति प्रकाशयति, पक्षे प्रबलशून्यवादिनिरासक्षममागमं वेदं हसति, अन्ते वसन् समीपवासी छात्रश्च अयं मध्यमः वलग्नः नास्तिकश्च शून्यवादमभाववादं समातिष्ठत अवलम्बते स्मेति स्थाने युक्तमित्यर्थः । उपजातिवृत्तम् । श्लेषसमालंकारौ ॥ १९५ ॥

अथ मातृकटिपुरोभागं वर्णयति—

मकरध्वजराजभद्रपीठं
पुलिनं भूषणकान्तिरत्नसिन्धोः ।
जलजायतने पृथु त्वदीयं
जघनं यौवनहस्तिमस्तकं वा ॥ १९६ ॥

मकरेति । भो जलजायतने कमले ! पृथु महत् त्वदीयं जघनं मकरध्वजराजस्य कामसार्वभौमस्य भद्रपीठं सिंहासनं वा, भूषणानां रत्नकान्तिरूपायाः सिन्धोर्नद्याः पुलिनं, तोयोत्थितं तत्पुलिनमित्यमरः । वा यौवनरूपहस्तिनः मस्तकम्? इति संदेहालंकारः । औपच्छन्दसिकं वृत्तम् ॥ १९६ ॥

---

मिको बौद्धश्च शून्यवादं ) शून्यमिति प्रसिद्धमभाववादं च समातिष्ठतेत्युचितमेवेति श्लेषेण बौद्धरूपस्य मध्यस्य शून्यवाद उचित इत्याह ।

१९६ अथ पृथु तव जघनं कामराजस्य सिंहासनं, भूषणप्रभासमुद्रस्य सैकतं वा, तारुण्यवारण कुम्भस्थलं वेति संदिग्धे ।

अथ मदनमन्दिरं वर्णयति—

कामाऽङ्कुशेन कलितक्षतमच्युतेन
पाथोधिपुत्रि पृथुलं जघनं भवत्याः ।
हस्तीन्द्रमस्तकमपूर्वमिदं यदस्य
हस्तावुभौ लसत ऊरुमिषादधस्तात् ॥ १९७ ॥

कामेति । हे पाथोधिपुत्रि ! यद्यस्मादच्युतेन कामाङ्कुशेन लिङ्गेनेत्यर्थः । कलितक्षतं कृतव्रणम् अतो भवत्या इदं पृथुलं जघनम् अपूर्वमद्भुतं हस्तीन्द्रस्य मस्तकं मूर्धा भवति । अपूर्वत्वे हेतुः—यद्यस्मादस्य करिणः ऊरुमिषात्सक्थिव्याजादुभौ हस्तौ शुण्डे लसतः शोभां प्राप्नुतः, अतः। वसन्ततिलकावृत्तम् । उत्प्रेक्षाकाव्यलिङ्गे अलङ्कारौ ॥ १९७ ॥

अथोरुवर्णनम्—

करस्थीकर्तुं यां भगवति तवोरुश्रियमसौ
करी नित्यं काङ्क्षत्यभिलषति तामेव कदली ।
अतस्तामीर्ष्यातः प्रसभमभिमथ्नाति कलभो
द्वयोरेकत्रेच्छा जनयति मिथो द्वेषमधिकम् ॥ १९८ ॥

करेति । हे भगवति ! यां तवोरुश्रियं करस्थां हस्तगतां

---

१९७ यदस्य जघनस्याऽधोभागे ऊरुद्वयमिषाद्द्वौ शुण्डादण्डौ विलसतस्तेन भगवता उपस्थरूपेणाऽङ्कुशेन कृतव्रणं परिणाहि ते जघनं लोकविलक्षणं गजेन्द्रकुम्भं मन्ये इति गजकुम्भरूपेण जघनं वर्णयति ।

१९८ अथ भगवत्या ऊर्वोः करिकररम्भास्तम्भसादृश्यं वर्णयन् करी यां ते ऊरुशोभां हस्तगतां शुण्डादण्डगतां च कर्तुमिच्छति तामेव रम्भापि वाञ्छतीत्यसूययेव करी कदलीं मथ्नातीति 'एकाऽऽमिषाऽभिलाषो हि बीजं वैरमहातरो'रिति न्यायार्थोपन्यासपुरःसरं समर्थयति ।

शुण्डागतां च कर्तुं यो ऽसौ करी काङ्क्षति तामूरुरम्भामेव कदल्यभिलषति, अतस्तां कदलीं कलभः करिपोत ईर्ष्यातः प्रसभं मथ्नाति। तत्र हेतुः–द्वयोरेकत्रैकवस्तुनि इच्छा मिथः अधिकं द्वेषं जनयति अत इति भावः। शिखरिणीवृत्तम्। श्लेषोत्प्रेक्षार्थान्तरन्यासालङ्काराः॥ १९८॥

प्रकाशयत्पद्मगृहे मदोप-
रमां हरेः स्वां सुरताधिभूमिम्।
शुभोरुरम्भाद्वयशोभितां दिवं
जयत्युदारं जघनस्थलं तव॥ १९९॥

प्रेति। हे पद्मगृहे! तव स्वामात्मीयां हरेर्मदोपरमां गर्वहारिणीं सुरतस्याऽधिकां भूमिमधिष्ठानं प्रकाशयद्दर्शयत् शुभोरू रम्यसक्थिनी एव रम्भे कदलीस्तम्भौ तयोर्द्वयेन शोभितं जघनस्थलं दिवं स्वर्गं जयति। द्यौर्हि हरेरिन्द्रस्य मदवृद्धिकरी कर्मणा या सुरता देवत्वं प्राप्यते तस्याः पतनभयेनाऽधिष्ठानसङ्ग्रायाया भूमिरधिष्ठानम् एकरम्भाशोभिता चेति पराजये हेतुः। उपेन्द्रवज्रावृत्तम्। श्लेषव्यतिकरावलं०॥१९९॥

अथ मध्यलग्नमूरूपरितनं प्रदेशं वर्णयति—

प्रकृतिः समदर्शिनी मृदूनां
नितरामुन्नतिभाजि नीचके च।

---

१९९ भगवतो मदाय समाप्त अविषमां स्वां सुरतस्य प्रधानभूमिं प्रकटीकुर्वत् सुन्दरोरुरूपकदलीद्वयोपशोभितं ते जघनमिन्द्रसंमदाय समां (सशोभां) देवताभूमिं प्रकाशयन्तीं रम्भासमोरुं रम्भाऽद्वयेन शोभितां (एकयैव रम्भया शोभितामिति जये हेतुः) दिवं हसतीत्याह।

२०० कोमलानां स्वभावः समुन्नते नीचे च समदृष्टिर्भवतीत्ये-

इति संशयमुच्छिनत्ति मात-

स्तव सक्थिद्वितयं मुरद्विषो ऽपि ॥ २०० ॥

प्रकृतिरिति। समदर्शिनां(?) मृदूनां च प्रकृतिः स्वभावः समदर्शित्वं मार्दवं चेत्यर्थः। नितरामुन्नतिभाजि महतीत्यर्थः। अथ वा नीचके जने भवति मध्यस्थं तु वर्तते वा न वेति मुरद्विषोपि संशयं हे मात! स्तव सक्थिद्वयमुच्छिनत्ति दूरीकरोति तत्रापि क्व चिदस्तीति स्वोदाहरणेन स्वयं मध्यस्थं सत् समदर्शि मृदु चेति। अत्र सक्थिपदमूरुवाचकमिति न भ्रमितव्यम्। सक्थिनी हनुमत्प्रभुरिति पृथक्त्वेन दर्शनात्। औपच्छन्दसिकं वृत्तम् ॥ २०० ॥

करभः कलभः प्रशस्तहस्तः

कदली चाप्युरवः स्युरम्ब कान्त्या।

न तु तत्र च मुख्यवर्णदैर्घ्यात्

कथयन्त्यूरुपदं त्वदीयसक्थ्नोः ॥ २०१ ॥

करभेति। हे अम्ब मातः! करभः मणिबन्धादाकनिष्ठं

---

तद्विषये सुरद्विष उदीयमानं सन्देहं तव सक्थिद्वयं मध्यस्थतया ऊर्ध्वाऽधोभागयोरेकरूपेण दर्शनात्तटस्थमिव समुच्छिनत्तीति सक्थ्नोर्मार्दवं समत्वं च वर्णयन्नाह।

२०१ पाणिपार्श्वभागः, सुन्दरो वारणकरः, रम्भा चेत्यूरूपमाभूताः कान्त्या उरवो महान्तः स्युः, तत्र उरुपदेषु मुख्यवर्णस्य शोभाविशेषस्याऽऽदिमस्य उवर्णस्य च दैर्घ्यात् त्वत्सक्थ्योः ऊरुपदं प्रयुञ्जते इति कान्त्या महत्सु तेषु मुख्यकान्तिविशेषस्याऽभावप्रकाशनायैव ह्रस्वादिरुरुशब्दः प्रयुज्यते, त्वत्सक्थ्नोश्च तदाधिक्याद्दीर्घादिरूरुशब्दः प्रयुज्यते इत्याशयेनाह।

करस्य करभो बहिरिसपरः । प्रशस्तो विस्तृतः हस्तः शुण्डा-यस्य सः कलभः, कलभः करिशावक इत्यमरः । कदली रम्भा चेति त्रयमपि कान्त्या उरवः श्रेष्ठाः स्युः, तत्र पूर्वोक्तत्रयमध्ये मुख्यवर्णस्य ककारस्य दैर्घ्यं नास्ति अथ च मुख्यवर्णः श्रेष्ठकान्तिरस्ति, तस्य दैर्घ्यं नास्ति इति कृत्वा ऊरुपदं न कथयन्ति । त्वदीयसक्थ्नोस्तु मुख्यवर्णस्य सकारस्य संयोगे गुरुरिति दैर्घ्यात् अथ च मुख्यकान्तिबाहुल्यात् ऊरू इति दीर्घादिपदं प्रयुञ्जते । औपच्छन्दसिकं वृत्तम् । तुल्ययोगिताश्लेषहेतवोलङ्काराः ॥ २०१ ॥

तवोरुलक्ष्मीं द्विरदाः करस्थां
कर्तुं कृताऽऽशा मधुपाय मत्ताः ।
दिशन्ति दानं तदभीष्टसिद्धिं
नाऽऽपन्नपात्राऽर्पणतो हि नाऽर्थः ॥ २०२ ॥

तवेति । तव उरुलक्ष्मीं बृहत्संपत्तिम्, ऊरुलक्ष्मीं सक्थिशोभां च मत्ताः द्विरदाः करस्थां स्वाधीनां शुण्डाऽधीनां च कर्तुं कृता आशा इच्छा दिशश्च यैस्ते मधुपाय मद्यपाय भृङ्गाय च दानं वितरणं मदं च दिशन्ति तदभीष्टसिद्धिं त्वदूरुसंपत्तिं ना-

---

२०२ समदा द्विरदास्तवोरुकान्तिं करस्थां ( हस्तगतां, शुण्डादण्डगतां च ) कर्तुमाशया मधुपाय ( भ्रमराय, मद्यपाय च ) दानं ( मदोदकं वितरणं च ) ददतोऽपि ऊरुशोभाप्राप्तिरूपामिष्टसिद्धिं नाऽऽपन् इति 'अपात्रे दानं निष्फल'मिति न्यायोपन्यासमुखेन मत्ततया पात्राऽपात्रविवेकशून्यानां गजानां मधुपेभ्यो ऽपात्रभूतेभ्यो दानदानस्य निष्फलतया नाऽभीप्सितोरुशोभाप्राप्तिरिति वदन् ऊर्वोः करिकरादधिकां शोभां बोधयति ।

पन् न प्रापुः । तथा हि—अपात्रार्पणतः अर्थः प्रयोजनं न हि भवतीत्यर्थः । अत्र प्रमाणं सनयाचारस्मृतौ 'भस्मन्येव जुहोत्येष योऽपात्रे दानतत्परः । पात्रमुद्दिश्य दातव्यं नाऽपात्रे दानमिष्यते' इति । अत्रेष्टाऽनवाप्तिविषमाऽर्थान्तरन्यासश्लेषालंकाराः । उपजातिवृत्तम् ॥ २०२ ॥

असावसारो ऽन्तरतीव कर्कशो
मलीमसश्चोपरि कौञ्जरः करः ।
इति त्वदूरू हसतो हरिप्रिये
करिण्यपास्ते करभस्तु दूरतः ॥ २०३ ॥

असाविति । हे हरिप्रिये ! असौ कुञ्जरस्य गजस्यायं कौञ्जरः करः शुण्डा अन्तः असारो निःसारः तथा उपरि मलीमसः मलिनः कर्कशश्च इति त्वदूरू त्वत्सक्थिनी हसतः हस्तिशुण्डाया उपहासं कुरुत इति भावः । यतः करिणि गजे अपास्ते जिते सति तत्र करभः उष्ट्रः दूरतः, अपास्त एवेति भावः । 'गजा यत्र न गण्यन्ते मशकानां तु का कथा' इति न्यायेन करिणि हस्तिनि निराकृते करभस्योष्ट्रस्य का कथेति कैमुत्येनाऽर्थसिद्धौ काव्यार्थापत्तिरलंकारः । वंशस्थं वृत्तम् ॥ २०३ ॥

---

२०३ कुञ्जरसम्बन्ध्ययं करो ऽन्तर्निःसारः कठिनस्पर्शो मलिनवर्णश्चेति त्वदूरू तं हसतः इति करिविजये करभस्य ( करपार्श्वस्य, उष्ट्रस्य च ) का कथेति ऊर्वोः करिकरकरभाऽधिकसौन्दर्यमित्याह ।

विबुधास्तव वर्णयन्ति जङ्घे
शरधी दाशरथिप्रिये स्मरस्य ।
न वयं बहुमन्महे तदेत-
न्न हि पृष्ठीकुरुते मनोभवस्ते ॥ २०४ ॥

विबुधेति । हे दाशरथिप्रिये ! विबुधास्तव जङ्घे स्मरस्य शरधी इषुधी इति यद्वर्णयन्ति तदेतद्वर्णनं वयं बहु न मन्महे मन्यामहे । तत्र हेतुः–मनोभवः कामः ते जङ्घे न हि पृष्ठीकुरुते किंतु पुरस्करोति, यदि शरधी अभविष्यतां तर्हि न पुरोऽकरिष्यत् । औपच्छन्दसिकं वृत्तम् । काव्यलि० ॥ २०४ ॥

प्रमिलन्तु शतानि काहलानां
शरधीनां समुदेतु वा सहस्रम् ।
कमले तव जङ्घयोस्ततः किं
शतमन्धाः किमवेक्षितुं क्षमन्ते ॥ २०५ ॥

प्रेति । हे कमले ! काहलानां, वाद्यभाण्डविशेषे तु काहला कहलः खले इति विश्वः । 'कर्णा' इति जने । शतानि प्रमिलन्त्वेकीभन्तु, तथा शरधीनां निषङ्गाणां सहस्रम् उदेतूदयं प्राप्नोतु, ततस्ते जङ्घयोः किं ? शतम् अन्धाः अवेक्षितुं क्षमन्ते किम् ? इति प्रसिद्धन्यायलेखनेन जङ्घयोरुपमित्यनिष्पत्तिकथनात्प्रतीपालङ्कारः । औपच्छन्दसिकं वृत्तम् ॥ २०५ ॥

---

२०४ हे सीते ! विद्वद्भिः स्मरेषुधित्वेन वर्ण्यमाने अपि ते जङ्घे कामेन पुरस्कृतत्वादिषुधेश्च पृष्ठलम्बित्वान्न तद्रूपे मन्महे इत्याह ।

२०५ 'अन्धशतमपि समवेतं न विषयदर्शनाय प्रभवती'ति न्यायेन काहलानां ( वाद्यविशेषाणां ) शतम्, इषुधिसहस्रमपि वा न तावकजङ्घोपमानताप्राप्तयेऽलमिति निरुपमत्वं तयोराह ।

काहलः कमलमन्दिरे भव-
ज्जङ्घयोः श्रियमचूचुरद्यतः ।
तन्यते बहुमुखप्रभञ्जन-
क्षोभितेन निनदस्ततोऽमुना ॥ २०६ ॥

काहल इति । हे कमलमन्दिरे ! यतः काहलस्ते जङ्घयोः श्रियमचूचुरत् । चुरस्तेये ऽस्माल्लुङ् । ततः बहुना मुखप्रभञ्जनेन मुखोद्भूतवायुना क्षोभितेनाऽमुना काहलेन निनदस्तन्यते विस्तार्यते । अथ चायं चोरः अतो मुखे प्रकृष्टताडनेनोच्चैः रोदितीति ध्वनिः । अत्रेष्टाऽनवाप्तिपूर्वकाऽनिष्टावाप्तिविषमालङ्कारः । उत्प्रेक्षाहेतू अलङ्कारौ । रथोद्धतावृत्तम् ॥ २०६ ॥

अथ पादौ प्रथयति—

तनोति सिन्धोस्तनये मनोज-
तूणीरशङ्कां तव देवि जङ्घा ।
तद्बाणभूतं कमलं तदग्रे
पादाऽपदेशेन यदाविरस्ति ॥ २०७ ॥

तनोतीति । हे सिन्धोस्तनये देवि ! यतः तस्य तूणीरस्य बाणभूतं कमलं तस्याऽग्रे पादाऽग्रदेशे आविरस्ति प्रकटमस्ति ततः ते जङ्घा मनोजस्य तूणीरस्य शङ्कां तनोति । काव्यलिङ्गमलं० उपजातिवृ० ॥ २०७ ॥

---

२०६ हे रमे ! यतः काहलस्तावकजङ्घाश्रियमचोरयदत एव बहुमुखपवनाऽऽध्मातेन बहुवदनभञ्जनव्याकुलितेन तेन महान् शब्दो रोदनं च क्रियते इति काहले त्वदीयजङ्घातश्चोरितैव श्रीर्दृश्यते इति ततो जङ्घाद्वयस्याऽधिका शोभेत्याह ।

२०७ त्वच्चरणव्याजं कामशरभूतं कमलं यज्जङ्घाया अग्रभागे दृश्यते तेन त्वज्जङ्घा स्मरतूणीरभ्रान्तिमुत्पादयतीत्याह ।

वृन्देन वृन्दारकसुन्दरीणां
नन्देष्टसूनोः सखि वन्दनीये ।
मन्देतराऽऽनन्दथुमूलकन्दे
वन्दे भवत्याश्चरणाऽरविन्दे ॥ २०८ ॥

वृन्देति । हे नन्देष्टसूनोः सखि ! वृन्दारकाणां सुन्दरीणां वृन्देन वन्दितुं योग्ये मन्देतरस्य विपुलस्याऽऽनन्दस्य मूलस्य कन्दभूते भवत्याश्चरणाऽरविन्दे वन्दे । अत्र देवसुन्दरीवृन्दगता रतिः कविगतां तां पुष्णातीति प्रेयोलं० । इन्द्रवज्रावृत्तम्॥२०८॥

यौ यस्य पादौ यदुवीरभार्ये
तस्यैव दृष्टौ गतिदायिनौ तौ ।
चित्रं तदेतच्चरणौ तवेमौ
गजेन्द्रयोग्यां दिशतो गतिं नः ॥ २०९ ॥

याविति । हे यदुवीरस्य भार्ये ! यस्य पुंसो यौ पादौ तौ तस्य गतिं गमनं ददत इति दृष्टौ, तवेमौ चरणौ गजेन्द्रस्य योग्यां गतिं गमनं मोक्षं च नः दिशत इति चित्रम् । विरोधाभासालङ्कारः । उपजातिवृत्तम् ॥ २०९ ॥

---

२०८ अथ भगवत्याश्चरणावर्णनं चिकीर्षुरादौ हे नन्दनन्दनसखि ! देवाऽङ्गनावन्दनीये अमन्दानन्दमूलकन्दे भवच्चरणारविन्दे वन्दे इति प्रणमति ।

२०९ हे रमे ! यदीयौ पादौ तस्यैव गतिदायिनाविति प्रसिद्धत्वेऽपि मानुषपादवतामप्यस्माकं गजेन्द्रगतिं ( भाग्यवत्तासूचिकां मन्दगतिं, ग्राहगृहीतगजेन्द्रगतिं मोक्षं च ) दिशतः इति वदन् गजेन्द्रगामिन्यास्तव चरणयोर्गजेन्द्रगति(.मोक्ष )दानं न विस्मयावहमित्याह ।

नलिनायतने मृदु प्रवालं
पदयोस्तावकयोर्लवं प्रतीमः ।
अत एव बिभर्ति पल्लवाख्यां
भजते पादपशब्दमस्य पाता ॥ २१० ॥

नलिनेति। हे नलिनायतने! मृदु प्रवालं तव पादयोर्लवं लेशं प्रतीमो जानीमः। अत एव पदोर्लवः पल्लव इति, पल्लवः किसलय इति चाख्यां नाम भजति। पल्लवः किसले चले(?) इति मेदिनी। अस्य पल्लवस्य पाता रक्षिता पादं पाति रक्षति स पादपो वृक्षः इति चाऽऽख्यां बिभर्तीति श्लेषेणाऽन्यार्थत्वप्रकल्पनान्निरुक्त्यलङ्कारः। औपच्छन्दसिकं वृत्तम् ॥ २१० ॥

पदयोर्द्वितयं ननु त्वदीयं
भजति स्वामिनि बालमित्ररागम् ।
अथ पल्लवरूपमश्नुते तत्
प्रतिषेधन्ति हि बालसख्यमार्याः ॥ २११ ॥

पदयोरिति। हे स्वामिनि! त्वदीयं पदयोर्द्वयं बालमित्ररागम् उद्यदादित्यरक्तिमानं भजति, अथ ततः पल्लवस्य किस-

---

२१० अथ कोमलतरमपि किसलयं त्वच्चरणलवमेव मन्यामहे, ऽत एव तत् पल्लवमिति व्यपदिश्यते, अत एव चाऽस्य पल्लवस्य पाता रक्षको वृक्षः पादप इति व्यवह्रियते इति प्रवालाऽधिकाऽरुणं पल्लवकोमलं च ते चरणमित्याह।

२११ ईश्वरि! त्वत्पदद्वयं बालमित्ररागं (प्रत्यग्रोदितसूर्यरक्तिमगुणं, बालसुहृत्प्रीतिं च) प्राप्नोत्यत एव तत् पल्लवरूपं (किसलयरूपं, पादलवरूपं च) प्राप्नोति, यतो हि बालमैत्री लाघवकारिणीं स्मरन्तीति श्लेषेण चरणयोर्बालसूर्यपल्लवसादृश्यं वर्णयति।

लयस्य रूपं स्वरूपमश्नुते प्राप्नोति । युक्तं चैतत् । यो हि बाले मूर्खे च मित्रयोग्यं रागं स्नेहं भजति स विषयप्रीतिमतो रूपमश्नुते एव । पल्लवशब्दो हि विषयप्रीतिमति प्रयुज्यते । पल्लवस्तत्पदसाम्यमारुरुक्षतु, परं तेषामनेकेषां पाता स्वामी स्वारोहेदिति चेन्न । स हि पादपः पादत्राणतां गच्छेन्न तु पादत्वं तत्तस्मादार्या बालस्य मूर्खस्य सख्यं प्रतिषेधन्ति, इति प्रसिद्धम् । 'मूर्खे सौब च संसर्गो विषादपि सुदुस्त्यज' इति देवीभागवते । श्लेषार्थान्तरन्यासावलङ्कारौ । औपच्छन्दसिकं वृत्तम् ॥ २११ ॥

यद्वस्तु यद्गुणवता कलिताऽनुषङ्गं
तत्तद्गुणीति विदितं तव पादपद्मे ।
अत्यन्तरागिणि कृतं हृदयं मुनीनां
वैराग्यमम्ब वहतीति विचित्रमेतत् ॥ २१२ ॥

यदिति । हे अम्ब ! यद्वस्तु यद्गुणवता यच्छौक्ल्यादिगुणभाजिना कलिताऽनुषङ्गं कृतसङ्गमिति तद्वस्तु तद्गुणि तद्गुणविशिष्टमिति विदितं, सर्वेषामिति भावः । इति सति अत्यन्तरागिणि बहुरक्तिमति ते पादपद्मे कृतसम्बन्धं मुनीनां हृदयं वैराग्यं विगतरक्तिमत्त्वं, पक्षे वैतृष्ण्यं च वहतीत्येतच्चित्रम् । अत्र मुनिहृदयस्य रक्तत्वसम्बन्धेऽपि तद्गुणाऽननुसरणात् अतद्गुणालङ्कारः । इन्द्रवज्रावृत्तम् ॥ २१२ ॥

---

२१२ यद् यद्गुणवता सम्पृक्तं तत्तद्गुणवदिति प्रसिद्धावपि अधिकाऽरुणं त्वच्चरणं संसक्तं मुनिजनमानसं सरागत्वप्रसक्तावपि वैराग्यं ( रक्तिमाऽभावं, विषयप्रीत्यभावं च ) भजते इति वैचित्र्येण वर्णयन् अरुणं त्वच्चरणं विषयपराङ्मुखत्वसम्पादनेन मुनीन् संसारान्मोचयतीत्याह ।

पादान् सहस्रमपि बालसरोजबन्धोः
पादद्वयी जयति ते जगदम्ब दीप्त्या ।
बंहीयसामपि न सद्वसुहारकाणां
प्रायो जयः कुवलयार्तिकृतां कुतः स्यात् ॥ २१३ ॥

पादानिति । हे जगदम्ब ! ते पादद्वयी बालसरोजबन्धोर्बालसूर्यस्य सहस्रमपि पादांश्चरणान्किरणांश्च दीप्त्या जयति । तत्र हेतुः—प्रायः अतिशयेन बहुला इति बंहीयांसः प्रियस्थिरेति साधुः । निरनुस्वारपाठो ऽपपाठः । भूयसामित्यापाताद । तेषामपि सतां साधूनां नक्षत्राणां च वसूनां द्रव्याणां किरणानां च हरणकर्तृणां कुवलयस्य भूमण्डलस्य रात्रिविकासिकमलस्य च आर्तिकृतां पीडकानां जयः कुतः स्यात्? अपि तु पराजय एव भवेदिति भावः । अर्थान्तरन्यासश्लेषकाव्यलिङ्गालंकाराः । वसन्ततिलकावृत्तम् ॥ २१३ ॥

नवप्रवलादपि कोमलं ते
न वन्दते कश्चरणारविन्दम् ।
शनैरनैषीद् दृषदं यदम्ब
स्पृशन् सशङ्कं भगवान् विवाहे ॥ २१४ ॥

नवेति । हे ऽम्ब ! नवप्रवालादपि कोमलं यत्ते चरणारविन्दं

---

११३ जगदम्ब ! तव पादद्वयी बालसूर्यस्य पादसहस्रमपि कान्त्या जयतीति अतिबहुलानामपि सद्वसुहारकाणां ( नक्षत्राऽपहारिणां, साधुद्रव्याऽपहारिणां च ) तथा कुवलयाऽऽर्तिकृतां ( कैरवपीडाकराणां, भूमण्डलपीडकानां च ) प्रायः पराजय एव स्यादिति श्लेषेणार्थान्तरन्यासेन समर्थयति ।

२१४ भगवान् विवाहोत्सवे ऽतिसुकुमारं यत् सशङ्क एव स्पृशन् शनैरश्मोपरि निदधौ तन्नूतनकिसलयादपि कोमलं ते चरणं को वा न वन्दते? इत्याह ।

विवाहकाले भगवान् दृषदमश्मानमपि सशङ्कं स्पृशन् समनैषीत् तत्को न वन्दते ? इति काकुः । 'अथैनामश्मानमारोहयती'ति श्रुतेः । उपेन्द्रवज्रावृत्तम् । काव्यलिङ्गम् ॥ २१४ ॥

शुभतरलाक्षमब्जसुषमायतनं जगतां
जननि शुचिद्विजैः श्रितमिदं पदमास्यमपि ।
परमियती भिदा प्रथममभ्युदयं दधता
त्वहिमरुचा समं हिमरुचा चरमं च रमे ॥ २१५ ॥

शुभेति । भो जगतां जननि ! इदं शुभतरा लाक्षा यस्मिन्, आस्यं शुभे तरले अक्षिणी यस्मिन्, एवं शुचिभिः स्वच्छैः पवित्रैश्च द्विजैर्ब्राह्मणैर्दन्तैश्च श्रितं, परं तु तथापि प्रथमं पदम् अभ्युदयं दधताउदयता ऽहिमरुचा सूर्येण समं, चरममास्यं हिमरुचा चन्द्रेण समम् इयती भिदा । एवं भेद इत्यर्थ इति उपमानोपमेययोर्विशेषोक्त्या व्यतिरेकालंकारः । नर्कुटकं वृत्तम् ॥ २१५ ॥

प्रद्वेष्टि यः पादरुचिं त्वदीयां
तमिन्दिरे द्रष्टुमयोग्यमाहुः ।

---

२१५ हे रमे ! शुभतरलाक्षं ( शोभनलाक्षारागरञ्जितं, शोभने चञ्चले च अक्षिणी यस्मिन् तथाभूतं च ) अब्जसुषमाऽऽयतनं ( कमलचन्द्रकान्तिवसतिस्थानं ) शुचिद्विजैः ( पवित्रब्राह्मणैः, शुभ्रदन्तैश्च ) श्रितं ते पदमास्यं च । एवमुभयोः साम्ये ऽपि पदमुदयता सूर्येण सदृश,मास्यं तु तथाविधेन चन्द्रेण सममित्येतावान् भेदस्तयोरित्याह ।

२१६ तव पादकान्तिविद्वेषिणमवलोकनाऽनर्हं यत् कवयः कथयन्ति तत्र 'नेक्षेतोद्यन्तमादित्य'मित्यादिशास्त्रैर्निषिद्धदर्श-

दृष्टान्तमत्र प्रतिषिद्धदृष्टि-

मुद्यन्तमादित्यमुदाहरामः ॥ २१६ ॥

प्रेति। हे इन्दिरे! यः अग्र्यां श्रेष्ठां पादरुचिं प्रद्वेष्टि द्वेषं करोति तं द्रष्टुम् अयोग्यम् आहुः। कवय इति शेषः। अत्र त्वत्पाददेष्टृत्वेन दर्शनाऽयोग्यत्वे दृष्टान्तं प्रतिषिद्धा निषिद्धा दृष्टिर्दर्शनं यस्य तम् उद्यन्तमुदयं प्राप्नुवन्तम् आदित्यं सूर्यम् उदाहरामः कथयाम इति। अत्र प्रमाणम् 'उद्यन्तमस्तं यन्तमादित्यं नोदीक्षेया'दित्यापस्तम्बश्रुतिः। निदर्शनालंकारः। उपजातिवृत्तम् ॥ २१६ ॥

न वर्णतः केवलमीप्सितार्थ-

दानादपि त्वच्चरणौ सुरागौ।

श्रियैव नेमौ शतपत्रमित्रे

बभूवतुः पूज्यतयाऽपि मातः ॥ २१७ ॥

नेति। हे मातः! इमौ त्वच्चरणौ केवलं वर्णतः, सार्वविभक्तिकस्तसिः। आरक्तत्वेनेत्यर्थः। सुरागौ शोभनरक्तिमानौ इति न, तर्हि ईप्सितार्थदानादपि सुराऽगौ कल्पवृक्षौ। अपि च श्रियैव शोभयैव शतपत्रमित्रे कमलसखौ इति न, किं तु पूज्यतयापि शतपत्रमित्रे सवितारावित्यर्थः। बभूवतुः आसतुरित्यर्थः। उपजातिवृत्तम्। श्लेषालंकारः ॥ २१७ ॥

---

तम् उदयमानम् आदित्यं निदर्शनं ब्रूमहे इति त्वच्चरणविद्विट् मुखाऽवलोकनाऽनर्हो भवतीत्याशयेनाह।

२१७ हे मातः! इमौ त्वच्चरणौ वर्णतः (शब्दतः, रूपतश्च) केवलं न सुरागौ (सुरक्तौ) किन्त्विष्टस्य अर्थस्य (अभिधेयस्य, विषयस्य च) दानाद्धेतोः सुराऽगौ (कल्पवृक्षौ) एवं शोभामात्रेण न कुशेशयतुल्यौ अपि तु पूज्यत्वेनापि सूर्यतुल्यौ इत्याह।

सुरेन्द्रभर्गादिसुरव्रजेडिते
भजे तव क्षीरधिजे पदाऽम्बुजे ।
व्यनक्ति सक्तं यदलक्तकं हरे-
रुरस्तटे तत्र वरत्वमुच्चकैः ॥ २१८ ॥

सुरेति । भो क्षीरधिजे ! सुरेन्द्रः शक्रः, भर्गः शिवः, तदादिभिः सुरव्रजैः ईडिते स्तुते ते पादाऽम्बुजे अहं भजे । तत्र हेतुः—हरेः उरस्तटे वक्षसि सक्तं ययोः पादाऽम्बुजयोः अलक्तकं तत्र हरौ उच्चकैर्वरत्वं श्रेष्ठत्वं पतित्वं च व्यनक्ति प्रकटयति । वंशस्थं वृत्तम् । उदात्तालंकारः ॥ २१८ ॥

उदारसन्देहमुषं वितन्वती
मुदा रसं देहभृतां चिदात्मकम् ।
सदाऽरविन्दे ऽप्युदयन्तमिन्दिरे
पदाऽरविन्दे हसतः श्रिया तव ॥ २१९ ॥

उदारेति । हे इन्दिरे ! देहभृतां शरीरिणाम् उदारसंदेहमुषं महासंशयनाशकं चिदात्मकं चैतन्यस्वरूपं रसं ब्रह्मानन्दं 'रसो वै सः रसं ह्येवायं लब्ध्वा ऽऽनन्दी भवती'ति तैत्तिरीयश्रुतिः ।

---

२१८ इन्द्रशिवादिदेववृन्दस्तुते ते पदाऽरविन्दे वन्दे, ययोर्लाक्षारसो भगवतो वक्षःस्थल लग्नो वरत्वं ( तस्य श्रेष्ठत्वं, पतित्वं च ) प्रकटयतीति यदलक्तकं हरेः श्रैष्ठ्याऽभिव्यञ्जकं तयोर्माहात्म्यं कथं सर्वाऽतिशायि न स्यादित्यभिप्रेत्याह ।

२१९ देहधारिणां महासंदेहनाशकं ब्रह्मानन्दं ददती स्वचरणकमले बालसूर्ये समधिकया कान्त्या हेतुना हसतः इति चरणयोर्बालसूर्याऽधिककान्तिमत्त्वमुपपादयति ।

वितन्वती ददती ते पदारविन्दे श्रिया उदयन्तं रविं सदा हसतः। ततोऽधिकद्युतिमत्त्वादिति भावः। वंशस्थं वृत्तम्। उपमा व्यतिरेको वा ऽलङ्कारः॥ २१९॥

अपि नीरजस्फुरणहार्यहो रजः-
स्फुरणाऽपहारि पदयोर्द्वयं तव।
अपि हंसकप्रणयि धूतहंसकं
गमनेन पद्मभवने विशोभते॥ २२०॥

अपीति। हे पद्मभवने! नीरजस्य कमलस्य स्फुरणं शोभां हरति तच्छीलमपि रजःस्फुरणस्य रजोगुणोद्भवस्फुरणस्याऽपहारि नाशकम्, एवं हंसके नूपुरे प्रणय्यपि गमनेन धूतहंसकं परास्तमरालं, गतिलालित्येनेति भावः। तव पदयोर्द्वयं विशेषेण शोभते। मञ्जुभाषिणीवृत्तम्। विरोधाभासालङ्कारः॥२२०॥

कौ चिदङ्घ्रिकमले तवाऽऽश्रितौ
कंसहिंसकपुरन्ध्रि हंसकौ।
मञ्जुलैरखिलरञ्जकौ रुतै-
र्मानसे विहरतो मधुद्विषः॥ २२१॥

कौ चिदिति। हे कंसहिंसकपुरन्ध्रि! तवाऽङ्घ्रिकमले आ-

---

२२० सरसिजशोभाऽपहारि रजोगुणविनाशकं तावकपदयुगलं पादकटकप्रणय्यपि गमनेन जितमरालं संशोभत इति विरोधाभासमुखेनाह।

२२१ हे कंसारिपत्नि! त्वदीयाऽङ्घ्रिपद्मे भाश्रितौ कौ चिद्धंसकौ (कटकौ, मरालौ, परमहंसौ च) सुन्दरैः रुतैः (शिञ्जितैः, लोकानन्दकैः स्वरुतैः, ॐकारध्वनिभिश्च) भगवतो मानसे मानससरोविशेषे च विहरत इति नूपुरौ हंसपरमहंससादृश्येन वर्णयति।

श्रितौ मञ्जुलैः रुतैः शब्दितैः अखिलानां रक्षकौ हंसकौ पादकटकौ परमहंसौ च मधुद्विषः मानसे सरसि स्वान्ते च विहरतः क्रीडतः। रथोद्धतावृत्तम्। श्लेषालङ्कारः॥ १२१॥

राजच्छोभनखाश्रितं शुभकरं राजीवराजीसुहृत्
पद्मे गाढतमोहरं तव पदं बालाऽर्कबिम्बं च तत्।
यद्यप्यम्ब समं तथापि विदितो भेदस्त्वियानेतयो-
रर्घ्यं संस्कृतमुत्तरस्य कलयन्त्याद्यस्य पाद्यं बुधाः॥१२२॥

राजदिति। हे अम्ब, पद्मे! तव पदं चरणं तद्बालार्कबिम्बं च राजच्छोभैर्विलसद्द्युतिभिर्नखैः पक्षे राजति शोभने खे आकाशे आश्रितम्। शुभकरं कल्याणप्रदं, पक्षे उत्तमकिरणं च राजीवानां कमलानां राज्याः पङ्क्तेः सुहृन्मित्रं, सादृश्याद्विकासकारित्वाच्चेत्युभयत्र ग्राह्यम्। गाढतमसो ऽनाद्यज्ञानस्य पक्षे निबिडाऽन्धकारस्य च हरं नाशकम्। इति यद्यपि समं तथापि अन्त्यस्य बिम्बस्य संस्कृतं संस्कारयुक्तम् अर्घ्यम्, आद्यस्य पदस्य संस्कृतं पाद्यं कलयन्ति समर्पयन्ति बुधा ज्ञानिनः। इयानेव एतयोर्द्वयोर्भेदो विदितो ज्ञातः। अत्रोभयत्र पादार्घ्याभ्यां चेति यत्प्रत्ययः। अत्र 'अर्घ्यं दद्याच्छिरोपरि' इति वचनात् रवेरुत्तमाऽङ्गे या आदरक्रिया सा तव नीचाऽङ्गे इति

---

१२२ विराजमानैः शुभैर्नखैराश्रितं विराजमानं शोभनं खमाकाशमाश्रितं, कमलसुहृत् (कमलतुल्यं, कमलविकासकं च) गढाज्ञाननाशक,मन्धतमसनाशकं चेति ते चरणं सूर्यबिम्बं च तुल्यं, तयोश्चाऽयमेवभेदो यद्विद्वांसः सूर्यबिम्बस्य गन्धमाल्याद्यलङ्कृतमर्घ्यं चरणस्य च पाद्यं समर्पयन्तीति पाद्यपूजितस्याऽर्घ्यपूजिताऽपेक्षया श्रेष्ठत्वेन चरणस्य सूर्यबिम्बाच्छ्रैष्ठ्यमेवेत्याह।

व्यतिरेकः । अयमेव लक्ष्मीपादयोः श्लोकस्य चालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २२२ ॥

तव भगवति वन्दे दिव्यपादाऽरविन्दे
सदसि यदभिषेकं शम्भुजम्भाऽरिमुख्याः ।
स्वमुकुटघटितस्वःशाखिनिष्पन्नपुष्प-
प्रसृमरमकरन्दैरन्वहं तन्वते ते ॥ २२३ ॥

तवेति । हे भगवति ! सदसि सभायां शम्भुर्हरः जम्भाऽरिरिन्द्रः तौ मुख्यौ येषां ते देवाः स्वस्य मुकुटे घटितानां स्वःशाखिनः कल्पद्रोर्निष्पन्नानामुत्पन्नानां पुष्पाणां प्रसृमरैर्विसृत्वरैर्मकरन्दैर्ययोरभिषेकं तन्वतः कुरुतः ते तव पादारविन्दे अहं वन्दे नमामि । उदात्तालङ्कारः । मालिनीवृत्तम् ॥ २२३ ॥

प्रणतिषु तव पुण्यद्वन्द्वमासीत् पुरारेः
प्रणिपतनत एकं लोकमातस्त्वदङ्घ्र्योः ।
चिरविरहकृशस्य स्वाऽवतंसाऽमृतांशो-
स्तव नखमयतारायोजनेन द्वितीयम् ॥ २२४ ॥

प्रणतीति । हे लोकमातः ! पुरारेः शिवस्य तव प्रणतिषु

---

१२३ शिवेन्द्रादिभिर्देवैर्निजमौलिविधृतैः कल्पवृक्षकुसुममकरन्दाऽऽसारैः कृताभिषेके दिव्ये ते चरणे वन्दे इत्याह ।

१२४ त्वत्पदप्रणतस्य शिवस्य पादवन्दनजन्यमेकं, परं च चिरात् निजदारताराविरहितस्य तारापतेर्नखरूपतारासमागमप्रापणेन विघटितमिथुनघटनजमिति पुण्यद्वयमजनीति प्रतिपादनेन नखानां नक्षत्ररूपत्वं चरणस्य शिवप्रणत्यास्पदत्वेन माहात्म्याऽतिशयं च बोधयन्नाह ।

प्रणामेषु पुण्यद्वन्द्वम् आसीत् । तत्रैकं त्वदङ्घ्र्योः प्रणिपतनतः । पञ्चम्यास्तसिल् । द्वितीयं चिरविरहेण कृशस्य स्वाऽवतंसभूतस्याऽमृतांशोश्चन्द्रस्य तत्र नखमयानां ताराणाम् ऋक्षाणां योजनेनेति । उभयमेलनपुण्ये प्रमाणं शिवताण्डवोक्तयन्त्रप्रकरणे–'वश्याऽऽकर्षणविद्विष्टिमारणादिषु कर्मसु । वश्ये स्त्रीपुंसयोरैक्यकलनात् पुण्यभाग्भवे'दिति । अप्रकृतवर्णनेन प्रकृतनखतारकासाम्याश्रयणादप्रस्तुतप्रशंसालङ्कारः । मालिनीवृत्तम् ॥ २२४ ॥

चरणनलिनयुग्मं संसृतिक्लेशसिन्धो-
स्तव हरिसखि सन्तस्तारकं सङ्गिरन्ते ।
इदमुचितमवेमो येन तत्संश्रितानां
ततिरपि च नखानां तारकत्वं बिभर्ति ॥ २२५ ॥

चरणेति । हे हरिसखि ! येन तयोश्चरणयोः संश्रितानां नखानां ततिः तारकाणां भावस्तारकत्वं, शरदः कृतार्थतेत्यादिवत्सामान्ये नपुंसकम् । यद्वा त्वेचेति वैकल्पिकह्रस्वत्वम् । यद्वा तारकं तारकापि चेति त्रिश्वान्नक्षत्रवाच्यकारान्त एवेति । अथ च तद्गतनपुंसकत्वमपि बिभर्ति तच्चरणनलिनयुग्मं संसृतिक्लेशस्य सिन्धोस्तारकं सङ्गिरन्ते इदम् उचितमवेमो जानीमः । मालिनीवृत्तम् । काव्यलिङ्गमलङ्कारः ॥ २२५ ॥

---

२२५ त्वच्चरणसरोजयुग्मं संसारतारकं वदन्तीति युक्तमेव, यतस्तदाश्रितानां नखानां ततिरपि तारकत्वं (उत्तारकत्वं, नक्षत्रत्वं च) दधतीति चरणस्य संसारोद्धारकत्वं नखानां नक्षत्ररूपत्वं चाह ।

अनिशं प्रकाशमधिगन्तुमिच्छया
तव भानि सिन्धुतनये पदाऽम्बुजम् ।
अधिगम्य नूनमभवन् यतो नखा-
न्यत एव खं च तदभून्नभस्थलम् ॥ २२६ ॥

अनिशमिति । हे सिन्धुतनये ! अनिशं प्रकाशमधिगन्तुम् इच्छया भानि यतः तव पदाम्बुजम् अधिगम्य नास्ति खं येषां तानि नखान्यभवन् ततस्तत्खमाकाशं न भानां स्थलं स्थानं तन्नभस्थलम् अभवत् । अत्र यतः भानि ताराः नखान्यभवन् ततः खमन्वर्थमभूदिति युक्त्युक्त्या निरुक्त्यलङ्कारः । मञ्जुभाषिणीवृत्तम् ॥ २२६ ॥

मरालिकेड्या ऽप्यमरालिकेड्या
सुरद्रुमश्रीरपि विद्रुमश्रीः ।
खरांशुकान्ता नखरांशुकान्ता
ऽप्यम्ब द्वयीयं तव चित्रमङ्घ्र्योः ॥ २२७ ॥

मरालिकेति । हे अम्ब ! तव अङ्घ्र्योर्द्वयी मरालिकाभिर्हंसीभिः ईड्या स्तुत्यापि अमरालीनां कैर्मस्तकैरीड्या, एवं सु-

---

१२६ केवलं निशि प्रकाशमानानि नक्षत्राणि निरन्तरप्रकाशरूपतावाप्तये तव पदाम्बुजमाश्रितान्यत एव तानि नखानि ( नखरूपाणि, न खमाकाशो येषु तादृशानि च ) अभवन् खमाकाशं च न भस्थलं भानां नक्षत्राणां स्थलं चनासीदिति नखानां नक्षत्रसाम्यं वर्णयति।

२२७ हे अम्ब ! तव पदद्वयी हंसीस्तुता ऽपि देवपङ्क्तिशिरःस्तुता, कल्पवृक्षशोभाधारिण्यपि प्रवालारुणा, सूर्यसुन्दर्यपि नखकिरणरमणीयेति विरोधाभासवैचित्र्येणाह ।

रद्रुमवत्कल्पद्रुमवच्छ्रीर्दातृत्वशोभा यस्यास्तादृश्यपि विद्रुमवत् प्रवालवत् श्रीः रक्तत्वशोभा यस्याः सा, तथा खरांशुवत्सूर्यवत्कान्ता तेजोरूपा ऽपि नखराणां नखानामंशुभिः कान्ता सुन्दरी । खरं स्यात्तीक्ष्णघर्मयोरिति मेदिनी । अत्र श्लोकस्थपदर्शनेन विरोधं ज्ञात्वा टीकादर्शितार्थेन तस्याभासत्वं निर्णीयम् । उभयमेलनेन तदलङ्कारः कार्यः । उपजातिवृत्तम् ॥ २२७ ॥

चरणाविमौ हि करुणानिधे यत-
स्तरुणाऽरुणाग्रकिरणाऽनुकारिणौ ।
अनुविन्दतस्तदरविन्दबन्धुता-
मपि साधुचक्रबहुमान्यतां रमे ॥ २२८ ॥

चरणाविति । हे करुणानिधे ! तव इमौ चरणौ यतस्तरुणाऽरुणस्य बालसूर्यस्याऽग्रकिरणानाम अनुकरणं सादृश्यं कुर्वतस्तच्छीलौ । ताच्छील्ये णिनिः । ततस्मादरविन्दस्य बन्धुतां हितकारित्वं सादृश्यं च, एवं साधुचक्रस्य चक्रवाकस्य सत्समूहस्य च बहुमान्यतामनुविन्दतः प्राप्नुतः । काव्यलिङ्गमलं० मञ्जुभाषिणीवृत्तम् ॥ २२८ ॥

---

१२८ हे करुणानिधे ! यतस्ते चरणौ सूर्यकिरणाऽनुकारिणावत एव कमलबान्धवत्वं ( कमलतुल्यत्वं, कमलविकासकत्वं च ) एवं साधुचक्रबहुमान्यतां ( सज्जनपरमादरणीयत्वं, समीचीनचक्रवाकादरपात्रतां च ) प्राप्नुत इति पद्योः सूर्यकिरणसाम्यमाह ।

पदमाश्रितस्तव पयोधिकन्यके
विपदं न जातु भजतीति साम्प्रतम् ।
अपि तत्परागमधिमौलि धारय-
न्नपरागतां व्रजति जन्तुरद्भुतम् ॥ २२९ ॥

पदमिति । हे पयोधिकन्यके ! तव पदं चरणम् आश्रितः जन्तुः जातु कदा चिद्विपदं न भजतीति साम्प्रतं युक्तं, तयोः पदयोः परागम् अधिमौलि शिरसि धारयन्नप्यपरागतां भजतीत्यद्भुते, अपगतो रागो विषयप्रीतिर्यस्मात्तत्तामित्यद्भुताऽभावः । मञ्जुभाषिणीवृत्तम् । विरोधाभासः ॥ २२९ ॥

श्रितः परागं जरठः शशाङ्को
दृष्टो नतत्र्यम्बकशीर्षगश्रीः ।
स्पृशन्नपि त्वत्पदयोः परागं
न जातु तारुण्यमहो जहाति ॥ २३० ॥

श्रित इति । हे श्रीः ! पराऽगमस्ताचलं श्रितः स्थितः(?) शशाङ्कः जरठो वृद्धो दृष्टः, नतस्य कृतप्रणामस्य त्र्यम्बकस्य

---

२२९ अथ त्वत्पदाश्रितस्य न विपद्दर्शनं नापि वैराग्यदौर्लभ्यमिति श्लेषेण प्रतिपादयन् ते पदं प्राप्तो विपदं (विपत्तिम, अपदं च) न भजत इति युक्तं, परं तत्परागं मौलौ दधानोऽपरागतां (परागराहित्यं, वैराग्यं च ) लभते इति चित्रमिति विरोधाभासेनाह ।

२३० अथ देव्याः पादपरागमहौषधस्य जराभयहरत्वं प्रतिपादयितुं परागं ( साधारणपुष्परजः, पश्चिमाचलं च ) श्रितश्चन्द्रो जरठो दृष्टः । परं प्रणतशिवमौलिगतः स ते चरणपरागस्पर्शमात्रेण कदा चिदपि तारुण्यं न त्यजतीत्याह ।

शिवस्य शीर्षगो मूर्धस्थः स एव त्वत्पदयोः परागं स्पृशन्नपि तारुण्यं न जहाति अहो इति परागशब्दश्लेषेणाश्चर्यम् । अत्र परागस्पर्शरूपकारणसत्त्वे ऽपि जरठत्वरूपकार्याऽनुत्पत्तितो विशेषोक्त्यलंकारः । उपजातिवृत्तम् ॥ २३० ॥

सुरादिमान्यं विधुतोपसर्गं
शुभावहं ते मृदु चारुवर्णम् ।
पदं रमे यः प्रणमेज्जपेद्वा
दूरादपास्यत्यरमापदं सः ॥ २३१ ॥

सुरादीति । सुरा देवास्तदादिभिः । आदिशब्देन किंनरगन्धर्वादिभिरपि मान्यं पूजनीयं विधुतो निरासितः उपसर्गो बाधो येन तत् चारुः सुन्दरः वर्णो रूपं यस्मिन् तत् पुनः शुभं कल्याणमावहति ददाति तत् तव पदं चरणं यः पुमान् प्रणमेत् नमनकर्मीकुर्यात् स नरः परमा उत्कृष्टा चासावापद्विपत्तिश्च ताम् अरं द्रुतम् अपास्यति त्यजति । अरमापदं रमापदाऽभावं च श्रीमल्लोकतां यातीत्यर्थः(?) । अथ पदं रमेत्याकारकं नाम यः जपेत् सो ऽपि पूर्ववत्फलभाग्भवति । कीदृशं तत् ? सुष्ठु रः रेफः आदिर्यस्य तत्तथोवर्णः अन्यो द्वितीयो यस्य तत् । एवं च

———

२३१ हे रमे ! सुरादिमान्यं ( देवादिमान्यं, शोभनो रशब्द आदौ यस्यैवं माशब्दो ऽन्यो ऽन्त्यो यस्य तथाभूतं रमा इत्याकारकञ्च ) विधुतोपसर्गं ( निरस्तोपद्रवं, प्राद्युपसर्गरहितं च ) कोमलसुन्दराऽरुणरूपं मृद्वक्षरघटितं च ते पदं चरणं स्वद्वाचकं रमाशब्दं च यथायथं यः प्रणमेज्जपेद्वा स महतीमापदं दूरीकुर्यादिति भगवतीचरणनाम्नोर्विपन्नाशकत्वं प्रतिपादयन्नाह ।

रमारूपमित्यर्थः । विधुतः उपसर्गः प्राद्युपसर्गो यस्मात्तदपर्णा-पदवत्सोपसर्गं न भवति प्रथमतृतीयपञ्चमान्तस्था वर्णा मृदवोऽभिधीयन्ते । तादृशौ चारू सुखसुखौ वर्णौ यत्र तत् । उपजा० वृ० । श्लेषालं० ॥ २३१ ॥

पादं त्वपादं तव पङ्कजानां
वन्दे भवं देवि तरीतुकामः ।
मस्ते समस्तेडपि मञ्जुलाक्षा-
रागं परागं वहते यदीयम् ॥ २३२ ॥

पादमिति । हे देवि ! भवं संसारजलधिं तरीतुकामः अहं पङ्कजानां त्रपादं लज्जार्पिणं तव पादं वन्दे नमामि, यदीयं यत्सम्बन्धिनं मञ्जुः सुन्दरः लाक्षाया रागो यत्र तं परागं रजः समस्तेट् सर्वस्तुत्योऽपि शिवः मस्ते शिरसि वहते दधाति । अथ च यत्संश्रितमचेतनमपि रजः मञ्जुलम् अक्षारागं विषयेषु इन्द्रियाऽप्रीतिं वहति ततश्चेतनानामस्माकं सुतरां वैराग्यदानपूर्वकसंसारसिन्धुतारणम् भवच्चरणकमलं कुर्यादिति भावः । इन्द्रवज्रावृत्तम् । उदात्तालङ्कारः ॥ २३२ ॥

पदद्वयं यस्तव देवि सेवते
प्रभुः श्रितानां द्विपदो भवत्यसौ ।

---

२३२ हे देवि ! सकलस्तुत्योऽपि शिवः सुन्दरयावकरसारुणं यत्परागं शिरसा वहति, नवकमलत्रपाप्रदं तव चरणं संसारोत्तितीर्षया नमस्करोमीत्याह ।

२३३ हे रमे ! त्वत्पदकमलसेवको निजाश्रितानां गजप्रदो भवति, तद्विमुखं नरं विज्ञाश्चतुष्पदं ( पशुं ) कथयन्तीति चरणसेवकस्य

विधुस्वसस्ताद्विमुखस्तु यो नर-

श्चतुष्पदं हन्त वदन्ति तं बुधाः ॥ २३३ ॥

पदेति । हे देवि, हे विधुस्वसः ! यस्तव पदद्वयं सेवते असौ पदसेवी श्रितानां द्विपं गजं ददाति सः प्रभुः स्वामी भवति। गजान्तलक्ष्मीवान् भवतीति भावः । तु पुनः तयोः पदयोर्विमुखो यो नरः तं पादविमुखं नरं चतुष्पदं पदचतुष्टययुक्तं पशुं च वदन्ति हन्त हर्षे । वंशस्थं वृत्तम् । श्लेषालं० ॥ २३३ ॥

पदयोस्तवाऽङ्गरागं प्राहुः स्वाभाविकं वयं त्वेनम् ।

पुष्कलरागप्रियतमहृदयवसत्युपनतं च जानीमः ॥२३४॥

पदयोरिति । अङ्ग रमे ! तव पदयोश्चरणयोः एनं रागं स्वाभाविकं स्वभावसिद्धमित्येके कवयः प्राहुः । वयं तु पुष्कलः बहुलः रागः प्रीतिर्यस्मिन् तस्मिन् प्रियतमस्य हृदये वसत्या उपनतं प्राप्तम् एनं रागं विजानीमः । अत्र पदयोः स्वाभाविकरागनिन्हवं कृत्वा प्रियतद्धृत्प्रीतिरागारोपेण शुद्धाऽपह्नुतिरलंकारः । गीतिवृत्तम् ॥ २३४ ॥

परमकरावलिरम्या बहुरागधराधरोरुविभ्रमभाक् ।

---

महासंपत्प्राप्तिस्तद्विमुखस्य हिताऽनम्रतया च पशुत्वमिति वैशिष्ट्येणाह।

२३४ जनास्त्वच्चरणयोरारुण्यं स्वाभाविकं कथयन्ति, वयं तु बहुलराग( अधिकप्रीतियुत )प्रियहृदयनिवाससंक्रान्तं ब्रूम इत्याह ।

१३५ हे रमे ! उत्कृष्टा रत्नयोरैक्यात् याः कलास्तासां पङ्क्तिभी रम्या बहुलाऽरुणाऽधरोष्ठा सक्थिविलासधारिणी मराललितगतिस्त्वं, श्रेष्ठया करपङ्क्त्या भुजचतुष्टयेन रम्यः, बहुलप्रेमधरः, धरस्य

असि हंसहारिगतिका पतिवत्पितृवत्पितृप्रसूवच्च॥२३५॥

इति श्रीमद्वेङ्कटाध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे
सौन्दर्यस्तबको ऽष्टमः समाप्तः ॥ ८ ॥

परमेति। हे रमे! परमाः याः कलास्तासामावल्या रम्या, रलयोः सावर्ण्यात् बहुर्यो रागो रक्तिमा तं धरति तादृशो ऽधरो यस्याः सा, ऊर्वोः सत्भ्रोर्विलासं भजति सा, हंसवद् हारिणी सुन्दरी गतिर्यस्याः सा, त्वं रमा पतिवत्, पितृवत् सिन्धुवत्, पितृप्रसूवत् सायंसन्ध्यावत्, असि भवसि ।

पतिपक्षे परमा या करावलिः करपङ्क्तिस्तच्चतुष्टयमित्यर्थः। तेन रम्यः बहुला अगाः शैला यस्यां तस्या धराया भूमेः धारो धारको वराहरूपेण, ऊरुणा महता विना पक्षिणा गरुडेन यद् भ्रमणं तद् भजति सः, हंसानां परमहंसानां हारिणी स्पृहणीया गतिर्लोको यस्य सः ।

पितृपक्षे परा महती या मकराणाम् आवलिः पङ्क्तिस्तया रम्या, बहुलान् अगान् पर्वतान् धरति सा धरा भूर्यस्य सः, उरवो ये विभ्रमा विशिष्टजलनिर्गमाः 'खाड्या' इति लोके । तान् भजति सः, हंसवद्धारिणी शुभ्रा गतिरवस्था यस्य सः ।

---

गोवर्धनपर्वतस्य उरुर्महान् यो विभ्रमणकारी, परमहंसस्पृहणीयप्राप्तिः यस्ते पतिर्हरिस्तद्वदसि ।

किञ्च परया मकरपङ्क्त्या सुन्दरः, बहुपर्वतधरः, पृथिव्यां महद् भ्रमणं भजति तथाभूतः, हंसानां मनोहरा गतिर्यस्मिन्नेतादृशो यस्ते पिता समुद्रस्तद्वदसि ।

अपि च उत्कृष्टस्य मस्य चन्द्रस्य किरणावल्या सुन्दरी, अधि-

सन्ध्यापक्षे परे उपरितनकाले मस्य चन्द्रस्य ये कराः किरणाः कला वा तदावल्या रम्या। मः शिवश्चन्द्रमा वेधा इत्यभिधानम्। बहुरागधरा स्पष्टम्। धरायां भुवि उरुः बहुः यो वीनां पक्षिणां भ्रमः तं भजति सा, सायं हि खगाः स्वस्वनीडाऽभिमुखा भवन्ति। हंसं सूर्यं हरति तच्छीला गतिः स्थितिर्यस्याः सा। श्लेषोपमालङ्कारौ। गीतिवृत्तम् ॥ २३५ ॥

इति श्रीरावजीमहाराजापरनाम्ना श्रीनिवासपण्डितेन विरचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मीसहस्रटीकायां सौन्दर्यस्तबको ऽष्टमः सम्पूर्णो ऽभवत् ॥ ८ ॥

---

कारुणा, धरायां महान् वीनां पक्षिणां विशेषभूतो यो भ्रमो भ्रमणं तद्भाक्, हंसस्य सूर्यस्य हारिणी अपहारिका स्थितिर्यस्यास्तथाभूता या सायंसन्ध्या तद्वदसीति सचमत्कारं श्लेषेणाऽर्थचतुष्टयं प्रतिपादयन् भगवत्यां भगवत्समुद्रसायंसन्ध्यासाम्यं वर्णयन् स्तबकं पूरयति ॥

इति श्रीमानवल्ल्युपाख्यनैलङ्करामशास्त्रिविरचितायां लक्ष्मीसहस्राऽवतरणनिःश्रेणिकायां सौन्दर्यस्तबकः ॥ ८ ॥

अथ शृङ्गारस्तबकः ९।

शृङ्गारपत्नीमुटजं रावणेन हृतां सतीम्।
विचिकाय प्राकृतवत् स रामः श्रेयसेऽस्तु नः ॥ ९ ॥

अथाऽस्मिन् नवमस्तबके श्रीमल्लक्ष्मीनारायणयोः शृङ्गारं वर्णयितुं प्रथमपद्ये शृङ्गारेति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

दुर्ज्ञेयमहिमा सा मां क्षीराऽब्धिदुहिता ऽवतात्।
शृङ्गाररससर्वस्वं शेषशैलेश्वरस्य या ॥ १ ॥

दुर्ज्ञेयेति। या शेषशैलेश्वरस्य हरेः शृङ्गाररसस्य सर्वस्वं मुख्यधनं सा दुर्ज्ञेयो महिमा यस्याः सा दुग्धाऽब्धेर्दुहिता रमा ऽवताद्रक्षतात्। अव रक्षणे इत्यस्माल्लोट्॥ १ ॥

विहितस्मरसौरभेण पद्मे
विविधेनाऽम्ब विलासचेष्टितेन।
अतिविस्मयमादधासि शौरे-
रनुभूता ऽपि चिरादपूर्ववत्त्वम् ॥ २ ॥

विहितेति। हे पद्मे! हे ऽम्ब! विहितं स्मरस्य सौरभं येन तेन विविधेन विलासानां चेष्टितेन चिरादनुभूता ऽपि त्वं शौरेरतिविस्मयमत्याश्चर्यमादधासि। औपच्छन्दसिकं वृत्तम्॥ २ ॥

---

१ अथ शृङ्गारस्तबकमारब्धुकामो वेङ्कटपतेः शृङ्गाररससर्वस्वभूता ऽगाधमहिमा श्रीर्मामवतादित्याशास्ते।

२ हे देवि! त्वं काममनोज्ञेन विभ्रमचेष्टितेन चिरायाऽनुभूतापि नवनवेव भवन्ती हरेरत्यन्तमाश्चर्यमादधासीत्याह।

अथ सात्त्विकभावं वर्णयति—

कमले तव हन्त वीक्षितानां
कुटिलिम्ना कवलीकृतं सदा ऽपि ।
फणिशैलपतेर्न जातु चेतः
प्रतिघोपज्ञमुपैति वक्रिमाणम् ॥ ३ ॥

कमलेति । भो कमले ! तव वीक्षितानां कुटिलिम्ना कौटिल्येन सदा कवलीकृतं ग्रस्तमपि फणिशैलपतेश्चेतः स्वान्तं प्रतिघो रुट् तस्याः उपज्ञा आद्यज्ञानम् । उपज्ञोपक्रमन्तदेति सूत्रेण नपुंसकत्वम् । वक्रिमाणं वक्रत्वं जातु कदा चिदपि नोपैति न प्राप्नोति । अतद्गुणाऽलङ्कारः । औपच्छन्दसिकं वृत्तम् ॥ ३ ॥

विषमाऽऽयुधाऽस्त्रसुषमाऽऽवहैरहो
तव लोकमातरवलोकविभ्रमैः ।
भगवानहीन्द्रनगवास्युपाश्नुते
तरसा मनोज्ञतरसात्त्विकश्रियम् ॥ ४ ॥

विषमेति । हे लोकमातः ! विषमाऽऽयुधस्य कामस्य सुषमां परमशोभां आवहन्ति तैस्तवाऽवलोकविभ्रमैर्दर्शनविलासैः

---

३ हे कमले! तव नयनकौटिल्येन ग्रस्तमपि भगवतश्चेतः कोपमूलकं विकारमपराधिष्वस्मासु नोपैतीति कुटिलसङ्गादपि विकारं नोपैतीत्याश्चर्यमित्याह ।

४ हे लोकमातः ! कामास्त्रशोभाधरैस्तवाऽवलोकविलासैर्भगवान् वेङ्कटाचलवासी सत्वरं सुन्दरतरं सात्त्विकभावं प्राप्नोतीति कामशरविद्धस्य सत्त्वगुणवत्त्वप्राप्तिराश्चर्यकारिणीति वदन् स्वेदादीन् भावान् भजत इत्याह ।

अहीन्द्रनगवासी शेषाऽद्रिस्थो भगवान् तरसा शीघ्रं मनोज्ञतरं सात्त्विकभावं उपाश्नुते प्राप्नोतीत्यर्थः । मञ्जुभाषिणीवृत्तम् ॥ ४ ॥

कलशाऽब्धिपुत्रि बलशासनादिभि-
र्निगमैर्नरैर्दिविगमैरपि स्तुतः ।
छलहेतुकेषु कलहेषु केशवः
स भिया तवैकमभियाचते वचः ॥ ५ ॥

कलशेति । हे कलशाऽब्धिपुत्रि ! बलशासन इन्द्रः आदिर्येषु तैः एवं निगमैर्वेदैस्तथा नरा मानवा दिविगमा देवास्तैः । अपिशब्दाददिविगमैर्दैत्यैरपि स्तुतः स केशवः छलं स्खलितमाग इति यावत् । हेतुर्येषु तेषु कलहेषु भिया एकं तव वचः अभियाचते । मञ्जुभाषिणीवृत्तम् ॥ ५ ॥

स्तम्भतः स्वयमवाप सम्भवं
यः पुरा नरहरिर्हरिप्रिये ।

---

५ इन्द्रादिभिः ( देवैः ) वेदैर्मानवैः खेचरैः अपि स्तुतः देवेवेदमानवखेचरैः स्तुतोपि स्वीयाऽपराधमूलेषु तव मानेषु केवलं त्वद्वचनप्रार्थी भवतीति शृङ्गारमूलधनं मानं वर्णयति ।

६ यादृशात् कारणात्स्वयमुत्पद्यते तादृशमेव कार्यं जनयतीति न्यायमनुसृत्य नृसिंहरूपो भगवान् स्तम्भतः पुरा ऽऽविरासेति मनसिजविलासाऽऽडम्बरैस्त्वयि स्तम्भं ( चेष्टाप्रतीघातं ) जनयतीति प्र-

शम्बराऽहितविलासडम्बरैः

स्तम्भमम्ब जनयत्ययं त्वयि ॥ ६ ॥

स्तम्भत इति । हे हरिप्रिये ऽम्ब ! यः नरहरिः पुरा स्तम्भतः स्तम्भात् स्वयं सम्भवमवाप सः शम्बराऽहितस्य मदनस्य विलासानां डम्बरैस्त्वयि स्तम्भं सात्त्विकभावं जनयति । स्तम्भः स्थूणाजडत्वयोरिति मेदिनी । समालङ्कारः । रथोद्धतावृत्तम् ॥ ६ ॥

अथाऽम्बरमोचनम्—

अहारि नेत्रं मम पश्यतो ऽनया

प्रसह्य चोरस्थलसक्तयेति किम् ।

प्रतिक्रियायै हरते रतेषु ते

हरिर्हठादम्बरमम्ब रंहसा ॥ ७ ॥

अहारीति । हे ऽम्ब ! उरःस्थले वक्षसि चोरस्य तस्करस्य च स्थले सक्तया ऽनया लक्ष्म्या मम पश्यतः सतः । यद्वा पश्यन्तं मामनादृत्येति षष्ठी चाऽनादरे इति षष्ठी । मम नेत्रमंशुकं चाऽहारि हृतम्, अतः हरिः प्रतिक्रियायै प्रतीकाराय रतेषु हठाद्बलात्कारेण रंहसा जवेन ते ऽम्बरमंशुकं हरते । वंशस्थं वृत्तम् । उत्प्रेक्षाश्लेषाऽलङ्कारौ ॥ ७ ॥

---

तिपादयन् भगवतः कामविलासैः स्तम्भाख्यः सात्त्विको भावस्त्वय्युदेतीत्याह ।

७ हे मातः ! उरःस्थलसंलग्नया चौरस्थानरतया चाऽनया ( त्वया ) मत्समक्षमेव बलान्मम नेत्रं ( नयनं, मम्बरं च ) हृतमिति तत्प्रतीकारायेव भगवान् जवेन सुरतोत्सवेषु ते ऽम्बरं हरते किमित्युत्प्रेक्ष्यते ।

अम्ब त्वमत्यन्तमुदारतोरु-
चमत्कृतिं दर्शयितुं प्रियाय।
अभ्यर्थयित्रे भृतमात्मनोऽपि
कुचेलमित्राय ददासि चेलम् ॥ ८ ॥

अम्बेति। हे ऽम्ब! त्वं अत्यन्तम् उदारताया औदार्यस्य उर्वीं बह्वीं चमत्कृतिं चमत्कारमथ चाऽत्यन्तं मुदा हर्षेण रते सुरते ऊर्वोः सक्थ्नोश्चमत्कृतिं प्रियाय दर्शयितुं अभ्यर्थयित्रे याचकाय कुचेलस्य कुत्सितवस्त्रस्य सुदाम्नश्च मित्राया ऽऽत्मनः भृतमपि चेलं ददासि। उपजातिवृत्तम्। श्लेषोत्प्रेक्षापरिकरालङ्काराः ॥ ८ ॥

अथ करग्रहवर्णनम्—

बहिस्त्वालीवर्गस्तव नवरतौ देवि हरिणा
करग्राहोन्मीलद्वलयरवशुश्रूषुरुषितः।
प्रियस्पर्शाऽऽनन्दोन्मिषितभवतीहासनिभृतैः
कलध्वानोपेतैः कनकवलयैर्वञ्चित इव ॥ ९ ॥

बहिरिति। हे देवि! तव नवरतौ हरिणा करग्राहेण

---

८ हे अम्ब! अम्बरं याचयित्रे कुचेलमित्राय ( भगवते, कुत्सितवस्त्राय दरिद्राय च ) प्रियाय अति सन्तोषेण सुरते ऊर्वोश्चमत्कारमत्यन्तमौदार्ये महाचमत्कारं च दर्शयितुं स्वयं परिहितमपि वसनं ददासीति श्लेषेण प्रदर्शयति।

९ हे देवि! नवसुरतोत्सवे तव सखीसमूहः भगवत्कृतकरग्रहणकालिकनिषेधादिवचनं श्रोतुमिच्छुः सन् वासागाराद् बहिः स्थितः, परं प्रियस्पर्शानन्दस्वच्छन्दविसृम्वरत्वद्धासगोपितैः मञ्जुलनिनदकारिभिः कनकवलयैर्निजमधुरशब्दाऽपह्नुतनिषेधादिवचनैरभीप्सितवचःश्रवणानन्दप्रतिबन्धात्प्रतारित इवेति रतविलासान् वर्णयति।

ग्रह एव ग्राहः । स्वार्थे ऽण् । तत्कर्तृककरग्रहणेनेत्यर्थः । उन्मीलतो निर्गच्छतो वलयरवस्य श्रोतुमिच्छुः शुश्रूषुः यः आलीनां सखीनां वर्गः बहिः उषितः स्थितः । वस निवासे इत्यस्मान्निष्ठायामिडागमे वचिस्वपियजादीनां किती ति सम्प्रसारणम् । सः कलेभ्यो ऽव्यक्तमधुरेभ्यो ध्वानेभ्यो ऽपेतैः शून्यैः । अपेतापोढेत्यादिना समासः । तथा प्रियस्पर्शस्याऽऽनन्देन उन्मिषितेन भवत्या अन्हासेन पुष्टतया निभृतैः पूर्णैः(?) कनकानां वलयैः कङ्कणैश्च वञ्चितः लम्भित(?) इवाऽऽसीव । शिखरिणीवृत्तम् । चपलाऽतिशयोक्तिरुत्प्रेक्षा च ॥ ९ ॥

अथ कचग्रहणम्—

हठात् क्रीडायुद्धे हरिसखि भवत्याः कचभरे
गृहीते कान्तेन ग्रहिलहृदयः काममदयः ।
मनोजन्मा मर्माविधमथ गलत्पुष्पकपटा-
दवर्षद् बाणौघं प्रसभमुपरिष्टान्मधुरिपोः ॥ १० ॥

हठादिति । हे हरिसखि ! क्रीडायुद्धे खेलासमरे भवत्याः कचभरे धम्मिल्ले कान्तेन हठाद्बलात्कारेण गृहीते सति । कामं प्रकामं पर्याप्तमित्यमरः । अदयः ग्रहणं ग्रहः उपादानम् अस्यास्ति तत् ग्रहिलं हृदयं यस्य सः पितरमपि प्रहरति । अतः कुत्सितहृदय इति यावत् । पिच्छादित्वात् कुत्सार्थे इलच् । मनोजन्मा कामः अथ कचग्रहाऽनन्तरं मधुरिपोर्हरेः उपरिष्टादु-

---

१० हे रमे ! सुरतक्रीडासमरे भगवता भवत्याः केशपाशे बलाद् गृहीते सति त्वत्पक्षपातीव नितान्तमाग्रही अदयः कामः केशपाशविकीर्णकुसुमकपटाद्भगवत उपरि मर्मवेधकं निजबाणाऽऽसारं प्रसभमवर्षीत्किमित्युत्प्रेक्षते ।

परि गलतां धम्मिल्लात् पततां पुष्पाणां कपटाद्व्याजात् मर्म-आविध्यति ताडयति इति मर्मावित् तम्। व्यध ताडने इत्यस्मात् क्विपि ग्रहिज्यावयिव्यधीति सम्प्रसारणे नहिवृतिवृषिव्यधि-रुचिसहितनिषु क्वाविति पूर्वपदस्य दीर्घः। प्रसभं यथेष्टं बाणौ-घम् अवर्षत् वर्षति स्म। शिखरिणीवृत्तम्। अपह्नुत्यलं० ॥१०॥

अथ कञ्चुकीमोक्षः कुचमर्दनं च—

आख्यया च महसा हरेः कर-
स्पर्शनेन मृदितः पयोधरः।
देवि विक्षिपति ते स्रगुद्गलत्-
पुष्पमौक्तिकमयान् पयःकणान् ॥ ११ ॥

आख्ययेति। हे देवि! आख्यया दुग्धनाम्ना महसा ऽसि-तकान्त्या च हरेर्विष्णोः सूर्यस्य च करयोः कराणां च स्पर्शनेन मृदितः पयोधरः कुचो मेघश्च। 'आदित्याद्वै वृष्टिर्जायते' इति श्रुतेः स्रजो मालाया उद्गलन्ति यानि पुष्पाणि मौक्तिकानि च तत्प्रचुरान् पयसां कणान् बिन्दून् विक्षिपति वर्षति। रथो-द्धतावृत्तम्। अपह्नुत्यलङ्कारः ॥ ११ ॥

---

११ देवि! हरेः (भगवतः सूर्यस्य च) करस्पर्शनेन (हस्तस्पर्शेन, किरणसंसर्गेण च) मृदितस्ते पयोधरः (स्तनौ, मेघश्च) मालावि-गलत्कुसुममयान् पयःकणान् आख्यया (पयोधर इत्यन्वर्थनाम्ना) महसा समुज्ज्वलया कान्त्या च) विक्षिपति (वर्षति, तिरस्करोति च) एवं च पयोधरस्य मेघरूपस्य पयःकणवर्षणम् उज्ज्वलकान्तेः स्तनस्य पयःकणातिरस्करणमुचितमेवेत्याशयेनाह।

सरभसपरिरिप्सासम्भ्रमोच्छूनपीन-
स्तनशिथिलितबन्धा मञ्जुला कञ्चुकी ते ।
अतनुसमरकेलावप्रयत्नात्प्रियेण
द्रुततरमपनीता दुग्धसिन्धोस्तनूजे ॥ १२ ॥

सेति । भो दुग्धसिन्धोस्तनूजे ! सरभसं सवेगं सहर्षं वा परिरिप्सायाः आलिङ्गनेच्छायाः सम्भ्रमे आरम्भे त्वरायां वोच्छूनाभ्यां सम्फुरणाभ्यां पीनस्तनाभ्यां शिथिलितः बन्धो यस्याः सा ते मञ्जुला कञ्चुकी अतनोः स्मरस्य समरकेलौ क्रीडायां प्रियेण द्रुततरं शीघ्रतरम् अप्रयत्नात्यत्नं विना ऽपनीता दूरीकृता । अत्र प्रयत्नमन्तरा कञ्चुकीनिरासेन कार्यसिद्ध्या प्रहर्षणाऽलङ्कारः । रूपकं श्लेषश्च । मालिनीवृत्तम् ॥ १२ ॥

हरति तदिदमुच्चैर्हन्त चक्राऽवलेपं
दिशति जननि खेदं मध्यदेशस्य चेति ।
मदनयुधि कराभ्यां मर्दितं युग्ममेतत्
कुचधरणिभृतोस्ते कुप्यतेवाऽच्युतेन ॥ १३ ॥

हरतीति । हे जननि ! ते कुचौ धरणिभृतौ पर्वताविवा-

---

१२ सुरतक्रीडाऽवसरे तव प्रियालिङ्गनेच्छया समुच्छूनपीनस्तनशिथिलग्रन्थेः कञ्चुक्या अपसारणं भगवत अनायासेनैव सिध्यतीत्याह ।

१३ तव कुचरूपयोर्धरणिभृतोः ( पर्वतयोः, राज्ञोश्च ) युग्मं चक्रस्य ( चक्रवाकस्य, राष्ट्रस्य च ) अभिमानं हरति, मध्यदेशस्य ( वलग्नस्य, मध्यमंडलकस्य देशस्य च ) खेदं ददातीति हेतोः कुद्धेनेव भगवता सम्राजा मर्दितमिवेत्युत्प्रेक्षते ।

ऽस्मिन्पक्षे चक्रस्य चक्रवाकस्य। अथ कुचावेव धरणिभृतौ राजानौ तयोर्युग्मं चक्रस्य राष्ट्रस्य चाऽवलेपं गर्वं हरतीति। एवं मध्यदेशस्य वलग्नस्य पक्षे 'हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्यते' इत्यमरटीकायाम्। अस्य च खेदं दिशति ददाति इति कुप्यतेवाऽच्युतेन मदनयुधि सुरते कराभ्यां मर्दितमिति। मालिनीवृत्तम्। श्लेषोत्प्रेक्षालङ्कारौ॥ १३॥

कठिननखमुखक्षतानि शौरेः
करयुगनिर्दयमर्दनानि चाऽस्य।
भगवति सहमानयोः प्रकामं
तव कुचयोरुचितं क्षमाधरत्वम्॥ १४॥

कठिनेति। हे भगवति! शौरेः कठिनानां नखमुखानां क्षतानि, एवं करस्य युगयोर्निर्दयं यथा तथा मर्दनानि च प्रकामं सहमानयोस्तव रमायाः कुचयोः क्षमाधरत्वं पर्वतत्वं शान्तिमत्त्वं च उचितं योग्यमित्यर्थः। पुष्पिताग्रावृत्तम्। काव्यलिङ्गमलङ्कारः॥ १४॥

भीतं शीतकराद्रथाङ्गमिथुनं नित्यानुषङ्गाऽऽशया
मातर्व्यातत तावकस्तनजनिं भामात्पुनश्चन्द्रमाः।

---

१४ अथ भगवत्कृतकठिननखक्षतानि, करयुगलनिर्दयपीडनानि च सहमानयोरनयोः कुचयोः क्षमाधरत्वं (पर्वतरूपत्वं, शान्तिशीलत्वं चोचितमित्याह।

१५ सहजवैरिणोर्जन्मान्तरेऽपि वैरं नाऽपयातीति लोकाऽनुसारेण निजविरहार्तिप्रदाच्चन्द्राच्छीत्या निरन्तरसङ्गत्याशया त्वत्कुचात्मना

त्वत्प्राणेशनखात्मना कृतजनिस्तत्र प्रदत्ते क्षतं
वैरं हन्त विरोधिनोः किल मिथो जन्मान्तरे ऽप्यक्षतम्॥ १५॥

भीतमिति । हे मातः ! शीतकराच्चन्द्राद्भीतं रथाङ्गयोश्चक्रयोर्मिथुनं नित्याऽनुषङ्गस्य सततसंसर्गस्याऽऽशयेच्छया तावकस्तनरूपेण जनिं व्यातत चकार, पुनः चक्रस्य त्वत्कुचात्मना ऽवतरणे चन्द्रमाः भामात् । भामः क्रोधे रवौ दीप्ताविति मेदिनी । त्वत्प्राणेशस्य हरेर्नखाऽऽत्मना नखस्वरूपेण कृता जनिरुत्पत्तिर्येन सः तत्र कुचयोः क्षतं व्रणं प्रदत्ते । तथा हि—हन्त खेदे । मिथः परस्परं विरोधिनोः स्पर्धिनोर्वैरं जन्मान्तान्तरे त्रिकालाऽवस्थायामपि अक्षतं नाशरहितमित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

सन्त्यज्य सुन्दरि सुदर्शनपाञ्चजन्या-
वेकेन कण्ठमितरेण करद्वयेन ।
सङ्गृह्णतस्तव कुचौ च मदम्ब शौरे-
र्नो शङ्खचक्रधरता विरता रते ऽपि ॥ १६ ॥

संत्यज्येति । हे सुन्दरि ! हे मदम्ब ! रते मैथुने सुदर्शनं चक्रं

---

जातमपि चक्रवाकमिथुनं तज्जनुष्यपि चन्द्रस्तवनखात्मत्वं प्राप्य तत्र व्रणमुत्पादयतीति समर्थ्यते ।

१६ अथ रतसमये परित्यक्तशङ्खचक्रस्यापि एकेन शङ्खतुल्यं ते कण्ठमितरेण करद्वयेन च चक्राकारौ त्वत्कुचौ च गृह्णतो भगवतः शङ्खचक्रत्वं नाऽपगच्छतीत्याह ।

पाञ्चजन्यः शङ्खः तौ सन्त्यज्य एकेन हस्तेन कण्ठम् इतरेण कर-द्वयेन तव कुचौ च संगृह्णतः शौरेः शङ्खचक्रधरता न विरता न क्षतेत्यर्थः। अत्र सुरते शङ्खचक्रत्यागे ऽपि कण्ठकुचयोः शङ्खस्य चक्र-कुचयोश्च धारणेन पूर्वरूपालङ्कारः। वसन्ततिलकावृत्तम् ॥१६॥

अथ करग्रहणम्—

भावत्कमाचरति देवि हरावपूर्वं
पाणिग्रहं विजनकेलिगृहं प्रविश्य ।
लाजायितं विमृदितस्तनलोलहार-
व्याकीर्णमौक्तिकचयैर्ज्वलति स्मराऽग्नौ ॥ १७ ॥

हे देवि! विजनं विविक्तं यत्केलिगृहं तत्प्रविश्य भवत्या अयं भावत्कस्तम्। भवतष्ठक्छसाविति ठकि इसुसुक्तान्तादिति कः। सर्वनाम्नो वृत्तिमात्रे इति पुंवद्भावः। अपूर्वपाणिग्रहं करग्रहणं हरौ वेङ्कटपतौ आचरति सति इति अत्र पाणिपीडनमपि सूचितम्। ज्वलति प्रदीप्तस्मररूपाऽग्नौ विमृदितयोः स्तनयोर्हारेभ्यो व्याकीर्णैः पतितैर्मौक्तिकानां चयैर्लाजायितं लाजहोम इवाऽऽचरितमिति। श्लेषरूपकोपमालङ्काराः। वसन्ततिलकावृत्तम् ॥ १७ ॥

पञ्चाऽऽयुधान्यपि विहाय तवाऽङ्गकेषु
सञ्चारयन् स चतुरश्चतुरः स्वहस्तान् ।

---

१७ हे भगवति! हरौ रहः क्रीडागृहं प्रविश्य त्रिलक्षणं भवदीयं पाणिग्रहं (हस्तग्रहणं, विवाहं च) आचरति सति मृदितकुचलसद्धारविगलितमौक्तिकैः प्रदीप्ते कामानले लाजवदाचरितमित्याह।

१८ निपुणो भगवान् पञ्चाऽऽयुधानि परित्यज्य चतुःसङ्ख्याकान्

कञ्जाऽऽलये कथमहो मधुकैटभाऽरिः
पञ्चायुधाजिमपि हर्षभरादकार्षीत् ॥ १८ ॥

पञ्चेति । हे कञ्जाऽऽलये ! सः मधुकैटभारिर्हरिः तव क्रीडारणे सुरते पञ्चसंख्याकान्यायुधानि विहाय सन्नाऽपि चतुरः कुशलः चतुःसंख्याकान् स्वहस्तान् तव रमाया अङ्गकेष्ववयवेषु सञ्चारयन् पञ्चायुधाऽऽजिं कथम् अकार्षीत् ? पञ्चसंख्याकान्यायुधानि विहाय पञ्चायुधऽऽजिमकार्षीदिति विरोधे कामाजिमिति परिहारः । विरोधाऽऽभासालङ्कारः । वसन्ततिलकावृत्तम् ॥ १८ ॥

क्रीडारणे तव कृताऽपजयः स्मरेण
सन्त्याजितेष्वपि च शार्ङ्गमुखाऽऽयुधेषु ।
कल्याणि कंसदमनः कमले विचित्र-
मुत्तुङ्गचापलतया ननु योजितोऽभूत ॥ १९ ॥

क्रीडेति । हे कल्याणि ! हे कमले ! तव क्रीडारणे सुरते स्मरेण शार्ङ्गमुखाऽऽयुधेषु सन्त्याजितेषु सत्सु कृताऽपजयः कंसदमनः अतः, ननु वितर्के । उत्तुङ्गया चापलतया धनुर्लतया यो-

---

करान् त्वदङ्गेषु व्यापारयन् निरायुधो ऽप्यव्यापृतहस्तो ऽपि हस्तचतुष्टयेन पञ्चायुधयुद्धं कथं कृतवानित्याश्चर्यमिति विरोधप्रदर्शनपूर्वकं क्रीडां कृतवानित्याह ।

१९ हे कमले ! सुरतयुद्धे कृतपराभवः परित्याजितायुधश्च भगवान् उन्नतचापलतया (बहुचाञ्चल्येनोन्नतधनुर्लतया च) योजितोऽभूदिति पराजितस्य परित्याजिताऽयुधस्य च धनुर्धारणमाश्चर्यकारीति सचमत्कारं वर्णयन् क्रीडालौल्यं वर्णयति ।

जित इति चित्रं सात्त्विकभावरूपवेपथुना च योजितः अभूदिति चित्राऽभावः। वसन्ततिल०। विरोधाऽऽभासालं० ॥ १९ ॥

उपमर्दितयोरुरोजयोस्ते
दयिताऽऽश्लेषदशासु मौक्तिकानाम्।
नवचन्दनरेणुनिर्विशेषं
परिणामं प्रतिपेदिरे परागाः ॥ २० ॥

उपेति। दयितस्य आश्लेषस्याऽऽलिङ्गनस्य दशास्ववस्थासु उपमर्दितयोस्ते उरोजयोः कुचयोः मौक्तिकानां परागा रेणवः नवस्य चन्दनस्य रेणुभिर्धूलिभिर्निर्गतः विशेष आधिक्यं यस्मात्तं परिणामं प्रतिपेदिरे। सुरतसंमर्देन हारमुक्तानां चूर्णमभूदिति भावः। अतिशयोक्तिरलङ्कारः। औपच्छन्दसिकं वृत्तम् ॥ २० ॥

मायावादैस्तव तु वशिते देवि मध्वार्तिकारि-
ण्यङ्गाभ्यां वां विघटितमभूद् द्वैतमालिङ्गनेषु।

---

२० प्रियाऽऽलिङ्गनसमये संपीड्य संचूर्णिता हारमुक्तारेणवः स्तनयोः पाटीरपरागसाम्यं दधुरित्याह।

२१ अथ अद्वैततत्त्वप्रकाशसमुद्भवानन्दसन्दोहसाम्यं शृङ्गाररसे वर्णयन् हे देवि! तव मायावादैश्छलवचनैर्जगतो ब्रह्मविवर्तरूपत्ववादैर्विशिष्टाद्वैतसिद्धान्तसिद्धैर्मधुनामकदानवक्लेशप्रदे भगवति, द्वैतवादिनां माध्वानां मतखण्डनेन पीडाप्रदे ऽद्वैतवादिनि च स्वायत्तीकृते सति युवयोरालिङ्गनाऽवसरे अङ्गाभ्यां वक्षःस्थलावयवाभ्यां मनोबुद्धिवृत्तिभ्यां च द्वैतं (भेदः, द्वैतमतं च) खण्डनमभूत् तदाऽचिरादेव मुक्तावलिभिः (मुक्ताहारैर्विमुक्तसमूहैश्च) निर्गुणत्वं

आभिर्मुक्ताऽऽवलिभिरचिरादाश्रितं निर्गुणत्वं
व्यक्ता चाऽन्तः करणहरणात्तादृगानन्दपूर्तिः ॥ २१ ॥

मायेति । हे देवि ! तव मायावादैश्चाटूक्तिभिर्विवर्तवादैश्च मयोः दयस्याऽऽर्तिकारिणि हरौ अन्यत्र मध्वानां द्वैतवादिनाम् आर्तिकारिणि अद्वैतब्रह्मवादिनि च वशिते स्वाधीनीकृते सति वां युवयोः आलिङ्गनेषु अङ्गाभ्यां भवच्छरीराभ्यां पक्षे मनोवृत्तिबुद्धिवृत्तिभ्यां द्वैतं विघटितं नष्टमभूत । यदा तदा आभिर्मुक्तानां मुक्तपुंसां चाऽऽवलिभिः अचिराच्छीघ्रं निर्गुणत्वं तन्तुरहितत्वं रजोगुणादिरहितत्वं च आश्रितम् । चेत्यपरम् अन्तःकरणहरणाच्चित्तनाशात मनस उन्मनीभावाच्च । ‘अर्थादर्थान्तरं गन्तुं वृत्तिश्चलति चान्तरे । निराधारा निर्विकारा या दशा सोन्मनी स्मृता’ इति सदाचारे भगवत्पूज्यपादाः । तादृक् अनिर्वचनीया आनन्दपूर्तिः सुरतसुखतृप्तिः ब्रह्मानन्दतृप्तिश्च व्यक्ता स्फुटा आसीत् बभूव इत्यर्थः । मन्दाक्रान्तावृत्तम् । प्रकृताऽप्रकृतश्लेषालङ्कारः ॥ २१ ॥

जलजाऽऽयतने समस्तनाग-
प्रवरप्रौढनिबन्धनश्रमेण ।

---

( छिन्नसूत्रत्वं, रजोगुणसाहित्यं च ) आश्रितं, ततो मनसो रसमयत्वान्मनोवृत्तेर्विलीनत्वाच्चाऽनिर्वचनीयस्वरूपा आनन्दपूर्तिः (सुरतानन्दपूर्तिः, ब्रह्मानन्दपूर्तिश्च ) व्यक्तेति श्लेषेणाह ।

२२ हे कमलवासिनि ! तव समौ यौ स्तनौ नागवाऽगप्रवरौ पर्वतेन्द्रौ तयोः प्रौढनिबन्धनं वक्षःस्थले धारणं तत्क्रमेण दयितभुजपरिष्वङ्गयोग्यायास्ते कण्ठान्मनोरमाः शब्दा उदिता इति युक्तमिति प्रतिपादयन् सकलसर्पेन्द्र( पतञ्जलि )प्रौढनिबन्धने ( महाभाष्ये )

प्रियपाणिनियन्त्रणोचितायाः-
स्तव कण्ठादुदितास्तदा सुशब्दाः ॥ २२ ॥

जलजेति । हे जलजाऽऽयतने ! प्रियस्य हरेः पाणेर्हस्तस्य नियन्त्रणमालिङ्गनम् । यन्त्रि सङ्कोचने इति चुरादेर्निष्ठायां सेटीति णिलोपः । तेन उचितायाः समवेतायाः । पक्षे प्रियस्य पाणिनेः सूत्रेण युक्तायाश्च तव लक्ष्म्याः कण्ठाद्गलात् समौ यौ स्तनरूपौ अगप्रवरौ श्रेष्ठशैलौ तयोः प्रौढं प्रगल्भं यन्निबन्धनं ग्रहणम् । अन्यत्र समस्तेषु नागेषु प्रवरः श्रेष्ठः पतञ्जलिस्तस्य प्रौढं प्रगल्भं यन्निबन्धनं महाभाष्यं तत्र श्रमेण आयासेन　पक्षे ऽभ्यासपरिश्रमेण सुशब्दाः भणितरूपाः पक्षे वैखरीरूपेण सुप्तिङन्तरूपाः संस्कृताश्च उदिता निर्गताः । 'उचिता' इति पाठे योग्या इत्यर्थः । औपच्छन्दसिकं वृत्तम् श्लेषालङ्कारः ॥ २२ ॥

योगे पयोधितनये युवयोस्तदानीं
शम्पालताजलदयोरिव संप्रवृत्ते ।
उज्जृम्भिताऽतनुशुभाऽऽशुगवेगनीता
युक्तं श्रमाऽम्बुकणिकामयवृष्टिरासीत् ॥ २३ ॥

योगे इति । हे पयोधितनये ! शम्पालताजलदयोर्विद्युन्मेघ-

---

परिश्रमकरणेन प्रिये पाणिनिमुनिनिबन्धने (सूत्रे) योग्यतां प्राप्तायाः तव कण्ठात् साधुशब्दोदयो युक्त इति श्लेषेण भगवत्यां वैयाकरणप्रवरसाम्यं वर्णयन् तत्कर्तृको भणितरूपः साधुशब्दोपन्यास उचित एवेत्याह ।

२३ हे देवि ! गौरनीलकान्त्योर्युवयोः विद्युज्जलदयोरिव संयोगे प्रवृत्ते सति उद्दीप्तकामशरवातवेगप्रापिता, प्रवृद्धमहावात्यावेगप्रापिता च परिश्रमस्वेदकणिकामयी वृष्टिरासीदिति सुरताऽवसरे स्वेदाधिक्यं वर्णयति ।

योरिव युवयोर्लक्ष्मीनारायणयोः योगे संयोगे प्रवृत्ते सति तदानीं तत्काले इत्यर्थः । तच्छब्दात्तदो दा चेति चकारेण दानींप्रत्ययः । अतनोर्मदनस्य शुभानामाशुगानाम् अन्यत्राऽतनोर्महत आशुगस्य वायोर्वेगेन नीता श्रमाऽम्बुकणिकाप्रचुरा वृष्टिर्व्यक्तमासीत् । वायुसंसर्गेण वृष्टिर्भवतीत्यत्र प्रमाणम् । मुहूर्ततत्त्वे संहिताखण्डे—'रात्रौ गर्जो ऽह्नि दण्डाऽऽकृतिररुणतडिद्वा पुरः शीतवायुः । अर्थः पुरः पूर्वदिशः सकाशाच्छीतवातः सद्यो वर्षकरणः स्यादिति । लिङ्गपुराणे चतुष्पञ्चाशदध्याये ऽपि—'अपां निधानं जीमूता वर्षन्ति पवनाऽऽज्ञया' इत्यादि बहु प्रपञ्चितमिति। श्लेषोपमासमालङ्काराः । वसन्ततिलकावृत्तम् ॥ २३ ॥

चलद्गुणेष्वत्र पयोधिजाते-
ष्वत्रासमुक्ताऽऽवलिषु प्रकम्पः ।
रमे सदा राजकराऽऽसनाना-
हारेषु युक्तो ऽतनुयुद्धकाले ॥ २४ ॥

चलदिति । हे रमे ! अत्र प्रवर्तमाने अतनोः कामस्य युद्धकाले सुरते इति भावः । चलन्तः गुणास्तन्तवो येषां तेषु

---

२४ हे रमे ! चञ्चलसूत्रेषु समुद्रजेषु त्रासाख्यदोषरहितेषु शुभ्रतया चन्द्रकिरणसुहृद्भूतेषु नानाविधेषु मुक्ताहारेषु कामयुद्धावसरे समधिकः कम्पो युक्त एवेति शौर्यादिवीरगुणरहिताः प्रभुकृपासंप्राप्तनानाविधभोग्यपदार्थाः त्रासयुक्ताः ( भीरवः ) ये अबलिनो दुर्बलास्तथा भूतेषु अत्रपा ( निर्लज्जा ) ये योधिनो भटास्तत्समूहेषु महायुद्धावसरे भयजन्यो गात्रकम्पो युक्त इति श्लेषेण समर्थ्यते ।

पयोधौ समुद्रे जातेषु उत्पन्नेष्वित्यर्थः । नास्ति त्रासो दोषो यासां तासां मुक्तानां मौक्तिकानां आवलयः पङ्क्तयो येषु तेषु । त्रासो भीमणिदोषयोरिति विश्वः । राज्ञश्चन्द्रस्य कराः किरणास्तेषाम् आप्ताः मित्रभूताः धवलत्वात् ते च ते नाना बहवो हारा मुक्ताहारास्तेषु प्रकम्पश्चञ्चलता आसीद्बभूव । युक्तं चैतदिति श्लेषेण समर्थयति—चलद्गुणेषु न तु स्थिरशौर्यादिगुणेषु त्रासेन युद्धभयेन मुक्तास्त्यक्ता न भवन्ति ते । अत्रासमुक्ता भीरव इत्यर्थः । अत एव अबलिनो निर्बलास्तेषु राज्ञो नृपतेः करादुस्तादाप्ताः प्राप्ता नानाविधा आहारा भोग्यवस्तूनि यैः तेषु अत्रपा निर्लज्जाः पराजये ऽपि पुनरधोमुखं कृत्वा आगच्छन्तः । योधनं योधः सो ऽस्ति येषां ते योधिनः युद्धकर्तारः तेषां जातेषु गणेषु अतनोर्महतः युद्धस्य आयोधनस्य काले समये प्रकम्पः भयवेपथुः युक्तः । उचित एवेत्यर्थः । उपजातिवृत्तम् । श्लेषसमावलङ्कारौ ॥ २४ ॥

गाढं श्लिष्यति माधवे सकुतुकं क्रीडाऽवनीं त्वां तदा
युक्तं चम्पकगर्भसौरभशुभैरस्पन्दि मन्दाऽनिलैः ।
राजीवोपरि पर्यपाति सहसा लोलैरलीनां कुलै-
रासीदम्ब कदम्बकोरकचयो यस्मादतो विस्मयः ॥ २५ ॥

गाढमिति । हे ऽम्ब ! क्रीडाऽवनीमिव त्वां माधवे हरौ वसन्ते

---

२५ माधवे (भगवति, वसन्तमासे च) क्रीडाभूमिःविलासोद्यानरूपां त्वां श्लिष्यति (आलिङ्गति, व्याप्नुवाने च) सति चम्पककुसुमनासासौरभमनोहरैर्मन्दमारुतैर्यात,मेवं भगवन्मुखरूपकमलोपरि सतृष्णैर्भ्रमरैर्नेत्रैः पतित,मित्यपि वसन्ते चम्पचकमलविकासादुचितमेव, परं तदा पुलकोद्गमरूपः कदम्बविकासो वर्षर्तुयोग्य आसीदित्यद्भुतमित्याह ।

च गाढं दृढं श्लिष्यत्यालिङ्गति सति तदा चम्पकं पुष्पं नासा च तस्या गर्भेण सौरभा अत एव शुभास्तैर्मन्दाऽनिलैः प्रस्पन्दि किं विचलितम्। स्पदि किञ्चिचलने अस्माद्धातो लुङ्। इदं युक्तं, राजीवस्य कमलस्य मुखस्य चोपरि लोलैः सतृष्णैरलीनां कुलैर्भृङ्गैर्नयनैश्च पर्यपाति इदमपि युक्तम् । कदम्बस्य रोमाञ्चस्य कदम्ब इति ख्यातवृक्षस्य च । नीपप्रियकदम्बका इत्यमरः। कोरकाणां कुड्मलानां चयः आसीत्। माधवे कदम्बनाशात्तस्योत्पत्तिरत्राऽऽसेति विस्मयः। अत्र चम्पकादिशब्दैर्नासिकाऽऽद्यर्थस्य निगरणाद्रूपकाऽतिशयोक्तिः। अथ च वसन्ते कदम्बविकासवर्णनाद्विरोधाभासः। उभयवर्णनाच्छ्लेषश्चेति सङ्करः। शार्दूलविक्रीडितं वृत्तम् ॥ २५ ॥

प्रसभमरुणबिम्बं ग्रस्तमासीदकस्मात्
परिपतितमुडूनां पङ्क्तिभिर्मेरुशृङ्गात् ।
अपि तिमिरवृताऽभूदिन्दिरे चन्द्ररेखा
तव च मधुजितश्च द्वन्द्वयुद्धे प्रवृद्धे ॥ २६ ॥

प्रसभमिति । हे इन्दिरे ! तव चेत्यपरं मधुजितो हरेर्द्वन्द्वयुद्धे सुरते वीरद्वयमात्रयुद्धे प्रवृद्धे सति अरुणबिम्बम् अधरोष्ठश्च ग्रस्तम्

---

२६ अथ रूपकातिशयोक्त्या तव पत्युश्च युवयोर्द्वन्द्वयुद्धे प्रवृद्धे सति अरुणबिम्बम् ( अधरः ) अकस्मादाक्रान्तम्, एवं नक्षत्रनिकरैः ( हारविगलितैर्मौक्तिकैः ) मेरुशृङ्गात् ( कुचशिखरात् ) अपाति, तथा चन्द्ररेखा ( भालदेशः ) तिमिरवृता ( अलकावरुद्धा ) आसीदिति विषयनिगरणपूर्वकं समरसमयजायमानमुत्पातप्रादुर्भावं सूचयन्नाह ।

आसीत्, उडूनां भानां मौक्तिकानां च पङ्क्तिभिः मेरोः कुचस्य च शृङ्गादग्रात्पतितं, चन्द्रस्येन्दोर्मुखस्य च रेखा । चन्द्रः कर्पूरधवलसुधांशुस्त्वर्णवारिणीति मेदिनी । तिमिरेण तमसा केशैश्चाऽऽवृता ऽभूत् । मालिनीवृत्तम् । रूपकाऽतिशयोक्तिर० ॥२६॥

वपुषि मृदुतमे ते वेदना मा जनीति
प्रशिशमयिषता ऽपि प्रेयसा माधवेन ।
विपुलपुलकपाली विश्वमातः स्वकाऽङ्गे
तव दृढपरिरम्भात् स्वैरमुन्मेषिता ऽहो ॥ २७ ॥

वपुषीति । हे विश्वमातः ! ते मृदुतमे ऽतिकोमले वपुषि वेदना मा जनि मा प्रादुर्भवतु । जनी प्रादुर्भावे इत्यस्याल्लुङि तास्मन्तादेशे दीपजनेति च्लेश्चिणि चिणो लुगिति तस्य लुकि जनिवृध्योश्चेति निषेधेन वृद्ध्यभावः । इति माधवेन प्रेयसा प्रियतमेन सुरतसंमर्दं प्रशमयितुमिच्छता ऽपि स्वकाङ्गे तव दृढाऽऽलिङ्गनात् परुषपुलकपाली प्रशस्तकठिनपुलकवत्ता उन्मेषितेति अहो इत्याश्चर्यम् । अत्र 'अखिलभुवनमातः ! कण्टकाली स्वकाङ्गे' इति पाठे कल्पिते विच्छित्तिविशेषः । मालिनीवृत्तम् । विषमाऽलङ्कारः ॥ २७ ॥

मधुमथनमनःप्रहर्षहेतो-
र्मनसिजयज्ञमनेकधा विधाय ।

---

२७ हे लोकमातः ! कोमले तवाङ्गे वेदना मोत्पादीति परिजिहीर्षता ऽपि प्रियतमेन भगवता विपुलकण्टकपरम्परा त्वदालिङ्गनात् स्वाङ्गे उन्मेषितेति कोमलाङ्गे कण्टकोपमपुलकसम्बन्धाद्वेदनापरिजिहीर्षया शान्तिं नेतुमिष्यमाणापि कण्टकालिरालिङ्गने स्वैरमुन्मिषतीत्याह ।

२८ नारायणप्रीत्यर्थं नानाविधं कामाऽध्वरं विधाय तत्समाप्तौ

अथ रतान्तवर्णम्—

ध्रुवमवभृथमज्जनं भवत्या
जननि कृतं शुचिभिः श्रमाऽम्बुपूरैः ॥ २८ ॥

मध्विति । हे जननि ! मधुमथनस्य मनसः प्रहर्षहेतोरनेकधा बहुधा मनसिजस्य यज्ञं सुरतरूपं विधाय भवत्या शुचिभिः श्रमाऽम्बूनां पूरैः अवभृथस्य मज्जनम् । दीक्षान्तो ऽवभृतो यज्ञे इ-त्यमरः ! कृतं ध्रुवम् । पुष्पिताऽग्रावृत्तम् । रूपकोत्प्रेक्षारूपकाति-शयोक्त्यलङ्काराः ॥ २८ ॥

साऽऽयासायाः सुरतविरतौ कान्तबाह्वाऽन्तराले
विन्यस्याऽऽस्यं तव भगवति स्वापसौख्यं भजन्त्याः ।
फालोत्पन्नश्रमजलमिलच्चित्रकप्रस्रुतो ऽस्मिन्
श्रीवत्सो ऽन्यः स भवतु रमे यस्तु कस्तूरिबिन्दुः ॥२९॥

सेति । हे भगवति ! साऽऽयासायाः सश्रमायाः अतः सुरतस्य विरतावन्ते कान्तस्य हरेर्बाह्वाया अन्तराले मध्ये आस्यं विन्यस्य सुप्तेः सुखं भजन्त्यास्तव फालाद्भालादुत्पन्नेन श्रमजलेन मिलतः चित्रकात्तिलकात्प्रस्रुतो यः कस्तूरीबिन्दुः स तस्मिन् कान्तबा-ह्वाऽन्तराले । वक्षसीति भावः । अन्यः द्वितीयः श्रीवत्सः लक्ष्म

---

शुचिभिः ( शुभ्रैः, पवित्रैश्च ) परिश्रमस्वेदोदकैर्भवत्या अवभृथस्नानं ( दीक्षान्तस्नानं ) कृतमिति सुरतसमाप्तिं वर्णयति ।

२९ सुरताऽवसाने सखेदाया अत एव दयितवक्षसि मुखं वि-न्यस्य सुखसुप्तायास्तव भालोद्भिन्नस्वेदजलमिलिततिलकगलितो मृग-मदबिन्दुर्भगवद्वक्षसि भृगुपदलाञ्छनान्तररूपेण विलसतित्याह ।

भवत्विति योग्यतायां लोट् । मन्दाक्रान्तावृत्तम् । रूपकालङ्कारः ॥ २९ ॥

सञ्जातं नयनयुगे निरञ्जनत्वं
नीरागः स्फुटमभवत्तवाऽधरो ऽपि ।
सम्पन्ना जननि कचे ऽपि बन्धमुक्तिः
साऽऽनन्दं रहसि हरेरुपासनेन ॥ ३० ॥

सञ्जातमिति ! हे जननि ! नयनयुगे चक्षुर्युग्मे निर्गतमञ्जनं कज्जलमज्ञानं च यस्मात्तद्भावस्तत्त्वं सञ्जातम् । एवं तव अधरः ओष्ठः नीचश्च नीरागः अभवत् । अथ रहसि सानन्दं महर्षे हरेर्भगवतः उपासनेन कचे केशे बन्धमुक्तिः सम्पन्ना । स्फुटमिति सर्वत्र । अत्रोपासनसमत्वे ऽपि फलतारतम्यं कथमिति चेदधिकारिभेदाद्बोद्धव्यम् । तथा हि--नेत्रयोर्निरञ्जनत्वं निःस्नेहमात्रत्वमभूत् श्रुतिमात्रपरिशीलकत्वात् । अधरस्य नीरागत्वं सर्वथा विषयप्रीतिराहित्यमभूत् शुचिद्विजसान्निध्यात् । कचे तु सद्यो मुक्तिरभूत् शिरःस्थितत्वात् । श्रुतिशिरः वेदान्ता इति यावत् । न ह्यत्रोपनिषज्ज्ञानमन्तरेण कृष्णतादात्म्यज्ञानं भवतीति ज्ञेयम् । प्रहर्षिणीवृत्तम् । श्लेषाऽलङ्कारः ॥ ३० ॥

मलयमुकुटीवाटीपाटीरकोटरनाटिनः
सरसिजमधुस्पन्दाऽमन्दाऽघमर्षणहर्षिणः ।

---

३० विजनदेशे भगवदुपासनेन नेत्रद्वन्द्वे निरञ्जनत्वं ( कज्जलाऽभावो, ऽज्ञाननाशश्च ) संजात,मेवमधरोपि ( अधरोष्ठोऽपि, नीचोपि च ) नीरागः ( विगतारुणिमा, वैराग्यभाक् च ) अभवत् । तथा कचे ऽपि बन्धमुक्तिः ( श्लथत्वं, संसारबन्धान्मोक्षश्च ) सम्पन्नेति श्लेषेणाह ।

३१ मलयाचलबिलसच्चन्दनवनमध्यपतनशालिनः एवं कमलम-

तव रतिभवं लुम्पन्त्यम्ब श्रमं शयनीभव-

त्फणिपतिभिया मन्दं मन्दं चरन्त इवाऽनिलाः ॥ ३१॥

मलयेति । हे अम्ब ! मलयाऽनिलस्य मुकुटवाट्यां शिखराऽऽरामे पाटीराणां चन्दनानां कोटरे नाटिनो नर्तनशीलाः तथा सरसिजस्य मधुनः स्पन्दस्य मन्दमन्दाऽघमर्षणं तेन हर्षिण आनन्दिनः पुनः शयनीभवतः फणिपतेः शेषस्य भिया मन्दमन्दं चरन्तः सञ्चरन्त इवाऽनिलाः । मन्दसुगन्धशीतला इति यावत । तव लक्ष्म्याः रतिभवं सुरतोद्भूतं श्रममायासं लुम्पन्ति नाशयन्ति । हरिणीवृत्तम् । उत्प्रेक्षाकाव्यलिङ्गालङ्कारौ ॥३१॥

वनजनिलये वारिक्रीडादशासु दशानन-

द्विषि तव शनैरातन्वाने कुचे नखचेष्टितम् ।

क्षुभितमनसा दत्ता नाथे त्वया शफरीभिया

सरभसपरीरम्भाऽऽरम्भा जयन्ति निरन्तराः ॥ ३२ ॥

अथ जलक्रीडां वर्णयति ।

वनजेति । हे वनजनिलये ! वारिक्रीडासु जलक्रीडासु दशाननद्विषि हरौ शनैर्मन्दं तव कुचे नखानां चेष्टितम् आतन्व-

---

करन्दनिष्यन्दाऽवगाहनशालिनः तल्पीभवद्व्यालाशन ( शेष ) भीत्येव मन्दमन्दवाहिनः ( सुगन्धशीतला मन्दाश्च ) मारुताः तव सुरतश्रमं लुम्पन्तीत्याह ।

३२ अथ विविधान् विलासान् वर्णयिष्यन् जलविहारवर्णनाय प्रवृत्तः जलविहारावसरे भगवति रामे तव स्तने नखं व्यापारयति सचकितमनसा त्वया मीनीभिया प्रिये दत्ता गाढालिङ्गनाऽऽरम्भाः सर्वोत्कर्षेण विराजन्तइत्याह ।

न विस्तारयति सति शफर्या मत्स्या भिया क्षुभितमनसा त्वया नाथे भगवति निर्गतम् अन्तरं येभ्यस्ते निरन्तरा निबिडा इति यावत्। दत्ता अर्पिता रभसः। रभसो वेगहर्षयोरिति विश्वः। तेन सहिता ये परीरम्भा नामाऽऽलिङ्गनानामारम्भाः जयन्ति सर्वोत्कर्षेण वर्तन्ते इति भावः। हरिणीवृत्तम्। स्वभावोक्तिरलङ्करणम् ॥ ३२ ॥

सरसिजवने संलीनायाः सकौतुकमिन्दिरे
सलिलविहृतौ शौरेर्लोलेक्षणस्य मुखस्य ते।
अलिकवलिताऽऽलोलश्यामाऽलकस्य सरोरुहा-
दलिकवलिताच्छैवालाढ्यादभून्न भिदाग्रहः ॥ ३३ ॥

सरसिजेति। हे इन्दिरे! सलिलविहृतौ जलक्रीडायां सरसिजानां वने कौतुकेन कुतूहलेन सहितं यथा तथा संलीनाया गुप्तायाः ते लोले चञ्चले अक्षिणी नयने यस्मिन् तथा अलिके ललाटे वलिताश्चालिता आसमन्ताल्लोलाश्चञ्चलाः श्यामाः कृष्णवर्णा अलकाः केशा यस्मिन् तस्य ते मुखस्य। अथ अलिभिर्भ्रमरैः कवलितादधिष्ठितात् शैवालेन जलनील्या आढ्याच्छोभनात् कमलाच्छौरेः श्रीहरेर्भिदाग्रहो भेदग्रहणं नाऽभूदित्यत्र भेदग्रहाऽभावान्मीलितालङ्कारः। हरिणीवृत्तम् ॥ ३३ ॥

---

३३ वारिविहाराऽवसरे सकुतूहलं नलिनवनविलीनायाश्चञ्चलनयनायास्तव भालतलवलितचल्लोलनीलचूर्णकुन्तलस्याऽऽननस्य भ्रमरवलिताज्जलनीलीवलिताच्च कमलाद्भेदज्ञानं भगवतो नाऽऽसीत्, लिसादृश्यादित्याह।

अथ वनक्रीडावर्णनम्—

युगपदहिमहीभृत्युन्मिषन्तं समन्ताद्
ऋतुगणमपि कृत्स्नं निर्विशन्निर्विशङ्कः ।
सह विहरति लीलालाभवत्या भवत्या
मम जननि मुकुन्दो मञ्जुवल्लीगृहेषु ॥ ३४ ॥

युगपदिति । हे मम जननि ! अहिमहीभृति शेषाद्रौ युगपदेककाले समन्तादुन्मिषन्तमुदयं प्राप्नुवन्तं ऋतूनां वसन्तादीनां गणं समूहं कृत्स्नं निर्विशङ्कः गतविशिष्टसन्देहः सन्निर्विशन् प्रविशन्(?)सन्मुकुन्दः मञ्जुषु मनोज्ञेषु वल्लीगृहेषु लतामन्दिरेषु लीलालाभः क्रीडाप्राप्तिरस्ति अस्याः सकाशात्तया भवत्या सह विहरति क्रीडति । मालिनीवृत्तम् ॥ ३४ ॥

कुसुमशरधनुर्ज्यातुङ्गटङ्कारशङ्का-
करमधुकरसङ्घाऽऽरब्धझङ्कारहृद्यान् ।
फणिगिरिवनदेशान् पद्मनाभः स पद्मे
सफलयति गभीरैस्त्वत्सहायो विहारैः ॥ ३५ ॥

कुसुमेति । हे पद्मे ! त्वं सहाया सहचरी यस्य सः प्रसिद्धः पद्मनाभः गभीरैर्विहारैः क्रीडाभिः कुसुमशरस्य धनुषो ज्याया

---

३४ अथ वनविहारं वर्णयन् शेषाऽचले समकालमाविर्भवन्तं वसन्तादिऋतुगुणां निःशङ्कं सकलमुपभुञ्जानो भगवान् विलासशालिन्या त्वया सह तरुसुन्दरलतागृहोदरेषु विहरतीत्याह ।

३५ हे भगवति ! त्वया सह भगवान् कामचापोग्रटङ्कारशङ्काजनकभ्रमरकुलसमारब्धझङ्काररमणीयान् शेषगिरिप्रदेशान् विहारैः सफलयतीत्याह ।

मौर्व्याः तुङ्गटङ्कारस्य बृहट्टणत्कारस्य कुर्वन्ति ते कराः शङ्का-याः करास्तेषां मधुकराणां सङ्घैः समूहैः आरब्धैर्झङ्कारैर्हृद्यान् हृदयप्रियान् फणिगिरेर्वनदेशानरण्यप्रदेशान् सफलयति सफलान् करोतीत्यर्थः। मालिनीवृत्तम्। कैतवाऽपह्नुतिरलङ्कारः॥ ३५॥

साकं लोकपतिस्त्वया विहरते काकोदराऽद्रौ रमे
स्मेनेषोरवने वने नयनयोरानन्दने चान्दने।
शम्पाऽऽश्लिष्टनवाम्बुदभ्रमजुषामङ्के चिरं केकिनां
नृत्ताडम्बरनुन्नपन्नगतया निर्दोषमन्दाऽनिले॥ ३६॥

साकमिति। हे रमे! काकोदराऽद्रौ शेषाऽद्रौ शम्पया विद्युता ऽऽश्लिष्टस्य नवाऽम्बुदस्य भ्रमजुषां शङ्काकृतां केकिनाम् अङ्के, अङ्कः समीपउत्सङ्गे पदे स्थानाऽपराधयोरिति केशवः। नृत्तस्य नर्तनस्याऽऽडम्बरेणाऽऽटोपेन नुन्ना गमिताः पन्नगा यस्मात्तत्तया निर्दोषः मन्दाऽनिलः यस्मिन्पुनः स्मेनेषोर्मदन-स्याऽवने रक्षणे कामोद्दीपके इति यावत्। नयनयोरानन्दने सुखकारिणि चन्दनानामिदं चान्दनं तस्मिन्वने अरण्ये लोक-पतिर्हरिः त्वया साकं सह विहरते क्रीडां करोतीत्यर्थः। शार्दू-लविक्रीडितं वृत्तम्। भ्रान्तिमदलङ्कारः॥ ३६॥

कान्तो रन्तुमनास्त्वया सह रमे कामेन मुह्यन् हरिः
श्यामां केलिवनीममंस्त रजनीं दूरीकृताऽर्कद्युतिम्।

---

३६ भगवांस्त्वया सह कुसुमबाहुल्यात्कुसुमबाणस्य रक्षके, नेत्राऽऽनन्दप्रदे, युवामवलोक्य विद्युदालिङ्गितनूतनजलधरभ्रमजु-षां भुजङ्गभुजां मयूराणां नृत्यविलासनिरस्तसर्पविषादिदोषतया अनवद्यमन्दमारुते, चन्दनवने सुखं विहरतीत्याह।

३७ त्वया सह त्रिजिह्वपुंभगवान् काममूढचेताः घनच्छाय-

सन्ध्यारागमगेषु पल्लवगणं तत्कोरकांस्तारका-
ण्यन्तः सन्तमसे लसन्मधुकरश्रेणीं च नाऽणीयसीम्॥ ३७॥

कान्त इति हे रमे! कान्तः प्रियः हरिर्भगवान् त्वया सह रन्तुमना रमणेच्छुः अतः कामेन मुह्यन्मोहं प्राप्नुवन् सह दूरीकृता निबिडत्वात्तिरस्कृता अर्कद्युतिर्यया तां श्यामवर्णां केलीनां क्रीडार्थं वा वनीं रजनीम्, तथा अगेषु वृक्षेषु पल्लवगणं किसलयसमूहं सन्ध्यारागम्, एवं तेषां वृक्षाणां कोरकाः कलिकास्ताराणि भानि, पुनरन्तर्मध्ये नाऽणीयसीं विपुलां लसन्तीं शोभमानां मधुकरश्रेणीं भृङ्गपङ्क्तिं सन्तमसम् अन्धतमसम् अमंस्तेति सर्वत्र सम्बन्धेन भ्रान्त्यलङ्कारः। शार्दूलवि० ॥ ३७॥

त्वन्नाथाऽऽख्यावहनविशदीभूततद्दास्यदार्ढ्यं
किं चित्कृत्वा कलयितुमिवाऽऽकाङ्क्षता माधवेन।
पत्या साकं प्रणयकलहं तावकं छेत्तुकामे
कामे देवि स्वयमुपवने तन्यते बाणदानम्॥ ३८॥

त्वदिति। हे देवि! त्वन्नाथस्य माधवस्याऽऽख्याया नाम्नो

---

मया निवारितातपप्रवेशां विहारवनीं श्यामां रजनीं, तत्रस्थतरुपल्लवनिचयं संध्यारागं, तत्कलिकाश्च ताराः, तन्मध्यविलसद्विपुलालिपटलं चाऽन्धतमसं मन्यते, उचितैवेयं भ्रान्तिरस्य मुग्धस्येत्याह।

३८ हे देवि! मन्मथे पत्या सह तव प्रणयकलहं छेत्तुकामे सति तस्य किंचिदुपकृत्य स्वस्मिन् वर्तमानं त्वत्पत्युर्भगवतो माधवेति नाम्नो वहनेन (स्वाम्युपकरणभारवहनेन) स्पष्टीभूतस्य भगवद्दास्यस्य यद्दार्ढ्यं तत्कर्तुकामे सति माधवनामधारकेन वसन्तेन उद्याने कामसाहाय्यसंपादनाय बाणस्य (कलहच्छेदसाधनस्य शरस्य, बाणाख्यपुष्पविशेषस्य वितरणं च) तन्यत इत्याह।

वहनेन धारणेन । वह प्रापणे इत्यस्माल्ल्युट् । विशदीभूतं यत्तस्य माधवस्य दास्यस्य दार्ढ्यं किं चिद्घटिकं चित्साहाय्यकं कृत्वा कलयितुं कर्तुं काङ्क्षतेव माधवेन वसन्तेन पत्या साकं तावकं प्रणये कलहं छेत्तुं भेत्तुं काम इच्छा यस्य तस्मिन् कामे मदने उपवने आरामे बाणस्य शरस्य झिण्टीपुष्पस्य च दानं तन्यते विस्तार्यते । यो हि यस्याऽऽरूयां स्वात्मनि वहति स तस्य दास इति लोके प्रसिद्धम् । तदहं माधवस्य दास इति तद्दा-स्यदार्ढ्यसम्पादनाय तदुपकारिणि कामे शरदानं तत्तद्दास्ये एव पर्यवस्यतीति तथाऽऽचरितवानिति भावः । मन्दाक्रान्ता-वृ० । उत्प्रेक्षाश्लेषावलङ्कारौ ॥ ३८ ॥

सोऽयं गायन् स्मरमनुमलिः शश्वदव्यादभव्यात्
सम्पश्यन्ती यमिह कबरीसौरभादापतन्तम् ।
जातोद्वेगा जगदधिभुवे चित्रमप्रार्थिताऽपि
स्वैरं दत्से सरभसपरीरम्भमम्भोधिकन्ये ॥ ३९ ॥

सोयमिति । भो ऽम्भोधिकन्ये ! कबर्याः सौरभाद्धेतोः आपतन्तं यम् अलिं पश्यन्ती अतो जातोद्वेगा सभया तत अप्रा-र्थिता ऽपि जगदधिभुवे जगदीशाय चित्रं सरभसं परीरम्भं द-त्से स स्मरमनुं काममन्त्रं गायन्नयमलिभृङ्गः अभव्यादकुशला-दव्याद्रक्षतु । मन्दाक्रान्तावृत्तम् । उदात्तालङ्कारः ॥ ३९ ॥

---

३९ केशपाशसौरभलोभादसकृत्समीपमापतन्तं यं दृष्ट्वा चकिता सती त्वमयाचितापि त्रिलोकीप्रभवे भगवते मानं विहाय सत्वरं परिष्वङ्गं वितरसि सोयं त्वन्मानोच्चाटनं काममन्त्रं जपन् भ्रमरो वारं वारमशुभादवतित्याशास्ते ।

मन्दं मन्दं वृषगिरितटीं स्वैरमाटीकमानः
खेलं खेलं विमलहरिणाऽङ्काऽऽनने काननेषु ।
ग्राहं ग्राहं मृदुसुमनसः कौतुकी कैटभाऽरि-
र्वारं वारं तव वितनुते देवि मूर्धाऽभिषेकम् ॥ ४० ॥

मन्दमिति । हे विमलहरिणाङ्काऽऽनने ! देवि ! कौतुकी कैटभारिर्मन्दमन्दं वृषगिरेस्तटीम् आटीकमानो हिण्डमानः सन् काननेषु खेलं खेलं क्रीडित्वा क्रीडित्वा तथा मृदुसुमनसः ग्राहं ग्राहं गृहीत्वा गृहीत्वा वारं वारं पुनः पुनस्तव मूर्धाऽभिषेकं वितनुते, धम्मिल्ले ताः सुमनसो न्यस्यतीत्यर्थः । मन्दाक्रान्ता०॥४०॥

रागेणोपर्यनिशमुषितं पुष्पवत्या लतायाः
प्रीत्या गृह्णन् कमपि कुतकी पल्लवं फुल्लवक्त्रः ।
सान्द्राऽऽमोदं चिकुरसुमनःसन्निधानेन नीत्वा
शार्ङ्गी हन्त श्रुतिशिरसि ते स्थापयत्यब्धिकन्ये ॥४१॥

रागेणेति । हे अब्धिकन्ये ! रागेणाऽऽरक्तत्वेन प्रीत्या

———

४० हे निर्मलचन्द्रवदने ! वेङ्कटाचले मन्दंमन्दं परिभ्रमन् वनेषु वारं वारं क्रीडित्वा कोमलकुसुमान्यभीक्ष्णं गृहीत्वा कौतुकी भगवान् ते मूर्धनि वर्षतीति लीलाविशेषं वर्णयति ।

४१ कुतुकी शार्ङ्गी फुल्लनयनः सन् पुष्पवत्याः (सकुसुमाया, रजस्वलायाश्च) उपरि रागेण ( रक्तिम्ना, प्रीत्या च ) निरन्तरं कृतवसतिं पल्लवं ( किसलयं, विटं च ) प्रीत्या अवचिन्वन् स्वीकुर्वंश्च प्रगाढहर्षेण केशस्थपुष्पसामीप्येन सज्जनसांनिध्येन च नीत्वा तं ते श्रुतिशिरसि ( कर्णोपरि, उपनिषत्सु च ) स्थापयतीति भगवान् पल्लवस्य त्वत्केशोपरि निधानेन दुराचारस्यापि समुद्धरणप्रीतिं सूचयतीत्याह ।

च पुष्पवत्याः पुष्पिण्या रजस्वलायाश्च उपर्यूर्ध्वमनिशं रात्रिन्दिवम् उषितं स्थितं कमपि पल्लवं किसलयं जारं च प्रीत्या गृह्णन्स्वीकुर्वन्नतः फुल्लं विकसितं वक्त्रं यस्य सः कुतुकी कौतूहली शार्ङ्गी हरिः सान्द्रः आमोदः सुगन्धः शृङ्गारजन्यहर्षश्च चिकुरस्य सुमनसां पुष्पाणां सतां च सान्निधानेन सामीप्येन नीत्वा श्रुतिशिरसि कर्णोपरिभागे वेदान्ते च स्थापयति । सुदुराचारमपि केनाऽपि भाग्योदयवशेन भगवति यदि रतिरुत्पद्यते तेन हेतुना तं श्रीहरिः करे कृत्वा सत्सङ्गं दत्वा तत्रस्वस्वमाहात्म्यज्ञानाऽऽनन्दपूर्वकं वेदान्तमार्गे निवेशयति । 'अपि चेत्सुदुराचारो भजते मामनन्यभाक्' इत्यादिगीतोक्तेः । मन्दाक्रान्तावृत्तम् । श्लेषाऽलं० ॥ ४१ ॥

दत्ते मातस्तव किल मुखे पाणिना दुर्निवार-
स्वेदेनाऽसौ कमपि तिलकं कौतुकी श्रीनिवासः ।
त्वं तु स्वेदस्रुतिविघटितस्थानविन्यासमेनं
वीक्ष्याऽऽदर्शे हससि दयितं मोघयत्नं विदग्धा ॥ ४२ ॥

दत्ते इति । हे मातः कौतुकी श्रीनिवासः असौ दुर्निवारः निवारयितुमशक्यः स्वेदः घर्मो यस्य तेन पाणिना करेण तव मुखे कमपि तिलकं विशेषकं दत्ते । विदग्धा चतुरा त्वम् एनं पूर्वोक्तम् । द्वितीयादौस्स्वेन इत्यन्वादेशे एनादेशः । दयितं पतिं स्वेदस्रुत्या घर्मस्रवणेन विघटितः तिलकविषयस्थानस्य वि-

---

४२ कौतुकी भगवान् तवाऽऽनने सात्त्विकभावोदयादनिवार्यस्वेदोद्गमेन करेण तिलकं विन्यस्यति, तं च तत्कालस्वेदोद्गमात् स्थानगलितमादर्शे विलोक्य तिलकस्य भ्रष्टत्वेन चतुरा त्वं परिहससीत्याह।

न्यासो यस्य सः । अतः मोघो निष्फलः यत्नो यस्य तम आदर्शे वीक्ष्य हसि हास्यं करोषि । मन्दाक्रान्तावृत्तम् ॥ ४२ ॥

शेषक्ष्माभृत्तटवनचरश्यामजीमूतसङ्घे
संलीय त्वां भ्रमयितुमनाः कल्पिताऽभेदमोहः ।
तस्मिन् विद्युत्पटलजटिले तं विचेतुं विशन्त्या
व्यावृत्तिं ते विशदमविदन् स स्वयं वञ्चितोऽभूत् ॥४३॥

शेषेति । त्वां भ्रमयितुं मनो यस्य सः अतः शेषक्ष्माभृतः तटवनचराणां श्यामजीमूतानां नीलमेघानां सङ्घे संलीय स्वयं सक्तो भूत्वा कल्पितः कृतः अभेदमोहो येन स हरिः विद्युतां पटलेन समूहेन जटिले व्याप्ते तस्मिन्वने तं हरिं विचेतुं गवेषितुं विशन्त्यास्ते व्यावृत्तिं निराकरणं विशदम् अविदन्नजानन् स्वयं वञ्चितः प्रतारितः अभूत् । अत्र पूर्वार्धे अभेदकथनान्मीलिताऽलङ्कारः । अविदन्नित्यत्र विशेषज्ञानाऽभावात्सामान्यमलङ्कारः । ततः स्वयं वञ्चित इति केवलेष्टाऽनवाप्तिर्विषमामित्येतेषां सङ्करः । मन्दाक्रान्तावृत्तम् ॥ ४३ ॥

बाले देहि पयोधरं करतले प्रावृट् त्वया याच्यता-
माश्लेषाभिरुचिं विधेहि न शशी तस्याऽस्मि किं तु स्वसा ।

---

४३ भगवान् शेषाचलतटवनचरनीलमेघसमूहे निलीय सावयर्यादात्मनो मेघभ्रान्तिं जनयन् त्वां वञ्चयितुं प्रवृत्तः, तमन्वेष्टुं विद्युद्दामभूते तस्मिन् मेघे विशन्त्यास्ते विद्युत्सारूप्याद्भेदाऽनभिज्ञः परवञ्चनाय प्रवृत्तः स स्वयमेव वञ्चितोऽभूदित्याह ।

४४ अथ वक्रोक्त्या वाग्विलासं वर्णयन्, हे बाले! करतले पयोधरं (स्तनं) देहीति भगवद्वाक्यं श्रुत्वा पयोधरपदस्य मेघपरतामङ्गीकृत्य तस्य प्रावृषि उदयादात्मनि तदभावात्प्रावृट् त्वया याच्यतामि-

आस्तामुत्तरमेतदीदृगधरं याचामि वाचा स्वयं
नास्त्यर्थोऽधरयाच्ञयेति चटुभिः पद्मे धिनोषि प्रियम्॥४४॥

बाले इति। हे बाले अनभिज्ञे ! हे पद्मे ! पयोधरं देहि इति भगवता कुचग्रहणे याचिते लक्ष्म्या त्वया ऽत्र पयोधर-शब्दस्य मेघार्थत्वं परिकल्प्य त्वया प्रावृड् याच्यतामिति परिहासाय कौटिल्येनोत्तरितम्। एवम् आश्लेषाऽभिरुचिं विधेहीत्यत्र नक्षत्राऽर्थेनोत्तरयति—न शशीति। यतः चन्द्रस्य त्वं स्वसा भगिनी, अत एतत्पूर्वोक्तम् ईदृक्कुटिलमुत्तरमास्तां तिष्ठतु। तर्हि अधरं याचामि इति श्रीकृष्णेन अधरपाने याचिते सति अधरस्य नीचस्य याच्ञया प्रार्थनया अर्थः प्रयोजनं द्रव्यं वा नास्ति न भवति इति चटुभिः प्रेममिथ्याविकत्थनवाक्यैः प्रियं हरिं धिनोषि प्रीणयसि। अधरस्तु पुमानोष्ठे हीने ऽनूर्ध्वे च वाच्यवदिति मेदिनी। अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः। अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनमित्यमरः। शार्दूलविक्रीडितं वृत्तम्। वक्रोक्त्यलङ्कारः॥ ४४॥

पश्चादुपेत्य परिहासकृते कराभ्यां
दृष्टी तवाऽम्ब विपुले स्थगयन् सशेषम्।

---

त्युत्तरयन्ती, पुनस्तेन आश्लेषाभिरुचिम् (आलिङ्गनरुचिं) विधेहीति प्रार्थिता आश्लेषानक्षत्रप्रीतिश्चन्द्रस्य प्रसिद्धा नाहं शशी किन्तु तस्य भगिन्यस्मीति उत्तरं ददती, आस्तां मायामयमिदमुत्तरं, स्वयं वाचा अधरं (अधरामृतं) याचामीति भगवद्वाक्यं निशम्याऽधरपदस्य नीचार्थकत्वं परिकल्प्य नीचयाच्ञा निष्फलेति छलवचनैर्भगवन्तं प्रीणयसीत्याह।

४५ भगवान् पश्चादागत्य परिहासार्थं करद्वयेन विशालतरे तव

पाणिद्वयं मम न कृत्स्नपिधानकेलौ
पर्याप्तमित्यहिगिरेः पतिरेति लज्जाम् ॥ ४५ ॥

पश्चादिति । हे ऽम्ब ! अहिगिरेः पतिर्हरिः परिहासकृते विनोदार्थं पश्चादुपेत्य तव विपुले दृष्टी नेत्रे शेषेण सहितं यथा तथा स्थगयन्नाच्छादयन् मम पाण्योर्द्वयं कृत्स्नस्य सर्वस्य पिधानस्याऽऽच्छादनस्य केलौ क्रीडायां पर्याप्तं नेति लज्जां त्रपामेति । अत्राऽद्भुतनेत्रवैपुल्यवर्णनेनाऽत्युक्तिरलङ्कारः । वसन्ततिलकावृत्तम् ॥ ४५ ॥

तव लोकमातरवलोकवागुरा
मृगजालदृष्टियुगजाड्यकृद्गुणा ।
ननु भाति चित्रमनुभावमाश्रिता
हरिणाऽपि तत्र हरिणायितं यतः ॥ ४६ ॥

तवेति । हे लोकमातः ! तव अवलोक एव वागुरा मृगबन्धिनी कर्त्री मृगजालस्य जाड्यकृतः स्तब्धताकारिणः गुणाः विपुलत्वादयो रज्जवश्च यस्यां सा सती चित्रम् अनुभावं आश्रिता । ननु इति वितर्के । तत्र हेतुः—हरिणा भगवता नृसिंहेन

---

नेत्रे अपर्याप्ततया पिदधत्, मत्करद्वन्द्वं कृत्स्ननेत्रपिधाने न पर्याप्तमिति लज्जामुपैतीत्याह ।

४६ हे लोकमातः! हरिणसमूहनेत्रद्वन्द्वस्तम्भकारिणो गुणाः (चाञ्चल्यादय,स्तन्तवश्च ) यस्यास्तथाभूता तव दर्शनमृगबन्धनी विचित्रं प्रभावमुपगता, यत्र हरिणा ( भगवता, सिंहेन च ) हरिणवदाचरितम् । भगवान् तवाऽवलोकनेन वशीभूतो ऽभवदिति सिंहस्य हरिणसदृशमाचरणं विस्मयायेत्याह ।

च तत्र नयनजाले यतः हेतोः हरिण इवाऽऽचरितं हरिणायितं आसक्तं सत् स्थितमिति भावः। हरिणशब्दात्कर्तुः क्यङ् सलोपश्चेति क्यङि अकृत्सार्वधातुकयोरिति दीर्घे नपुंसके भावे क्त इति क्तप्रत्यये इद्। श्लेषकाव्यलिङ्गालङ्कारौ। मञ्जुभाषिणीवृत्तम् ॥ ४६ ॥

स्मितचन्द्रिकया कयापि देवि
स्मरसंवृद्धिपुषा सदोन्मिषन्त्या।
मधुसूदनमानसेन्दुकान्ते
द्रवतां चन्द्रमसः स्वसस्तनोषि ॥ ४७ ॥

स्मितेति। हे देवि! कया ऽप्यनिर्वचनीयया सदा उन्मिषन्त्या पुनः स्मरसंवृद्धिं पुष्णाति तया स्मितरूपया चन्द्रिकया हे चन्द्रमसः स्वसः! मधुसूदनस्य मानसेन्दुकान्ते हृच्चन्द्रकान्तोपले द्रवतामार्द्रत्वं तनोषि। चन्द्रिकया हि चन्द्रकान्तो द्रवतीति प्रसिद्धं लोके। औपच्छन्दसिकं वृत्तम्। रूपकालङ्कारः॥४७॥

तव स्तनं शैलघनं विनोदात्
प्रसह्य गृह्णन् प्रभुरब्धिकन्ये।

---

४७ अथ चन्द्रभगिन्यास्तव चन्द्रसाधर्म्यमुचितमित्याशयेन मकरध्वजवृद्धिकारिण्या निरन्तरोदयशालिन्या ऽनिर्वचनीयया मन्दहास्यचन्द्रिकया भगवन्मानसरूपचन्द्रकान्तोपले द्रवं (प्रेम, द्रुतिं) च तनोषीति वदन् सदोन्मिषन्त्येति प्रसिद्धचन्द्रिकातो व्यतिरेकं च सूचयन्नाह।

४८ पर्वतघनं तव स्तनं विनोदात् प्रसह्य गृह्णन् भगवान् पुरा

पुरा मुरारिः स्वकरोद्धृतस्य
गोवर्धनस्य स्मृतवान् महाऽद्रेः ॥ ४८ ॥

तवेति । हे ऽब्धिकन्ये ! शैलवद्घनं कठोरमुन्नतं च तव स्तनं विनोदात् प्रसह्य बलात्कारेण गृह्णन् प्रभुर्हरिः पुरा उद्धृतस्य महाऽद्रेर्गोवर्धनस्य स्मृतवान् । गोवर्धनं स्मृतवानित्यर्थः । अधीगर्थदयेशामिति कर्मणि षष्ठी । अत्र लक्ष्मीस्तनग्रहणसमये गोवर्धनस्मरणवर्णनात्स्मृत्यलङ्कारः । उपजातिवृत्तम् ॥४८॥

वल्ली तमालमिव विद्युदिवाऽम्बुवाहं
माहेन्द्रनीलभवनं मणिदीपिकेव ।
इन्दोः कलेव गगनाऽङ्गणमिन्दिरे त्व-
माश्लिष्य शौरिमयसे महतीमभिख्याम् ॥ ४९ ॥

वल्लीति । वल्ली लता तमालवृक्षमिव, विद्युत्तडिदम्बुवाहं मेघमिव, माहेन्द्रनीलभवनं प्रति मणिनिर्मितदीपिकेव, गगनाङ्गणं प्रति इन्दोः कलेव, हे इन्दिरे ! त्वं शौरिम् आश्लिष्य, श्लिष आलिङ्गने ऽस्मात्समासे नञ्पूर्वे इति क्त्वो ल्यबादेशः । महतीम् अभिख्यां शोभां प्राप्नोषीत्युपमालङ्कारः । वसन्ततिलकावृत्तम् ॥ ४९ ॥

---

स्वकराद्धृतगोवर्धनपर्वतस्य सस्मारेत्याह ।

४९ गौराङ्गी त्वं कृष्णमालिङ्ग्य तमालतरुं लतेव, मेघं विद्युदिव, इन्द्रनीलभवनं मणिदीपिकेव, गगनाङ्गणमिन्दुकलेव, सुषमां लभसे इत्याह ।

मदनतरुपल्लवानां
मधुसदनमानसाऽलिकुसुमानाम् ।
तत्कृततपःफलानां
तव ललितानां तु जननि कः स्तोता ॥ ५० ॥

इति श्रीमद्वेङ्कटाऽध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे
शृङ्गारस्तबको नवमः सम्पूर्णः ॥ ९ ॥

---

मदनेति । हे जननि ! मदनरूपस्य तरोः पल्लवानां, तथा मधुसूदनस्य मानसरूपस्याऽलेर्भ्रमरस्य कुसुमानां, पुनस्तेन कृतस्य तपसः फलभूतानां, तव ललितानां विलासानां स्तोता कः पुमानिति प्रश्ने । कोऽपि नास्तीत्यर्थः । गीतिवृत्तम् । रूपकोल्लेखावलङ्कारौ ॥ ५० ॥

इति श्रीमद्रावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन विरचितायां बालबोधिन्याख्यायां
श्रीमल्लक्ष्मीसहस्रटीकायां शृङ्गारस्तबको
नवमः सम्पूर्णः ॥ ९ ॥

---

५० अयि हे मातः ! कामवृक्षकिसलयरूपाणां, भगवन्मानसमधुपपुष्परूपाणां, भगवत्कृततपःफलस्वरूपाणां तव विलासानां लोके स्तोता कः ? तद्वर्णने कस्यापि सामर्थ्यं न चेत्का कथा मम वराकस्य साकल्येन तद्वर्णने ? इत्याह ।

इति श्रीमानवल्ल्युपाह्वयतैलङ्गरामशास्त्रिविरचितायां लक्ष्मीसहस्राऽवतरणनिःश्रेणिकायां शृङ्गारस्तबकः ॥ ९ ॥

## अथ ऐश्वर्यस्तबकः ॥ १० ॥

सुग्रीवेण कपीन्द्रेण सख्यं कृत्वाऽग्निसाक्षिकम् ।
ऐश्वर्यमतनोद्वालेः(?) स रामः श्रेयसे ऽस्तु नः ॥ १० ॥

अथाऽस्मिन् दशमे स्तबके लक्ष्म्या ऐश्वर्यं वर्णयितुं प्रथमपद्ये विश्वम्भरसमैश्वर्यामिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

विश्वस्य जननीमेव विश्वस्य शरणं वृणे ।
विश्वेश्वरसमैश्वर्यां विदुर्यां ब्रह्मवादिनः ॥ १ ॥

विश्वस्येति। यां लक्ष्मीं ब्रह्मवादिनोऽपि विश्वम्भरेण समम् ऐश्वर्यं यस्यास्तां विदुः । तथा च महोपनिषदि श्रुतिः । 'भगः शक्तिर्भगवान् काम ईश उभा दातारा विह सौभगानाम्, समप्रधानौ समसत्त्वौ तयोः समशक्तिरजरा विश्वयोनि'रिति । अतो विश्वस्य । विपूर्वाच्छ्वस प्राणने इत्यस्मात्क्त्वाप्रत्यये तत्स्थाने समासे ऽनञ्पूर्वे इति ल्यप् । 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते' इत्यभिधानाद्विश्वासं प्राप्येत्यर्थः । विश्वस्य सर्वस्य जगतः जननीं मातरं तामेव शरणम् । शरणं गृहरक्षित्रोरित्यमरः । वृणे । वृञ् वरणे इत्यस्मात् श्नाविकरणात्कर्तरि लट् । उदात्तालङ्कारः । विपुलावृत्तम् ॥ १ ॥

---

१ अथ ऐश्वर्यस्तबकेन भगवत्या ऐश्वर्यं स्तोतुकामः प्रथमतो यां वेदविदो विश्वपालकभगवत्समानैश्वर्यामामनन्ति निखिलजगतो मातृतया सर्वाधिकाऽऽदरणीयां तामेव निजरक्षकतया वृणे इति मङ्गलमाचरति ।

अनुपाधिकमम्ब ते मुरारे-
रपि साधारणमाहुरीशितृत्वम् ।
स्फुटमत्र निदर्शनं प्रतीमो
ननु मित्रावरुणादिदैवतात्वम् ॥ २ ॥

अन्विति । हे अम्ब ! ते लक्ष्म्या मुरारेर्हरेरपि ईशितृत्वं नियन्तृत्वम् अनुपाधिकं स्वाभाविकं साधारणं समम् आहुः । अत्र बृहदारण्यकश्रुतिः 'स एवात्मानं द्वेधा ऽपातयत् पतिश्च पत्नी चाऽभवता'मिति । अत्र समत्वे मित्रावरुणादिदैवतात्वं स्फुटं निश्चितं निदर्शनं दृष्टान्तं प्रतीमः । अयं भावः—'मैत्रावरुणीं वशामालभेत' इत्यादौ वशा मेषी तदेकत्वप्रतिपादनेन मित्रावरुणयोरेकदेवतात्वं यथा निश्चीयते तद्वदेव युवयोरपीति । उपमालङ्कारः । औपच्छन्दसिकं वृत्तम् ॥ २ ॥

इदानीं श्रीवासुदेवरमादेव्योरविशेषेण सामान्ये ऽपि विशेषमाह—

अविशेषमशेषशेषिभावं
युवयोर्यद्यपि वर्णयन्ति सन्तः ।

---

२ हे अम्ब ! तव भगवतश्च नैसर्गिकं जगन्नियन्तृत्वं समानमिति एकयागनिरूपितं दवतात्वं मित्रावरुणयोरुभयोर्व्यासज्ज्यवृत्तीति दृष्टान्तसंप्रतिपन्नं स्फुटमवगच्छाम इत्याह ।

३ हे स्वामिनि ! सन्तस्तव भगवतश्चोभयोः अशेषशेषिभावं (सकललोकक्षयेपि शिष्यमाणत्वं, अङ्गाङ्गिभावं वा ) समानं वदन्ति तथापि जगद्रक्षणधूर्वहतया कार्याऽनुरोधात् शेषशेषिभावः ( अङ्गा-

तनये जलधेर्मिथः प्रतीत-
स्तदपि स्वामिनि शेषशेषिभावः ॥ ३ ॥

अविशेषमिति । हे जलधेस्तनये ! युवयोर्भवन्नाथभवत्योर्यद्यपि सन्तः परमरहस्याऽभिज्ञाः अशेषस्य जगतः क्षयेऽपि शेषत्वमविशेषं तुल्यमेव वर्णयन्ति । तथापि मिथः परस्परं शेषशेषिभावः प्रतीतः । कदा चित्त्वं तस्य वशे भवसि लीलया तथा कदा चित्स त्वद्वशे भवति । तृतीयाऽपेक्षया तु शेषित्वं समानमिति भावः । औपच्छन्दसिकं वृत्तम् ॥ ३ ॥

यथा गरुडगामी शेषशायीत्यादौ गरुडादीनां हरिविशेषणत्वाद्भृत्यत्वं तथा रमापतिरित्यत्र तव तद्विशेषणत्वादप्रधानता स्यादिति चेत्तत्राऽऽह—

तुल्ये ऽपि ते नाथविशेषणत्वे
व्यक्तं गुणादस्ति विशेष एषः ।
प्रत्यक्त्वमब्धेस्तनये भवत्याः
प्राज्ञा गुणानां च पराक्त्वमाहुः ॥ ४ ॥

तुल्ये ऽपि गुणेभ्य अप्रधानादिभ्यो गरुडादिभ्यः तव एष विशेषो ऽस्ति । विशेषणत्वे ऽपि प्राज्ञा गुणानां पराक्त्वं बहिरङ्गत्वं तव तु प्रत्यक्त्वं तत्त्वमाहुः । 'यथा देवस्तथा देवी यथा

---

ङ्गित्वं, शेषशायित्वेन शेषनिरूपितं प्राधान्यं च) प्रसिद्धम् इति जगद्रक्षणार्थं प्रवृत्तयोरुभयोरपि कार्याऽनुरोधाद् गुणप्रधानभाव इत्याह ।

४ भगवदुपकरणत्वेनोपसर्जनतया शेषगरुडादिसाम्ये ऽपि त्वयि तदुपकरणेभ्यो ऽयं विशेषो यत् बुधास्तव चिच्छक्तिरूपतया ऽहंप्रत्ययगोचरत्वं गुणानां च दृष्टप्रपञ्चकोटिनिविष्टत्वेनेदंप्रत्ययविषयत्वं वदन्तीति भगवत्या भगवदभेदं प्रतिपादयति ।

देवी तथा हरिः । नाऽनयोरन्तरं किं चिच्चन्द्रचान्द्रिकयोरिवे'ति बोधायनस्मृतिः । इन्द्रवज्रावृत्तम् ॥ ४ ॥

संसाराऽब्धौ मज्जतां सज्जनानां
रक्षायज्ञे दीक्षितो राक्षसाऽरिः ।
अम्भोराशेः पुत्रि पत्न्यास्तवाऽसा-
वन्वारम्भं नित्यमेत्यम्बुजाक्षः ॥ ५ ॥

संसारेति । हे ऽम्भोराशेः पुत्रि ! राक्षसानामरिरन्तः संसाराऽब्धौ मज्जतां सज्जनानां रक्षारूपे यज्ञे दीक्षासञ्जाता ऽस्य दीक्षितः । तदस्य सञ्जातमिति तारकादित्वादितच् । अतः अम्बुजाक्षस्तव नित्यम् अन्वारम्भं यज्ञीयसंयोगम् एति । अत्र प्रमाणम्—'अविमुक्तो ऽन्यो ऽथाऽऽतिथ्यं गृह्णाति यज्ञस्य सन्तत्यै पत्न्यन्वारभते पत्नी हि पारिणह्यस्येशे' इति सोमग्रहणे तैत्तिरीयश्रुतिः । आज्यभागान्ते ऽन्वारब्धायामुत्तराऽऽहुतीर्हुत्वेति तत्सूत्रम् । व्यतिरेकालङ्कारः । शालिनीवृत्तम् ॥ ५ ॥

अस्येशानेत्यागमस्तावदास्ता-
मैश्वर्ये ऽस्मिंस्तावदम्ब त्वदीये ।

---

५ कर्मसु पत्न्यन्वारब्धस्यैवाऽधिकारात् सज्जनरक्षणरूपाऽध्वरदीक्षितो भगवान् नित्यं त्वत्साहित्यमेतीति जगद्रक्षणे युवयोर्नित्यसाहित्यमित्याह ।

६ तावकैश्वर्यप्रतिपादको 'ऽस्येशाना जगतो विष्णुपत्नी'त्यादिरागमो विशेषविवक्षया आस्तां तावत् । साधारणजनेषु तद्बो-

जागर्त्येव व्यासतातप्रणीतं

श्लाघ्यं विष्णोस्तत् पुराणं प्रमाणम् ॥ ६ ॥

अस्येति । हे अम्ब ! त्वदीये अस्मिन्नैश्वर्ये 'विष्कम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नि । विश्वव्यचा इषयन्ती सुभूतिः शिवा नो अस्त्वदितिरुपस्थे' इत्यापस्तम्बश्रुत्याद्यागमस्तत्र माहात्म्यप्रतिपादकः प्रमाणमूर्धन्यस्तावदर्वाचीनाविदुषां तत्पठने तदर्थविवेचने चाऽप्रवृत्त्या तज्ज्ञानविरहाद्वास्तां नाम । परं त्वापाततस्त्वन्माहात्म्यविवेचने प्रवृत्तस्य भगवतोऽष्टादशपुराणकर्तुर्व्यासस्य तातेन पराशरेण 'नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी । यथा सर्वगतो विष्णुस्तथैवेयं द्विजसत्तम' इत्यादि त्वन्माहात्म्ये प्रणीतं संवादरूपेणेत्यर्थः । अत एव श्लाघ्यं श्रुतिवन्न्याय्यं विष्णुपुराणमेव तत्प्रसिद्धं जागर्त्येतो नाऽन्यत्र प्रयतामहे इति भावः । शब्दप्रमाणाऽलङ्कारः । शालिनीवृत्तम् ॥ ६ ॥

जल्पाकास्ते जीवकोटिप्रवेशं

स्वल्पप्रज्ञा ये रमे कल्पयन्ति ।

---

धनायापि पराशरमुनिरचितं मान्यं विष्णुपुराणं प्रमाणमस्तीति तवैश्वर्यं वेदपुराणवर्णितं नाऽस्मत्कपोलपरिकल्पितमित्याह ।

७ अल्पबुद्धयो वाचाटा ये परब्रह्मस्वरूपिण्यास्तव जीवकोटिप्रवेशं वदन्ति तान् प्रति 'यथा सर्वगतो विष्णुस्तथैवेय'मिति पराशर-

विश्वं व्याप्तं विष्णुना ऽम्ब त्वया चे-

त्युक्तिस्तान् प्रत्युत्तरं शक्तिसूनोः ॥ ७ ॥

जल्पाका इति । हे रमे ! ये स्वल्पप्रज्ञा मन्दबुद्धयो जल्पाकाः केवलतार्किका वैष्णवाश्च ते ' सङ्कर्षणश्च प्रद्युम्नोऽनिरुद्धः श्रीविधिः शिवः । षडस्माकमिमे जीवा ईशो नारायणः परः' इति वैष्णवाऽऽगमबलेनैव ते जीवकोटिप्रवेशं कल्पयन्ति । तान् प्रति हे ऽम्ब ! विष्णुना त्वया च विश्वं व्याप्तम् इति पूर्वोक्ता 'नित्यैवैषे'त्यादिशक्तिसूनोः पराशरस्योक्तिरेवोत्तरं ददातीति यावत् । अन्यदपि 'चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जग'दिति मार्कण्डेयपुराणे । शालिनीवृत्तम् ॥ ७ ॥

वेदोद्याने पारिजातायमानं

श्रीसूक्तं तज्जायतां श्रेयसे नः ।

पारेवाचां भासुरे त्वत्प्रभावे

चक्षुष्मन्तो देवि येनैव सन्तः ॥ ८ ॥

वेदेति । हे देवि ! वाचां पारे वाण्यगोचरे इत्यर्थः । भासुरे तस्मिन् त्वत्प्रभावे येन सन्तश्चक्षुष्मन्तस्त्वत्प्रभावदर्शिनः इत्यन्वयः । अयमाशयः । 'गन्धद्वाराम्' 'आपः सज'न्त्वित्यादिभिः पृथिव्यादिरूपेण पुन'श्चन्द्रां प्रभासा'मित्यत्र फलदातृत्वेन 'तां

---

मुनिवचनमेव सर्वव्यापकत्वप्रतिपादनपरमुत्तरमिति भगवत्या ब्रह्मरूपत्वं प्रतिपादयति ।

८ हे देवि ! वाचामगोचरे त्वदैश्वर्ये येन ( श्रीसूक्तेन ) जनास्तद्विदो भवन्ति वेदोपवने सकलार्थदातृत्वेन पारिजातवदाचरत्तच्छ्रीसूक्तं 'हिरण्यवर्णा'मित्यादिकमस्माकं श्रेयस्करं जायतामित्याशास्ते ।

पद्मिनी'मित्यादौ मन्त्ररूपेण चोपविष्टायास्तव ज्ञानादेव प्रत्यगभिन्नपरमात्मज्ञानवत्तामपि विश्वस्मिन्विप्रकृष्टव्यवहिताऽतीन्द्रियज्ञानं नाऽन्यथेति प्रतिपादकं वेदरूपे उद्याने आक्रीडे पारिजातायमानम् । कल्पद्रुवदिष्टपूरकमिति भावः । तत्पूर्वोक्तं श्रीसूक्तं नः श्रेयसे कल्याणाय जायतां भवतु । शालिनी वृत्तम् ॥ ८ ॥

दम्पत्योरिह युवयोरधीश्वरत्वं
व्यासज्ज्य स्थितमिति संमतं मतं नः ।
विश्वाऽम्ब श्रुतिविहितं विहाय पत्नीं
कर्तृत्वं क्रतुषु न केवलस्य पुंसः ॥ ९ ॥

दम्पत्योरिति । हे विश्वाऽम्ब ! पत्नीं विहाय केवलस्यैकस्य पुंसः क्रतुषु कर्तृत्वं नेति 'जायापती अग्निमादधीताम्' इति श्रुत्या कथितम् अत इह युवयोर्लक्ष्मीनारायणयोः दम्पत्योः । राजदन्तादिषु निपातनाज्जायाशब्दस्य दम्भावः । अधीश्वरत्वं व्यासज्ज्याऽविभज्य स्थितम् इति । 'अर्धो वा एष आत्मनो यत्पत्नी'त्यापस्तम्बश्रुत्या नः सम्मतम् इष्टमिति भावः । प्रहर्षिणीवृत्तम् ॥ ९ ॥

दत्ताऽऽशयासु भवतीमहिमोपदेशे
तत्तादृशीषु निगमान्तसरस्वतीषु ।

---

९ युवयोरैश्वर्यमुभयपर्याप्तमिति यज्ञेषु सपत्नीकस्यैवाधिकारबोधकवेदप्रामाण्यादस्माकं सङ्गतं प्रतीयत इत्याह ।

१० प्रसिद्धतरासूपनिषत्सु त्वन्माहात्म्योपदेशे प्रकटिताऽभिप्रायासु सकलसम्प्रतिपन्नं रामायणमुपोद्बलकमिति तव माहात्म्यं श्रुति-

नारायणप्रियतमे निखिलाऽभ्युपेतं
रामायणं ननु जयत्युपबृंहणं नः ॥ १० ॥

दत्तेति । तत्तादृशीषु प्रसिद्धासु । 'अहं रुद्रेभिर्वसुभिश्च-राम्यहमादित्यै'रित्यादिदेव्युपनिषदि तद्रूपासु निगमान्तमरस्वतीषु भवत्या महिम्न उपदेशे दत्ताऽऽशयासु सतीषु अखिलैरभ्युपेतं स्वीकृतं रामायणं न उपबृंहणमिति । आदौ त्वत्प्राप्त्यर्थं विवाहसमये यज्ञरक्षागौतमपत्नीदानादिः पुरतोऽपि रावणवधाऽन्तो यत्नः त्वत्प्राप्त्यर्थमेवेत्यध्यात्मे वाल्मीकीये च रामायणे स्पष्टत्वात्त्वन्महिम्न उपबृंहणं व्याख्यानभूतमित्यर्थः । स्मृतिप्रमाणाऽलं० । वसन्ततिलकावृत्तम् ॥ १० ॥

एका श्रीर्वै निगमशिखरैरिन्दिरे निर्विशेषं
विश्वव्याप्तिर्जननि युवयोर्व्यक्तमुद्घुष्यमाणा ।
ज्ञानद्वारा तव मधुरिपोरात्मनैवेत्यलीका
वैषम्योक्तिः कुत उपनता हन्त केषां चिदेषा ॥११॥

'एकेति । हे श्रीः ! एका भगवता अभिन्ना सत्तैश्वर्यं वै निश्चयेनेत्यादिभिर्निगमशिखरैरुपनिषद्भिर्युवयोर्व्याप्तिरैश्वर्यं निर्विशेषं तुल्यं व्यक्तं स्पष्टम् उद्घुष्यमाणाऽस्ति । एवं सति उभयो-

---

रामायणवर्णितमित्याह ।

११ हे श्रीः ! भगवतो भवत्याश्च समानं जगद्व्यापकत्वमुपनिषद्भिः स्पष्टमुद्घुष्यते, तथापि भगवतः स्वतःसिद्धमैश्वर्यं, तव तु तज्ज्ञानद्वारेति तव जीवकोटिप्रवेशसूचिका माध्वादीनामुक्तिः किंप्रमाणिके?ति न विद्मः, ब्रह्मरूपायास्तव तद्वैषम्येन जीवत्वकल्पनं निष्प्रमाणकमित्याह ।

रैश्वर्यं समपि हरेरात्मनैव स्वाभाविकं तव तु सम्यगृज्ञानं स्वरूपस्य गुणानां च ज्ञानं तद्द्वारा तत्प्रसादोपनतमित्यर्थः । इति केषां चिन्माध्वानाम् अलीका प्रमाणशून्या वैषम्योक्तिः कुत उपनता? कस्मादागतेति हन्त शिव शिव न विद्मः ॥ ११ ॥

वैभवं तव मुकुन्दपत्नि यो
वेद वेदशिखराऽनुवर्णितम् ।
वैभवं भुवि स विन्दति स्थिरं
दुस्त्यजं त्यजति वै भवं ततः ॥ १२ ॥

वैभवमिति । 'यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता । तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम्' इति देव्युपनिषदि । इत्यादिवेदशिखरैरुपनिषद्भिरित्यर्थः । अनुवर्णितं वैभवं यः पुमान् वेद जानाति स भुवि स्थिरं वैभवं विभुत्वं विन्दति प्राप्नोति । वैतालीयं वृत्तम् ॥ १२ ॥

ऐश्वर्यमत्र मधुहन्तुरपह्नुते यो
यो वा तवाऽपि जगदम्ब तयोः प्रतीच्यः ।
प्राच्यात् प्रदुष्यति विशिष्य पितृद्विषोऽपि
मातृद्विषस्त्रिभुवने महती हि गर्हा ॥ १३ ॥

ऐश्वर्यमिति । हे जगदम्ब ! मधुहन्तुर्वा तवाऽप्यैश्वर्यं यो

---

१२ हे मुकुन्दपत्नि ! उपनिषदुपवर्णितं ते ऐश्वर्यं यो वेद स भूतले प्रभुतां प्राप्य ततो भवं ( संसारं ) त्यजति, मुक्तो भवतीत्याह ।

१३ हे जगदम्ब ! यो भगवतस्तव च ऐश्वर्यमपलपति तयोर्मध्ये भगवदैश्वर्यापलापकात्तावकैश्वर्याऽपलापी विशेषदुष्टो, यतो जगति पितृद्वेषिणोऽपि मातृद्विषोऽधिका निन्दा भवतीति प्रतिपादयति ।

षः पुमानपह्नुते तयोर्मध्ये विशिष्य विशेषेण मात्र्यातितृद्विषः प्रतीच्यो मातृद्विट् प्रदुष्यति । तथा हि—त्रिभुवने पितृद्विषः एतदपेक्षया मातृद्विषः महती गर्हा । कुत्सा निन्दा च गर्हणे इत्यमरः । अत्र 'प्रमाणम्—'प्रायश्चित्तैर्महर्ष्युक्तैः पुमानुच्चावचैरिह । पितृद्वेषी विमुच्येत मातृद्वेषी न मुच्यते' इति भविष्यपुराणे कण्डिमुनिवचनम् । भगवत्पादकृतदेवीस्तोत्रगत'मातृद्वेषो जगति जघनस्तातपादद्विषो ऽपी'तिपद्यव्याख्याने विवरणाऽऽचार्यैरुदाहृतम् इति । प्रमाणाऽलङ्कारः । वसन्ततिलकावृत्तम् ॥ १३ ॥

श्रीमद्रामाऽवरजसरणिं श्रेयसीमाश्रिताना-<br>
माचार्याणामिह च कुह चिद्यस्तवाऽणुत्ववादः ।<br>
तस्याऽऽकूतं परमपुरुषप्रेप्सया ते ऽब्धिकन्ये<br>
शेषत्वेन स्वत उपनतन्यूनतायां प्रतीमः ॥ १४ ॥

श्रीमदिति । हे ऽब्धिकन्ये ! श्रीमद्रामाऽवरजानां रामानुजानाम् इत्यर्थः । सरणिं पद्धतिं श्रेयसीम् आश्रितानाम् आचार्याणां कुह चित्कुत्र चिद्यः तव अणुत्ववादः तस्याऽऽकूतं बीजं तु परमपुरुषस्य प्राप्तुमिच्छया विशेषणत्वे स्वतः अर्थादुपनता या न्यूनता तस्यां सत्यां प्रतीमः । उभयोः साम्ये ऽपि यदा मिथो लीलया विशेषणविशेष्यभावो ऽङ्गीक्रियते तदानीन्तनहरीच्छास्वीकृतत्वादप्राधान्ये ऽर्थादुपगतं यदणुत्वादिकं तद्विषयः स वाद इति भावः । मन्दाक्रान्तावृत्तम् ॥ १४ ॥

---

१४ ननु रामानुजमते देव्या अणुरूपत्वप्रतिपादनेन तदनुयायिना त्वया कथं परमैश्वर्यं ममोच्यते ? इति चेत् न तावदैश्वर्यन्यूनतया तवाऽणुत्वकथनमपि तु कार्याऽनुरोधान्नारायणोपसर्जनत्वेन न्यूनतया तवाऽणुत्ववादस्तन्मते इति न तवैश्वर्यस्य निरतिशयत्वे क्वापि शङ्कापङ्काऽवकाश इत्याह ।

राजन्वन्ति जगौ जगन्ति निगमो द्वाभ्यां युवाभ्यामपि
द्वैराज्यं न हि तावता प्रसजति क्षीराम्बुधेरात्मजे ।
आग्नावैष्णवशब्दभाजि यजने ऽधिष्ठानयुग्माऽऽश्रिता-
मेकामेव हि देवतां सुमनसः शंसन्ति मीमांसकाः ॥ १५ ॥

राजन्वन्तीति । हे क्षीराम्बुधेः आत्मजे ! युवाभ्यां द्वाभ्यां जगन्ति प्रशस्तौ राजानौ येषु सन्ति तानि । राजन्वान् सौराज्ये इति निपातनात्साधुः । इति निगमः जगौ । तावता द्वयोः राज्ञो-र्भावो द्वैराज्यम् । गुणवचनब्राह्मणादिभ्य इति भावे ष्यञ् । न हि प्रसजति । तत्र दृष्टान्तः—अग्नाविष्णू देवता ऽस्य आग्नावैष्णवम् । सा ऽस्य देवतेत्यणि देवताद्वन्द्वे चेत्युभयपदवृद्धौ देवताद्वन्द्वे चेत्यानङ् । विष्णौ नेति निषेधादिद्वृद्धाविती दादेशाऽभावः । इति शब्दं भजति तस्मिन्यजने अधिष्ठानयुग्माऽऽश्रितां देवतां सुमनसो मीमांसका एकामेव देवतां शंसन्ति । अयं भावः-'आग्नावैष्णवमष्टादशकपालं निर्वपेत्' इत्यादौ देवताद्वये पुरो-डाशद्वयाऽऽपत्तिः । अत्र त्वेकपुरोडाशनिर्वापः कथितः । अत इयमेकैव देवतेति मीमांसकसमयः । तद्वत्पूर्वत्राऽप्येकत्वमेव ज्ञेयम् । शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

रामाऽऽकारे जनकतनया रुक्मिणी कृष्णरूपे
भर्तुः कृष्णाऽजिनमुपगता ब्रह्मचर्ये ऽपि पद्मे ।

---

१५ हे क्षीरोदपुत्रि ! युवाभ्यां द्वाभ्यामपि जगन्ति प्रशस्तराजपालितानि कथयन्ति, नैतावता तत्र द्वैराज्यं ( राजद्वयवत्तयोपद्रवः ) प्रसज्यते, यतो मीमांसका यागे आग्नावैष्णवशब्देन द्रव्यत्यागे उद्देश्यत्वमुभयपर्याप्तं वदन्ति न देवताद्वित्वमिति प्रतिपादयति ।

१६ अथ रामाऽवतारे सीतारूपा, कृष्णाऽवतारे च रुक्मिणीरूपा,

अन्तर्यन्तुः सकलजगतामच्युतादच्युतां त्वं
धत्से मूर्ति तदिह युवयोः प्रस्फुटो नित्ययोगः ॥ १६ ॥

रामेति । हे पद्मे ! सकलजगतामन्तर्यन्तुरिति । उद्दालके आरुणिना याज्ञवल्क्यायाऽन्तर्यामिणि पृष्टे तेन 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तर' इत्यादिना 'ऽन्तर्याम्यमृतो ऽन्यदार्त'मित्यन्तेन बृहदारण्यके यः कथितः तस्मादन्तर्यन्तुरच्युतादप्यच्युतां मूर्ति यद्यस्माद्धत्से। तदेव दर्शयति—रामाऽऽकारे जनकतनया सीता, तथा कृष्णरूपे कृष्णाऽवतारे रुक्मिणी, पुनर्ब्रह्मचर्ये, वामनाऽवतारे इत्यर्थः । तस्मिन्नपि भर्तुः कृष्णाऽजिनम् उपगता स्थिता । तस्मादिह युवयोर्नित्यं योगः प्रस्फुट इति । अत्र जगद्व्यापित्वे उभयत्राऽप्यच्युतेति साऽभिप्रायविशेष्यदानेन परिकराङ्कुराऽलङ्कारः । मन्दाक्रान्तावृत्तम् ॥ १६ ॥

क्रियायां भव्यायां कृतरुचिरमार्गं परिहर-
न्नकम्पं विश्रम्भं विदधदभिरक्षेदियमिति ।
व्यवस्यन् गोप्तृत्वं व्यपसरदुपायान्तरकथो
भवत्या संश्लिष्टो भगवति निदध्यान्निजभरम् ॥ १७ ॥

क्रियेति । भव्यायां कुशलरूपायां क्रियायां कृता रुचिः

---

भर्तुर्वामनस्य ब्रह्मचर्याऽवस्थायामपि कृष्णाजिनरूपा सती जगदन्तर्यामिणं भगवन्तमनुगता सती तत्तन्मूर्तिधारिण्यवतरसीति युवयोर्नित्यसंम्बन्धो विशद इत्याह ।

१७ हे भगवति! भवत्या संश्लिष्टः (त्वया ऽनुगृहीतः) पुमान् अतिशुभायां क्रियायां कृतप्रीतिः कुमार्गनिवृत्तश्च सन् इयमभिरक्षेदेवेति स्थिरं विश्वासं धारयन् रक्षकत्वं निश्चिन्वन्नपगतोपायान्तरविचारकथो भूत्वा . निखिलमात्मभारं समर्पयेदिति त्वदनुगृहीतस्येमानि फलानि भवन्तीति प्रतिपादयति ।

---

१ अयमिति १ पु० पा० ।

२ संश्लिष्ट इति १—पु० पा० । एतत्पाठानुसारिणी बालबोधिनी ।

प्रीतिर्येन सः अमार्गं प्रतिषिद्धं परिहरन् अयं हरिः अभिरक्षेत् इति विश्वासं दधत् गोप्तृत्वं हरिराश्रितानवतीति तद्रक्षितृत्वं निश्चिन्वन् व्यपसरन्ती विशेषेण गच्छन्ती अन्य उपायः उपायान्तरम् । मयूरव्यंसकादित्वात्समासः । तस्य कथा यस्मात्स तादृशः सन् जीवः भवत्या लक्ष्म्या संश्लिष्टे एकत्वेन स्थिते । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' ईदृक्षड्गुणैश्वर्यवति भगवति हरौ निजभरं निबध्यात्स्थापयतु इति । अत्र स्वसिद्धान्तः कविना समस्य प्रदर्शितः । शिखरिणीवृत्तम् ॥ १७ ॥

न्यासक्रियाकरणमन्त्रपदाऽनुरोधा-
दुद्देश्यमात्महविषि स्वयमर्प्यमाणे ।
वाराशिपुत्रि भवती विशिनष्टि नाथं
यागे महेन्द्रमखिलाऽम्ब यथा महत्त्वम् ॥ १८ ॥

न्यासेति । हे वाराशिपुत्रि ! आत्मनः सर्वमयत्वात् आत्मरूपे हविषि स्वयमात्मना ऽर्प्यमाणे न्यासक्रिया त्यागः तस्मिन् करणभूतो यो मन्त्रः । 'मन्त्राश्च कर्मकरणा' इति सूत्रात् । तत्रत्यपदाऽनुरोधात् । उद्देश्यः अपेक्षितः स चाऽऽत्मैव स, तद् भवती यागे नाथं विशिनष्टि । विशेषणयुक्तं करोति । एवं च हविषः केवलविष्णुरूपत्वे ऽपि देवताया लक्ष्मीपतित्वविशिष्टत्वे-

---

१८ हे वाराशिसुते ! भगवतः सर्वमयत्वेन हविषो ऽपि तदात्मकत्वात्तेनार्प्यमाणे हविषि त्यागक्रियायां करणभूतम् उद्देश्यभूतं भगवन्तं द्रव्यदेवतयोर्भेदसंपादनाय भवती नाथं विशिनष्टि, यथा इन्द्रकर्तृके यागे कर्तृदेवताऽभेदपरिहाराय महत्त्वमिन्द्रविशेषणं तथेति प्रतिपादयति ।

न भेदाद् द्रव्यदेवतैक्यरूपदोषो नाऽऽयातीति भावः । अत्र दृष्टान्तः । यथेन्द्रकर्तृकेन्द्रदेवताके यागे कर्तृदेवतैक्यपरिहाराय यथेन्द्रविशेषणं महत्वं तद्वदिति भावः । वसन्ततिलका-वृत्तम् ॥ १८ ॥

इच्छाऽर्जितबहुदेहामिन्द्राऽऽदिपदप्रदाऽवलोकलवाम् ।
ईशानां लोकानामीडीमहि नियतमिन्दिरे भवतीम् ॥ १९॥

इति श्रीमद्वेङ्कटाऽध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे
ऐश्वर्यस्तबको दशमः संपूर्णः ॥ १० ॥

इच्छेति । हे इन्दिरे ! इच्छया स्वेच्छया अर्जिताः सम्पादिता बहवः देहा अवतारा यया सा तां लोकानाम् ईशानां स्वामिनीम् इन्द्राऽऽदिपदप्रदः मघवत्प्रभृतिस्थानदायी अवलोकलवः दर्शनलेशो यस्यास्तां भवतीं महालक्ष्मीम् ईडीमहि स्तुवीमहि । वयमिति शेषः । अत्र साऽभिप्रायबहुविशेषणरूपः परिकराऽलङ्कारः । गीतिवृत्तम् ॥ १९ ॥

इति श्रीमद्रावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन
विरचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मी-
सहस्रटीकायाम् ऐश्वर्यस्तबको दशमः
संपूर्णो ऽभवत् ॥ १० ॥

---

१९ स्वेच्छागृहीतनानाविग्रहा,मिन्द्रादिपदप्रदकटाक्षलेशां, लोकेश्वरीं भवतीं स्तुम इति वदन् स्तबकमुपसंहरति ।

इति श्रीमानवल्ल्युपाह्वतैलङ्गरामशास्त्रिविरचितायां लक्ष्मीसहस्राऽवतरणिकाटिप्पणिकायाम् ऐश्वर्यस्तबकः ॥ १० ॥

## अथ क्षान्तिस्तबकः ॥ ११ ॥

क्षमाऽऽत्मजावियोगेन तप्तोऽपि न्यायमाश्रयन् ।
शरत्प्रतीक्षां यश्चक्रे स रामः श्रेयसेऽस्तु नः ॥ ११ ॥

अथाऽस्मिन्नेकादशस्तबके लक्ष्म्याः क्षमास्वभावं वर्णयितुं प्रथमपद्ये क्षममिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

त्रायतामायताक्षं तद्धाम तामरसाऽऽलयम् ।
मदागसां प्रतीकारे महतामपि यत्क्षमम् ॥ १ ॥

त्रायतामिति । महतामपि मदागसां प्रतीकारेऽपराधसहने यत्क्षमं समर्थं तत्तामरसाऽऽलयं कमलगृहमायताक्षं पृथुनेत्रं धाम तेजस्त्रायताम् । त्रैङ् पालने इत्यस्माल्लोट् । उदात्तालङ्कारः । युग्मविपुलावृत्तम् ॥ १ ॥

अपराधपरम्परामपारा-
महमेवं यदि नाम नाऽऽरचेयम् ।
कमलाऽऽयतने क्षमागुणस्ते
कथमात्मानमसौ लभेत मातः ॥ २ ॥

अपराधेति । हे कमलाऽऽयतने ! अहमेवमपराधानां प-

---

१ अथ क्षान्तिस्तबकमेकादशमारिप्सुर्भगवत्या लोकमातृत्वेन प्रसिद्धत्वात्तत्र महापराधक्षमागुणस्य नैसर्गिकत्वात् विशालनयनं कमलनिवासि तत्प्रसिद्धं लक्ष्मीरूपं तेजस्त्रायतां, यन्महतामपि ममाऽपराधानां सहने क्षममिति स्वस्याऽपराधक्षमापणपूर्वकं परित्राणं प्रार्थयते ।

२ अथ भगवत्यां स्वप्रणयमाविष्कुर्वन् हे कमलवासिनि ! यद्यहं निःसीमामपराधततिं नाचरेयं तर्हि नैसर्गिकस्य ते क्षमागुणस्य स्वरूपलाभ एव कथं स्यादिति स्वस्याऽपराधाऽऽचरणव्यसनं भगवत्याश्च तत्सहनं स्वाभाविकमिति प्रतिपादयति ।

म्परां यदि नाऽऽरचेयं नाम तर्हि हे मातः! ते ऽसौ क्षमागुणः आत्मानं स्वरूपं कथं लभते ? अत्र स्वापराधकरणे क्षमागुण-स्याऽन्वर्थत्वकथनेन विध्यलङ्कारः। औपच्छन्दसिकं वृत्तम् ॥ २ ॥

फणिशेखरशैलनाथकान्ते
भवती मूर्तिमती क्षमैव नूनम्।
अभवत् कथमन्यथा न पाप-
स्तव कोपप्रभवाय वायसो ऽपि ॥ ३ ॥

फणीति। हे फणिशेखरशैलनाथकान्ते! भवती त्वं मूर्ति-मती क्षमैव। अन्यथोक्तवैपरीत्ये पापरूपः वायस ऐन्द्रकाकः तव कोपप्रभवाय कथं नाऽभवत्? काव्यलिङ्गमलङ्कारः। औपच्छ-न्दसिकं वृत्तम् ॥ ३ ॥

महतां मम घोरकिल्बिषाणा-
मिह निःशेषगवेषणा ऽपि दूरे।
पततामवलम्बनाय मात-
र्भवपङ्के बत नस्तव क्षमा ऽतः ॥ ४ ॥

महतामिति। हे मातः! इह लोके महतां मम घोरकिल्बि-षाणां भीमपापानां निःशेषेण समग्रत्वेन गवेषणा शोधनमपि दूरे ऽस्ति, अतः भवपङ्के पततां नः अवलम्बनाय तव क्षमैव क्षा-

---

३ हे वेङ्कटपतिमहिषि! न केवलं त्वं क्षमाधरा ऽपि तु शरीरधा-रिणी साक्षात्क्षमैवाऽन्यथा तव स्तनविदारणरूपमहाऽपराधकार्यपि वायसो जयन्तः कथं तव कोपोत्पादको नाऽभूदित्याह।

४ हे मातः! मामकानां भीमपापानां साकल्येनाऽन्वेषणमपि न सम्भाव्यते, ऽतः संसारपङ्के पततामस्माकं पङ्के मज्जतामासन्नभूमि-रिव तव क्षमा ऽवलम्बभूमिर्भवतीत्याह।

न्तिर्भूमिश्च भवति। 'भूमौ स्खलितपादानां भूमिरेवाऽवलम्बनम्। त्वयि जाताऽपराधानां त्वमेव शरणं विभो इत्युक्तेः। औपच्छन्दसिकं वृत्तम् ॥ ४ ॥

भवतीं प्रति विश्वमातरं
भवसिन्धोस्तरणार्थमातरम्।
स्वमहं प्रदिशामि रक्ष मा-
मपराधेषु समाचर क्षमाम् ॥ ५ ॥

भवतीमिति। भवसिन्धोः तरणार्थं लङ्घनार्थं विश्वस्य जगतो मातरं पुनः आतरं तरपण्यभूतम्। आतरस्तरपण्यं स्याद्द्रोणी काष्ठाऽम्बुवाहिनीत्यमरः। स्वमात्मानं भवतीं प्रति अहं कविः प्रदिशामि, अतः त्वम् अपराधेषु क्षमां तितिक्षां समाचार। चेत्परं मां रक्ष पालय। अत्र स्वस्याऽऽतरत्वेन परिणामात् परिणामाऽलङ्कारः। वैतालीयं वृत्तम् ॥ ५ ॥

नित्यं त्वकृत्यमवशादपि न त्यजामि
कृत्यं घुणाऽक्षरनयादपि नाऽऽचरामि।
अत्यन्तमित्थमपराधमहोदधेर्मे
सत्यं शपे शरणमम्ब तव क्षमैव ॥ ६ ॥

नित्यमिति। अकृत्यं निन्द्यं कर्माऽवशात्सहजमपि नित्यं

---

५ विश्वजननीं त्वां प्रति संसारसमुत्तरणायाऽऽतरपण्यरूपमात्मानं समर्पयामि, अतो ममाऽपराधेष्वपि मां रक्ष, निरुमा च त्वं क्षमामाचरेति स्वाऽपराधक्षमां प्रार्थयन्नात्मसमर्पणां करोति।

६ सर्वदाऽशक्यमपि निषिद्धं कर्माऽत्यजतो विहितं च यदृच्छयापि अनाचरतोऽत एवाऽपराधसागरस्य मम त्वां विना नान्यो रक्षक इति शपथपूर्वकं वदति।

नियमेन न त्यजामि। कृत्यं सन्ध्यादि नित्यकर्म घुणस्य वज्र-कीटस्याऽक्षरस्योत्कीर्णनिर्गतसहजवर्णस्य न्यायादपि नाऽऽचरामि न करोमि। इत्थम् अत्यन्तम् अपराधानां महोदधेर्मे हेऽम्ब ! तव क्षमैव शरणम् इति सत्यं शपे । शप आक्रोशे अस्माल्लट्। यद्वा शपथं करोमि । वसन्ततिलावृत्तम् ॥ ६ ॥

मातः क्षमा तव सखी मधुवैरिकान्ते
ख्यातः क्षमाधरतया निलयश्च शेषः ।
त्वं तु क्षमानिधिरतः शतमागसां मे
क्षन्तुं तवोचितमशेषत एव तावत् ॥ ७ ॥

मातरिति । हे मधुवैरिकान्ते ! मातः ! क्षमा पृथ्वीवाच्या तव सखी। चेत्यपरं क्षमा पृथ्वी तस्या धरो धारकः तत्तया ख्यातः शेषः शेषाद्रिर्निलयः गृहम्। 'पादक्षमाधरे'ति पाठे पादे चरणे क्षमा पृथ्वी यस्य स विष्णुस्तस्याऽऽसमन्ताद्धरः । यद्वा पादैः प्रत्यन्तपर्वतैः क्षमाया धरः । तत्तया ख्यात इत्यादि पूर्ववत्। पादो ब्रध्ने तुरीयांशे शैलप्रत्यन्तपर्वते इति विश्वः। त्वं तु साक्षात्क्षमाया निधिः शेवधिः, अतः हे ऽम्ब ! अशेषतस्तावत् समग्रत्वेनैव मे आगसामपराधानां शतं क्षन्तुं सोढुम् उचितम् । क्षमूष् सहने अस्मात्तुमुन्। यावत्तावच्च साकल्ये ऽवधौ माने ऽवधारणे इत्यमरः। अनुगुणाऽलङ्कारः। वसन्ततिलकावृत्तम् ॥७॥

———

७ हे मातः ! क्षमा ( पृथ्वी ) तव सखी, एवं क्षमाधरतया ( धराधरतया ) ख्यातः शेषश्च ( शेषाद्रिः ) ते निवासः, त्वं च क्षमानिधिरतः क्षमामयपरिकरायाः क्षमानिधेस्तव मदपराधशतमपि साकल्येन क्षन्तुं योग्यमित्याह ।

अस्मत्कृतामतितरामपराधपङ्क्तिं
यन्मृष्यसे जननि तत्र न विस्मयो नः ।
एवंविधोऽपि विलिलङ्घयिषे भवं यत्
तत्र क्षमा हि तव कस्य न विस्मयाय ॥ ८ ॥

अस्मदिति । हे जननि ! अतितरामत्यन्तम् अस्मत्कृतां स्वविषयिकाम् अपराधानां पङ्क्तिं मृष्यसे यत् तत्र तत्सहने नोऽस्माकं विस्मयो न । तर्ह्येवंविधः पाप्यपि भवं संसारं शिवं च यः विलिलङ्घयिषे लङ्घितुमिच्छामि तत्र परकीयाऽपराधे ऽपि तव क्षमा कस्य न विस्मयायेति वसन्ततिलकावृत्तम् ॥ ८ ॥

तत्तद्विचित्रचरिताऽनुगुणानि तीक्ष्णे
दातुं फलानि दयिते तव बद्धदीक्षे ।
कस्येह जीवितकथा कलशाऽब्धिकन्ये
क्षान्तिं न चेन्नयसि तं विविधैरुपायैः ॥ ९ ॥

तत्तदिति । हे कलशाब्धिकन्ये ! तीक्ष्णे कठोरे तव द-

---

८ हे जननि ! अस्मदाचरितामपराधपरम्परां यत्सहसे तत्र पृथुक्षमाया मातृरूपायास्तव स्वाभाविकत्वान्नास्माकं विस्मयः; परमेवंप्रकारोऽपि अहं भवं ( संसारं, शिवञ्च ) यदुल्लङ्घितुमिच्छामि तत्रापि तव क्षमा ( सहनं, सामर्थ्यं च ) कस्याश्चर्यकारिणी न स्यादिति महापराधानप्यस्मान् संसारादुद्धरसीत्याह ।

९ तव प्रिये भगवति तत्तद्विचित्रदुष्कृताऽनुरूपाणि फलानि प्रदातुं गृहीतव्रते सति यदि त्वं नानाविधैरुपायैस्तं न क्षमापयसि चेत् कस्यात्र जीविताशेति न केवलं त्वमेव लोकाऽपराधान् सहसे ऽपि तु भगवन्तमपि क्षान्तिं प्रापयसीति निरुपमस्ते क्षमागुण इत्याह ।

चिते विष्णौ तानि विचित्रचरितानि च तेषामनुगुणानि यो-ग्यानि फलानि दातुं बद्धदीक्षे कृतनियमे सति तं विविधैः सान्त्वोपायैः क्षान्तिं न नयसि चेत् इह लोके कस्य जीवित-स्य निर्वाहः, प्राणधारणस्य वा कथा ? न कस्याऽपी-त्यर्थः ॥ ९ ॥

अक्षान्तकारिणि दशाऽऽस्यवधोक्तिदृप्ते
भक्षाय राक्षसवधूरभियाचमाने ।
हन्त क्षमोदयजुषोऽप्यनुकम्पयैव
नक्षत्रनाथसहजे तव न क्षमाऽभूत् ॥ १० ॥

अक्षान्तेति । हे नक्षत्रनाथसहजे ! द्विजराजभगिनि ! अ-क्षो रावणपुत्रः तस्य अन्तं नाशं करोति तस्मिन् तथा दशा-ऽऽस्यस्य वधोक्तिः रावणो मृत इत्याकारिका तया दृप्ते आदौ कथितत्वाद्गर्विते हनुमति मारुतौ भक्षाय राक्षसवधूः अभियाचमाने सति अनुकम्पया विश्वपालनकृपयैव न तु कर्मणेति यावत् । क्षमोदयं क्षमायाः भुवः सकाशादुदयम् उ-त्पत्तिं जुषते तस्याः । जुषी प्रीतिसेवनयोरित्यस्मात् क्विप् । तव लक्ष्म्या अपि क्षमा नाऽभूत् । मारुत्युक्तिसहनं नाऽभूदि-त्यर्थः । क्षमोदयिन्या अपि क्षमा नाऽभूदिति पुनश्च त्वं क्षत्र-नाथसहजा चेत्क्रौर्यं युक्तं, तथा न, तर्हि नक्षत्रनाथसहजेति क्ष-

---

१० हे चन्द्रस्वसः ! अक्षाख्यरावणसुतविनाशिनि दशवदनवध-वार्तागर्विते हनूमति राक्षसवधूवधं याचति सति क्षमोदयजुषः (क्ष-मागुणोदयशालिन्याः, पृथिव्या उदितायाश्च ) सीतायास्तव दय-यैव तद्धनूमत्प्रार्थनसहनं नासीदिति क्षमोदयशालिन्या अपि क्षमा नासीदिति चन्द्रस्वसुस्तवाऽक्रौर्यान्तरक्रूरत्वं युक्तमित्याह ।

माशीलब्राह्मणभगिन्याः क्षमोदयिन्या अपि क्षमा नाऽभूदित्या-श्चर्यम् । विशेषोक्तिरलङ्कारः । वसन्ततिलकावृत्तम् ॥ १० ॥

धनपतिपुरुहूतस्थाणुवेधोमुखाना-
मपि च दधति शापं सम्पदः सम्परायम् ।
इति गतिमवबुध्याऽप्यर्थकामाऽभिलाषा-
दजहदघशतं मां रक्ष मातः क्षमातः ॥ ११ ॥

धनपतीति । हे मातः ! धनपतिः कुबेरः, पुरुहूत इन्द्रः, स्थाणुः शिवः, वेधा ब्रह्मा, एते मुखाः प्रमुखा येषां तेषां देवानां सम्पदः शापरूपं संपरायमापत्तिं दधति । इन्द्रादयो ऽपि दुर्वास-आदिशापात्स्थानच्युता इति प्रसिद्धम् । इत्यनेन प्रकारेण गतिं सम्पद्दशां अवबुध्य ज्ञात्वा ऽपि अर्थकामयोरभिलाषात् अजहद्-त्यजदघानां शतं यं तं मां क्षमाया इति क्षमातः । पञ्चम्या-स्तसिल् । रक्ष पालय । मालिनीवृत्तम् ॥ ११ ॥

अनिशमुपचितानामागसां भूयसां मे
निगमविततिरीष्टे निष्कृतिं नाऽभिधातुम् ।

---

११ कुबेरेन्द्रशिवब्रह्मादीनामपि संपदः शापसम्बन्धिनीं रीतिं धारयन्ति ( संपदापि कालवशाद्विपद्रूपतामाश्रयन्ते ) इति संपत्परि-णाममवबुद्ध्याऽपि 'अर्थकामादिसिद्धये अपरित्यजत्पापशतं मां स्वीयक्षमागुणाद्रक्षेति प्रार्थयमान आह ।

१२ अहर्निशमार्जितानां बहुतमानामस्मदपराधपापानां प्राय-श्चित्तोपदेशाय श्रुतिततिरपि न प्रभवति, स च भगवाननन्तानामेषां

प्रभवति फलमेषां पद्मनाभो न दातुं
कलशजलधिकन्ये क्षान्तिरेवेह युक्ता ॥ १२ ॥

अनिशेति । हे कलशजलधिकन्ये ! अनिशं सततम् उपचितानां सम्पादितानां भूयसां मे आगमां निष्कृतिं प्रायश्चित्तम् अभिधातुं निगमवितर्तिर्वेदसङ्घः न ईष्टे न समर्था । अथ पद्मनाभो ऽपि एषां पापानां फलं दातुं न प्रभवति न समर्थः । अतः इह मत्पापेषु क्षान्तिस्तव क्षमैव युक्ता उचितेत्यर्थः । मालिनीवृत्तम् । काव्यलिङ्गाऽतिशयोक्ती अलङ्कारौ ॥ १२ ॥

अमितदुरितकृद्भ्यो नित्यमस्मादृशेभ्यो
हतहितचरितेभ्यो हन्त कुप्यन्तमुच्चैः ।
नियतमनुगुणेन न्याययुक्तेन पद्मे
कलयसि वचनेन क्षान्तिमन्तं प्रभुं तम् ॥ १३ ॥

अमितेति । हे पद्मे ! हतं नष्टं हितचरितं कल्याणचरित्रं येभ्यस्तेभ्यः अमितं दुरितं पापं कुर्वन्ति तेभ्यश्चाऽस्मादृशेभ्यः पापिभ्यः । हन्त हर्षाऽनुकम्पायामित्यमरः । उच्चैः कुप्यन्तं कोपं कुर्वन्तं प्रभुं नियतं निश्चयेन अनुगुणेन न्याययुक्तेन वचनेन क्षान्तिः क्षमा ऽस्याऽस्ति तं कलयसि । कुरुषे इत्यर्थः । मालिनीवृत्तम् ॥ १३ ॥

---

फलदानायाऽलं, तदत्र क्षमैवैक उपायस्तद्दूरीकरणायेत्याह ।

१३ हे पद्मे ! त्वमेव अपरिमितदुरितकारिषु परित्यक्तसच्चरितेष्वस्मादृशेषु पामरेषु संजातक्रोधं भगवन्तमनुरूपेण न्याय्येन वचनोपन्यासेन क्षान्तियुक्तं करोषीत्याह ।

कलयति मनसा वा कर्मणा वा गिरा वा
मधुरिपुमहिले यन् मादृशो नित्यमागः।
तदिदमगणयन्ती त्रायसे संसृतेर्नः
शरणमिति गिरैव स्वामिनं क्षामयन्ती॥ १४॥

कलयतीति। हे मधुरिपोर्महिले कान्ते ! मनसा ऽन्तःकरणेन वा कर्मणा क्रियया वा गिरा वाण्या मादृशः पुमान्। त्यदादिषु दृशोनालोचनइति कञ् आ सर्वनाम्न इत्याकारादेशः। नित्यं यदागः कलयति करोति तदिदमागः अगणयन्ती सती शरणम् इति गिरैव स्वामिनं श्रीहरिं क्षामयन्ती सती नः संसृतेः संसारात् त्रायसे पालयसि। मालिनीवृत्तम्॥ १४॥

नवनवमपराधं साधयित्वा खलत्वा-
ज्जननि कृतवतो मे माधवं क्रोधवन्तम्।
वरुणनिलयकन्ये क्षामयन्त्या भवत्याः
शरणवरणतो ऽन्यत् केवलं नाऽवलम्बः॥ १५॥

नवेति। हे जननि ! हे वरुणनिलयकन्ये ! खलत्वाद् दुष्टत्वात् नवं नवम् अपराधं साधयित्वा सम्पाद्य माधवं क्रोधवन्तं रोषयुक्तं कृतवतः मे मम क्षामयन्त्या अपराधक्षमापनं कुर्वन्त्याः

---

१४ हे कमले! मादृशोऽधमो जन्तुर्मनोवाक्कर्मभिर्यमपराधं करोति तमुपेक्ष्य केवलं शरणमिति शब्दमात्रेणैव प्रभुं क्षामयन्ती संसारादस्मान् रक्षसीत्याह।

१५ हे मातः! खलत्वाद्धेतोर्नव्यं नव्यमपराधं संपाद्योत्पादितप्रभुकोपस्य मम त्वच्चरणशरणकरणादन्यो ऽवलम्बो नास्तीत्याह।

भवत्याः शरणस्य वरणतः स्वीकारात् अन्यत् इतरत् केवलं मुख्यम् अवलम्बः आधारो न, नास्तीति भावः। मालिनीवृत्तम् ॥ १५ ॥

प्रथिततमसि वर्गैरागसां रागसान्द्रे
मयि यदि तु विधत्से नाऽनुकम्पामकम्पाम्।
उपचितिमतिचित्रामेनसो मे न सोढुं
प्रभवति स भवत्या नायको ऽजेयकोपः ॥ १६ ॥

प्रथितेति। आगसां वर्गैः समूहैः रागसान्द्रे ऽतिविषयप्रीतिमतीति यावत्। प्रथितं तमः यस्य तस्मिन्। तमो ध्वान्ते गुणे शोके इति मेदिनी। मयि अकम्पां निश्चलाम् अनुकम्पाम्। कृपा दया ऽनुकम्पा स्यादित्यमरः। यदि तु न विधत्से न करोषि तर्हि अजेयकोपः दुर्निवाररोषः सः भवत्याः नायकः श्रीहरिः अतिचित्राम् अनिर्वचनीयां मे एनसः उपचितिमुपचयं सोढुं न प्रभवति। अपि तु कोपं करिष्यतीति भावः। मालिनीवृत्तम् ॥ १६ ॥

रचयति यदयं ते नेतरागः सराग-
स्तदखिलमपि मृष्यं रक्ष दीनं त्वमेनम्।

---

१६ हे भगवति! बहुलाऽज्ञाने ऽपराधसमूहे सहजप्रीतिभाजि मयि स्थिरां करुणां यदि न कुरुषे तर्हि दुर्निवारक्रोधः स भवत्याः पतिर्भगवान् नानाविधां मदपराधततिं मर्षयितुं क्षमो न भवतीति त्वदयैवैकमालम्बनं ममेत्याह।

१७ हे ऽमृतोदधिपुत्रि! विषयरक्तोयं तव अपराधकार्येपि इतरापराधं न करोतीति विचार्य स्वाऽपराधसहने तव स्वतन्त्रत्वात्सर्वानस्याऽपराधान् सोढ्वा दीनमेनं रक्ष, नात्र विचाराऽवसरः कोपि,

ननु क इह विमर्शो नाऽपराधीति शौरेः
कलशजलधिकन्ये कर्णयोर्वर्णयोच्चैः ॥ १७ ॥

रचयतीति । हे कलशजलधिकन्ये ! सरागः अयं वेङ्कटाऽध्वरी ते आगः रचयति, इतरस्याऽऽगः न रचयति, यत्त रचयति तदखिलमपि त्वया मृष्यम् । ततो हेतोर्हे भगवन् एनं दीनं रक्ष । इहाऽस्मिन् विषये विमर्शो विचारः कः ? अयमपराधी नेति शौरेः कर्णयोः उच्चैर्वर्णय कथय । अयं भावः । अत्र 'पत्ताडिता ऽपि बाले रुष्यति किमितीह मानुषी जननी'ति रामार्यायाम् 'अपराधपरम्परावृतं न हि माता समुपेक्षते सुतम्, कुपुत्रो जायेत क्वचिदपि कुमाता न भवति इति चाऽप्पय्यदीक्षिताः(?) अतस्त्वयि कृताऽपराधस्य तव क्षमापनं युक्ततरमिति । मालिनीवृत्तम् ॥ १७ ॥

जलजटिलतडित्वद्दीप्तिकृष्णोपलाल्या-
ऽऽकृतिरुरुकटकश्रीरुज्ज्वलन्मेखलाऽऽभा ।

---

अनपराध एवाऽयमिति मत्कर्मणा कुपितस्य भगवतः कर्णयोरुच्चैः कथयेति भगवतीद्वारा भगवत्कोपशमनं प्रार्थयते ।

१८ हे हरिगृहिणि ! सजलजलदकान्तिभाजा भगवता लालनीयाऽऽकृतिर्महावलयशालिनी दीप्यत्काञ्चीकान्तिः श्रेष्ठा वनमाला-( आपादलम्बिनी भगवतो माला )ऽलङ्कृतभगवद्वक्षःस्थलवासिनी त्वमुचितं क्षमाभृत्त्वं ( सहनशीलत्वं ) वहसीति प्रकृतार्थं प्रतिपादयन् सोदकमेघतुल्यकान्तिर्नीलोपलसमूहशरीरे रुरु( कृष्णसार )विशिष्टनितम्बशोभा दीप्यमानमेखलाकान्तिः, एवं श्रेष्ठविपिनपङ्क्त्यलङ्कृतस्थानयुक्ता योग्यं क्षमाभृत्त्वं ( पर्वतत्वं ) वहसीति भग-

वरतमवनमालाऽलङ्कृतस्थानजुष्टा
वहसि हरिपुरन्ध्रि त्वं क्षमाभृत्त्वमर्हम् ॥ १८ ॥

जलेति । हे हरिपुरन्ध्रि ! त्वम् अर्हं योग्यं क्षमाभृत्त्वं क्षान्तिमत्त्वं पर्वतत्वं च वहसि । लक्ष्मीपक्षे जलजटिलस्य तोयपूर्णस्य तडित्वतः तडित्वान्वारिदोम्बुभृदित्यमरः । दीप्तिरिव दीप्तिर्यस्य तेन कृष्णेन उपलालया आकृतिर्यस्याः, अथ गुरुः कटकस्य कङ्कणस्य श्रीर्यस्याम् । पक्षे जलजटिलतडित्वतः दीप्तिवत्कृष्णावर्णोपलानामसितपाषाणानाम् आलयः पङ्क्तयस्तन्मय्याम् आकृतौ रुरुभिर्युक्ता कटकश्रीर्यस्य । कटकं वलये सानाविति विश्वः । कृष्णसाररुरुन्यङ्क्वित्यमरः । उज्ज्वलन्ती मेखलायाः काञ्च्याः । पक्षे ऽद्रिनितम्बस्य आभा यस्यां सा । मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोरिति मेदिनी । तथा ऽतिशयेन वरा वरतमा । अतिशायने तमप् । तया वनमालया ऽलंकृतं स्थानं हरिवक्षस्तज्जुष्टं यया । पक्षे वरतमया ऽरण्यपङ्क्त्येति । समालङ्कारः । मालिनीवृत्तम् ॥ १८ ॥

पापाऽरण्यहिरण्यदानववपुर्व्यापाटनप्रज्वलत्-
कोपाऽऽटोपकृपीटसम्भवनवज्वालाकरालाऽऽननम् ।

———

वस्यां श्लेषेणाऽप्रकृतपर्वतसारूप्यं वर्णयन् तत्र क्षमाभृत्त्वौचित्यं प्रतिपादयति ।

१९ दुष्कृतकाननरूपहिरण्यकशिपुदानवशरीरविदारणे समुज्ज्वलत्कोपव्याजवह्निजन्यज्वालाभीषणमुखं सुरादिभिरपि अशक्यप्रसादनं नृसिंहं भगवन्तं क्षणमात्रेण शमं प्रापयन्त्यास्तव किमन्यद् दुष्कर?मिति निरवधिकाऽपराधकारिणो ऽपि मम त्वत्साम-

देवाद्यैरपि दुष्करप्रसदनं देवं नृसिंहं रमे
क्षान्तिं नीतवती क्षणेन भवती किं ते परं दुष्करम् ॥१९॥

पापेति। पापरूपः यः हिरण्यः। विना ऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोप इति कशिपुशब्दलोपे 'नामैकदेशे नामग्रहण'मिति न्यायेन तस्य हिरण्यकशिपुसंज्ञस्य दानवस्य वपुषः पाटने भेदने प्रज्वलन् यः कोपाऽऽटोपः स एव कृपीटसम्भवो ऽग्निस्तस्मात्सम्भवन्तीभिर्नवज्वालाभिः करालमाननं यस्य तं देवाऽऽद्यैरपि दुष्करं प्रसदनं प्रसादो यस्य तं नृसिंहं देवं भवती क्षणेन क्षान्तिं नीतवती प्रापितवती, हे रमे! ऽतः ते परं मदागःक्षपणरूपं दुष्करं किं वास्तीत्यर्थः। काव्यार्थाऽऽपत्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

नियन्ता यः पद्मे निरवधिदुरागःशतकृता-
मपर्याप्तं जानात्यखिलनिरयव्रातमपि नः।
स एष त्वद्वाचा निखिलमपि सोढ्वा ऽपरिमितं
फलं वेत्ति स्वल्पं तदपि शरणोक्तेर्निजपदम् ॥ २० ॥

नियन्तेति। हे पद्मे! यः निरवधीनां दुरागसां शतं कुर्वतां नः नियन्ता सन्नखिलश्चाऽसौ निरयव्रातश्च तमपर्याप्तं जानाति

---

र्थ्यपर्यालोचनया धैर्योदयान्न भगवत्कोपभीतिरित्याह।

२० हे पद्मे! दुरपराधशतकारिणामस्माकं दण्डदानोद्यतो यो भगवान् सकलं नरकसमूहमपि तत्कृते ऽपर्याप्तं जानाति सो ऽयं क्षमामभ्यास्तथास्य त्वं शरणमिति वाचा सकलमपि मदीयाऽपराधजातं मर्षयित्वा तस्यास्त्वद्वाचः फलं निजपदमपि अननुरूपं जानातीति त्वद्वाक्यमात्रेणाऽपराधक्षमापुरस्सरं योगिभिरपि दुरासदं निजपदं प्रयच्छतीत्याह।

स एष हरिः निखिलमपि त्वद्वाचा सोढ्वा तत्प्रसिद्धम् अपरिमितं महाफलरूपं निजपदं शरणोक्तिरेनं दीनं त्वं रक्षेति, तस्याः स्वल्पं फलं वेत्ति । शिखरिणीवृत्तम् ॥ २० ॥

क्षमां मूर्तामुद्यत्करचरणयोगां च करुणां
हताऽवद्यां विद्यामवयववतीमम्ब भवतीम् ।
समाश्रित्याऽपत्याऽभ्युदयधनधान्यादिनिबिडो
बिडौजःसम्पत्तिं परिहसति भूमावपि जनः ॥ २१ ॥

क्षमेति । हे ऽम्ब! मूर्तिमतीं क्षमां च परम् उद्यन् करयोश्चरणयोश्च योगो यस्यास्तां करुणां पुनर्हताऽवद्यां हतपापाम् । अवद्यपण्यवर्येति निपातनात्साधुः । अवयववतीम् । प्रशंसायां मतुप् । विद्यां तद्रूपिणीं भवतीं समाश्रित्य अपत्यं चाऽभ्युदयश्च धनं च धान्यादि च तैर्निबिडः जनः बिडौजस इन्द्रस्य सम्पत्तिं भूमावपि परिहसति । हसे हसने ऽस्मात्कर्तरि लट् । शिखरिणीवृत्तम् ॥ २१ ॥

क्षान्ते मन्तौ जननि सकले क्षम्यतांशब्दमात्राद्
भूयो भूयः कमपि निचयं पाप्मनां निर्मिमाणः ।

---

२१ हे अम्ब! साक्षात् शरीरधारिणीं क्षमां हस्तपादादिसंपन्नां करुणां साऽवयवामनवद्यां विद्यां भवतीमाश्रित्य सुतधनधान्यादिसमृद्धिभाग् जनो भूमावपि वसन् इन्द्रसंपदं तुच्छां मन्यते इति तवाऽऽश्रयणं सर्वसंपत्प्रदमिति प्रतिपादयति ।

२२ हे जननि ! त्वत्पुरतः क्षम्यतामिति शब्दोच्चारणमात्रादेव कारुणिकया त्वया तावत्पर्यन्तं कृते निखिले ऽपराधे क्षान्ते ऽपि पुनः पुनरपि व्यसनितयेव पापराशिं कुर्वन्नहं पुनः क्षमस्वेति वक्तुं जिह्वेमि, तथापि अचला तवाऽनिर्वचनीया दया त्वां क्षमां नयतीति निरन्त-

वक्तुं लज्जे पुनरपि सहस्वेति वाराशिकन्ये
क्षान्तिं सा त्वां तदपि नयते काऽप्यकम्पाऽनुकम्पा ॥२२॥

क्षान्ते इति। हे वाराशिकन्ये ! हे जननि ! क्षम्यतां क्षमां कुरु इति शब्दमात्रादुच्चारादेव सकले मन्तौ मदपराधे क्षान्ते सति भूयो भूयः पुनः पुनः कमपि पाप्मनामपराधानां निचयं समूहं निर्मिमाण उत्पाद्यमानो(?) ऽहं पुनरपि सहस्वेति वक्तुं लज्जे जिह्रेमि। तदपि तथापि सा प्रसिद्धा अकम्पा स्थिरा ऽनुकम्पा कृपा त्वां क्षान्तिं नयति प्रापयति। मन्दाक्रान्तावृत्तम् ॥ २२ ॥

कादाचित्कप्रपदनजुषां काङ्क्षतां पूरुषार्था-
नत्राऽमुत्राऽप्यखिलजननि प्राणिनामर्पयन्तीम् ।
संत्यज्य त्वामपकृतिशतैरप्यशुष्यत्कटाक्षां
कृच्छ्राऽऽराध्यां प्रसभमपरां देवतां सेवतां कः ॥ २३ ॥

कादाचिदिति। हेऽखिलजननि ! कदाचिद्भवा ये प्रपदनजुषस्तेषां प्रपन्नानां शरणागतानामिति यावत्। तथा ऽत्राऽमुत्र इह परलोके च पुरुषार्थान् धर्मादिरूपान्काङ्क्षतामिच्छतां प्राणिनाम् अर्पयन्तीं ददतीं अपकृतीनामपराधानां शतैरपि अशुष्यन्नशुष्कीभवन् कटाक्षो ऽपाङ्गो यस्यास्तां त्वां सन्त्यज्य कृच्छ्रेणाऽऽराधयितुं शक्यामपरां त्वदितरां देवतां कः ज्ञाता सेवतां ? न कोऽपीति भावः। मन्दाक्रान्ता० ॥ २३ ॥

---

राऽपराधकारिणामस्माकमपराधान् दयामयी त्वं सर्वदा सहसे इति यथा वयं पापव्यसनिनस्तथा त्वं क्षमाव्यसना ऽसीत्याह।

२३ जातु चित्प्रपन्नानामर्थिनाम् ऐहिकामुष्मिकपुरुषार्थानर्पयन्तीमपराधशतैरप्यरूक्षकटाक्षां सुलभप्रसादां त्वां विहाय कष्टाऽऽराध्यां त्वदन्यां देवतां को वा विवेकशाली सेवता?मित्याह।

कृत्याऽकृत्यत्यजनकरणोत्साहिनां मादृशाना
को वा दोषः कमलनिलये त्वत्क्षमायाः स दोषः ।
येनैतस्याः क्व चिदविषयो नाऽपराधः स मेऽस्ती-
त्युद्यद्धैर्या वयमिह बहूनाचरामोऽपचारान् ॥ २४ ॥

कृत्येति । हे कमलनिलये ! कृत्यं चाऽकृत्यं च तयोः त्यजनं च करणं च कृत्यत्यजनमकृत्यकरणं च ताभ्यामुत्साहिनां उत्साहवतां मादृशानां मद्विधानां को वा दोषः? येन हेतुनैतस्याः क्षमायाः क्व चिदपि अविषयः स मेऽपराधः नास्ति इति उद्यत् उदयं प्राप्नुवद्धैर्यं येषां ते वयं पापिनः अतिबहूनपचारान् दोषान् आचरामः स त्वत्क्षमाया एव दोषः । व्याजस्तुतिश्लेषाऽलङ्कारौ । मन्दाक्रान्तावृत्तम् ॥ २४ ॥

अशेषैर्निर्वेशैरखिलनरकाऽऽवल्यभिभवै-
रघौघानास्माकानपि भृशमशक्याऽपनयनान् ।
क्षमस्वेत्युक्त्यैव क्षपयसि मधुध्वंसिदयिते
क एष क्षान्त्यात्मा कथय निरुपाख्यस्तव गुणः ॥ २५ ॥

अशेषैरिति । हे मधुध्वंसिनः दयिते ! अखिलानां नर-

---

२४ हे कमलवासिनि ! विहितकर्माऽननुष्ठायिनां निषिद्धकर्मकरणोत्साहिनां च मद्विधानामपराधकरणे को दोषः ?, अयं त्वत्क्षमागुणस्यैव दोषो, यतो नास्ति मम सोऽपराधो यस्तव क्षमाया अगोचरः स्यादिति धृष्टा वयं बहुलानपराधानाचराम इत्यतिपापिनोऽप्यस्मानुद्धरन्त्यास्तव क्षमागुणोऽबाधित इत्याह ।

२५ हे विष्णुगृहिणि ! निखिलनरकसमूहानामभिभवो येभ्य ईदृशैः निर्वेशैः ( पापफलोपभोगैरपि ) अशक्यसमुच्छेदानस्मदीयान्पापसङ्घान् केवलं क्षमस्वेति वाचैवोन्मूलयसि, कोऽयं तवाऽनिर्वचनीयः क्षमागुणः? इति भगवतीक्षमाया अगाधत्वं प्रतिपादयन्नाह ।

काऽऽवलीनामभिभवो येभ्यस्तैरशेषैर्निर्वेशैः। प्रायश्चित्तैरपि भृशम् अशक्यमपनयनं दूरीकरणं येषां तानास्माकानस्मत्सम्बन्धिनः। युष्मदस्मदोरन्यतरस्यामित्यण् तस्मिन्नणि चेत्यस्माकादेशश्च। अघौघान् क्षमस्वेत्युक्त्यैव क्षपयसि, अतः क्षान्त्यात्मा क्षमास्वरूपः तव निरुपाख्यो निरुपम एष गुणः को नाम? कियानित्यर्थः। शिखरिणी वृत्तम् ॥ २५ ॥

निर्मातुं प्रभवेम कर्म न वयं नित्यं किमप्यन्ततो
यत्खल्वाचमनं तदप्यकुशलाः कर्तुं यथाचोदनम् ।
दूरे ज्ञानकथा तथाऽपि तु तवाऽक्षामक्षमावेदिनो
जानीमो मनसैव देवि सुगमौ स्वर्गोऽपवर्गावपि ॥ २६ ॥

निरिति। हे देवि! वयं नित्यं सन्ध्यादि कर्म किमपि निर्मातुं न प्रभवेम। यत्खल्वन्ततो गत्वा नाम किं बहुनेति यावत्। आचमनं तत्प्रकारः। 'देव्यास्त्रयः पादा आपोहिष्ठेति नवपादाः सप्त व्याहृतयो देवीपादत्रयं द्वेधा विभक्तं देवीशिरश्चेति चतुर्विंशतिस्थानानि'। इदं श्रौतमाचमनम्। 'केशवाद्यैस्त्रिभिः पीत्वा एकेन दक्षकरं मृजेदि'त्यादि पौराणम्। इदमपि यथाचोदनमिति। 'गोकर्णकृतहस्तेन माषमात्रं जलं पिबेत्'। इत्यादि विधिवत्कर्तुमकुशला असमर्थाः ज्ञानस्य 'तत्त्वमसी'त्यादिमहावा-

---

२६ हे देवि! वयं नित्यं सन्ध्योपासनादिकर्मानुष्ठानं न जानीम इति किं वक्तव्यं, यथाविधि आचमनमपि कर्तुं न क्षमाः, एवं स्थिते ज्ञानवार्ता दवीयसी, तथापि तवाऽनन्तं क्षमागुणं जानन्तो वयं स्वर्गमोक्षावपि करस्थौ मन्महे इति अज्ञानामस्माकमपि स्वर्गोऽपवर्गश्चाऽस्या भवत्याः क्षमागुणो ऽगाध इत्याह।

कपजन्यस्य कथा तु दूरे स्वप्ने ऽपि नाऽऽयातीति यावत्। तथापि तवाऽक्षामां विपुलां क्षमां विदन्ति तच्छीला वयं स्वर्गो नाको, ऽपवर्गो मोक्षस्तावपि सुगमौ सुखप्राप्यौ जानीमः । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

कथयामि सारमिह किं कथया
परमन्यया ऽर्थितभवोपरमम् ।
क्षमया त्वमेतमभिरक्ष मया
विहितानि मा गणय देवि हिता ॥ २७ ॥

कथयामीति । हे देवि ! इह सारं तात्पर्यं कथयामि। परम् अन्यया कथया किं प्रयोजनं ? नास्तीति भावः । हिता हितकर्त्री त्वं मया विहितानि निन्द्यकर्माणि मा गणय । अर्थितः भवस्योपरमः शान्तिर्येन तम् एतं क्षमया ऽभिरक्ष । प्रमिताऽक्षरा आर्यागीतिर्वा वृत्तम् ॥ २७ ॥

निगमविहितं प्रायश्चित्तं मदीयमहांहसां
निरसनकृते नाऽलं मातस्तव क्षमया विना ।

---

२७ अथ एतावत्या स्तुत्या ऽभ्यर्थनीयसारं दर्शयन्—हे देवि ! सर्वसारमिदं निवेदयामि, इतरया ऽप्रसक्तया वार्तया किं प्रयोजनं?, प्रार्थितसंसारोपशमं मां हितकारिणी त्वं स्वीयया ऽबाधितया क्षमयैवाऽस्मद्दुराचरणान्यविगणयन्ती रक्षेत्याह ।

२८ हे मातः ! तव क्षमां विना मामकमहापातकानां विनाशाय वेदबोधितं प्रायश्चित्तं न क्षममिति दर्पोद्गलितं दुर्भरं लोहपिण्डं जीर्णं

गुरुतरमयःपिण्डं गर्वान्निगीर्णमहो रमे

किमु जरयितुं शक्तं शुण्ठीकषायनिषेवणम् ॥ २८ ॥

निगमेति । हे मातः ! तव क्षमया विना निगमविहितं वेदकथितं प्रायश्चित्तं पापनिष्कृतिम् । प्रायस्य चित्तिचित्तयोरिति सुडागमः । मम महतामंहसां पापानां निरसनकृते निष्कासनेऽलं समर्थं न । तत्र दृष्टान्तः—अतिशयेन गुरुर्गुरुतमस्तम् अयसो लोहस्य पिण्डं गर्वान्निगीर्णं भक्षितं जरयितुं जीर्णं कर्तुं शुण्ठ्याः कषायस्य निषेवणं पानं शक्तं किम ? अपि तु नेत्यर्थः । हरिणीवृ० । प्रतिवस्तूपमालङ्कारः ॥ २८ ॥

भगवति वपुश्चेतोवाग्भिः प्रतिक्षणमार्जितं

नवनवमिमं पापस्तोमं क्षमस्व मम स्वयम् ।

कटकटरवक्रीडद्दंष्ट्राकरालकमाननं

पुनरपि यथा नो पश्येयं भयङ्करमान्तकम् ॥ २९ ॥

भगवतीति । हे भगवति ! कटकटरवैः क्रीडद्भिर्दंष्ट्राभिः करालम् आन्तकं यमसम्बन्ध्याननं पुनरपि यथा नो पश्येयं तथा वपुः चेतश्चतुर्विधमन्तःकरणं वाक्ताऽऽभिः प्रतिक्षणं वारं वारमित्यर्थः । वीप्सायामव्ययीभावः । नवम् इमं पापस्य स्तोममोघं स्वयं क्षमस्व । हरिणीवृत्तम् । स्वभावोक्तिरलं० ॥ २९ ॥

---

कर्तुम् अजीर्णनाशकतया प्रसिद्धमपि शुण्ठीकषायसेवनं शक्नोति किमिति वदन् समर्थयते ।

२९ हे भगवति ! देहचित्तवचनैः प्रतिक्षणमुपार्जितं नव्यं नव्यं मम पापसमूहचयं करुणामयी त्वं क्षमस्व, यथा ऽहं कोपकटकटायमानदंष्ट्रं भयङ्करमन्तकस्यास्यं न पश्येयमित्याह ।

सहमानाऽहरहर्मे
सहस्रमागांसि सागरेन्द्रसुते ।
स्थापयसि मां दयालो
शरणव्रज्याऽऽधिराज्यपीठे त्वम् ॥ ३० ॥

इति श्रीमद्वेङ्कटाऽध्वरिविरचिते श्रीलक्ष्मीसहस्रे
क्षान्तिस्तबक एकादशः संपूर्णः ॥ ११ ॥

सहेति । हे सागरेन्द्रसुते ! अहरहः । नित्यवीप्सयोरिति द्विर्भावः । मे सहस्रम् आगांसि सहते ऽसौ सहमाना । लटः शतृशानचाविति शानच् । हे दयालो ! दयाशीले ! स्पृहिगृहिपतिदयीत्यालुच् । मां शरणानां रक्षितृणां लोकपालकानां व्रज्यायां आधिराज्यस्य पीठे । व्रज्या पर्यटने वर्गे इति मेदिनी । त्वं स्थापयसि । रक्षितृवर्गमुख्यं करोषीत्यर्थः । गीतिवृत्तम् ॥ ३० ॥

इति श्रीमद्रावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन
विरचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मीसहस्र-
टीकायां क्षान्तिस्तबक एकादशः
संपूर्णः ॥ ११ ॥

---

३० हे दयालो ! सागरसुते ! प्रतिदिनं मामकान् सहस्रमपराधान् सहमाना त्वं लोकपालतां प्रापय्य मां जनरक्षणधुरीणं करोषीति अपारस्ते क्षमागुणमहिमेति ब्रुवन् स्तबकं पूरयति ।

इति श्रीमानवल्ल्युपाह्वतैलङ्गरामशास्त्रिविरचितायां लक्ष्मी-
सहस्राऽवतरणनिःश्रेणिकायां क्षान्तिस्तबकः ॥ ११ ॥

सीतां दृष्ट्वा दग्धलङ्कस्तद्वृत्तकथनात्कपिः ।
दत्तवानुत्सवं यस्य स रामः श्रेयसे ऽस्तु नः ॥१२॥

अथाऽस्मिन् द्वादशस्तबके लक्ष्म्या उत्सवं वर्णयितुं प्रथमपद्ये उत्सवानिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

विख्यातविभवा सा मां विष्णुपत्नी विलोकताम् ।
विपुलानुत्सवान् यस्या विरिञ्च्याद्या वितन्वते ॥ १ ॥

विख्यातेति । यस्याः श्रीलक्ष्म्याः विरिञ्च्याद्या ब्रह्मादिदेवा विपुलान् उत्सवान् वितन्वते कुर्वते सा विख्यातः विभवो यस्याः सा विष्णुपत्नी मां विलोकयतां कृपया पश्यत्वित्यर्थः ॥ १ ॥

विधिशिवप्रमुखा विबुधेश्वरा
विविधमच्युतपत्नि तवोत्सवम् ।
अकलयन् सकलस्य शरीरिणो
निरवधीरवधीरयितुं व्यथाः ॥ २ ॥

विधीति । हे ऽच्युतपत्नि ! सकलस्य समग्रस्य, यद्वा षोडशकलाऽऽत्मकस्य । इमाः कला मुण्डकोपनिषद्युक्ताः, मया ऽपि भारतचम्पुटीकायां प्रथमस्तबके सप्तविंशतिपद्ये स्पष्टीकृताः । शरीरिणो देहिनः निरवधीर्निःसीमाः व्यथाः अवधी-

---

१ अथोत्सवस्तबकेन द्वादशेन यमकप्रधानेन तुष्टूषुर्यस्याः बहुलानुत्सवान् ब्रह्मादयो विदधति प्रथितैश्वर्या सा लक्ष्मीर्मामवलोकतामित्याशास्ते ।

२ हे ऽच्युतगृहिणि ! निखिलप्राणिनिःसीमपीडानिवारणाय विधिशिवादयो देवपुङ्गवा नानाविधं तवोत्सवमकुर्वन्नित्याह ।

रयितुं तिरस्कर्तुं विधिशिवौ प्रमुखौ येषु ते विबुधेश्वरा देवाः विविधं बहुप्रकारं तव उत्सवम् । मह उद्धव उत्सव इत्यमरः । अकलयन् कुर्वते स्म । अस्मिन् स्तबके सर्वत्र यमकाऽलङ्कारः । एतल्लक्षणं यमकस्तबके वक्ष्यते । द्रुतविलम्बितं वृत्तम् । 'द्रुतविलम्बितमाह नभौ भरा'विति तल्लक्षणात् ॥ २ ॥

निरुपमं युवयोः शुभमुत्सवं
जननि लोकयितुं धृतकौतुका ।
उपगता किल का ऽपि परा त्वरां
पुरवधूरवधूतगृहक्रिया ॥ ३ ॥

निरिति । हे जननि ! निरुपममसदृशं युवयोः पित्रोः शुभम् उत्सवं लोकयितुं धृतकौतुका सा परा ऽन्या का ऽपि पुरवधूः त्वराम् उपगता सती अवधूता गृहक्रिया यया सा तादृशी अभूत् ॥ ३ ॥

जननि सत्वरचङ्क्रमसम्भ्रमे
चरणतः पतितौ मणिनूपुरौ ।
तव महोत्सवभूभजनोन्मिषत्-
कुतुकया तु कया चिदनादृतौ ॥ ४ ॥

जननीति । हे जननि ! तव महस्योत्सवस्य भुवः भज-

---

३ अथोत्सवशोभां वर्णयितुं पौराऽङ्गनानां चेष्टितानि वर्णयन् हे जननि ! पुरा भगवतो भवत्याश्च शुभोत्सवमवलोकयितुं निर्धूतगृहकार्या कापि पौराऽङ्गना त्वरां प्रापेति पुराऽङ्गनानामुत्सवाऽवलोकनलौल्यं प्रतिपादयति ।

४ हे मातः ! तावकमहोत्सवभूमिप्राप्तावुदितकौतुकया कया चिदङ्गनया सत्वरगमनसंभ्रमे चरणश्लथौ मणिनूपुरौ अनादृत्य तत्र गतमित्याह ।

ने । भज सेवायामित्यस्माल्ल्युट् । उन्मिषत् कुतुकं यस्यास्तया कया चित्स्त्रिया त्वरया सहितस्य चङ्क्रमस्य गमनस्य संभ्रमे त्वरागां चरणात: पतितौ मणियुक्तौ नूपुरौ । मञ्जीरो नूपुरो ऽस्त्रियामित्यमर: । अनादृतौ त्यक्तौ इति भूषणे ऽप्यनादर: सूचित: ॥४॥

तव महे गतिमान्द्यकृतौ कुचा-
विति रुषा चलिता ऽऽशु रमे ऽपरा ।
अनुगृहीततदञ्चलनिर्गल-
न्नवसरा ऽवसराऽत्ययभीरुका ॥ ५ ॥

तवेति । हे रमे ! तव महे कुचौ स्थूलत्वेन गतेर्मान्द्यं कुरुत इति रुषा ऽवसरस्य समयस्याऽत्यये नाशे भीरुका ऽपरा नायिका ऽनुगृहीत: निष्कासित: तदञ्चलात् कुचप्रान्तान्निर्गलन् नवसरो नवमाला यया सा सती आशु चलिता । यथा केनाऽपि विघ्न: कार्ये क्रियते चेत्तस्य किमपि धनादि दत्वा रोषात्पुनर्यथा गृह्यते तद्वत्स्थौल्याद्गतिविघ्नकारिकुचेभ्यो माला पुनर्गृहीतेति गूढोत्प्रेक्षा ॥ ५ ॥

श्रुतभवन्महवाद्यरवा जवात्
पथि रमे चलिता ऽऽभरणस्वनै: ।

---

५ हे देवि ! तवोत्सवे योग्यसमयाऽपगमभीरु: कुचौ गुरुतया सत्वरगमनप्रतिबन्धकाविति तत्र रुषेव निजकरगृहीतकुचप्रान्तलम्बमाननवमालिका सती चलितेत्याह ।

६ भवदुत्सवाऽवसरे मङ्गलवाद्यनिनादं श्रुत्वा जवात् प्रचलिता काऽपि चञ्चलनूपुराद्यलङ्कारध्वनिभि: पूर्वश्रुतोत्सववाद्यध्वनौ तिरो-

श्रुतरुते ऽन्तरिते ऽसि सुवञ्चिते-
त्यपरया ऽपरया हसिता वधूः ॥ ६ ॥

श्रुतेति । श्रुतः भवत्या महवाद्यस्य रवो यया सा ऽतः ज-वात्पथि चलिता ऽत आभरणस्वनैः श्रुतरुते महवाद्यरवे अन्त-रिते सति अपगतः रयः गमनवेगो यस्याः सा ऽत इयं वधूः सु-वञ्चिता विप्रलब्धेति परया नायिकया हसितेति भावः ॥ ६ ॥

महमहीभजनोत्कलिकाकृत-
द्रुतगतिः श्लथपुष्पपरम्परा ।
कृतवतीव मुदा कुसुमाऽञ्जलिं
तव रमे वरमेखलमध्यमा ॥ ७ ॥

महेति । हे रमे ! वरा मेखला मध्ये यस्याः सा महमही-भजनस्योत्कलिकयोत्कण्ठया कृता द्रुतगतिर्यया सा ऽतः श्लथो गलितः पुष्पाणां सरो माला यस्याः सा परा नायिका तव मुदा कुसुमपूर्णमञ्जलिं कृतवती ददातीवेत्युत्प्रेक्षा ॥ ७ ॥

महजुषस्तव देवि मिषविषा
दिशति मन्दगतेरपि सद्गतिम् ।

---

हिते सति तमनाकर्ण्य मन्दीकृतवेगा ऽपरया साधु विप्रलब्धा ऽसीति परिहसितेत्याह ।

७ त्वदुत्सवभूमिप्राप्त्युत्कण्ठास्वीकृतसत्वरगमना उत्कृष्टका-ञ्चीसमलङ्कृतमध्यभागा काचिद्गतिसंभ्रमच्युतकुसुममालिका सती तत्कुसुमनिकरैस्तव पुष्पाञ्जलिमिव रचितवतीत्याह !

८ महोत्सवजुषस्तव सेवाऽभिलाषा मन्दगतेरपि ( मन्दगमनस्य, निःशरणस्य च ) सद्गतिं ( वेगगमनं, साधुपरिणामं च ) दिशत्यतस्त्वं

तदिह दिव्यगतिं वितरिष्यसि
त्वममले मम लेखदुरासदाम् ॥ ८ ॥

महजुष इति। हे देवि! महजुषस्तव सेवितुमिच्छा सिषेविषा। सन्नन्तात्सेव सेवायामित्यस्माद प्रत्ययादिति अप्रत्ययः। मन्दगतेः पङ्गोरपि सद्गतिं त्वरितगतिं दिशति। तत्तस्माद्धे ऽमले! शुद्धस्वरूपे! त्वं लेखैर्देवैर्दुरासदां दुष्प्रापां गतिं मम वितरिष्यसि। अत्र शुद्धस्वरूपा त्वं मन्दबुद्धेर्मम सद्विद्यां दत्वा मोक्षं नयसीति ध्वनिरपि ज्ञेयः ॥ ८ ॥

अभिचकाङ्क्ष मनःप्रभवं जवं
चरणयोरपि का चन साऽऽदरा।
कलयितुं भवतीं कलशाऽम्बुधे-
र्दुहितरं हितरम्यमहोत्सवाम् ॥ ९ ॥

अभीति। साऽऽदरा का चन स्त्री हितः रम्यश्च महोत्सवो यस्यास्तां कलशाऽम्बुधेः दुहितरं कन्यां भवतीं कलयितुमवलोकयितुं मनःप्रभवं स्वान्तोद्भवं जवं वेगं चरणयोरप्यभिचकाङ्क्ष इच्छति स्म। अत्राऽतिशयगमनत्वरा, ऽतिशयोक्तिरलङ्कारश्च सूचितः ॥ ९ ॥

———

देवदुरापां दिव्यां गतिं मे वितरिष्यसीति विश्वासितमित्याह।

९ हे रमे! जगद्धितकारकसुन्दरमहामहाया भवत्या दर्शनायाऽऽदरिणी का चित् मानसं वेगं चरणयोराचकाङ्क्ष, औत्कण्ठ्याऽतिशयादित्याह।

जननि तामरसोदरसोदर-
श्रियमवेक्ष्य सविस्मयमुत्सवे ।
न ततृपुर्नरदैवतयोषितः
शुभवतीं भवतीं सह शौरिणा ॥ १० ॥

जननीति । हे जननि ! तामरसस्योदरस्याऽन्तर्भागस्य सोदरा सदृशी श्रीर्यस्याः तां शुभवतीं भवतीं शौरिणा सह उत्सवे सम्यगवेक्ष्य सविस्मयं साऽऽश्चर्यं यथा तथा नराणां दैवतानां च योषितः न ततृपुर्न तृप्तिं प्रापुः । उभयोरप्यसन्ताऽऽसेचनकस्वरूपत्वात् ॥ १० ॥

प्रियतमाऽर्पितयावकपादया
तव महोत्सवभूर्न यया रमे ।
द्रुतमगामि पदोर्न परं धृतः
कुपितयाऽपि तया ऽरुणिमा दृशोः ॥ ११ ॥

प्रियेति । हे रमे ! प्रियतमेनाऽर्पितो लापितः यावकः अलक्तको यस्यास्तथा पादौ यस्यास्तया यया तव महोत्सवभूर्द्रुतं नाऽगामि न प्रापि, तया पदोश्चरणयोरेवाऽरुणिमा धृत इति न, तर्हि कुपितया क्रुद्धया दृशोरप्यरुणिमा धृत इत्यन्यत्राऽऽरक्तत्ववर्णनेनाऽसङ्गत्यलङ्कारः ॥ ११ ॥

---

१० हे जननि ! उत्सवाऽवसरे भगवता सह शुभवतीं कमलोदरसमानशोभां भवतीं सविस्मयमवलोक्य मनुजानां सुराणां चाऽङ्गना न तृप्तिमुपजग्मुरित्याह ।

११ दयितविन्यस्तलाक्षारसाऽलङ्कृतपादया तद्व्यापारे जातविलम्बतया ऽपगतोत्सवभूमिप्राप्त्यवसरया यया ऽङ्गनया सा भूर्द्रुतं नाऽगामि तया चरणयोः केवलमरुणिमा न धृतो,ऽपि तु महोत्सवदर्शनवञ्चितया कुपितया तया दृशोरप्यरुणिमा धृत इत्याह ।

अभिवृषाऽचलमापततां द्रुतं
तव रमे परमोत्सवलिप्सया ।
अजनि नो पथिभिः समयाऽत्ययो
दिविषदां विषदाऽन्तरितैरपि ॥ १२ ॥

अभीति । हे रमे ! तव परमस्योत्सवस्य लब्धुमिच्छया वृषाऽचलम् अभि, अभिलक्ष्येत्यर्थः । अभिरभागे इति कर्मप्रवचनीयत्वेन द्वितीया । द्रुतम् आपततां दिविषदां देवानां विषमुदकं गरलं च ददतीति विविषदस्तैर्घनैर्गरलैरपि अन्तरितैः पथिभिर्मार्गैः समयस्योत्सवकालस्य अत्ययो ऽतिक्रमः नो अजनीत्यर्थः ॥ १२ ॥

प्रसृमराऽगरुधूपपरम्परा-
सुरभिताः शुभदीपशताऽऽवृताः ।
त्रियुगपत्नि महोत्सवभूमयः
सुरचयं रचयन्ति सविस्मयम् ॥ १३ ॥

प्रसृमरेति । हे त्रियुगपत्नि ! शुभानां दीपानां शतैः आवृता युक्ताः प्रसृमरैर्विसृतैः अगरूणां धूपानां परम्पराभिः सुरभिताः सुगन्धयुक्ता उत्सवभूमयः कर्त्र्यः । सुराणां चयं

---

१२ अथोत्सवदर्शनाय देवाऽऽगमनं वर्णयन्—शेषाचलमभि तवोत्सवदर्शनलाभाय सत्वरमागच्छतां देवानां विषदैः ( जलदैः ) अन्तरितैरपि मार्गैः अवसराऽतिक्रमो नाऽभूदित्याह ।

१३ हे त्रिविक्रमपत्नि! विसृत्वरकालाऽगरुधूपपरम्परापरिमलोद्गारिणः शुभदीपशतपरीतास्तवोत्सवभूमयो देवसमूहं साऽऽश्चर्यं विरचयन्तीति देवानामपि समृद्धतरत्वदुत्सवदर्शनेन विस्मयाऽतिशयो भवतीत्याह ।

समूहं सविस्मयं साऽऽश्चार्यं रचयन्ति स्म कुर्वते स्मेति ॥ १३ ॥

तत्र महं प्रति यज्जनकम्पितैः
सुरतरोः शिखरैः स्वयमीरिताः ।
जननि वेङ्कटशैलमभूषयन्
सुमनसो मनसो हरणक्षमाः ॥ १४ ॥

तत्रेति । हे जननि ! तत्र महं प्रति यन्ति गच्छन्ति ते च ते जनास्तैः । कम्पितैश्चालितैः सुरतरोः कल्पद्रोः शिखरैरग्रैः स्वयम् ईरिताः प्रेरिताः मनसः हरणे आकर्षणे क्षमाः समर्थाः सुमनसः पुष्पाणि वेङ्कटशैलम् अभूषयन् अलञ्चक्रुरित्यर्थः ॥ १४ ॥

शुभतराऽऽभरणाऽऽभरणात्मना
रुचितरङ्गपिशङ्गितसद्मना ।
जननि सार्थयसे मरुतां महो-
त्सवपुषा वपुषा ऽनिमिषा दृशः ॥ १५ ॥

शुभेति । हे जननि ! शुभतरस्याऽत्यन्तशुभस्याऽऽभरणस्याऽऽभरणं भूषणरूपः आत्मा स्वरूपं यस्य । एवं रुच्यास्तरङ्गैः परम्पराभिः पिशङ्गितं सद्म भवनं येन । पिशङ्गौ कद्रुपिङ्गलौ इ-

---

१४ तवोत्सवं प्रति यद्भिः (गच्छद्भिः) जनैः कम्पितैः कल्पद्रुमशिखरैः प्रेरितानि मनोहरणपटूनि कुसुमानि शेषाऽचलमलञ्चक्रुरिति उत्सवाऽवसरे देवैः कल्पवृक्षकुसुमवृष्ट्या त्वमभ्यर्चितेत्याह ।

१५ शुभतराऽलङ्काराणामप्यलङ्काररूपेण प्रभातरङ्गपिङ्गलीकृतमन्दिरेण महोत्सवजुषा निजवपुषा देवानां दृष्टीर्निर्निमेषा अन्वर्थयसे इति वदन् उत्सवाऽवसरे सुन्दरतरं ते वपुरवलोक्य देवा एकाग्रदृष्टितया निर्निमेषाः सार्था भवन्तीत्याह ।

त्यमरः । तथा महोत्सवं पुष्णाति तेन वपुषा स्वशरीरेण मरुतां देवानाम् अनिमिषाः दृशः दृष्टीः सार्थयसे अन्वर्थयसे । विषिप-रिकरावलङ्कारौ ज्ञेयौ ॥ १५ ॥

मधुजिता सममुत्सवमण्डपे
स्थितवतीं भवतीमवलोकितुम् ।
अभिरुचिः पुनराप्तकुतूहलै-
र्निजगृहे जगृहे न वधूजनैः ॥ १६ ॥

मधुजितेति । मधुजिता समं सह उत्सवमण्डपे स्थितवतीं भवतीम् अवलोकितुम् आप्तं कुतूहलं यैस्तैः । कौतुकं च कुतूहल-मित्यमरः । वधूनां जनैः । वधूर्जाया स्नुषा स्त्री स्यादित्यमरः । निजगृहे, पुनः अभिरुचिर्दर्शनेच्छा न जगृहे । गृहू ग्रहणे इत्यस्मा-त्कर्मणि लिट् ॥ १६ ॥

अधिमहोत्सवमर्णवकन्यके
परमभक्तिजुषा प्रणतिस्तव ।
तनुधनुर्लतया सुदृशां गुरु-
स्तनतया नतया सुकरा ऽभवत् ॥ १७ ॥

अधीति । हे अर्णवकन्यके ! महोत्सवे इत्यधि महोत्सवं परमां

---

१६ मध्ये प्रसङ्गाद्दैववृत्तमभिधाय पुनः पौराङ्गनाचेष्टितानि वर्णयन् भगवता सहोत्सवे भद्रपीठोपविष्टां भवतीमवलोकयितुमु-त्पन्नकौतुकैः पुरस्त्रीजनैर्निजगृहे प्रीतिर्न प्राप्तेति तासामुत्कण्ठा-ऽतिशयमुत्सवदर्शने प्रतिपादयति ।

१७ हे सागरसुते ! महोत्सवे परमभक्तिमतीनां पौराङ्गनानां प्र-णतिः स्तनगौरवेण नम्रया देहधनुर्लतया सुकरा ऽभूदित्याह ।

भक्तिं सेवनं जुषन्ते तेषां सुदृशां स्त्रीणां तव प्रणतिर्नमस्क्रिया गुरुस्तनतया पृथुकुचत्वेन नतया नम्रया ऽत एव तनुर्धनुर्लतेव तया सुकरा सुगमा ऽभवत् । काव्यलिङ्गमलंकारः ॥ १७ ॥

भजनहर्षजनाट्यजवोज्ज्वलन्-
मुकुटलोलमरुत्सरिदुज्झितैः ।
जलकणैर्भवदुत्सवमेदिनीः
शशिशिराः शिशिराः कुरुते रमे ॥ १८ ॥

भजनेति । हे रमे ! भवत्या उत्सवः भवदुत्सवः । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । तस्य मेदिनीः । भजने । भज सेवायामस्माल्ल्युट् । हर्षजेन नाट्यस्य नृत्तस्य जवेनोज्ज्वलन्त्या मुकुटे लोलाया मरुत्सरितो भागीरथ्याः सकाशादुज्झितैर्निर्गतैर्जलकणैः शशिशिराश्चन्द्रमौलिः शिवः शिशिराः शीताः कुरुते । अत्र शिवेनाऽप्यानन्दताण्डवं कृतमिति भावः ॥ १८ ॥

त्रिनयनेन विनम्रशिरःक्षरत्-
त्रिदशसिन्धुमहोर्मिभिरुत्सवे ।
किमपि पाद्यमदायि पदाऽब्जयो-
र्नतवता तव तामरसाऽऽनने ॥ १९ ॥

त्रिनयनेति । हे तामरसाऽऽनने ! कमलमुखि ! तव उत्सवे

---

१८ अथ देवसेवां वर्णयन् चन्द्रभूषितमस्तकः ( शिवः ) भजनप्रमोदजन्यनृत्तवेगपरिचलन्मुकुटप्रवहन्मन्दाकिनीगलितैर्जलशीकरैस्तवोत्सवभूमीः शीतलाः करोतीति महोत्सवे शिवस्य सभजनं नृत्तं वर्णयन् भगवत्या माहात्म्याऽतिशयं प्रतिपादयति ।

१९ हे कमलवदने ! तव पदाऽब्जप्रणतेन शिवेन नम्रमूर्धस्रवन्मन्दाकिनीकल्लोलैः किमपि पाद्यमदीयतेत्याह ।

नतवता नम्रेण त्रिनयनेन हरेण विनम्राच्छिरसः क्षरन्त्याः स्रवन्त्यास्त्रिदशसिन्ध्वा ऊर्मिभिः पद्माऽब्जयोः किमपि विलक्षणं पादार्थमुदकं पाद्यमदायि दत्तम् ॥ १९ ॥

तव महे मिलितात् त्रिदशीगणा-
न्न बिभिदे नरलोकवधूजनः ।
त्वदवलोकनविस्मयतो यतो
जननि मे न निमेषमवाप सः ॥ २० ॥

तवेति । हे मे मम जननि ! यद्वा हे मे ! जननि ! तव महे तवाऽवलोकनस्य विस्मयतः । हेतुपञ्चमीयम् । नरलोकानां वधूजनः स्त्रीसङ्घः । यतः निमेषं पक्ष्मपातं न अवापत्, ततः मिलितादुत्सवसङ्गतात्त्रिदशीगणाद्देवनासङ्घान्न बिभिदे । अत्र भेदज्ञानाऽभावान्मीलितमलङ्कारः ॥ २० ॥

प्रणयिना सममुत्सवमण्डपे
स्थितिमतीं भवतीं प्रणिनंसवः ।
अहिगिरिं हरिपत्नि समाश्रिता-
स्त्रिदिविनो दिवि नोपययुः स्पृहाम् ॥ २१ ॥

प्रणयीति । हे हरिपत्नि ! प्रणयिना पत्या समं सहोत्सव-

---

२० मम जननि ! त्वदुत्सवमिलिताद्देवाङ्गनाजनान्मानुषीणां त्वदवलोकने निर्निमेषदृष्टित्वाऽविशेषाद्भेदग्रहो नाऽभूदिति देवाङ्गना मानवाङ्गनाश्च निर्निमेषं तवोत्सवमविशेषेण पश्यन्तीत्याह ।

२१ भगवता सहोत्सवे भद्राऽऽसनस्थितां भवतीं प्रणन्तुमिच्छवो वेङ्कटाचलमुपाश्रिता देवा दिवि प्रेम नाऽधारयन्निति त्वदुत्सवसङ्कुलतया स्वर्गाऽधिकरमणीयत्वेनाऽचलमिलितानां देवानामप्येतदपेक्षया न्यूनरामणीयके स्वर्गे ऽनादरः संवृत्त इति स्वर्गाऽधिकरमणीयत्वमुत्सवे ऽहिगिरेः प्रतिपादयति ।

मण्डपे स्थितिमतीं भवतीं प्रकर्षेण भक्त्या मन्तुं नमस्कर्तुं इच्छन्ति ते त्रिदिविनो देवाः । अहिगिरिं वृषाऽचलं समाश्रिताः सन्तः दिवि स्पृहां नोपययुः । इममुत्सवं दृष्ट्वा देवाः स्वर्गे निरादरा आसन्निति भावः ॥ २१ ॥

अधिमहं कमले भवतीं स्तुव-
न्नभिमुखः स्तिमितेक्षणमग्रतः ।
अपि सुरेष्वसुरेषु नरेषु वा
शिरसि को रसिको न दधे ऽञ्जलिम् ॥ २२ ॥

अधीति । हे कमले ! ऽधिमहम् उत्सवे ऽभिमुखः स्तिमितेक्षणं स्तब्धचक्षुर्यथा भवति तथा ऽग्रतः पुरः भवतीं स्तुवन् । ष्टुञ् स्तुतावित्यस्माच्छतृप्रत्ययः । सुरेषु देवेषु असुरेषु द्वेष्टृषु नरेषु वा निकृष्टेष्वपि को रसिकः शिरस्यञ्जलिं न दधे ? अपि तु सर्वैरपि प्रणतिः कृतेति भावः ॥ २२ ॥

अधिमहोत्सवमप्सरसां गणैः
सह रमे परभक्तिजुषस्त्वयि ।
पुलकिनः कलगद्गदगीतयो
मुनिजना निजनाट्यमदर्शयन् ॥ २३ ॥

अधीति । हे रमे ! ऽधिमहोत्सवं त्वयि परां भक्तिं जुषन्ते

---

२२ तवोत्सवाऽवसरे निर्निमेषं संमुखीभूयाऽग्रतस्त्वां स्तुवन् देवाऽसुरनरेषु अरसिको ऽपि को वा शिरसि अञ्जलिं न दधाविति सुराऽसुरनरेषु निसर्गाऽरसिकस्यापि अलौकिकतावकोत्सवदर्शने कोऽपि भक्त्युद्रेकः स्फुरतीत्याह ।

२३ तवोत्सवे त्वयि भक्तिभाजो मुनयः सञ्जातरोमाञ्चा मधुरगद्गदगीतयः सन्तस्तथाविधाभिर्देवाऽङ्गनाभिः सह निजनाट्यमदर्शयन्निति देवाऽङ्गनानां मुनीनाञ्च भक्त्यतिशयं दर्शयति ।

ऽत: पुलकिता: सञ्जातरोमाञ्चाः अतः कला अव्यक्तमधुराः गद्गदाः स्खलन्त्य: गीतयो येषां ते मुनिजना ऋषयः अप्सरसां गणै: सह निजनाट्यं स्वनृत्यमदर्शयन् । मातृमहोत्सवं दृष्ट्वा सर्वेऽप्यानन्देन ननृतुरिति भावः ॥ २३ ॥

उपनतोत्सवदिव्यगृहाऽङ्गणः
कमलवासिनि संयमिनां गणः ।
निगमसौरभशोभनया स्तुतिं
स हि गिरा ऽहिगिरावकरोत्तव ॥ २४ ॥

उपेति । हे कमलवासिनि ! उपनतं प्राप्तम् उत्सवस्य दिव्यं गृहाऽङ्गणं येन स: स प्रसिद्धः संयमिनां योगिनां गणः अहिगिरौ वृषाऽद्रौ निगमस्य वेदस्य सौरभेण सम्बन्धेन शोभनया रुचिरया गिरा वाण्या तव स्तुतिं स्तोत्रमकरोत् । योगिनो ऽप्यस्तुवन्निति भावः ॥ २४ ॥

मधुविरोधिपुरन्ध्रि महोत्सवे
शुभगुणग्रथिता किल मालिका ।
स्तवमयी स्तबकैस्तव कैर्गिरा
न कलिता कलिताडनकाङ्क्षिभिः ॥ २५ ॥

मध्विति । हे मधुविरोधिपुरन्ध्रि ! तव महोत्सवे स्तबकैर्गु-

---

२४ उत्सवदिव्यमन्दिराऽङ्गणं प्राप्तो योगिगणो वैदिकैर्मन्त्रैः शेषाऽचले तव स्तुतिमकरोदित्याह ।

२५ हे विष्णुपत्नि ! महोत्सवे शुभगुणैः ( रमणीयैस्तन्तुभि,र्माधुर्यादिगुणैश्च ) गुम्फिता, स्तबकैः ( गुच्छैः, स्तबकाख्यैरवान्तरविरामैश्च ) उपलक्षिता स्तुतिरूपा स्रक् कालविजयाऽऽकाङ्क्षिभिः कैर्वा गिरा नाऽक्रियतेत्याह ।

च्छैरुपलक्षिता शुभैर्गुणैस्तन्तुभिरोजःप्रभृतिभिश्च ग्रथिता गुम्फिता तव स्तवमयी स्तवप्रचुरा । तत्प्रकृतवचने मयट् । मालिका कलेर्युगस्य ताडनं नाशं काङ्क्षन्तीच्छन्ति तैः कैर्नरैः गिरा न कलिता ? तर्हि सर्वैरपि स्तुतेत्यर्थः ॥ २५ ॥

तव महे स्तवकोटिचिकीर्षया
दृगधिका रसनाश्चकमे रमे ।
रचयितुं स्तवमेकरसज्ञया
कृशतमं शतमन्युरतित्रपः ॥ २६ ॥

तव महे इति । हे रमे ! तव महे एका चाऽसौ रसज्ञा च तया । रसज्ञा रसना जिव्हेत्यमरः । कृशतममतिकृशं स्तवं रचयितुं कर्तुम् अत्यन्तं त्रपा यस्य सः शतमन्युः सहस्राक्षः स्तवानां कोटीनां कर्तुमिच्छया दृशः दृष्टेरप्यधिकाः रसज्ञाः चकमे । कमु कान्तौ, कान्तिरिच्छा, अस्मात्कर्तरि लिट् ॥ २६ ॥

तव हरेर्दयिते दृढभक्तित-
श्चतसृभिः श्रुतिभिश्चतुराननः ।

---

२६ उत्सवे तवैकया जिह्वया ऽत्यल्पं स्तवं कर्तुमतीव लज्जमानः सहस्राक्षः स्तवकोटिचिकीर्षया नेत्राऽधिकाः ( सहस्राऽधिका ) जिह्वाः पर्याप्ततया त्वां स्तोतुमाचकाङ्क्षेति त्वत्स्तवकोटेः सहस्राऽधिकरसनासाध्यत्वं कथं चिन्मन्यमानस्तदाचकाङ्क्षेत्याह ।

२७ हे हरिप्रिये ! गाढभक्त्या चतुर्वदनश्चतुर्भिर्वेदैर्हरिहरस्तुतां

अभिनुतिं तनुते स्म महोत्सवे-
ष्वहरहर्हरिहर्यभिनन्दिताम् ॥ २७ ॥

तव हरेरिति । हे हरेर्दयिते ! तव महोत्सवेषु चतुराननो ब्रह्मा दृढभक्तितः चतसृभिः ऋग्यजुःसामाऽथर्वरूपाभिः श्रुतिभिर्वेदैः अहरहः प्रतिदिनमित्यर्थः । हरेण हरिणा च अभिनन्दितां सम्भाविताम् अभिनुतिं स्तुतिं तनुते स्म । विस्तारयामासेत्यर्थः ॥ २७ ॥

जननि गन्धवहैर्भवदुत्सवे
खगपतिः श्रुतिसौरभशोभनैः ।
श्रमहरैर्जनितैर्निजपक्षति-
व्यजनतो जनतोषणमातनोत् ॥ २८ ॥

जननीति । हे जननि ! भवत्याः उत्सवे खगपतिर्गरुडः निजे ये पक्षती पक्षमूले तद्रूपाद्व्यजनतस्तालवृन्तात् । स्त्री पक्षतिः पक्षमूलमित्यमरः । जनितैः श्रुत्याः । तस्य वेदमयत्वात् । तस्याः सौरभेण शोभनैः श्रमहरैर्गन्धवहैर्वायुभिर्जनानां तोषणं तृप्तिमकरोत् ॥ २८ ॥

तनुभृतां तव देवि महोत्सवे
नटनगाननतिस्तवनादयः ।

---

त्वामुत्सवाऽवसरेषु स्तौतीत्याह ।

२८ हे मातः ! भवदुत्सवे भवद्वाहनं वैनतेयस्तस्य वेदमयत्वेन वेदगन्धसुन्दरैः श्रान्तिहारिभिरात्मपक्षरूपतालवृन्तसमुत्थैर्मारुतैर्मिलितानां जनानां सन्तोषमाततानेत्याह ।

२९ देवि ! समुद्रपुत्रि ! तावके महोत्सवे नृत्यगानप्रणामस्तोत्राद-

परमभक्तिभरादिह नाऽभवन्

श्रमकरा मकराऽऽलयकन्यके ॥ २९ ॥

तन्विति। हे मकराऽऽलयस्य सिन्धोः कन्यके ! हे देवि ! तव परमाया भक्तेर्भरात् आधिक्यात् तनुभृतां देहिनां नटनं च गानं च नतिश्च स्तवनं च तान्यादिर्येषां ते । सेवनोद्योगा इति यावत्। श्रमकरा आयासकारकाः नाऽभवन्॥२९॥

पदयुगं तव भक्तिभरादहं-

प्रथामकामुपगम्य सुरस्त्रिया ।

हरिपुरन्ध्रि महे ऽङ्गजितस्फुर-

त्कनकया न कया परिचर्यते ॥ ३० ॥

पदेति । हे हरिपुरन्ध्रि ! तव महे अहं प्रथममित्याग्रहपुरःसरं गमनमहंप्रथमिका। अहं प्रथममिति सुप्सुपेति समासे स्वार्थे कन्। तामुपगम्य प्राप्य अङ्गेन शरीरकान्त्या जितं स्फुरत् कनकं सुवर्णं यया तया कया सुरस्त्रिया देवाऽङ्गनया पदयोर्युगं न परिचर्यते? अपि तु सर्वाभिरपि त्वत्पादसेवा क्रियतइति भावः॥३०॥

दिनकरं तमसामिव राजयः

कमलवासिनि कल्मषपङ्क्तयः ।

---

य आयासकारिणो ऽपि व्यापारा देहिनां भक्त्युद्रेकाच्छ्रमाऽऽधायिनो नाऽऽसन्नित्याह ।

३० हरिपत्नि ! महोत्सवे भक्त्यतिशयादहंपूर्विकां प्राप्य निजशरीरकान्तिविजितस्फुरत्सुवर्णया कया देवाङ्गनया तव चरणयुगलं न सेव्यते ? इत्याह ।

३१ कमलवासिनि ! तावकमहोत्सवदर्शिनं नरं पापपरम्परा सूर्य-

अपि विलोकयितुं प्रभवन्ति ते
जनमहो न महोत्सवदर्शिनम् ॥ ३१ ॥

दिनेति । हे कमलवासिनि ! दिनकरं तमसां राजयः पङ्क्तय इव ते महोत्सवं पश्यति स महोत्सवदर्शी तं जनं कल्मषाणां पापानां पङ्क्तयः । पापं किल्बिषकल्मषे, वीथ्यालिरावलिः पङ्क्तिरित्यमरौ । विलोकयितुमपि न प्रभवन्ति, तत्र साक्षात्तद्व्यथाकरणं कुत ? इति भावः ॥ ३१ ॥

तव महे सुरमानवदानव
प्रभृतिपादहतिप्रभवै रमे ।
क्षितिरजोनिचयैः स्थगिताऽऽतपो
दिनकरो न करोति जनव्यथाम् ॥ ३२ ॥

तवेति । हे रमे ! सुराश्च दानवाश्च ते प्रभृतयो येषु तेषां पादानां हतेस्ताडनात् प्रभव उत्पत्तिर्येषां तैः । क्षितिरजसां निचयैः समूहैः स्थगित आच्छादितः आतपः प्रकाशो यस्य स दिनकरः सूर्यः जनव्यथां न करोतीत्ययोगे योगकल्पनात्सम्बन्धाऽतिशयोक्तिरलङ्कारः ॥ ३२ ॥

---

मन्धकारराशय इव विलोकयितुमपि न प्रभवन्तीति निखिलपापविनाशस्त्वदुत्सवदर्शनस्य फलमित्याह ।

३२ उत्सवे देवदानवमानवादीनां तद्दर्शनाय मिलितानां पादघातसमुत्थितैर्भूरेणुपटलैराच्छादिताऽऽतपो दिनकरो घर्मजन्य जनपीडां न करोतीति महान्तं जनसंमर्दं वर्णयन्नाह ।

अथ तवाऽऽस्यविधोरवलोकनात्
सुरकराऽम्बुरुहाणि महोत्सवे ।
मुकुलितान्युडुपङ्क्तिपरिस्फुर-
न्नवरदे वरदे कमलाऽऽलये ॥ ३३ ॥

अथेति । हे उडूनां नक्षत्राणां पङ्क्तिवत् स्फुरन्तः शोभमाना नवरदा रुचिरदन्ता यस्यास्तत्सम्बुद्धौ, हे वरदे ! हे कमला-लये ! तवाऽऽस्यविधोर्मुखचन्द्रस्याऽवलोकनान्महोत्सवे सुराणां कराऽम्बुरुहाणि हस्तकमलानि मुकुलितानि । सर्वैरपि करसम्पुटाः कृता इति भावः ॥ ३३ ॥

मुकुलितं लपनेन कराऽम्बुजै-
र्मुदितमक्षिचकोरकुलैः सताम् ।
तव महे ऽम्ब हरौ नयनीभव-
द्द्विविधौ विविधौजसि भात्यपि ॥ ३४ ॥

मुकुलितमिति । हे ऽम्ब ! तव महे ऽनयने नयने भवन्तौ,

---

३३ हे नक्षत्रराजिवद्विद्योतमानदशने ! वरदायिनि ! देवि ! तव महोत्सवे देवहस्तरूपाणि कमलानि त्वदीयमुखचन्द्राऽवलोकाद् मुकुलितानीति देवकराणामञ्जलिबन्धं प्रतिपादयति ।

३४ हे अम्ब ! तवोत्सवे नयनताऽऽपन्नसूर्यचन्द्रे ऽत एव विविधतेजसि भगवति भासमाने ऽपि त्वदीयाऽऽननेन (चन्द्ररूपेण) करणेन सज्जनानां करकमलैर्मुकुलितं, नेत्रचकोरैश्च प्रमुदितमिति भगवद्वामनयनस्वद्वदनरूपचन्द्रद्वयेन भगवद्दक्षिणाक्षिभूतस्याऽसहायस्य सूर्यस्य तेजोऽव्याघाताच्चन्द्रकार्यमेवाऽजनि न सूर्यकार्यमिति बोधयन् प्रणमतां सतां तवोत्सवो नयनाऽऽनन्दको ऽभूदित्याह ।

च्छ्यन्तमेतत् । रविविधू यस्याऽतः विविधम् ओजस्तेजः यस्मिन् तस्मिन् हरौ विष्णौ भाति सत्यपि तव लपनेन मुखेन्दुना सता कराऽम्बुजैः मुकुलितम् । च परमक्षीण्येव चकोरकुलानि तैर्मुदितम् । दिवा नभसि सूर्याचन्द्रमसोः सत्त्वे ऽपि पद्मविकासादिसूर्यकार्यमेव भवति न कुमुदविकसनम्, तदत्र सूर्यकार्यमसच्चन्द्रकार्यं जातमिति स्वमुखनिष्कलङ्कचन्द्रभगवद्वामनेत्रचन्द्रोभयमाहात्म्यमिति भावः ॥ ३४ ॥

तव सिषेविषया विषयान्तर-
त्यजननिश्चलचेतस उत्सवे ।
प्रजहुरम्ब तपो ऽपि पराशर-
प्रभृतयो भृतयोगकलाः स्वयम् ॥ ३५ ॥

तवेति । हे ऽम्ब ! तवोत्सवे भृतयोगकलाः पराशरप्रभृतयो मुनयो ऽपि अन्ये विषया विषयान्तराणि । मयूरव्यंसकादिः । तेषां त्यजनेन निश्चलं चेतो येषां ते सन्तः । सिषेविषया तपो ऽपि जहुः । इति तपसो ऽप्यधिकं त्वत्पूजनमिति भावः ॥३५॥

सुमनसो मुनयश्च तवोत्सवे
त्रिदिवधेनुपयोरसधारया ।

---

३५ तवोत्सवे विषयान्तरत्यागेनैकाग्रचित्ताः पराशरादयो योगिनः सेवनेच्छया तपो ऽपि त्यक्तवन्त इत्याह ।

३६ अथोत्सवे पूजाविधिं वर्णयिष्यन्नादौ देवा मुनयश्च कामधेनु-

विरचयन्त्यभिषेकविधानमु-

च्छ्रयजुषां यजुषां प्रकरै रमे ॥ ३६ ॥

सुमनस इति। हे रमे! उच्छ्रयं श्रैष्ठ्यं जुषन्ते सेवन्ते तेषां यजुषां, यजुरुपनिषदामिति यावत्। प्रकरैः समूहैः सुमनसो देवा मुनयश्च तव उत्सवे त्रिविधधेन्वाः पयोरसस्य दुग्धस्य धारया ऽभिषेकस्य विधानं विधिं विरचयन्ति ॥ ३६ ॥

विधिशिवाऽऽदिसुरेषु तवोत्सवे

विरचयत्स्वभिषेचनमिन्दिरे।

मनुशतं मुनिमाणवकाः स्फुट-

ध्वनि जगुर्निजगुर्वभिचोदिताः ॥ ३७ ॥

विधीति। हे इन्दिरे! तव उत्सवे विधिश्च शिवश्च आदी येषां तेषु सुरेषु अभिषेचनं विरचयत्सु सत्सु निजेन गुरुणा ऽभिचोदिताः प्रेरिताः मुनीनां माणवका बटवः स्फुटः ध्वनिः स्वरः यस्मिन् तन्मनूनां मन्त्राणां शतं जगुः उच्चारयामासुरित्यर्थः ॥ ३७ ॥

तव महेष्वभिषेकविधौ कृते

जगदशेषमगादपतापताम्।

---

क्षीररसधारया उत्कृष्टयजुःसमूहैस्ते स्नपनविधिं विरचयन्तीत्याह।

३७ त्वदीये उत्सवे ब्रह्मशिवादिदेवेषु तवाऽभिषेचनं कुर्वत्सु निजगुरुप्रेरिता मुनिबटवः असङ्कीर्णस्वरं मन्त्रशतं जगुरित्याह।

३८ तवोत्सवेषु अभिषेकविधौ संपादिते निखिलं जगदपगतताममभूदिति विस्मयास्पदं, यतः फलिस्थलात् (फलाऽधिष्ठानात्, वृक्षाद्)

तदिदमद्भुतमम्ब फलिस्थलात्
फलगतिर्लगति स्म परत्र यत् ॥ ३८ ॥

तवेति । हे अम्ब ! महेषु तवाऽभिषेकविधौ कृते सति अपगतो नष्टः तापो यस्य तस्य भावस्तत्ता ताम् । अशेषं कृत्स्नं जगत् आप प्राप । तदिदमद्भुतम् ! तदेवाऽऽह । फलिस्थलात् फलिस्थानं परित्यज्येत्यर्थः । ल्यब्लोपे कर्मण्यधिकरणे चेति पञ्चमी । फलगतिः फलप्राप्तिः परत्राऽन्यत्र लगति सङ्गच्छतीत्युभयत्राऽप्यसङ्गत्यलङ्कारः । लगे सङ्गे इत्यस्मात् कर्तरि लट् । अत्र अभिषेकफलं तापशान्तिः सा यत्राऽभिषेकस्तत्र भवितव्या(?) । सा तत्र असती सती अन्यत्र जगति जायते स्म । इत्ययमद्भुताऽऽकारो ज्ञेयः सरसधुरीणैः ॥ ३८ ॥

अथ तवोत्सवधाम्नि बुधाः सुधा-
करसहोदरि साऽऽदरमर्चयन् ।
सुरहिते भवतीं श्रुतषट्पदा-
ऽऽरवकुलैर्वकुलैरपि चम्पकैः ॥ ३९ ॥

अथेति । हे सुरेभ्यो हितकारिणि ! हे सुधाकरस्य सहोदरि ! अथ तव उत्सवस्य धाम्नि गृहे बुधाः । ज्ञातृचान्द्रसु-

---

अन्यत्र फलगतिः ( अर्थनिष्पत्ति,राम्रादिफलोत्पत्तिश्च ) सम्बध्यते । वृक्षेषु फलोत्पत्तिप्रसिद्धेस्ततोऽन्यत्र तदुत्पत्तिरदृष्टपूर्वा, परमभिषेकस्त्वयि, तापोपशमश्च जगतीति विस्मयाऽऽवहमिति वदन् तथाऽऽभिषेककरणं निखिलतापनाशकमित्याह ।

३९ हे देवहितकारिणि ! चन्द्रसहोदरि ! स्नपनानन्तरं देवा उत्सवमन्दिरे भवतीं कर्णगोचरीभूतभ्रमरझङ्कारैर्वकुलकुसुमैश्चम्पकपुष्पैश्चाऽऽदरेणाऽपूपुजन्नित्याह ।

रा बुधा इति हेमचन्द्रः । श्रुताः षट्पदानां भ्रमराणामारवाणां शब्दानां कुलानि येषु तैर्वकुलानां पुष्पाणि वकुलानि । पुष्पमूलेषु बहुलमित्यणो लुक् । तैः चम्पकपुष्पैरपि भवतीमादरेण सहितं यथा भवति तथा ऽऽर्चयन् पूजयामासुरित्यर्थः ॥ ३९ ॥

मधुलिहां भवदङ्घ्रिसमर्पित-
प्रसववासवतां कमले तदा ।
सुरकिरीटगताज्जगृहे भिदा
रवलवैर्बलवैरिशिलाकुलात् ॥ ४० ॥

मध्विति । हे कमले ! तदा ऽर्चनसमये सुराणां किरीटेषु गतादुच्छ्रिताद्बलवैरिशिलानामिन्द्रनीलमणीनां कुलात्समूहाद्भवत्या अङ्घ्रयोः समर्पितेषु प्रसवेषु । प्रसवस्तु फले पुष्पे इत्यमरः । वासो वसतिरस्ति येषां तेषां मधुलिहां भृङ्गाणां भिदा भेदः रवाणां शब्दानां लवैः जगृहे । अत्र मधुलिहेन्द्रनीलयोर्नीलिम्ना भेदाऽभावेपि शब्दकरणभेदमात्रेण भेदकथनादुन्मीलितमलङ्कारः ॥ ४० ॥

सुमनसो भवदङ्घ्रिजुषां रमे
सुमनसामनुषङ्गत उत्सवे ।

---

४० कुसुमार्चनाऽवसरे भवच्चरणसमर्पितपुष्पसौरभलाभोपगतानां मधुव्रतानां झङ्कारैश्चरणनतदेवमौलिगतनीलोपलनिकराज्जनैर्भेदो ज्ञात इति चरणयोः पुष्पसौरभलोभमिलितानां नतदेवकिरीटगतनीलोपलानां च नीलत्वेनैक्यप्रतिभासेपि झङ्कारैर्भ्रमराणां ततो भिन्नत्वग्रहः समजनीत्याह ।

४१ उत्सवसमये कुसुमसम्बन्धाद्भवच्चरणलग्नां मलिनामपि भ्रमरततिं देवा अर्चयामासुः, कुसुमसम्बन्धाच्चरणलग्नानां तेषां

तव पदाऽम्बुजभाजमपूजयन्

सुमलिनामलिनामपि मण्डलीम् ॥ ४१ ॥

सुमनस इति। हे रमे! भवत्याः अङ्घ्रिजुषां पदसेविनां सुमनसां पुष्पाणाम् अनुषङ्गादित्यनुषङ्गतः। सञ्ज सङ्गे इत्यस्माद्घञि चजोः कुघिण्ण्यतोरिति कुत्वम्। उपसर्गात्सुनोतीति षत्वम्। उत्सवे तव पदयोरन्तिकं भजति ताम्। उपकण्ठाऽन्तिकाऽभ्यर्णेत्यमरः। सुष्ठु मलिनामपि। मलीमसं तु मलिनमित्यमरः। अलीनां मण्डलीं सुमनसो देवा अपूजयन्। त्वत्साङ्गिसंसर्गेऽपि देवैः पूज्यते तस्यास्तव माहात्म्यं किमु केन कथं वक्तव्यमिति भावः॥ ४१ ॥

स्वशिरसा दधतः कुसुमं मुदा

सुमहिता इति नाऽद्भुतमुत्सवे।

चरणयोः सुरपङ्क्तिभिरर्पितं

तव नरा वनराशितनूभवे ॥ ४२ ॥

स्वशिरसेति। हे वनराशेस्तनूद्भवे! उत्सवे तव चरणयोः सुरपङ्क्तिभिः अर्पितं दत्तं कुसुमं स्वशिरसा मुदा दधतः नराः

---

चरणपूजने स्वत एव पूजा समपद्यतेति वदन् त्वच्चरणलग्नाः अपरे अपि देवैरपि पूज्यन्ते इति चरणमाहात्म्याऽतिशयं दर्शयति।

४२ हे जलधिसुते! त्वच्चरणयोः सुरसमूहसमर्पितं कुसुमं शिरसा वहन्तो नराः सुमहिताः (कुसुमहिताः, साधु पूजिताश्च) इति पुष्पधारिणां पुष्पहितत्वे नाऽद्भुतमिति वदन् त्वच्चरणनिर्माल्यधारिणां पूज्यत्वं भवतीति प्रतिपादयति।

सुमहिता इति नाऽद्भुतम् । कुसुमधारका हि सुमहिताः, ये च कुसुमहितास्ते सुमहिता एव, न ततो ऽन्ये इति चित्राऽभावाऽऽकारः ॥ ४२ ॥

पनसचूतफलादिभिरुज्ज्वलं
सरससूपमपूपशताऽऽवृतम् ।
अथ निवेदनमम्ब सुरैः क्षरद्-
घृतवरं तव रम्यमकल्प्यत ॥ ४३ ॥

पनसेति । हे ऽम्ब ! पनससंज्ञकैश्चूतसंज्ञकैः फलादिभिरुज्ज्वलं रुचिरं रसैर्मधुरादिभिः सूपेन च सहितं अपूपानां शतैः आवृतं युक्तम् । पूपो ऽपूपः पिष्टक इत्यमरः । क्षरता स्रवता घृतेन वरं घृतप्लुतमिति यावत् । रम्यं निवेदनं नैवेद्यं सुरैस्तवाऽकल्प्यत समर्पितम् ॥ ४३ ॥

जननि शेषतया भृशमुत्सुकै-
स्तव निवेदितशेषमभुज्यत ।
सुमधुरं सुमनोभिरथोत्सवा-
ऽपवरके वरकेतनभूषिते ॥ ४४ ॥

जननीति । हे जननि! अथ तव निवेदिताच्छेषम् अतः सु-

---

४३ पुष्पपूजाऽनन्तरं च पनसाऽऽम्रफलादिशोभितनानाविधपिष्टकयुक्तं स्रवद्घृतधारं सस्वादुसूपं रम्यं नैवेद्यं सुरैरकल्प्यतेत्याह ।

४४ अथ श्रेष्ठध्वजविभूषिते तवोत्सवमन्दिरे बहिर्गतनिर्माल्यादिप्रक्षेपस्थाने ऽत्युत्कण्ठितैर्देवैस्तव निवेदितशेषस्तवदुच्छिष्टतया ऽतिमधुरः समभुज्यतेत्याह ।

मधुरं भृशम् उत्सुकैः सुमनोभिर्देवैः शोषतया वरेण केतनेन ध्वजेन भूषिते उत्सवस्याऽपवरके स्थाने ऽभुज्यत भक्षितम् ॥ ४४ ॥

अथ सुधान्यभवं जनमोदनं
जननि मानसरञ्जनमोदनम् ।
भवदवेक्षणसंस्कृतमत्ति यो
रसनया स न याचति तां सुधाम् ॥ ४५ ॥

अथेति । हे जननि ! अथ सुधान्याद्भवं एवं जनान्मोदयति तं च मानसस्य हृदो रञ्जनं च भवत्या अवेक्षणेन संस्कृतं पवित्रमोदनं यः पुमान्रसनया जिव्हया अत्ति स नरः तां सुधां न याचतीति । नैवेद्यपावित्र्ये प्रमाणम् भागवते एकादशे 'त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः । उच्छिष्टभोजिनो दासास्तव मायां जयेमहि' । व्यासो ऽपि । 'विष्णोः पादोदकं जुष्टं नैवेद्यस्य च भक्षणम् । निर्माल्यं शिरसा धार्यं महापातकनाशकम् ॥ इति ॥ ४५ ॥

अधिभवद्भवनाऽग्रवितर्दिकं
जननि जाग्रत एव जयाऽऽदयः ।

---

४५ अथ शोभनशालिसंसाधितं जनमनःसंतोषप्रदं भवत्या दर्शनेन संस्कृतमोदनं यो नरो ऽश्नाति स प्रसिद्धमाधुर्यां सुधां न वाञ्छतीति भवन्निवेदितस्यौदनस्य सुधाऽधिकं माधुर्यमित्याह ।

४६ तव महोत्सवे भवन्मन्दिरबहिर्वेदिकागताः सावधाना दौवा-

अगणयन्नमरानपि तावके
घनमहे न महेन्द्रपुरःसरान् ॥ ४६ ॥

अधीति । हे जननि ! भवत्याः भवनस्याऽग्रवितर्दिकाया-मित्यधिभवद्भवनाऽग्रवितर्दिकम् । स्याद्वितर्दिस्तु वेदिका इत्य-मरः । जाग्रतो जयाऽऽदयो द्वारपालाः । नाऽभ्यस्ताच्छतुरिति नुमभावः । तावके त्वत्संबन्धिनि घने निबिडे महे उत्सवे महेन्द्रः पुरःसरो येषु तानप्यमरान्नाऽगणयन् तत्राऽन्येषां का कथेति भावः ॥ ४६ ॥

जनविमर्दशमोद्यतनिर्दयो-
द्भटचमूपतिवेत्रहतिस्पृशाम् ।
प्रहृतिरस्ति मदम्ब महे तवा-
ऽर्चनकृतां न कृतान्तकृता ऽन्ततः[1] ॥ ४७ ॥

जनेति । हे मदम्ब ! महे तवाऽर्चनकृतां जनानां विमर्दस्य शमे प्रशमने उद्यतानाम् अतः निर्दयानाम् उद्भटचमूपतीनां वेत्रस्य हतिं ताडनं स्पृशन्ति तेषां प्रहृतिः प्रहारः यतो ऽस्ति ततः कृतान्तेन यमेन कृता नेत्यर्थः ॥ ४७ ॥

तव महोत्सववैभवदर्शिनां
तनुभृतां विविधैः स्तवनाऽऽदिभिः ।

रिका जयविजयादयो महेन्द्रादिदेवानपि निवारयन्तो नाऽऽद्रियिरे किं पुनरन्यान्, इत्याह ।

४७ जनविमर्दप्रशमनोद्युक्तपरुषोद्दण्डसेनापतिवेत्राऽऽहतानामुत्सवे त्वत्पूजाकारिणां जनानामन्ततो(मरणोत्तरं)यमदण्डभयं नास्तीत्याह ।

४८ त्वन्महोत्सवाऽवलोकिनां प्राणिनां नानाविधस्तुतिभिस्तुष्टा त्वं

---

[1] कृतान्तकृता ततः इति १—२ पु० पा० ।

प्रमुदिता कमले भवती सती-

रपरिपूः परिपूरयति श्रियः ॥ ४८ ॥

तवेति । हे कमले ! तव महोत्सवस्य वैभवं पश्यन्ति तेषां तनुभृतां प्राणिनां विविधैः स्तवनादिभिः शुश्रूषाभिरिति यावत् । प्रमुदिता भवती सती शोभना एवं अपगता रिपवो याभ्यस्ताः श्रियः परिपूरयति ददातीत्यर्थः ॥ ४८ ॥

जननि तस्य जनस्य वृथा सुधा-

सहभवे विदधे विधिरीक्षणे ।

य इह नाऽनुभवेदलसस्तवो-

त्सवरसं वरसंमदकारणम् ॥ ४९ ॥

जननीति । हे सुधायाः सहभवे भगिनि ! इह यः अलसो नरः वरस्य संमदस्य कारणम् । प्रमोदाऽऽमोदसंमदाः, हेतुर्ना कारणं बीजमित्यमरः । तवोत्सवस्य रसं स्वादं नाऽनुभवेदनुभवगोचरं न कुर्यात् तस्य नरस्य ईक्षणे नयने । लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी इत्यमरः । विधिर्ब्रह्मा वृथा निष्फले विदधे चकारेत्यर्थः ॥ ४९ ॥



शोभना निःसपत्नाः श्रियः परिपूरयसीति महोत्सवदर्शनस्तुतिफलं प्रतिपादयति ।

४९ हे सुधासोदरि ! अलसो यस्तव प्रमोदकरमुत्सवं नाऽवलोकयति विधिस्तस्य नेत्रे वृथा विदधे इति उत्सवदर्शनाऽलसस्य नयननैष्फल्यं प्रतिपादयति ।

भवदीयोत्सवविभवं
फणिपतिवाचस्पतिप्रभृतिवर्ण्यम् ।
कथमल्पीयःकवयः
कथयन्तु क्षीरनीरधेः कन्ये ॥ ५० ॥

इति श्रीमद्वेङ्कटाऽध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे
उत्सवस्तबको द्वादशः सम्पूर्णः ॥ १२ ॥

भवदीयेति । हे क्षीरनीरधेः कन्ये ! फणिपतिः शेषः, वाचस्पतिर्बृहस्पतिः, तौ प्रभृती आदी येषु तैः वर्णयितुं योग्यं वर्ण्यं भवदीयस्य त्वत्सम्बन्धिन उत्सवस्य विभवं माहात्म्यम् अल्पीयांसः मत्सदृशा लघवः इत्यर्थः । कवयः कथं कथयन्तु प्रभन्तु ? अपि तु मादृशमन्दमतीनां वर्णने अधिकारो ऽपि नास्ति, तथापि शिशुना मया मातुस्तव तुष्टिकारकं किमपि प्रजल्पितमिति भावः ॥ ५० ॥

इति श्रीमद्रावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन
विरचितायां बालबोधिन्याख्यायां श्रीलक्ष्मी-
सहस्रटीकायाम् उत्सवस्तबको द्वादशः
सम्पूर्णो ऽभवत् ॥ १२ ॥

---

५० हे दुग्धोदधिपुत्रि ! शेषबृहस्पतिप्रमुखैः सहस्रवदनतया वाक्पतित्वेन च प्रथितैर्वर्णनीयं भवदुत्सवमाहात्म्यं क्षोदीयांस एकमुखा अल्पप्रज्ञाश्च कवयः कथङ्कारं वर्णयन्तु? इति साकल्येन तद्वर्णने आत्मनो ऽसामर्थ्यं बोधयन् स्तबकं समापयति ।

इति श्रीगानवल्ल्युपाह्वनीलकण्ठरामशास्त्रिविरचितायां लक्ष्मी-
सहस्राऽवतरणिकाश्रेणिकायामुत्सवस्तबकः ॥ १२ ॥



## अथौदार्यस्तबकः ॥ १३ ॥

सेतुं बध्नन्ननायत्तामपि लङ्कां बिभीषणे ।
औदार्यादर्पयामास स रामः श्रेयसे ऽस्तु नः ॥ १३ ॥

अथाऽस्मिंस्त्रयोदशस्तबके लक्ष्म्या औदार्यं वर्णयितुं प्रथमपद्ये वदान्यतामिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

वाराशिदुहितुस्तस्या वरिवस्यां विदध्महे ।
अनन्यजनसामान्यामाहुर्यस्या वदान्यताम् ॥ १ ॥

वाराशीति । समानमेव सामान्यम्[१] ब्राह्मणादित्वात् ष्यञ् । अन्यैर्जनैः सामान्या न भवति तामसाधारणामिति भावः । यस्या वदान्यतां दातृत्वमाहुः तस्या वाराशेर्दुहितुः पुत्र्याः । वरिवस्या तु शुश्रूषा इत्यमरः । तां विदध्महे कुर्मः । पथ्यावक्त्रं युग्मविपुला वा वृत्तम् । उदात्तालंकारः, भेदकाऽतिशयोक्तिश्च ॥ १ ॥

द्वित्वं चेदधिरसनं विलोचनेषु
त्रित्वं वा यदि वदनेषु वा चतुष्ट्वम् ।
यद्वा स्यादधिभुजमेतदेव वक्तुं
दातृत्वं तव कवयस्तदा क्षमेरन् ॥ २ ॥

द्वित्वमिति । अधिरसनं रसनायां द्वित्वं शेषत्वमित्यर्थः । विलो-

---

१ अथौदार्यस्तबकं त्रयोदशमारिप्सुर्यस्या औदार्यम् अनितरसाधारणं जना निष्प्रतिरवं मन्यन्ते तस्याः सागरसुतायाः शुश्रूषां कुर्म इत्याह ।

२ हे अम्ब । कवीनां सहस्राऽऽननशेषरूपत्वं त्रिनेत्रशिवरूपत्वं चतुर्वदनब्रह्मरूपत्वं चतुर्भुजहरिरूपत्वं वा स्याच्चेत् तर्हि ते तव वादान्यकं वर्णयितुं क्षमेरन्, तदभावात्कवीनां तवौदार्यमशक्यवर्णनं, तदन्तःपातित्वादेव ममापि तद्वर्णनमशक्यमित्यर्थासिद्धमेवेत्याह ।

घनेषु त्रित्वं शिवत्वमित्यर्थः। चतुष्टमित्यस्य देहलीदीपन्यायेनोभयत्र संबन्धाद्वदनेषु चतुष्टं ब्रह्मत्वम्, अधिभुजं बाहौ चतुष्टं विष्णुत्वं वा यद्यदा स्याद्भवेत् तदा तव दातृत्वं वक्तुं कवयः काव्यकर्तारः क्षमेरन्। अत्र यदीत्थं स्यादित्यर्थस्फुरणात्सम्भावनं, पर्यायोक्तं चाऽलङ्कारः। प्रहर्षिणीवृत्तम् ॥ २ ॥

यः पिबेज्जलधिमम्ब यस्तरेद्
यश्च तत्र नियतं शयीत वा।
तेन वर्णयितुमर्णवाऽऽत्मजे
शक्यते तव वदान्यता न वा ॥ ३ ॥

य इति। हे ऽर्णवाऽऽत्मजे! यः जलधिं पिबेत् अगस्त्यः, यस्तरेन्मारुतिः, नियतं सदा यश्च तत्राऽर्णवे शयीत हरिस्तेन तव वदान्यता वर्णयितुं शक्यते न वा। अत्युक्तिः पर्यायोक्तं चालङ्कारौ। रथोद्धतावृत्तम ॥ ३ ॥

अम्ब त्वमेवाऽऽश्रितमृत्युहन्त्री
सनातनी सर्वफलप्रदाऽसि।

---

३ हे समुद्रपुत्रि! यः समुद्रं पिबेत्, तं तरेद्वा, तत्र शयीत वा, तेनैव तवौदार्यं शक्यवर्णनमिति वदन् अगस्त्यहनूमद्धरय एव तथाकारिणस्त्वद्दातृत्ववर्णने शक्ता नान्ये इत्याह।

४ हे अम्ब! नित्या त्वमेवाऽऽश्रिताऽमरत्वप्रदाऽसि, स्वयं पञ्चत्वं (मृत्युं, पञ्चसंख्याकत्वं च) उपाश्रितेभ्यः सुरतरुभ्यः को वा फलं लभताऽमिति त्वदग्रे प्रेतानां तेषां फलदानसामर्थ्यं कुत इति य-

स्वयं च पञ्चत्वमुपाश्रितेभ्यो
देवद्रुमेभ्यो लभतां फलं कः ॥ ४ ॥

अम्बेति। हे अम्ब! आश्रितानां मृत्युं हन्ति नाशयति सा सनातनी चिरन्तनी तथा सर्वाणि मोक्षादीनि फलानि प्रददाति सा त्वमेवाऽसि ततः स्वयं पञ्चत्वं पञ्चसङ्ख्याकत्वम् उपाश्रितेभ्यो देवद्रुमेभ्यः कल्पवृक्षेभ्यः फलं कः पुमान् लभता? मिति काकुः। अत्र पञ्चत्वं मरणधर्मवत्त्वं कल्पद्रुमेषु दोषः। इयं तु सनातनीति। पञ्चता पञ्चभावे स्यात्पञ्चता मरणेऽपि चेति विश्वः। उपजातिवृत्तम् ॥ ४ ॥

तामत्युदारां कमले भजे त्वां
यया सुधाऽब्धौ सहजन्ममात्रात्।
एकस्तरुर्लुब्धवतंसकोऽन्यः
पशुश्च कश्चित्प्रथितो वदान्यः ॥ ५ ॥

तामिति। हे कमले! सुधाऽब्धौ यया सह समं जन्ममात्रादुत्पत्तिकारणेनैवैकः कश्चित्तरुः स्थावरः कल्पद्रुः लुब्धः

---

ननु भगवत्या वादान्यकं कल्पवृक्षाऽतिशायीति प्रतिपादयति।

५ अथ लोकप्रसिद्धं कल्पवृक्षकामधेन्वादीनां वादान्यकं महावदान्यायास्तव सम्बन्धादेवेत्याशयेन सुधासागरं सहोत्पत्तिमात्रादेव लुब्धवतंसकः (किसलयलुब्धानां कर्णाभरणं, कृपणश्रेष्ठश्च) एकः कल्पवृक्षः, पशुः (चतुष्पदतया मूढः, कामधेनुश्च) जगति वदान्यतया प्रसिद्ध इति यत्सम्बन्धात् कृपणपशुरूपयोः कल्पतरुकामधेन्वोर्वादान्यकप्रसिद्धिस्तस्यास्ते औदार्यगुणो निरवधिक इत्यत्युदारां त्वामेवान्यान्विहायाश्रये इत्याह।

वतंसकः शेखरः येन कृपणश्रेष्ठश्च । अन्यः कश्चित्पशुश्च कामधेनुर्न्नानशून्येति ध्वनिः । वदान्यो दातेति प्रथितः प्रख्यातः ताम् अत्युदारां त्वां भजे सेवयामि । अत्र लक्ष्म्या गुणवर्णनेनाऽन्यगुणवर्णनादुल्लासालङ्कारः । उपजातिवृत्तम् ॥५॥

त्वमम्ब दात्रीति किमत्र चित्रं
त्वद्वासदेशेऽपि न लोभवार्ता ।
निदर्शनं तत्र भवन्निवासः
सर्वस्वदायी स वृषाऽद्रिनाथः ॥ ६ ॥

त्वमिति । हे ऽम्ब ! त्वं दात्री, दानशीला इत्यत्र किं चित्रम् ? यतः तव वासदेशे वासस्थाने ऽपि लोभवार्ता नास्ति । तत्र त्वद्दातृत्वे भवत्या निवासो वासस्थानं वृषाऽद्रेर्नाथः वेङ्कटपतिः श्रीनिवासः निदर्शनं प्रमाणम् । तत्र नलः नरः मनुष्या अभवा आर्ता भवेनाऽऽर्ता न भवन्ति तथोक्ताः । एवं च न लोभवार्ताः सन्ति । अतः सर्वस्वदायी स्वमात्मानं ददातीति । तदुक्तमध्यात्मे सीताशुद्ध्यनन्तरं हनुमन्तं प्रति श्रीरामेण । 'इदानीं ते प्रयच्छामि सर्वस्वं मम मारुते । इत्यालिङ्ग्य समाकृष्य गाढं वानरपुङ्गव'मिति । काव्यलिङ्गमलङ्कारः । उपजातिवृत्तम् ॥ ६ ॥

---

६ हे अम्ब ! त्वं वदान्येत्यत्र को विस्मयः ? यत्र त्वं निवससि तत्रापि लोभचर्चैव न भवति, अत्र त्वदाश्रितभक्तेभ्यः सर्वस्वदायी भगवान् श्रीनिवास उदाहरणमित्याह ।

औदार्यमास्तां नृहरेर्य एष
हिरण्यदानाऽवसरे सरोषः ।
साऽऽनन्दमिष्टं सकलं ददत्याः
स्तुत्यं वदान्यत्वमिदं भवत्याः ॥ ७ ॥

औदार्यमिति । यो हिरण्यस्य सुवर्णस्य दानस्य वितरणस्याऽवसरे सरोषः सक्रोधः तस्य नृहरेः औदार्यम् आस्ताम्, इत्युक्ते हिरण्याऽसुरस्य दानस्य खण्डनस्याऽवसरे सरोष इतिश्लेषः । किं तु आनन्देन सहितं यथा तथा इष्टं ददत्या भवत्या लक्ष्म्या वदान्यत्वं स्तुत्यं स्तुत्यर्हमित्यर्थः ! दानं गजमदे त्यागपालनच्छेदकर्मस्विति मेदिनी । व्यतिरेकालङ्कारः । उपजातिवृत्तम् ॥ ७ ॥

देहि देवि दयया निरामया-
मत्र च श्रियममुत्र च स्वयम् ।
सञ्चरेम न यथा वयं मुहु-
र्याचका इह पिशाचका इव ॥ ८ ॥

देहीति । हे देवि वयं मुहुः पुनः पुनः याचकाः सन्तः पिशाच-

---

७ नृहरेर्भगवतः प्रसिद्धमप्यौदार्यं न तथा, यतः स हिरण्यदानावसरे (सुवर्णवितरणसमये, हिरण्यकशिपुविदारणसमये च) सकोपः, अर्थिभ्यः सकलमीप्सितं सहर्षं ददत्या भवत्यास्तु वदान्यत्वमतिश्लाघ्यमित्याह ।

८ हे देवि ! कृपया स्वयमिहाऽमुत्र च निर्बाधां श्रियमस्मभ्यो देहि, येनेह वयं याचकाः सन्तः कुत्सिताः पिशाचा इव न संचरेमेत्याह ।

का इवेह लोके यथा न सञ्चरेम सञ्चारं न कुर्याम तथा दयया निरामयामनपायिनीम् अत्रेह लोके ऽमुत्र परलोके च स्वयं श्रियं देहि वितरेत्यर्थः । रथोद्धतावृत्तम् ॥ ८ ॥

त्वमेव सर्वकाङ्क्षितप्रदा पदाऽब्जसेविनां
वदान्यतागुणस्तु ते वदाऽन्यतः क्व दृश्यते ।
सुधापयोधिकन्यके मुधा समुन्नतिस्पृशा
न दानवारिदारुणोत्तमेन विद्यते फलम् ॥ ९ ॥

त्वमिति! हे सुधापयोधेः कन्यके ! मुधा समुन्नतिम् उच्चत्वमौद्धत्यं च स्पृशति दधाति तेन स्थावरत्वादनेन फलं न विद्यते । तर्हि पदाऽब्जसेविनां पुंसां सर्वं काङ्क्षितमिष्टं प्रददाति सा त्वमेवाऽसि । अतस्ते ऽन्यतः त्वद्भिन्ने वदान्यताया औदार्यस्य गुणः क्व दृश्यते ? इति वद, त्वदन्यो वदान्यः को ऽपि नास्तीति भावः । अत्र उत्तमेन दानवारीणां देवानां दारुणा वृक्षेण फलं न विद्यते । कुत इति चेद, स हि दानं वारयति निवारयति तच्छीलोपि दारुणेषूत्तम इति श्लेषेण फलाऽभावसमर्थनम् । पञ्चचामरं वृत्तम् ॥ ९ ॥

श्रीवत्सजुष्टं स्थलमाश्रिता त्वं
मनोहराक्षीरचिताऽऽश्रितश्रीः ।

---

९ हे सुधासागरसुते ! चरणकमलसेविनां त्वमेव सर्वेष्टप्रदाऽसि, औदार्यगुणस्तु त्वत्तो ऽन्यत्र क्व दृश्यते ? कथय, वृथाप्रवृद्धेन दानवारिदारुणोत्तमेन ( श्रेष्ठेन कल्पवृक्षेण, दानवारकेण अत एव कठिनतमेन च ) किं फलं प्राप्यते ? अतस्त्वमेवोदारा नाऽन्ये इत्याह ।

१० हे रमे ! श्रीवत्सनामकचिह्नयुक्तं भगवद्वक्ष आश्रिता रम्यन-

प्रवालदीधित्यवलम्बिताऽङ्घ्रिः

सत्यं रमे कामदुघा ऽस्युदारा ॥ १० ॥

श्रीति । हे रमे ! श्रीवत्सेन चिह्नेन श्रिया युक्तेन वत्सेन बालकेन च जुष्टं सेवितं स्थलं विष्णूरः गोष्ठं चाऽऽश्रिता सती मनोहरे अक्षिणी यस्याः सा रचिता ऽऽश्रितानां श्रीर्यया । पक्षे मनोहरा क्षीरेण दुग्धेन चिता संपादिता आश्रितश्रीर्यया च । प्रवालस्य विद्रुमस्याऽन्यत्र पुच्छस्य दीधित्या शोभया अवलम्बितः अङ्घ्रिश्चरणो यस्याः सा त्वं सत्यमुदारा कामदुघा कामधेनुरसि । अत्र कामधेनुरमादेव्योरभेदप्रतिपादनाद्रूपकालङ्कारः । उपजातिवृत्तम् ॥ १० ॥

ख्यातः कलामात्रद एष चन्द्रो

मातः शिबिश्चेत् पलमात्रदायी ।

विषप्रदो वारिधरः श्रितानां

कल्याणि काङ्क्षाऽधिकदा त्वमेव ॥ ११ ॥

ख्यात इति । हे मातः ! एष चन्द्रः राजा वसूत्सर्गेऽपि

---

यया उत्पादिताऽऽश्रितसंपत् किसलयशोभाशालिचरणा वदान्या त्वं, सशोभतर्णकयुतं गोष्ठमाश्रिता सुन्दरी दुग्धपूर्णा सशोभा प्रकृष्टपुच्छकान्तिशोभितपादा उदारा कामधेनुरसीति श्लेषेण भगवत्याः कामगवीरूपत्वेन सर्वेष्टदातृत्वं वर्णयति ।

११ ननु चन्द्रशिबिप्रभृतिषु दातृषु सत्सु कथं त्वमेवोदारेति वदसीत्याशङ्क्य एष चन्द्रो निजाश्रिताय शिवाय कलामात्रं (षोडशभागं, लेशमात्रं च) ददाति, शिबिरपि शरणागताय कपोताय पलमात्रं (मांसं, कर्षचतुष्टयं च) ददौ, मेघश्चाश्रितानां विषं (जलं, गरलं च) ददातीति पूर्वौ द्वावल्पदायिनौ, चरमस्तु विषप्रदत्वेन विपरीतफलदायीति श्लेषेण वदन् त्वमेवाऽभीप्सिताऽधिकप्रदेति त्वय्येवौदार्याऽतिशय इत्याह ।

भिक्षुकाय शिवाय कला तेजोरूपा एव कलामात्रम् ईषच्च ददाति स ख्यातः । शिविश्चेत् पलं स्वमांसं कर्षचतुष्टयं च तन्मात्रं ददाति सः । वारिधरो मेघः विषमुदकं गरलं च प्रददाति सः । अतः हे कल्याणि ! श्रितानां काङ्क्षाऽधिकदा त्वमेवेत्यर्थः । काव्यलिङ्गमलङ्कारः । उपजातिवृत्तम् ॥ ११ ॥

कल्पद्रुमः सुमित एव घनो ऽप्रदाता
कर्णो ऽप्यपार्थकरुणः स बलिः कुदाता ।
नाथस्तवाऽपि कमले स हिरण्यहारी
नाऽतो ऽस्ति ते वितरणे प्रतिवस्तु किं चित् ॥ १२॥

कल्पद्रुम इति । हे रमे ! कल्पद्रुमः सुमितः पुष्पितो ऽपि सुष्ठु परिमित एव । घनः अप(?)उदकस्य प्रदाता ऽपि न प्रकृष्टदाता । अस्मिन्नर्थे अनाँच चेति पाक्षिकद्वित्वविधानात्पकारद्वयस्य साधुत्वम् । कर्णो ऽपि नास्ति पार्थे करुणा यस्य सो ऽपि अपगता अर्थे करुणा(?) यस्य सः । अर्थो ऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु इत्यमरः । स प्रसिद्धो बलिः कुदाता भूदाता ऽपि कुत्सितदाता । तव स नाथः हिरण्याऽसुरहार्यपि सुव-

---

१२ किं च, हे कमले ! कल्पवृक्षः सुमित एव (सुतरां परिमितदाता, पुष्पितश्च) मेघश्चाऽप्रदाता (अदाता, जलदायी च) राधेयः ( अर्जुने निष्करुणो, व्यर्थदयश्च) स बलिर्दानवेन्द्रः कुदाता (कुत्सितो दाता, पृथ्वीप्रदश्च ) तव, नाथोऽपि भगवान् हिरण्यहारी ( हिरण्याक्षस्य हिरण्यकशिपोर्वा हन्ता, परं सुवर्णाऽपहारी च) इति दातृत्वेन प्रसिद्धानां सर्वेषामीदृग्रूपत्वात्तु दान्यके तव प्रतिस्पर्धि किञ्चिदपि वस्तु नास्तीति त्वय्येवौदार्यपर्याप्तिरित्याह ।

र्णहारी । अतस्ते रमाया वितरणे प्रतिवस्तु प्रतिद्वन्द्वि उपमान-मिति यावत् । विश्राणनं वितरणमित्यमरः । वस्तु किं चिदपि नास्तीत्यर्थः । वसन्ततिलका वृत्तम् ॥ १२ ॥

आमोदजुष्टं मधुकालयोगात्
फलं ददानं भजतामभीष्टम् ।
शाखाशतोदारसुपर्णवाहं
देहं रमे कल्पतरुं तवाऽऽहुः ॥ १३ ॥

आमोदेति । हे रमे ! मधुकालस्य हरेर्वसन्तसमयस्य च योगात्संबन्धादामोदजुष्टम्, एवं भजताम् सेवकानाम् अभीष्टं ददानं, समानमुभयत्र । तथा शाखानां वेदशाखानां शतेनोदारः सुपर्णश्छन्दोमयो गरुडः स वाहो यस्य । पक्षे शाखानां शिफानां शतेन उदारः स चाऽसौ सुष्ठु पर्णानि दलानि वहति तं तव देहं कल्पतरुम् आहुः । बुधा इति शेषः । उपजाति-वृत्तम् । रूपकश्लेषाऽलङ्कारौ ॥ १३ ॥

मुदा वदान्या ऽऽश्रितमब्धिकन्ये
यं किन्नरेशादधिकं करोषि ।

---

१३ हे देवि ! मधुकालयोगात् ( भगवत्सम्बन्धात्, वसन्तकाल-सम्बन्धाच्च ) आमोदजुष्टं ( सानन्दं, ससौरभञ्च ) एवं भजतामभी-प्सितार्थं ददानं तथा शाखाशतोदारसुपर्णवाहं ( वेदमयत्वाद्वैदिकशा-खाशतशालिगरुडवाहनकं, शिफाशतेन महाशोभनपत्रधारकं च ) तव देहं कल्पवृक्षसाधर्म्यात् कल्पतरुमाहुरिति श्लेषेणाह ।

१४ हे देवि ! उदारा त्वं यमाश्रितं नरं मुदा कुबेरादधिकं करोषि तं सन्तो भुवि एष नरेशात् ( नृपतेः ) अधिको न किमिति

न किं नरेशादधिकः स एष
इतीममाहुर्भुवि हन्त सन्तः ॥ १४ ॥

मुदेति। हे ऽब्धिकन्ये! वदान्या त्वं यं कं चनाऽऽश्रितं नरेशाद्राज्ञ अधिकं करोषि स नरेशादधिक इति न, किं तु सन्त इमं भुवि किन्नरेशात्कुबेरादधिक इति वदन्ति। अत्र त्वमाश्रितं जनं किन्नरेशात्कुबेरादधिकं करोषि तं भुवि नरेशादधिकं बुधा वदन्त्येवेति। उपजातिवृत्तम् ॥ १४ ॥

विविधविभवदात्रीमिन्दिरे विश्वधात्रीं
भगवति भवतीं यः सेवते देवतेड्याम्।
अधिकृतिलवमात्रादन्तरिक्षोन्मुखाक्षा-
नयमगणितसत्त्वानल्पकान्नोपसर्पेत् ॥ १५ ॥

विविधेति। हे भगवति! हे इन्दिरे! विविधानां विभवानामर्थानां दात्रीं विश्वस्याऽशेषस्य धात्रीं मातरम् एवं देवतैः ईड्यां स्तुत्यां त्वां यः सेवते भजते सो ऽयम् अधिकृतेरधिकारस्य लवमात्राल्लेशादेव अन्तरिक्षे ऊर्ध्वं मुखं येषां तान्, पुनः अगणितानि तुच्छीकृतानि सत्त्वानि प्राणिनो यैस्तान्, अल्प-

---

वदन्तीति त्वदाश्रितः क्षुद्रोऽपि राजत्वं प्राप्य धनदाऽधिकविभवो भवतीत्याह।

१५ हे भगवति इन्दिरे! नानैश्वर्यप्रदां लोकमातरं देवस्तुत्यां भवतीं यः सेवते सः अधिकारलेशमात्रं प्राप्योर्ध्वीक्षाननाद्दृतेतरजनान् नीचान् धनिकान्नोपसर्पेदिति त्वत्सेवनमतिदुःखाकरनीचोपसर्पणनिवारकमित्याह।

काम्बीचान् नोपसर्पेयं गच्छेत् । मालिनीवृत्तम् ॥ १५ ॥

त्वयि सति भगवत्यां सर्वमिष्टं ददत्यां
किमपि नृपपिशाचं याचते यः कुचेताः ।
फलवति सहकारे भासुरे सत्यदूरे
श्रयति दुरधिरोहं देवि शाकोटकं सः ॥ १६ ॥

त्वयीति । हे भगवति ! सर्वम् अविकलम् इष्टं वाञ्छितं ददत्यां त्वयि रमायां सत्यामपि कुत्सितं चेतो यस्य सः यः पुमान् नृप एव पिशाचः तं याचते । याचृ याच्ञायामित्यस्मात्कर्तरि लट् । स पुमान् भासुरे देदीप्यमाने । भञ्जभासेति घुरच् । फलवति सहकारे आम्रे अदूरे निकटवर्तिनि भासति(?) सति हे देवि ! दुःखेनाऽधिरोढुं शक्यं शाकोटकं 'सावरी'ति लोके । वृक्षं श्रयते इत्यर्थः । निदर्शनालङ्कारः । मालिनीवृत्तम् ॥ १६ ॥

प्रपदनजुषां दृष्टाऽदृष्टाऽर्पणैकवदान्ययो-
स्तव चरणयोः सेवामेवाऽऽचराणि हरेः प्रिये ।

---

१६ हे सति ! सकलवाञ्छितार्थदाऽयां भवत्यां वर्तमानायां कुबुद्धिर्यः कुत्सितं नृपं किमपि याचते स फलभरभरिते आम्रतरौ समीपे स्फुरति सति दुरारोहं छायाशून्यं शाकोटकवृक्षमाश्रयतीति निदर्शयन्नाह ।

१७ हे हरिपत्नि ! प्रपन्नानामैहिकपारलौकिकनिखिलफलार्पणैकोदारयोस्तव चरणयोरेव सेवामाचरेयं, विवित्सया ( लिप्सया ) विहितनादरकारिणां निष्ठुरवचसां राज्ञां वचनात् आसी ( आसयुक्तः ) पुनर्नासीय ( न तिष्ठेयम् ) इति पुनः पुनर्मत्तकुनृपतिपरुष-

सकृदपि पुनस्त्रासी नाऽऽसीय हन्त विवित्सया
परुषवचसां राज्ञां प्राज्ञाऽवमानकृतां गिरः ॥ १७ ॥

प्रपदनेति । हे हरेः प्रिये ! प्रपदनजुषां त्वच्चरणसेविनां दृष्टानामदृष्टानां च विषयाणामिति यावत् । अर्पणे दाने एकवदान्ययोरद्वितीयदानशौण्डयोः तव चरणयोः सेवां भक्तिमेवाऽऽचरामि करोमि । ततः । हन्त हर्षे ऽनुकम्पायामित्यमरः । विवित्सया लब्धुमिच्छया परुषं निष्ठुरं वचो येषां तेषां प्राज्ञानां पण्डितानामवमानं कुर्वन्ति तेषां राज्ञां गिरः प्रति पुनः सकृदेकदा ऽपि त्रासी सन्न आसीय न स्थास्यामि । आस उपवेशने इत्यस्माद्विधिलिङ् । हरिणीवृत्तम् ॥ १७ ॥

दृष्टाऽदृष्टदया ऽऽर्द्रया शिशिरया दत्ताऽखिलार्थास्त्वया
मातर्वातविधूतवारिदचलश्रीलेशलब्धोन्नतेः ।
दर्पोद्रेकविनर्तितभ्रुपरुषं दन्दह्यमानेक्षणं
दासेरास्यमुपास्य कस्य चिदमी न स्याम हास्या वयम् ॥ १८ ॥

दृष्टेति । हे मातः ! दृष्टं चाऽदृष्टं च ऐहिकमामुष्मिकं चेत्यर्थः ।

---

पचनश्रवणत्रस्तोऽहम् इहामुत्राऽर्थदं त्वच्चरणमेव सेवेयेति प्रार्थयते ।

१८ हे मातः ! इहाऽमुत्रफलप्रदया आर्द्रचित्तया शीतलया त्वया वितीर्णनिखिलाऽभीष्टा वयं मारुतचालितजलदचञ्चलविभवलेशप्राप्तायाः उन्नतेर्हेतोः गर्वाधिक्यनाटितभ्रूयुगलम् अतितापदमयनं भयङ्करं दासेरास्यं (सद्योन्नमितत्वात्दुष्टमुखं कुनृपतिं समुपास्य कस्य चित् पामरस्यापि उपहासपात्राणि न स्यामेत्याह ।

ते ददाति तया । तथा शिशिरया शीतलया पुनः आर्द्रया द-याक्लिन्नया त्वया रमया दत्ताः समर्पिताः अखिलाऽर्थाः सर्व-पुमर्था येभ्यः ते वयं कस्य चित् वातेन विधूतास्तिरस्कृतो यो वारिदो मेघस्तद्बलात् श्रीलेशात् लब्धा उन्नतिरौद्धत्यं येन तस्य दासेरस्योष्ट्रस्याऽस्यमिवास्यम् ऊर्ध्वाऽवलोकित्वाद्यस्य तं धनिकमुपास्य वयं हास्या उपहास्या न स्याम न भवामः । धनिकं विशिनष्टि—दर्पस्योद्रेकेण विनर्तिते भ्रुवौ यत्र तत्परुषं गर्हितं दहति इति दन्दह्यमानम् । दह भस्मीकरणे इत्यस्मा-ल्लुपसदचरजपजभदहेति सूत्रेण गर्हायां यङि लटः शतृशा-नचाविति शानचि आने मुक् । तदीक्षणं यस्मिन् तदिति । शार्दूलवि० ॥ १८ ॥

कातर्येण कदर्यवर्यनृपतिप्रीतिप्रतीक्षोदितः
कष्टं कष्टमपास्तवास्तवचमत्कारो न मे रोचते ।
रामे वेङ्कटनेतुरद्भुतगुणग्रामे दयामेदुरां
त्वामेव श्रितकामधेनुमसकृत्सा मे स्तुतां भारती ॥ १९ ॥

कातर्येणेति । कातर्येण । अधीरे कातरत्रस्तावित्यमरः । कदर्येषु कृपणेषु वर्याणां श्रेष्ठानां नृपाणां प्रीत्याः या प्रतीक्षा तयोदितः, एवमपास्तं गतं वास्तवं सत्यं यस्मात्स चमत्कारः मे कष्टं कष्टम् । आबाधे चेति द्वित्वम् । न रोचते, अपि तु अ-

---

१९. हे अद्भुतगुणसमूहे ! वेङ्कटाचलाधिपपत्नि ! चेतश्चाञ्चल्ये-न कृपणनरराजाऽनुग्रहप्रतिपालनोत्पन्नः परित्यक्तवस्तुतत्त्वो यश्चमत्कारो (वाग्विलासः) स मे न स्वदते, तत् मे भारती दयार्द्रां-माश्रितजनकामप्रदात्रीं त्वामेव वारं वारं स्तवीत्विति भगवत्या एव स्तुतिं याचते ।

द्भुता गुणग्रामा यस्यास्तत्सम्बुद्धौ। हे वेङ्कटनेतुः रामे! आश्रितानां कामधेनुं दयया मेदुराम्। सान्द्रः स्निग्धस्तु मेदुरः इत्यमरः। तां प्रसिद्धां त्वामेव सा नृपवर्णनखिन्ना भारती स्तुतां स्तवीतु इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ १९॥

भीमानहं न भीमान्
राज्ञां निचयान् श्रयेय साराऽज्ञान्।
कल्पककल्पकटाक्षान्
दारान् शौरेर्भजे महोदारान्॥ २०॥

इति श्रीमद्वेङ्कटाध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे
औदर्यस्तबकस्त्रयोदशः सम्पूर्णः॥ १३॥

भीमानिति। भीर्भयमस्याऽस्ति स भीमानहं सारे न्याय्यसारग्रहणे अज्ञान् मूढान् एवं भीमान् भयङ्करान् राज्ञां निचयान् समूहान् न श्रयेय नाऽऽश्रयामि। कल्पकेन कल्पवृक्षेण कल्पाः सदृशाः। यद्वा ईषदसमाप्ताविति कल्पप्प्रत्ययः। कटाक्षा येषां तान्महोदारान् शौरेर्दारान् भजे सेवे इत्यर्थः। गीतिवृत्तम्॥ २०॥

इति श्रीमद्रावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन
विरचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मीसहस्रटीकायाम् औदार्यस्तबकस्त्रयोदशः सम्पूर्णः॥ १३॥

---

२० अथ भीतिमान् भयङ्करान् तत्त्वाऽज्ञान् राज्ञां समूहान्न श्रयेय, किं तु कल्पवृक्षतुल्यकटाक्षशालिनीं महावदान्यां शौरेर्गृहिणीं भजे इति राजाश्रयणनिवृत्तिपूर्वकं भगवतीभजनमेव प्रतिजानानः स्तबकं पूरयति।

इति श्रीमानवल्ल्युपाख्यतैलङ्गरामशास्त्रिविरचितायां लक्ष्मीसहस्राऽवतरणिकाख्यायामौदार्यस्तबकः॥ १३॥

अथ यमकस्तबकः ॥ १४ ॥

इन्द्रजित्कुम्भकर्णाख्यं यमकं लक्ष्मणाऽन्वितः ।
यमं प्रत्युपदीचक्रे स रामः श्रेयसे ऽस्तु नः ॥ १४ ॥

अथाऽस्मिंश्चतुर्दशस्तबके लक्ष्मीं यमकाऽलङ्कारेण भूषयितुं प्रथमपद्ये यमकमिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

यशस्विनीमुपासीय यदुनाथसधर्मिणीम् ।
यमकं कथयन्त्यार्या यत्पदं कल्पशाखिनः ॥ १ ॥

यशस्विनीमिति । यस्याः पदं चरणं कल्पशाखिनः यमकं पौनरुक्त्यम् अपरं कल्पद्रुमम् इति भावः । आर्याः श्रेष्ठाः कथयन्ति तां यशस्विनीं कीर्तिमतीं यदुनाथस्य हरेः सधर्मिणीं स्त्रियं लक्ष्मीमुपासीयोपासीमहि । यमकलक्षणं वाग्भट्टाऽलङ्कारे ।

"स्यात्पादपदवर्णानामावृत्तिः संयुताऽयुता ।
यमकं भिन्नवाच्यानामादिमध्यान्तगोचरा" ॥ इति ।

अस्य यमकाऽलङ्कारस्यादिमध्यान्तभेदेन संयुताऽसंयुताऽऽदिभेदेन च मुख्या अष्टादश भेदाः । दण्डी तु ।

अव्यपेतव्यपेतात्मा या वृत्तिर्वर्णसंहतेः ।
यमकं, तच्च पादानामादिमध्यान्तगोचरम् ॥
एकद्वित्रिचतुष्पादयमकानां प्रकल्पना ।
आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वतः" ॥ इति ।

अस्य पूर्वोक्ताऽष्टादशभेदेभ्यो ऽन्ये बहवो भेदा भवन्ति । तल्लक्षणानि विस्तृतिभिया इह सर्वत्र न प्रपञ्चयामः । परन्त्वग्रे यथायथं दिक्प्रदर्शनार्थं कांश्चिद्विशेषान् कांश्चिद्भे-

१ साम्प्रतं चतुर्दशेन यमकप्रधानेन यमकस्तबकेन स्तोतुमिच्छुरादौ आप्ता यस्याश्चरणं सकलेप्सितदातृतया कल्पवृक्षसदृशं वदन्ति तां कीर्तिमतीं हरिपत्नीं सेवेयेति मङ्गलमाचरति ।

दांश्च दर्शयामः । अनयैव दिशा विस्तरभयात् अनुक्ता अपि भेदा यथासंभवं सुधीभिः सूक्ष्ममतिभिरूह्याः । एवं अर्थाऽलङ्कारैः अनुप्रासयमकशब्दाऽलङ्काराणां संसृष्टिरपि यथासंम्भवम् ऊहनीया । तत्र अस्मिन् श्लोके असंयुतः चतुष्पादाद्यपदगोयं यमकरूपः शब्दालङ्कारो ज्ञेयः । इदं पथ्यावक्त्रं वृत्तम् ॥१॥

दयासंपूर्णहृदया मया कृतमनामया ।
रमा गुणेन परमा स्तवं गृह्णातु वास्तवम् ॥ २ ॥

दयेति । दयया सम्पूर्णं हृदयं यस्याः सा तथा गुणेन गुणैर्जातावेकवचनं परमोत्कृष्टा एवम् अनामया निर्दोषा सा रमा मया कृतं वास्तवं स्तवं स्तोत्रं गृह्णातु स्वीकरोतु । अयमसंयुतैकपादग आद्यपदगो यमकरूपः शब्दालङ्कारः ॥ २ ॥

मातस्त्वदङ्घ्रौ मम देहि भक्तिं
मा ऽतः परस्मिन् हृदयं प्रसाङ्क्षीत् ।
सा कंसशत्रोर्दयिते शुभेन
साकं चरीकर्त्वशुभप्रशान्तिम् ॥ ३ ॥

मातरिति । भो मातः ! त्वदङ्घ्रौ तव चरणे मम भक्तिं सेवां देहि । अतस्त्वदङ्घ्रेः परस्मिन् वस्तुनि हृदयं मा प्रसाङ्क्षीत्

---

२ कृपापरिपूर्णहृदया ऽनामया साऽऽनन्दा दाक्षिण्यादिनोत्कृष्टा रमा मया रचितमवितथं स्तवं स्वीकरोत्विति प्रार्थयते ।

३ हे जननि ! त्वच्चरणे मम भक्तिं वितर, अतो ऽन्यस्मिन् मे हृदयं न लगतु, हे कंसारिप्रिये ! सा ( भक्तिः ) शुभदानपुरःसरममङ्गलस्य शान्तिं करोत्वत एव तां देहीति याचते ।

प्रसज्जतु । किं च । हे कंसशत्रोर्हरेर्दयिते ! सा त्वद्भक्तिः शुभेन मङ्गलेन साकम् अशुभस्य प्रशान्तिं नाशं चरीकर्ति । डुकृञ् करणइत्यस्माल्लटि यङ्लुकि रीङ् ऋत इति रीङादेशः । जीवन्मुक्तिदशां ददातीत्यर्थः । तथा च श्रुतिः । 'तत्सुकृतदुष्कृते विधुनुते' इति । ज्ञानवांस्तु पापं पुण्यं च विधुनुतइत्यर्थः । अयमसंयुतद्विपादग आद्यपदगो यमकालङ्कारभेदः । इन्द्रवज्रावृत्तम् ॥ ३॥

रमा ऽरमापत्तिमपास्यतां मे
दयोदयोपेक्षितभक्तमन्तुः ।
मुदामुदारां च दिशेत् समृद्धिं
नतानतापान् कुरुते यदीक्षा ॥ ४ ॥

रमेति । दयायाः कृपाया उदयेनोत्कर्षेण उपेक्षितः क्षान्तः भक्तानां मन्तुरपराधो यया सा रमा लक्ष्मीः मे आपत्तिं विपत्तिम् अरं शीघ्रमपास्यतां निरस्यतु । किं च यदीक्षा यत्कटाक्षः नतान् अतापान् तापरहितान् कुरुते सा मुदां सन्तोषाणाम् उदारां विपुलां समृद्धिं सम्पदं दिशेत् । अयमसंयुत आद्यपदगो यमकाऽलङ्कारः । उपेन्द्रवज्रावृत्तम् ॥ ४ ॥

रमे पदाऽब्जे तव ते मनोरमे
नमेयमुच्चैरितरा गतिर्न मे ।

---

४ करुणाऽविर्भावसमुपेक्षितभक्तजनाऽपराधा रमा ऽरं ( शीघ्रं ) मम आपदं दूरीकरोतु, एवं यदपाङ्गपातो नम्रान् अतापान् ( अपगतसन्तापान् ) करोति सा उदारां ( महतीं ) हर्षाणां संपदं दद्यादित्याह ।

५ हे रमे ! यत्सेवनेन इन्द्रो दैत्यनाशप्रदे भास्वरे पदे ( ऐन्द्रपदे )

सुरेश्वरो यद्भजनेन भासुरे
पदे पुना राजति दैत्यलोपदे ॥ ५ ॥

रमे इति । हे रमे ! मे मम इतरा त्वदन्या गतिर्न, यतः सुरेश्वर इन्द्रः ययोश्चरणयोर्भजनेन पुनर्दुर्वाससः शापात्पर दैत्यानां लोपं नाशं ददाति तस्मिन् भासुरे देदीप्यमाने पदे राजति विराजते ते तव पदाऽब्जे मनोरमे उच्चैर्नमेयम आदरेण नमेयमित्यर्थः । अत्राऽर्थान्तरन्यासालङ्कारः । अयमसंयुत एकपादग आद्यपदगतेन यमकेन संसृष्टः । वंशस्थं वृत्तम् ॥ ५ ॥

उदारविभवा भवाऽऽमयहरा
हराऽऽदिमहिता हिताय कमला ।
सुधौघसदृशा दृशा शुभदया
दयालुरधुना धुनातु दुरितम् ॥ ६ ॥

उदारेति । उदारः महान्विभवो यस्याः सा तथा भवः संसार एवाऽऽमयो रोगस्तं हरति सा पुनर्हिताय हरादिभिः शिवादिदेवैः महिता पूजिता सा दयालुः कमला लक्ष्मीः शुभं ददाति तया सुधाया ओघेन सदृशा दृशा ऽधुना सम्प्रति मम दुरितं पातकं धुनातु । धूञ् कम्पनइत्यस्मात्कर्तरि लोट् । अयमसंयुतः पादद्वयमध्यगः सर्वचरणगो यमकालङ्कारः । जलोद्धतगतिर्वृत्तम् ॥ ६ ॥

---

राजति ते मनोहरे तव चरणकमले नमेयम ( नमस्कुर्याम ) ममाऽन्या गतिर्नास्तीत्याह ।

६ महैश्वर्या संसाररोगविनाशिनी हरादिपूजिता दयालुः कमला मे हितं कर्तुं पीयूषपूरसमया शुभदाऽया दृशा इदानीं दुरितं दूरीकरोत्वित्याह ।

घनाघनाऽऽभस्य घनाऽघनाशिनः
सदा सदाचारसदा सदार्यधीः[1] ।
हिताऽहिताक्ष्यां रहिताऽहिता मनो-
रमे ऽरमेवाऽऽचर मे रमे मुदम् ॥ ७ ॥

घनेति। हे मनोरमे ! रमे ! घनस्य सान्द्रस्याऽघस्य नाशिनः एवं वर्षुकाऽब्दो घनाघन इति अभिधानाद्घनाघनाऽऽभस्य सजलमेघकान्तेर्हरेः सदा सर्वदा अर्थे जगद्रक्षणविषयप्रार्थने धीर्बुद्धिर्यस्याः सा सदा सं शं सुखं ददाति सा सशयोरभेदात् । यद्वा देन दानेन सहिता । दं कलत्रं बुधैः प्रोक्तं छेदे दाने इत्येकाक्षरः । सदाचारं सीदति गच्छति सा । पचाद्यच् । हितौ अहिताक्ष्यौ शेषगरुडौ यस्याः सा रहिता न सन्त्यहिता यस्याः सा त्वं रमा मे मम अरम् । लघु क्षिप्रमरं द्रुतमित्यमरः । एवं मुदं हर्षमाचर कुर्वित्यर्थः । अयं संयुताऽसंयुतपादादिपादमध्यगो यमकालङ्कारः । वंशस्थं वृत्तम् ॥ ७ ॥

सरोरुहाऽऽरामगृहां सुमाल्लिका-
सरोरुहारां कमलां मधुद्विषः ।

---

७ हे मनोरमे ! रमे ! घनाघनाभस्य ( वर्षुकमेघनीलस्य, ) घनानामघानां नाशकस्य भगवतः सदा॥सदाचारसदा ( सदाचारवर्तिनी, धर्मपत्नीति यावत् ) सदार्यधीः ( सत्सु सती वा आर्या (श्रेष्ठा) धीर्यस्याः सा ) एवं हितौ हितकारिणावहिताक्ष्यौ शयनीयत्वाद्वाहनत्वाच्च शेषगरुडौ यस्याः सा, रहिताऽहिता ( रिपुविधुरा ) ईदृशी त्वं मम मुदम् अरमेव ( शीघ्रमेव ) आचरेत्याह ।

८ सरोरुहाऽऽरामगृहां (कमलवननिलयां) सुमल्लिकासरोरुहारां

---

१ सदार्थधीः—इति २ पु०पा० ।

भुजान्तराऽऽमोदकरीं नुमः क्षमा-
भुजां तरामो ऽनुसृतिं व्यथाऽम्बुधिम् ॥ ८ ॥

सरेति। सरोरुहाणां कमलानामाराम उपवनं गृहं यस्यास्तां शोभनमल्लिकानां सराणां पङ्क्तीनाम् उरवः बहवो हारा यस्यास्तां तथा मधुद्विषो हरेः भुजान्तरस्य बाहुमध्यस्याऽऽमोदकरीं तोषिणीं कमलां नुमो नमस्कुर्मः(?) तेन च क्षमाभुजां मूढराजानाम् अनुसृतिर्द्रव्यार्थमनुसरणं तदेव व्यथाऽम्बुधिर्दुःखसमुद्रस्तं तरामः उल्लङ्घयामः। इदम् असंयुतद्विपादगमाद्यपदगतं यमकम्। वंशस्थं वृत्तम् ॥ ८ ॥

नृपो निरास्थः सुमनोजने यो
मनोजनेयो न हि तेन मे ऽर्थः।
स्थितां प्रणम्यासमुरस्यहं तु
मुरस्य हन्तुः स्वयमिन्दिरे त्वाम् ॥ ९ ॥

नृप इति। यः नृपः सुमनोजने पण्डितसङ्घे निरास्थो निराशः सन् मनोजेन मदनेन नेतुं स्ववशीकर्तुं योग्यः, कामवश इति यावत्। तेन मे ऽर्थः प्रयोजनं नास्ति। तु इति पुनः हे इन्दिरे! अहं मुरस्य हन्तुर्मुरारेरुरसि वक्षसि स्थितां

---

( शोभनमल्लिकाकुसुममालालंकृतां ) मधुसूदनस्य भुजमध्यशोभाकारिणीं कमलां स्तुमः, ततश्च क्षमाभुजां ( राज्ञां ) दुःखसमुद्ररूपाम् अनुसृतिम् ( अनुवर्तनम् ) तरामः ( लङ्घयामः ) इत्याह।

९ हे इन्दिरे! यो नृपो मनोजनेयः ( कामवशः ) सुमनोजने ( विद्वज्जने ) निरास्थः ( निरादरः ) तेन ( नृपेण ) मे ऽर्थः (प्रयोजनं) नास्ति। अहन्तु मुरस्य हन्तुः ( मुरजितो भगवतः ) उरसि स्थितां त्वां स्वयं प्रणम्यासम् ( प्रणमानि ) इत्याह।

त्वां प्रणम्य नमस्कृत्य स्वयं केवलः आसम् (?)अस्मि । अयं वर्तमानवद्भूति भूतप्रत्ययः । अत्र नृप इत्यादिवाक्यस्य साऽभिप्रायत्वात्परिकरालङ्कारः । स च यमकालङ्कारेण संसृष्टः । इदमेव शृङ्खलायमकमित्येके । उपेन्द्रवज्रावृत्तम् ॥ ९ ॥

दृष्टिर्दयैकावनि ते रमे न-
श्छिनत्तु विष्णोर्वनिते ऽरमेनः ।
भवं तवास्येयमपीडनेन
कुतः क्षतिर्मे यमपीडनेन ॥ १० ॥

दृष्टिरिति । हे दयाया एकाऽवनि ! मुख्यभूमे ! हे विष्णोर्वनिते ! रमे ! ते दृष्टिर्नो ऽस्माकम् एनः पापमरं द्रुतं छिनत्तु । तवेडनेन स्तवेन भवं संसारं मार्कण्डेयमरणकाले यमनाशकं भवमपि च अस्येयं दूरं निरस्येयं, तत्र यमस्य पीडनेन बाधया मे क्षतिर्दुःखं कुतः ? नास्तीत्यर्थः । इदमसंयुतद्विपादगाऽन्त्यपदगतयमकम् । उपेन्द्रवज्रावृत्तम् ॥ १० ॥

कुभूभुजां सम्प्रति माननेन
फलं सुधांशुप्रतिमानने न ।

———

१० हे दयैकाऽवनि ! (दयैकभूमे ! ) विष्णोर्वनिते ! रमे ! तव दृष्टिः अरं ( शीघ्रं ) नः एनः ( पापम् ) छिनत्तु, तव ईडनेन ( स्तवेन ) भवमपि ( संसारमपि, शिवमपि च ) अस्येयं निराकुर्यां, मे यमस्य पीडनेन क्षतिः कुतः स्यात् ? इति वदन् त्वत्स्तोत्रेण मृत्युञ्जयस्य भवस्य निरासं तज्जितस्य यमस्य पीडनेन मम किं भावी ? ति त्वत्स्तवो यमबाधानिरासपुरस्सरं संसारं विनाशयतीत्याह ।

११ हे सुधांशुप्रतिमानने ! ( चन्द्रमुखि ! ) साम्प्रतं कुत्सि-

शुभं प्रयच्छाऽविकलं कलेश-

स्वसस्त्वहं स्यां विकलङ्कलेशः ॥ ११ ॥

कुभूभुजामिति । हे सुधांशुप्रतिमानने ! चन्द्रमुखि ! सम्प्रतीदानीं कुभूभुजां कुत्सितराजानां माननेन संमाननेन फलं न नास्ति । किं च हे कलेशस्वसः ! चन्द्रभगिनि ! अविकलं सम्पूर्णं शुभं कल्याणं प्रयच्छ देहि । ततः अहं विगतः कलङ्कस्य लेशः यस्य सः स्यां भवामीत्यर्थः । अयमसंयुतद्विपादगाऽन्त्यपदगो यमकालङ्कारः ॥ ११ ॥

करोतु मोदं कमला समुन्मिष-

त्कलाविलासा रसिनी विभावसौ ।

कृपानिधौ वेङ्कटशैलनायके

कलाविला सारसिनी विभावसौ ॥ १२ ॥

करोत्विति । कृपाया निधौ शेवधौ वेङ्कटशैलनायके विभौ प्रभौ कलानां गीतादीनां विलासा यस्याः सा, एवं रसः शृङ्गारो ऽस्त्यस्याः सा कमला रमा विभावसौ सूर्ये करैः किरणैराविला युक्तेति यावत् । सारसिनी कमलिनीव स्थिता मोदं हर्षं

---

तानां राज्ञां माननेन ( आदरकरणेनाऽनुसरणेन ) मे फलं नास्ति । हे कलेशस्वसः ! ( चन्द्रसोदरि ! ) अविकलं ( सम्पूर्णं ) शुभं देहि, येन नाऽहं विगतकलङ्कलवः स्यामित्याह ।

१२ करुणानिधौ विभौ वेङ्कटाऽचलाप्तौ रसिनी ( सप्रीतिः ) समुन्मिषन्तः कलानां चतुःषष्टिसंख्यानां विलासा यस्यास्तादृशी असौ कमला विभावसौ ( सूर्ये ) कलाविला ( रलयोरभेदात् कराऽऽविला, रविकरस्पृष्टा ) सारसिनीव ( कमलिनीव ) मोदं करोत्वित्याह ।

करोतु । अयं लुप्तोपमाऽलङ्कारः । स चाऽसंयुताऽन्त्यपदगतेन यमकेन संसृष्टः । वंशस्थं वृत्तम् ॥ १२ ॥

योगाय यो गायति भावुकेन
रामे वरामेव हरेस्तवाऽऽख्याम् ।
नालीकनालीकसवित्रि धाम
तेनाऽक्षतेनाऽक्षतमाप्यते तत् ॥ १३ ॥

योगायेति । हे हरेः रामे ! वरां श्रेष्ठां ते तवाऽऽख्यां नामैव भावुकेन शुभेन हेतुभूतेन योगाय योगप्राप्तये यः पुमान् गायति हे नालीकं कमलं नालीकः शरो यस्य स मदनस्तस्य सवित्रि ! मातः ! नालीकः शरशल्याऽङ्गेष्वब्जषण्डे नपुंसकमिति मेदिनी । अक्षतेन जन्ममरणशून्येन तेन पुरुषेण अक्षयम् अविनाशि तद्धाम वैकुण्ठाऽऽख्यं स्थानम् आप्यते प्राप्यते । आप्लृ लम्भनइत्यस्मा त्कर्मणि लट् । इन्द्रवज्रावृत्तम् ॥ १३ ॥

नृणां दृशं सार्थयितुं तवाऽभूद्
रमे यदेहा नरमेयदेहा ।

---

१३ हे हरेः रामे ! यः भावुकेन ( कुशलेन ) सह योगाय ( सम्बन्धाय ) वरां ( श्रेष्ठां ) तवाऽऽख्यामेव ( नामैव ) गायति नालीकनालीकसवित्रि ! ( कमलशरस्य ( कामस्य ) मातः ! ) अक्षतेन ( सोदयेन ) तेन अक्षतम ( अविनाशि ) तत्ते धाम पदमाप्यते इति त्वन्नाममात्रगानेनाक्षयपदप्राप्तिर्भवतीत्याह ।

१४ हे रमे ! यदा मानवानां दृष्टिं कृतार्थीकर्तुं तवेहा ( चेष्टा ) अभूत् तदा नरमेयदेहा ( मनुष्यदृश्यमूर्तिः ) त्वं नवीननारिकेलाऽऽयतरुयुक्तां फणिराजशैलसम्बन्धिन्यां लरयोरभेदाद्गनाऽऽलौ

प्राप्ता तदा त्वं फणिराजशैल-

वनारिकेलां नववनारिकेलाम् ॥ १४ ॥

नृणामिति। हे रमे ! नृणां भूचराणां दृशं दृष्टिं सार्थयितुं कृतार्थीकर्तुं यदा तव ईहा। इच्छा काङ्क्षा स्पृहेहा तृडित्यमरः। अभूद्बभूव तदा त्वं नरैर्मानैरपि मेयः परिमातुं शक्यः देहो यस्याः सा सती नवा नूतनाः नारिकेलवृक्षाः यस्यां तां फणिराजशैलस्य शेषाऽद्रेः सम्बन्धिवनस्याऽलिकेलां ललाटस्थानीयां भूमिं रलयोः सावर्ण्यात्(?) ललाटमलिके गोधीत्यमराच्च। प्राप्ता प्राप्तवतीत्यर्थः। उपजातिर्वृत्तम् ॥ १४ ॥

त्वया ऽऽश्रितस्याऽत्र परत्र चोच्चै-

रकारि रा मे नरकारिरामे।

गोपालकं त्वं नयसे रसं या

गवा समेतं नगवासमेतम् ॥ १५ ॥

त्वयेति। हे नरकारेर्विष्णोः रामे ! स्त्रि ! या त्वं गवा भू-

---

केलां ( क्रीडां ) प्राप्तेति फणिशैले तव विहारो लोकानां दृशः कृतार्थीकर्तुमित्याह।

१५ हे नरकारिरामे ! ( नरकजयिविष्णुभार्ये ! ) या त्वं गवा (किरणेन तेजसेति यावत्) समेतमेतं गोपालकं (भगवन्तं) नगवासं (वेङ्कटाचलनिवासं) रसेन (प्रीत्या) प्रापयसि तया आश्रितस्य मे इहाऽमुत्र च उच्चैः राः लक्ष्मीः ( इह धनधान्यादिसंपत्, परत्र च मोक्षसंपत् ) अकारीति गवा सहितं अरसम ( अलसम ) गोपालं त्वं नगवासं ( शिवं ) नयसे इति विचित्रार्थं द्योतयन्, गवा समेतं न गवा समेतमिति विरोधमाभासयन् त्वदाश्रितस्य मम इहाऽमुत्र सम्पल्लाभो निश्चित इत्याह।

देव्या समेतं नगे वासो यस्य तमेतं गोपालकं हृषीकेशं रसं प्रीतिं नयसे प्रापयसि । गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि चेति मेदिनी । शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रस इत्यमरः । अत्र गवा समेतं वृषयुक्तं गोपमपि रसं शृङ्गारं नयसे इति चातुर्यद्योतको ध्वनिः । कया ऽपि गोप्या कृष्णं प्रति ।

"मुञ्चाञ्चलं चञ्चल पश्य लोकं
बालो ऽसि नाऽऽलोकयसे कलङ्कम् ।
भावं न जानासि विलासिनीनां
गोपाल गोपालनपण्डितो ऽसि" ॥

इत्यभिधानात् । अथ च या विद्यारूपिणी त्वं गोपालकं वज्रस्य स्वर्गस्य वा पालकमिन्द्रं गवा वाण्या समेतं ब्रह्माणम् अथ च नगवासं हरं चेतं(?) रसं ब्रह्म नयसि, विद्यारूपेण प्रापयसि । 'रसो वै स' इति श्रुतेः । तया त्वया ऽऽश्रितस्य मे अत्रेह लोके राः संपत्परत्र मोक्षलक्ष्मीरकार्यकृनेत्यर्थः । उपजातिवृत्तम् ॥ १५ ॥

शुद्धया त्वदभिधासहस्रकं
यो गिरा जपति ना समन्ततः ।

———

१६ हे हरिसखि ! यो ना (नरः) शुद्धया (संस्कृतया) गिरा समन्ततस्ते नामसहस्रं जपति ततो हेतोः त्रयीविदो (वेदतत्त्वज्ञाः) तं योगिराजपतिना (योगी सन् यो राजपतिर्जनकस्तेन) समं विदुरिति

तं विदुर्हरिसखि त्रयीविदो
योगिराजपतिना समं ततः ॥ १६ ॥

शुद्धयेति। हे हरिसखि ! यो ना नरः शुद्धया पवित्रया गिरा वाण्या तव अभिधानां नाम्नां सहस्रकं समन्ततः सर्वतः जपति ततो जपाद्धेतोः तं नरं मानवं त्रयीप ऋग्यजुःसामरूपां विदन्ति जानन्ति ते ऋषय इत्यर्थः। योगिराजपतिर्याज्ञवल्क्यः शिवो वा तेन। 'योगीश्वरं याज्ञवल्क्य'मित्युक्तेः। 'अव्यक्तलक्षणो योगी योगीशो योगिपुङ्गवः' इति शिवसहस्रनामनि। समं तुल्यं विदुः जानीयु(?)रित्यर्थः। रथोद्धतावृत्तम् ॥ १६ ॥

दानश्रिया विहसिताऽमरसालयेतां
तापाऽपहां जननि तामरसालये ताम्।
पादद्वयीं स हि भजेद्रुचिरागमां ते
यस्याऽस्ति निर्मलधियो रुचिरागमाऽन्ते ॥१७॥

दानेति। हे तामरसाऽऽलये ! हे जननि ! निर्मला मायामलरहिता धीर्बुद्धिर्यस्य तस्य यस्य पुंसः आगमान्ते वेदान्ते रुचिः प्रीतिरस्ति सः विहसिताः अमरसालाः कल्पद्रवो यया तया दानश्रिया वितरणसंपत्त्या इतां युक्तां तथा रुचिरस्य मनो-

---

त्वन्नामसहस्रजपशीलः पुमान् योगिप्रवरमहाराजजनकसमो भवतीत्याह।

१७ हे तामरसाऽऽलये ! जननि ! निर्मलबुद्धेर्यस्य रुचिरागमान्ते(शास्त्रमध्ये) अस्ति स (श्रद्धालुः) विहसिताः अमरसाला (देवतरवः) यया तथाभूतया दानलक्ष्म्या इतां (युक्तां), रुचिरः आगमः (फलप्राप्तिः) यस्याः सकाशात् तां ते पादयुगलीं भजेदिति कस्य चिच्छास्त्रविचारशीलस्य त्वत्पदप्राप्तिर्भवतीत्याह।

ज्ञफलस्याऽऽगमः प्राप्तिर्यस्याः सकाशात्तां पादद्वयीं भजेत् ।
हीति प्रसिद्धम् । वसन्ततिलकावृत्तम् ॥ १७ ॥

वशितसर्वजगत्पतिरक्षया
दृगशुभं तव लुम्पति रक्षया ।
हृदयमुज्झतु देवि न मामकं
त्वदिनमन्यमितो ऽपि नमाम कम् ॥ १८ ॥

वशितेति । हे देवि ! वशितः स्वाधीनीकृतः सर्वस्य समग्रस्य जगतो लोकस्य पतिः स्वामी हरिर्यया सा अक्षया अविनाशिनी तव दृक् दृष्टिः रक्षया रक्षणेन अशुभं लुम्पति नाशयति अतः मामकं मदीयं हृदयं चेतः तव इनं स्वामिनं नोज्झतु । कुत ? इति चेत् । अतो ऽन्यं कं नमाम ? न कमपि नमस्कुर्यामित्यर्थः । द्रुतविलम्बितं वृत्तम् ॥ १८ ॥

त्यजति यच्छुभलाभवती न तान्
जननि मत्प्रभृतीन् भवती नतान् ।

---

१८ वशीकृतः सकलजगत्पतिर्भगवान् हरिर्यया तादृशी अक्षया ते दृष्टिः रक्षाविधानेनाऽशुभं लुम्पति, मामकं (मदीयहृदयं कर्तृ) त्वदिनं (त्वत्पतिं हरिं) न त्यजतु । इतः (हरेः) अन्यं कं नमाम (नमस्करवाम) इति त्वद्दृष्ट्या लोपिताऽशुभानामस्माकं त्वत्प्रियं विहायनाऽन्यनमनमनुचितमिति त्वत्प्रेयान् भगवानस्माकं हृदये सदा स्फुरत्वित्याह ।

१९ हे जननि ! शुभलाभवती भवती नतान् (नम्रान्) मत्प्रमुखान् तान् (जनान्) यत् न त्यजति (अतः) मे मतिः अंहसा (पापेन) य-

---

१ लाभवती जनान् इति १ पु० पा० ।

मिलति मे न यथा मतिरंहसा
मम तथा दयतामतिरंहसा ॥ १९ ॥

त्यजतीति । हे जननि ! यद्यस्माच्छुभः शुभस्य वा लाभो ऽस्त्यस्याः सा भवती अहं प्रभृतिरादिर्येषां तान्ननान्नम्रान् जनान्न त्यजति अत्रोत्तरार्धगो नशब्दः काकाऽक्षिन्यायेनोभयत्राऽन्वेतीति बोध्यम्(?) । तत्तस्मान्मे मम मतिः अंहसा दुरितेन यथा न मिलति तथा ऽतिरंहसा शीघ्रं दयतां दयां कुरुतात् । अंहो दुरितदुष्कृते, रंहस्तरसी तु रयः स्यद इत्यमरौ । द्रुतविलम्बितं वृत्तम् ॥ १९ ॥

पद्मे ऽस्तु तुभ्यं प्रथमा नमस्या
स्थिरं फलं हि प्रथमानमस्याः ।
विधाय मान्यामहतामहं तां
हराम्यरीणां महतामहन्ताम् ॥ ॥ २० ॥

पद्मे इति । हे पद्मे ! हीति यतः अस्याः त्वन्नमस्यायाः स्थिरमविनाशि फलं प्रथमानं मख्यातं ततस्तुभ्यं प्रथमा नमस्या नमस्कृतिरस्तु । कुत ? इति चेत् अहम् अहताम् अक्षतां मान्यां

---

था न मिलति ( न युज्यते ) तथा भवती अतिरंहसा ( अतिशीघ्रम् ) मम ( मयि ) दयतां ( दयां करोत्विति प्रार्थयते ।

२० हे पद्मे ! तुभ्यं प्रथमा ( आदिमा ) नमस्या ( नमस्कारः ) अस्तु, अस्याः ( नमस्यायाः ) प्रथमानं ( विस्तृतिशालि ) फलं स्थिरं भवति, अहम् अहताम् ( अविनाशिनीम् ) माननीयां तां ( नमस्यां विधाय महतां ( प्रबलानाम् ) अरीणाम् अहन्ताम् ( अहङ्कारं ) हरामीति त्वन्नमस्कारेणाऽक्षयशुभफललाभः शत्रुजयश्च प्राप्यते इति प्रतिपादयति ।

योग्यां तां नमस्यां विधाय कृत्वा महतां श्रेष्ठानामरीणां कामादिषण्णाम् अहन्ताम् अहङ्कारं हरामि । उपजातिवृत्तम् ॥ २० ॥

भवत्यजेयं तनुते ऽजसेव्या
जनाय लोकं दययैव तं श्रीः ।
भवत्यजे यं तनुतेजसे व्या-
ध्यघोज्झितं मे कुहृदे ऽपि दत्ते ॥ २१ ॥

भवतीति । अजेन ब्रह्मणा सेव्या इयं प्रसिद्धा ऽजा ऽनादिर्भवती श्रीः भवं संसारं त्यजति तस्मै भवत्यजे, विरक्तजनायेति यावत् । दययैव व्याध्या दुःखेनाऽघेन पापेन चोज्झितं त्यक्तं यं लोकं मोक्षं वितनुते विस्तारयति तं लोकं कुहृदे कुत्सितहृदयाय मे मह्यमपि दत्ते अर्पयति अतस्तवाऽतिवात्सल्यं वादान्यकं चेति भावः । अजेयं जेतुमशक्यमिति लोकविशेषणं वा । उपेन्द्रवज्रावृत्तम् ॥ २१ ॥

निधाय भवती दृशं नवसरोजपत्राऽऽयतां
श्रितं हरिपुरन्ध्रि मां हतनमद्विपत् त्रायताम् ।

---

२१ अजा ( अनादिसिद्धा ) अजेन ( ब्रह्मणा सेव्या ) इयं श्रीर्भवती भवत्यजे ( संसारत्यागिने विरक्ताय ) यं व्याध्यघोज्झितं ( निर्व्याधिदुःखं लोकं ( वैकुण्ठलोकं ) दयया वितनुते तमेव ( लोकं ) तनुतेजसे ( अल्पतेजसे ) कुहृदे ( कुत्सितमानसाय ) मह्यमपि दत्ते इति पुण्यवद्भिर्लभ्यं लोकं दयया पापिष्ठाय मह्यं ददासीति दयाऽतिशयं वर्णयति ।

२२ हे अस्मदम्ब ! हरिपुरन्ध्रि ! परिहृतनम्रजनविपत्तिर्भवती नवीनकमलदलदीर्घां दृष्टिं निक्षिप्य श्रितं मां रक्षतु, त्वया विना अयःकठोरहृदयः ( लोहकठिनमनाः ) खलजनं ऽदयो हरिः आपदि ( प्राणाऽत्ययापत्तौ ) तमःकदम्बात् ( अज्ञानराशेः ) न त्रा-

न मां किल विना त्वया ऽऽपदि तमःकदम्बादयः-
कठोरहृदयो हरिः खलजने ऽस्मदम्बाऽदयः ॥ २२ ॥

निधायेति । हे ऽस्मदम्ब ! त्वया विना ऽयोवल्लोहव-त्कठोरं हृदयं यस्य अतः खलजने दुष्टे अदयः निष्कृपः हरिः आपदि विपत्तौ आगमः पापस्य कदम्बात्समूहान्मां किल निश्चयेन न त्रायताम् । त्रैङ् पालने ऽस्माल्लोट् । अतः हे हरिपुरन्ध्रि ! हृता नमतां पुंसां विपत्त्रयया सा भवती त्वं नवस्य सरोजस्य पत्त्रमिवाऽऽयतां विस्तृतां दृशं निधाय स्थापयित्वा श्रितमाश्रितं मां त्रायताम् । प्रार्थनायां लोट् । पृथ्वीवृत्तम् ॥ २२ ॥

न स माधवस्तव गुणानसमा-
ऽऽयतनेत्र एव कमलाऽऽयतने ।
क्षमते ऽभिधातु,मतिदक्षमतेः
स्तवनाय कः पटुमतिस्तव ना ॥ २३ ॥

नेति । हे कमलाऽऽयतने ! अतिदक्षमतेरत्यन्तकुशलबुद्धेस्तव तुवन्ति वर्धन्ते ते तवास्ते च ते गुणाश्च(?) तान्सौन्दर्यौदार्यादीन् अभिधातुं कथयितुं स माधवः एवाऽऽश्चर्ये अ-

---

यतामिति खलस्य मम प्राणोत्क्रमणसमये दुष्टेषु निर्दये हरौ अज्ञानहरणभारमनारोप्य करुणादृष्ट्या त्वमेव मां रक्षेत्याह ।

२३ हे कमलायतने ! अतिकुशलमतेस्तव गुणानभिधातुम् असमाऽऽयतनेत्रः ( निरुपमदीर्घनेत्रः ) स माधवः, ( स हरिः ) असमानि त्रीणि आयतानि नयनानि यस्यैवंभूतः शिवो ऽपि वा न क्षमते, एवं सति को वा ना ( नरः ) तव स्तवनाय पटुमतिः स्यादिति हरिहराभ्यामप्यसुकरे त्वत्स्तवे कस्य पुंसः सामर्थ्य?मित्याह ।

ऽपयानामनेकार्थत्वात् । चेत्यपरमसमान्यायतानि नेत्राणि यस्य स हरः न क्षमते न समर्थो भवति, तत्र कः ना पुमानपर-स्तवनाय पटुमतिः कुशलबुद्धिर्न कोऽपीति भावः। प्रमिताक्षरा, आर्यागीतिर्वा वृत्तम् ॥ २३ ॥

भवती जगदम्ब कृताऽऽर्तभवो-
परमा परमा परमाप रमा ।
कुहृदोऽद्रितटीमवनाय कृपा-
महिता महितामहिताऽऽमहिता[1] ॥ २४ ॥

भवतीति । हे जगदम्ब ! कृत आर्तानां भवस्योपरमो नाशो यया पुनः अहितानां शत्रूणामामो रोगस्तस्मै हिता व-र्धिनीत्यर्थः । आमो रुक्तन्द्रिदोः पुंसीति मेदिनी । तथा परमो-त्कृष्टा परं तु कृपामहिता सती भवती रमा कुहृदोऽवनाय म-हितां सञ्जातोत्सवाम् अद्रेः शेषाऽद्रेस्तटीमाप प्रापेति । तोटकं वृत्तम् ॥ २४ ॥

---

२४ हे जगदम्ब ! कृताऽऽर्तभवोपरमा ( कृतदीनसंसारशान्तिः ) परमा ( श्रेष्ठा ) कृपामहिता ( दयया पूजिता ) अहिताऽऽमहिता ( अ-हितानाम् आमा ( रोगः दुःखं, तस्मै हिता, शत्रुदुःखदेति यावत् ) ईदृशी रमा ( तदाख्या ) भवती कुहृदः ( कुत्सितमनसो मम ) अ-वनाय महितां पूजितामद्रितटीं ( शेषाचलतटम् ) आप ( प्राप्तवती ) इति भवत्याः शेषाद्राववतारो मद्रक्षणायेत्याह ।

---

१ कृताऽऽर्तभवोपरमा, परमा, परम्, आप, रमा, कृपामहिता, महिता, अहितामहिता, इति विषमपदच्छेदः ।

रमा ऽऽर मारमारमाद्युपासितं यमर्णवात्।
धियो हरिं वृषाचलोत्तमेतमेतमेत मे[1] ॥ २५ ॥

रमेति। रमा लक्ष्मीः अर्णवाब्धिगर्भात्। ल्यब्लोपे पञ्चम्यधिकरणे चेति पञ्चमी। मारमारो हरः मो ब्रह्मा तदाद्युपासितं यं हरिम् आर प्राप, हे मे धियः! मद्बुद्धयः! वृषाऽऽचलोत्तमं श्रेष्ठशेषाऽद्रिमित्यर्थः। प्रशंसावचनैश्चेति कर्मधारयः। इतं प्राप्तम् एतं नाम तं हरिम् एत प्राप्नुत। इण् गतौ इत्यस्माल्लोट्। नगस्वरूपिणी प्रमाणिका वा वृत्तम् ॥ २५ ॥

त्रातुमप्रच्युता वारिजातेक्षणा
त्वं नतान् ध्वस्तदैत्याऽरिजाते क्षणात्।

———

२५ रमा अर्णवात् मारमारमाद्युपासितं ( मारं कामं मारयतीति मारमारः शिवः, मो ब्रह्मा, तदादिभिरुपासितं ) यम् आर प्राप। अथवा रमा मारमाद्युपासितं ( मारस्य कामस्य या मा लक्ष्मीस्तदादिभिः सौन्दर्यादिगुणैरुपासितं) यम् अरं ( शीघ्रम् ) आर प्राप, हे मे धियः! वृषाचलोत्तमेतं ( वृषपर्वतोत्तमम् इतं प्राप्तं, शेषाचलवासिनमिति यावत्। ) एतम् ( भगवन्तम् ) एत ( आगच्छत, प्राप्नुतेति यावत ) इति निजबुद्धिं रमाश्रितस्य भगवत उपासने प्रवर्तयन्नाह।

२६ हे शोभितश्रीः! ( शोभिता श्रीर्यस्यास्तादृशे! ) अघध्वान्तलोपाऽहिमांशो! ( पापतिमिरनाशे सूर्यरूपे! ) क्षणात् ध्वस्तदैत्याऽरिजाते ( क्षणमात्रेण नाशितदैत्यसङ्घे! ) इन्दिरे! नतान् त्रातुम् अप्रच्युता ( संनद्धेति यावत् ) वारिजातेक्षणा ( कमलनेत्रा ) त्वम् अ-

१ रमा, आर, मारमारमाद्युपासितम्, ( रमा, अरम्, आर, मारमाद्युपासितम् इति वा ) वृषाचलोत्तमेतम्, एतम्, एत, मे।

पातकादिन्दिरे पाहि मां शोभित-

श्रीरघध्वान्तलोपाऽहिमांशोऽभितः ॥ २६ ॥

त्रातुमिति । हे इन्दिरे । हे शोभिता श्रीः संपद्यस्यास्तत्संबुद्धौ, भो क्षणाद् ध्वस्तं देवाऽरीणां दैत्यानां जातं समूहो यया अघमेव ध्वान्तं तस्य लोपे नाशे ऽहिमांशुः सूर्यस्तत्सम्बुद्धौ नतानस्मान् त्रातुम् अप्रच्युता अस्खलिता त्वं मां पातकाद् अभितः सर्वतः पाहि रक्षेत्यर्थः । स्रग्विणीवृत्तम् ॥ २६ ॥

मन्दाराऽमन्दाऽऽरामं दारा मन्दाऽऽरा-

द्व्याधिघ्ना दैत्यारेः शेषाऽद्रिं तं प्राप्ताः ।

सारावासारावासारावासाराऽवा-

गालीढा शृङ्गाली यस्याऽऽर्तान् संभर्तुम्[१] ॥ २७ ॥

मन्देति । दैत्यारेर्दाराः श्रीः मन्दानां जडानाम् आराद् द्रुतं व्याधीन् घ्नन्ति तादृशः सन्तो मन्दाराणां कल्पद्रूणाम् अमन्दा

———

भितः पातकात् मां पाहीति स्वस्य पातकाद्रक्षणं याचते ।

२७ मन्दाऽऽराद्व्याधिघ्नाः (मन्दानाम् आराद् दूराद् व्याधिघातुकाः) दैत्यारेर्दाराः मन्दाराऽमन्दाऽऽरामं (मन्दारवृक्षाणाममन्दा बहुला आरामा उपवनानि यस्मिन् तथा भूतम्) तं शेषाद्रिं प्राप्ताः । यस्य (पर्वतस्य) अवाक् (अधः) सारावासाऽऽरावाऽऽसाराऽऽवासा (रलयोरैक्यात् सालाऽऽवासा वृक्षनिवासिनः पक्षिणः, तेषामारावाणां रुतानामासारस्य परम्पराया आवासा वसतिः, नानापक्षिविरुतस्थानम्) आलीढा (सर्वतो व्याप्ता) यस्य शृङ्गाली आर्तान् संभर्तुम् आर (प्राप) इति आर्तजनमनोविनोददायिनि रम्यवृषशैले भगवत्या अवतारं प्रतिपादयति ।

१ मन्दाराऽमन्दाऽऽरामम्, दाराः, मन्दाऽऽराद्व्याधिघ्नाः, सारावासाऽऽरावाऽऽसाराऽऽवासा, आर, अवाक् ।

महान्तः आरामा यस्मिन् तं शेषाऽद्रिं प्राप्ताः, यस्य शृङ्गाली शिखरपङ्क्तिः आर्तान् सर्वांस्तु रमयितुं सारः श्रेष्ठः अवनम आवः वृद्धिः समर्थना वा यस्यास्तादृशी आस्ते । रक्षाद्यर्थावयवेर्धञ् । शृङ्गालीं विशिनष्टि–साराः साला वृक्षास्तेष्वासा येषां तेषां पक्षिणामारावाणाम् आसारो भूमा यत्र सा पुनर्वाचा आलीढा वर्ण्या न भवति सा चेति । श्रीलीलावृत्तम् ॥ २७ ॥

शमदमौ मदमौढ्यहरौ वहन्
मधुरिपुं धुरि पुण्यकृतां स्थितः ।
विनमतीनमतीव तवाऽर्चको
निजगदं जगदम्ब जहाति च ॥ २८ ॥

शमेति । हे जगदम्ब ! तवाऽर्चकः पूजकः मदः संपद्गादिजन्यः, मौढ्यमज्ञत्वम्, एतौ हरतस्तौ शमो वासनात्यागः, यमो बाह्येन्द्रियनिरोध,स्तौ वहन् स्वीकुर्वन् पुण्यवतां धुर्यग्रे स्थितः सन् तवेनं पतिं मधुरिपुमतीव नमति, च परं निजगदं भवरोगं जहाति । ओहाक्त्यागे, कर्तरि लट् । द्रुतविलम्बितम् ॥ २८ ॥

जननि त्वया परिचरत्सुरकि-
न्नरकान्तया नयजुषा स्तुतया ।

---

२८ हे जगदम्ब ! तवाऽर्चकः मदमौढ्यहरौ ( अहंकारमौर्ख्यनाशकौ ) शमदमौ वहन् पुण्यकारिणामग्रगण्यः सन् तव इनं ( स्वामिनं ) मधुरिपुम् अतीव विनमति, एवं निजगदं ( स्वकीयं गदं संसारव्याधिं ) च जहातीति त्वत्पूजकस्य पुण्यलाभपूर्वकं शमदमादिप्राप्तिर्विष्णुभक्तिः, संसारदुःखनिवृत्तिश्च भवतीत्याह ।

२९ हे जननि ! परिचरत्सुरकिन्नरकान्तया ( परिचरणनिरतदेवकिन्नराऽङ्गनया ) कलुषनमन्नरकाऽन्तया ( कृतनम्रजननरकनाशया )

हृदि मे विना किमपि क्लृप्तनम-

न्नरकान्तया न यजुषा स्तुतया ॥ २९ ॥

जननीति । हे जननि ! क्लृप्तः कृतः नमतां नरकस्याऽन्तो यया एवं परिचरन्त्यः सेवमानाः सुराणां किन्नराणां च कान्ताः यां पुनर्नयजुषा सशास्त्रेण यजुषा वेदेन स्तुतया तया त्वया विना मे मम हृदि किमपि नाऽस्तु । अस भुवि, प्रार्थनायां लोट् । प्रमिताक्षरावृत्तम् ॥ २९ ॥

त्वमेव सेव्या सुदृशां तव स्थिरं

रमे यतो यादवनायके बलम् ।

उरो हि शौरेरुदधेस्त्वमग्रही-

रमेयतोयादवनाय केवलम् ॥ ३० ॥

त्वमिति । हे रमे ! यतः यादवनायके हरौ स्थिरं बलं सामर्थ्यं तवैव शक्तिरूपत्वात् अतः अमेयमपरिमितं तोयं यस्मिन् तस्मादुदधेर्निर्गत्य शौरेः उरः वक्षः जगतः केवलमवनाय रक्षायै अग्रहीः, अतः सुदृशां पुंसां त्वमेव सेव्या ऽसि । वंशस्थं वृत्तम् ।

---

नयजुषा (नीतिपूर्णेन) यजुषा (यजुर्वेदेन) स्तुतया त्वया विना मे हृदि किमपि नाऽस्तु, इति निजहृदि भगवत्याः केवलं स्फूर्तिं प्रार्थ्यते ।

३० हे रमे ! यतः कारणात् यादवनायके ( हरौ ) तव बलं ( शक्तिः ) स्थिरम् एवं त्वम् अमेयतोयात् ( अपरिच्छिन्नजलात् ) उदधेः सकाशात् शौरेः उरो ( वक्षः ) अवनाय ( जगद्रक्षणाय ) केवलम् अग्रहीः ( आश्रिता ) अतः त्वमेव सुदृशां ( बुधानां ) सेव्येति हरौ प्रभवन्ती जगद्रक्षणाय हरिवक्षःस्थलमाश्रिता त्वमेव विवेकिनां सेवनीयेत्याह ।

सारसं श्रितवती ससारसं-
माननां हिमकरोपमाननाम्।
देवतां प्रणमतो मुदेव तां
वेदनादमहितां न वेदना॥ ३१॥

सारसमिति। सारसं कमलं श्रितवतीं स्थिताम(?) सारसः पक्षिभेदेन्द्वोः सारसं सरसीरुहमिति विश्वः। पुनः सारं श्रेष्ठं यत्संमाननं पूजनं तेन सहितां, यद्वा सारं चक्रं तेन सहितं विष्णुं समायाति सा। नन्द्यादित्वाल्ल्युः। इवशब्दो वाक्यालङ्कारे। पुनर्हिमकरोपमम् आननं यस्याः सा तां चन्द्रमुखीमित्यर्थः। तथा वेदनादेन वेदशब्देन महितां पूजितां देवतां मुदा प्रणमतः पुंसः वेदना दुःखं न भवतीति। रथोद्धता वृत्तम्॥ ३१॥

सा मयि देयाद्दीक्षां रमा ऽऽर्तरक्षार्थमाददे या दीक्षाम्।
यत्पदजलजनतानां सुगमं दिव्यधाम जलजनतानाम्॥ ३२॥

सेति। यस्याः पदजलजयोर्नतानां जडानामज्ञानां जनतानां जनसमूहानाम्। ग्रामजनबन्धुभ्य इति तल्। दिव्यं धाम मो-

---

३१ सारसं (पद्मं) श्रितवतीं, ससारसंमाननां (श्रेष्ठसंमानसहितां) हिमकरोपमाऽऽननां (चन्द्रसदृशमुखीं) वेदनादमहितां (वैदिकशब्दस्तुतां) तां (प्रसिद्धां रमारूपां) देवतां प्रणमतो वेदना (दुःखं) नेति त्वां प्रणमतः पुंसो दुःखाऽनुभवो न भवतीत्याह।

३२ या ऽऽर्तानां रक्षार्थं दीक्षां (व्रतम्) आददे, एवं यत्पदजलजनतानां (यच्चरणकमलनम्राणां) जलजनतानां (लडयोरैक्यात् जडानां जनतानां जनसमूहानां) दिव्यं धाम सुगमं, सा रमा मयि ईक्षां (कृपाकटाक्षं) देयादिति आर्तत्राणगृहीतदीक्षा नतजनदिव्यपददात्री भगवती मयि कृपाकटाक्षं विक्षिपतित्वत्याह।

स्वरूपं सुगमम् । अपि च या आर्तानां दीनानां रक्षार्थं दीक्षाम् आदरं जग्राह सा रमा मयि ईक्षां कृपाकटाक्षं देयात् । अयु-ग्मसंयुताऽन्त्यपदगतः सर्वचरणगो यमकालङ्कारभेदः । वृत्तं त्वा-र्यागीतिः । इदमेव वृत्तं श्रीर्हितकरत्वाणीयानिति पञ्चाशच्छ्लोकप-र्यन्तं ज्ञेयम् ॥ ३२ ॥

कमले राजीवानां कुले स्थिता त्वं गतिः परा जीवानाम् ।
जगदाराध्या यन्ति श्रेयस्त्वां ये कृताऽऽदरा ध्यायन्ति ॥३३॥

कमले इति । हे कमले ! राजीवानां कमलानां कुले स्थिता त्वं जीवानां प्राणिनां परा उत्कृष्टा गतिः प्राप्यस्थानमसि अतः कृताऽऽदरा ये नरास्त्वां ध्यायन्ति ते जगता आराध्या अर्चनीयाः सन्तः श्रेयः यन्ति प्राप्नुवन्ति । इण् गताविस्यस्माल्लट् ॥ ३३ ॥

किमपि महोदारेषु प्रथमं मधुवैरिणो महो दारेषु ।
जयति सपर्या यस्य स्थिरफलदात्री सुरद्रुपर्यायस्य ॥३४॥

किमिति । सुरद्रोरिष्टदात्कल्पतरोः पर्यायस्याऽपरशब्द-

---

३३ हे कमले ! राजीवानां ( कमलानां ) कुले ( समूहे ) स्थिता त्वं जीवानां प्राणिनां परा ( उत्कृष्टा ) गतिः ( प्राप्तव्या ) असि, ये कृतादराः ( सादराः सन्तः ) त्वां ध्यायन्ति जगदाराध्याः ( लोक-पूज्याः ) ते श्रेयः ( कल्याणं मोक्षरूपं ) यन्ति ( प्राप्नुवन्तीति [illegible] प्राणिनां गतिं,त्वद्ध्यानं च तेषां कल्याणकरं भवतीत्याह ।

३४ महोदारेषु ( अतिमहत्सु ) मधुवैरिणो दारेषु (लक्ष्म्यां) कि-मपि ( अनिर्वचनीयं)प्रथमम् ( उत्कृष्टं ) महः ( तेजः ) जयति, सुर-द्रुपर्यायस्य ( कल्पतरुकार्यनिर्वाहकस्य वदान्यस्य ) यस्य ( लक्ष्मी-महसः )सपर्या ( पूजा ) स्थिरफलदात्री ( अविनश्वरशुभफलप्रदा ) भवतीति भगवतीतेजसः पूजया ऽक्षयशुभफलाऽवाप्तिर्भवतीत्याह ।

यद् द्वितीयस्य महसः सपर्या पूजा स्थिरमविनाशि फलं ददाति सा ऽस्तु त्वन्महस्तथा तथा उदारेषु समर्थेषु मधुवैरिणः दारेषु स्त्रीषु मध्ये किमप्यनिर्वचनीयं प्रथममाद्यं पूज्यं वा महः जयतीत्यर्थः ॥ ३४ ॥

विधृतां हरिणा ऽङ्केन
त्वां प्रतिवददाननां हि हरिणाङ्केन ।
प्रणमन् जननि बिडौजा
जनो भुवि स्यात् स्वबन्धुजननिबिडौजाः ॥ ३५ ॥

धृतामिति । हे जननि ! हरिणाङ्केन चन्द्रेण प्रतिवदत् प्रतिस्पर्धां कुर्वदाननं यस्यास्ताम् एवं हरिणा कृष्णेनाऽङ्केन उत्सङ्गेन धृतां त्वां प्रणमन् जनः स्वबन्धुषु निबिडम् ओजः यस्य स सन् भुवि बिडौजा इन्द्रः स्याद्राजा भवतीत्यर्थः ॥ ३५ ॥

कलशोदधिकन्या यं
पश्यति विद्यात् स तावदधिकन्यायम् ।

———

३५ हे जननि ! हरिणा ऽङ्केन ( उत्सङ्गेन ) धृतां, हरिणाङ्केन ( चन्द्रेण ) प्रतिवदाननां ( प्रतिस्पर्धमानमुखीं ) त्वां प्रणमन् जनः स्वबन्धुजननिबिडौजाः ( निजबान्धवेषु मध्ये सविशेषतेजस्कः ) सन् भुवि बिडौजाः ( इन्द्रः, राजा ) स्यात् इति त्वत्प्रणामेन जनस्य स्वबन्धुषु तेजः प्रसरति, राज्यप्राप्तिश्च भवतीत्याह ।

३६ कलशोदधिकन्या ( सुधोदधिसुता लक्ष्मीः ) यं पश्यति स तावत् अधिकन्यायं ( सविशेषं न्यायशास्त्रं ) विद्यात्, एवं त्रयीविदा ( निखिलवेदविदुषा ) जितकश्यपकविवादेन ( विजितक-

जितकथकवितानेन

त्रयीविदा लभ्यते च कविता ऽनेन ॥ ३६ ॥

कलशेति । कलशोदधेर्दुग्धाब्धेः कन्या लक्ष्मीर्यं जनं पश्यति कृपया ऽवलोकयति स पुमान् तावदादौ साकल्येन वा ऽधिकं न्यायं शास्त्रं विद्याज्जानीयात्, चेत्यपरं त्रयीम् ऋग्यजुःसामरूपां वेत्ति तेन अतः जितं कथकानां वितानं विस्तारो येन । वितानो यज्ञविस्तारोल्लोचेषु क्रतुकर्मणीति विश्वः । अनेन पुंसा कविता कवित्वं लभ्यते प्राप्यते । दुलभष् प्राप्तौ कर्मणि लट् ॥ ३६ ॥

श्रीः सेवानरकेषु

त्वया ऽर्थ्यतां हरिरिताढ्यवानरकेषु ।

मां विनिपात्य न घोराः

शुचो यथा नयति किं तु पात्यनघोराः ॥ ३७ ॥

श्रीरिति । हे श्रीः ! अनघं निष्पापम् उरः हृदयं यस्य ह-

---

दिजनेन ) अनेन कविता ( काव्यरचनाशक्तिः ) लभ्यते इति रमाकटाक्षवीक्षितस्य वेदन्यायशास्त्रवित्त्वं वादिजयः कवितालाभश्चेत्येतानि फलानि सिध्यन्तीत्याह ।

३७ हे श्रीः ! अनघोराः ( पुण्यवक्षःस्थलः ) हरिः इताऽऽढ्यवानरकेषु ( उपासितधनिकरूपवानरेषु ) सेवारूपेषु नरकेषु मां विनिपात्य घोराः (दारुणाः) शुचः (शोकान्) यथा न नयति, किं तु पाति, तथा त्वया अर्थ्यतामिति धनिकसेवारूपरौरवेषु मामपातयित्वा यथा मां त्रायेत हरिस्तथा त्वया स प्रार्थ्यतामित्याह ।

रिः इताः प्राप्ताः आढ्या धनिन एव वानराः कपयो यैस्ते-षु। शेषाद्विभाषेति कप्। एतादृशेषु सेवारूपा ये नरका निरया-स्तेषु मां विनिपात्य यथा येन प्रकारेण शुचः शोकान् न नयति किं तु पाति रक्षति तथा त्वया लक्ष्म्या अर्थ्यतां प्रार्थ्यता-मित्यर्थः॥ ३७॥

सततविकाराऽकल्पं
प्राप्तोऽहं देहमम्ब काराकल्पम्।
कुभवादाशु भवत्या
स्वयमुद्धार्यो रमे सदा शुभवत्या॥ ३८॥

सततेति। हे अम्ब! हे रमे! सततं सर्वदा विकारा रोगाः आकल्पानि भूषणानि यस्य। आकल्पवेषौ नेपथ्यमि-त्यमरः। यद्वा सततं विकाराः यस्मिन् अत एव अकल्पमस-मर्थं काराकल्पं बन्धनशालासदृशं, कारा स्याद्बन्धनाऽऽलये इत्यमरः। देहं शरीरम् अहं कविः प्राप्तोऽस्मि, अतः सदा सर्व-दा शुभवत्या कल्याणविशिष्टया कुत्सिताद्भवात्संसारात् स्वयम् आत्मनैव उद्धारयितुं योग्यः अस्मीत्यर्थः॥ ३८॥

साराराऽराऽज्ञान-
स्थानेन किमस्ततेजसा राज्ञा नः।

---

३८ हे अम्ब! रमे! अहं सततविकाराऽकल्पं (सन्ततविकारैरस-मर्थं) काराकल्पं (बन्धनालयतुल्यं) देहं प्राप्तोऽस्मि, सदा शुभवत्या (कल्याणिन्या) भवत्या कुभवात् (कुत्सितसंसारात्) आशु उद्धार्य इति देहबन्धं प्राप्तस्याऽऽत्मनः संसारोद्धारं प्रार्थयते।

३९ हे श्रीः! साराऽसाराऽज्ञानस्थानेन (साराऽसारविचार-विधुरेण) अस्ततेजसा (नष्टतेजसा) राज्ञा नः किम्? अभिमानस-

श्रीस्त्वयि मानसमेतद्

न्यस्येम विमुक्तये ऽभिमानसमेतम् ॥ ३९ ॥

सारेति । सारश्चाऽसारश्च । सारो बलं स्थिरांशं चेत्यस-र: । तयोरज्ञानस्य स्थानभूतेन तथा अल्पं तेजो यस्य तेन रा-ज्ञा नो ऽस्मान् प्रति किं कारणं (?)न किमपीति भावः। हे श्रीः! अभिमानेन समेतं युक्तम् इदं मानसं विमुक्तये मुक्त्यर्थं त्वयि न्यस्येम वयमिति शेषः ॥ ३९ ॥

व्यक्तिं विन्देमहि ता-

मिन्द्रादिसुरैर्नवाऽरविन्दे महिताम् ।

मध्यमतारकवर्णा-

ऽभिहिता या नखजितोरुतारकवर्णा ॥ ४० ॥

व्यक्तिमिति । या श्रीः मध्यमेन अकारोकारात्मना ता-रकस्य प्रणवस्य वर्णेन उकारेण अभिहिता उक्ता उकारवाच्ये-

---

मेतं ( साऽहङ्कारम् ) एतन्मानसं विमुक्तये त्वयि न्यस्येम ( स्थापये-म) इति अविवेकिराजोपसर्पणेन नाऽस्माकं प्रयोजनं, मोक्षप्राप्तये त्व-य्येव स्वीयं मनो निवेशयेमेत्याह ।

४० या मध्यमतारकवर्णाऽभिहिता ( अकारोकारमकारघटितस्य तारकस्य 'ओम्' इत्याकारकस्य मध्यमेन वर्णेन उकारेणाऽभिहि-ता, उकारवाच्येति यावत् ) एवं नखजितोरुतारकवर्णा ( करुरुह-विजितमहानक्षत्रवर्णा, उज्ज्वलनखेति यावत् ), इन्द्रादिदेवैर्नवे ऽरविन्दे महितां तां व्यक्तिं (रमारूपां) विन्देम ( लभेमहि ) इति भ-गवतीलाभमाशास्ते ।

त्यर्थः । तदुक्तं शङ्करपादकृतप्रणवव्याख्याने ।

"अकारः पद्मजः प्रोक्त उकारः पद्मलोचनः ।
मकारः शङ्करः प्रोक्तस्तस्मादेतत्त्रयाऽऽत्मकम् ॥
अकारो भारती प्रोक्त उकारः कमला स्मृता ।
मकारः शाङ्करी प्रोक्ता तस्मादेतत्त्रयात्मकम् ॥ इति ।

अन्यच्च 'उमेति मात्रा तपसो निषिद्धे'ति कालिदासकृत-कुमारसंभवे । उकारः शक्तिपरत्वेन मल्लिनाथसूरिभिर्व्याख्यातः । साहित्यरत्नाऽऽकरे ऽपि ।

"शक्तिग्रहं व्याकरणोपमान-
कोशाऽऽप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः" ॥ इति ।

तां इन्द्रादिभिः सुरैर्देवैः नवे नूतने अरविन्दे कमले महितां पूजितां लक्ष्मीरूपां व्यक्तिं विन्देमहि वयं प्राप्नुयाम इत्यर्थः ॥ ४० ॥

हृतसदरिद्रव्याधिश्रितमुच्छिन्नदुर्दरिद्रव्याधिः ।
अतुलकृपा या देवप्रणुता सा रमा ऽत्र पायादेव ॥४१॥

हृतेति । या हृतं सतामरीणां द्रव्यं यया सा अधिश्रि-

---

४१ या हृतसदरिद्रव्या ( अपहृतोत्तमशत्रुद्रव्या ) उच्छिन्नदुर्दरिद्रव्याधिः ( उन्मूलितदुष्टदरिद्रपीडा ) अतुलकृपा ( निरुपमदया ) देवप्रणुता सा रमा आधिश्रितं ( समप्रोऽथयं ) मामत्र पायादेवेति निजपालनमाशास्ते ।

तमधिकं श्रितम आधिं मनोव्यथां वा ऽऽश्रितं उच्छिन्नः नाशितः दुष्टः दरिद्रः तद्रूपो(?) व्याधिर्यया सापुनर्देवैर्ब्रह्मादिभिः प्रकर्षेण नुता स्तुता, अन्यच्च अतुला निरुपमा कृपा दया यस्याः सा प्रसिद्धा रमा श्रितमाश्रितं मां प्रति अत्र इह लोके पायात् रक्षतु इत्यर्थः ॥ ४१ ॥

शोषितभवनदया ऽग-
स्तन्येशः कचजितोत्प्रभवनदया ऽऽगः ।
सो ऽनभिभवनदयागः
सोढा प्रभवेत् त्वया ऽभवनदयागः ॥ ४२ ॥

शोषितेति । शोषितः भवरूपो नदो यया तथा ऽगवत्पर्वतवत् स्तनौ यस्याः सा तया पुनः कचजितः उत्प्रभः वनदः मेघो यया तया त्वया स ईशो भगवान् नास्ति अभिभवः प्रतिषेधो यस्यास्तां दयां गच्छति तादृशः सन् आगः अस्मदपराधान् सोढा प्रभवेत, कीदृशः अभवनं जननाऽऽभावं मो-



४२ शोषितभवनदया ( शुष्कीकृतसंसाररूपनदया ) अगस्तन्या ( पर्वतोच्चकुचया ) कचजितोत्प्रभवनदया ( केशविजितप्रौढमेघया ) त्वया अनभिभवनदयागः ( अतिरस्कृतदयागामी ) अभवनदयागः ( अपुनर्भवप्रदपूजः ) स ईशो ( हरिः ) आगः ( मदीयमपराधं ) सोढा प्रभवेत् ( क्षमेत ) इति त्वया सहितो भगवान् मदपराधं मर्षयेदित्याशास्ते ।

क्षं ददाति तादृशो यागः पूजादिर्यस्य सः अस्य वासुदेवस्य भवनं वैकुण्ठं वा ॥ ४२ ॥

त्वां हि सुधी राजयति
स्तुतां स्तवैर्यः प्रमानिधी राजयतिः ।
भवति स, धी राजयति
श्रीस्तं, स भुवोऽत्र सोदधीरा जयति ॥ ४३ ॥

त्वामिति । हे श्रीः ! यः सुधीः त्वां स्तवैः स्तुतां कृत्वा राजयति नीराजयति, इदं सर्वपूजोपलक्षणम् । स प्रमानिधि-र्ज्ञानसागरः राजयतिः यतीनां राजा भवति । अत्रा ऽनुस्वा-रस्य चित्रत्वभङ्गाऽभावे प्रमाणं वाग्भटालङ्कारे। 'नाऽनुस्वरविस-र्गौ हि चित्रभङ्गाय कल्पत (?) इति । राजदन्तादिरयम् । धीर्बु-द्धिस्तं राजयत्यलङ्कुरुते । सः अत्रोदधेः इरया जलेन सहिता भुवः जयति । इरा मद्ये च वारिणीति कोशः ॥ ४३ ॥

भक्ततमानायतया
स्वदृशा कमले सुरोत्तमानायत या ।

---

४३ हे श्रीः ! प्रमानिधिः ( तत्त्ववित् ) यः सुधीः स्तुतां त्वां स्तवैः राजयति ( शोभयति ) स राजयतिः ( यतिराट् ) भवति, धीः बुद्धिः तं राजयति ( राजानं करोति, सूक्ष्मबुद्धिः सन् स राजा भवतीति यावत् ) अतश्च सोदधीराः ( उदधेः समुद्रस्य इरा जलानि तत्सहिताः 'सागरजलान्ता इति यावत् )भुवः जयतीति तव स्तुत्या योग,-सुबुद्धि,राज्य,जय,लाभो भवतीत्याह ।

४४ हे कमले ! या ( ते दृक् ) भक्ततमान् सुरोत्तमान् आयत ( प्रापत् ) तया स्वदृशा असमानाय ( निरुपमाय ) श्रेयसे ( मोक्षरूपकल्याणप्राप्तये ) आनायतया ( जालरूपतया, बन्धत्वेनेति यावत् ) विधुतं भवं ( संसारं ) शमय इति अतिभक्तदेवोत्तमगा-

विश्रुतमानायतया

शमय भवं श्रेयसे ऽसमानाय तया ॥ ४४ ॥

भक्तेति । हे कमले ! त्वं भक्तनम्रा एकान्तभक्ता आनायो जालं यस्यास्तस्या भावस्तत्ता तया एवं सुरोत्तमेषु अनायतया अविस्तृतया पुनः समानाय केवलाय श्रेयसे मोक्षाय तं दातुमित्यर्थः । विश्रुतौ विख्यातौ मान अभिमानः आयतः प्रभावश्च(?) यस्याः सा तया प्रसिद्धया स्वस्य दृशा भवमस्मत्संसारं शमय नाशय इत्यर्थः ॥ ४४ ॥

श्रीः परभागवती य-

म्यभिष्टुता सा मुकुन्दभागवती यम् ।

फणिवृषभाऽगवतीयं

पश्यति भाजते पदं स भागवतीयम् ॥ ४५ ॥

श्रीरिति । परभागवती गुणोत्कर्षवती । परभागो गुणोत्कर्ष इति हैमः । पुनर्यमिभिर्भिष्टुता मुकुन्दस्य भगवतः इयं मुकुन्दभागवती शिवभागवतादीनां भाष्ये साधुत्वोक्तेः फणिवृषभः

---

मिन्या निजदृशा ऽस्माकं मोक्षलाभाय बन्धरूपं संसारं शमयेति प्रार्थयते ।

४५ परभागवती ( गुणोत्कृष्टा ) यम्यभिष्टुता ( संयमिभिरभितः स्तुता ) मुकुन्दभागवती ( मुकुन्दस्य भगवतः इयं, पत्नी ) फणिवृषभाऽगवती ( फणिवृषाऽचलवती, शेषशैलवासिनीति यावत् ) सेयं श्रीर्यं पश्यति स भागवतीयं ( भाग्यवत्सम्बन्धि, भाग्यवद्गम्यमिति यावत् । भगवत्सम्बन्धि वा ) पदं ( वैकुण्ठं ) भजते इति भगवतीकटाक्षवीक्षितस्य वैकुण्ठप्राप्तिर्भवतीत्याह ।

फणिश्रेष्ठः तत्संज्ञको ऽयः अगः पर्वतः तद्वतीयं सा प्रसिद्धा श्रीः यं जनं पश्यति स भगवतः महाभाग्यवतः इदं भागवतीयं,(?) वृद्धाच्छः। पदं भजति। यद्वा भगवतः इदं भागवतीयं, वा-नामधेयस्येति छप्रत्यये साधुत्वम्। 'भागवतीयत्वेनैव परिसमाप्ता' इति भागवतप्रयोगात्॥ ४५॥

मिथ्यातनयाऽऽचार्यारहितेनाऽन्तस्त्वया ऽब्धितनया चार्या।
त्वं चित्त न याचार्याप्रभृतीरितरा नमच्छितनयाचार्याः॥४६॥

मिथ्येति। हे चित्त! त्वया मिथ्या निरर्थया तनयानां पुत्राणाम् आचार्यस्य भावः आचार्या आचार्यत्वं तया रहितेन सता अन्तः स्वमध्ये अब्धितनया श्रीः आचार्या आ समन्तात्सञ्चार्या। ण्यन्ताद्यत्। किं च त्वं आर्या चण्डी प्रभृतिर्यासां ताः इतरा देवताः न याच न प्रार्थय। कीदृशीस्ताः? नमन्तः नमस्यन्तः शिताः दुर्बला ये नयानाम् आगमानाम् आचार्याः प्रवक्तारो(?) यास्ताः। निशिते दुर्बले शितमिति मेदिनी। सकलमनोरथपूरणकारिणीम् इमां श्रीदेवीमपहाय वारं वारं कामाऽऽकुलिततया कामिनीभोगजन्यतनयसंस्कारकरणव्यापृततया वृथा पुनः पुनः कुतः श्राम्यसि? इति भावः॥ ४६॥

---

४६ हे चित्त! मिथ्यातनयाचार्यारहितेन (मृषाभूतपुत्राऽऽचार्यादिभिरा समन्तादू रहितेन) त्वया ऽन्तः अब्धितनया चार्या (संचारणीया) एवं त्वं नमच्छितनयाऽऽचार्याः (नमतां शितस्याऽल्पस्य नयस्य आचार्याः प्रबोधिकाः) आर्याप्रभृतीः (गौरीमुखाः) इतरा न याचेति मिथ्याभूतपुत्रप्रभृतीनां परिचरणादिकं कार्यं विहाय त्वया लक्ष्मीर्ध्येया, प्रणमतामल्पनीतिबोधिनीर्गौर्यादिदेवता मा किं चित् त्वं याचस्वेति निजं चित्तमनुशास्ति।

मां हरिरामा ऽऽयतया दृशा पुनात्वेनसां विरामाय तया ।
प्रथितकरामायतया काके ऽप्यसुरे परां कृपामायतया ॥ ४७ ॥

मामिति । या दृक् अमायतया निष्कपटत्वेन असुखदे ऽविचार्यकारित्वात् असुरे ऽपि काके परां कृपामायत प्राप्ता । अय गतावित्यस्माल्लङ् । तया आयतया दृशा हरेः रामा स्त्री मां पुनातु पावयत्वित्यर्थः । कीदृशी सा एनसां पापानां विरामाय प्रथितः प्रख्यातः करो यस्याः सा ॥ ४७ ॥

राशेर्वारामस्य श्रीस्त्वं दुहिता नवोत्सवाऽऽरामस्य ।
अवनिभवा रामस्य प्रिया धियं नः सदोषवारामस्य ॥ ४८ ॥

राशेरिति । हे श्रीः ! अस्य वारां राशेः सिन्धोर्दुहिता कन्या पुनरवनिभवा सती नवोत्सवानामारामस्य उपवनभूतस्य रामस्य प्रिया सा त्वं नः दोषवारेण दोषसमूहेन सहितां धियं अस्य क्षिप दूरीकुर्वित्यर्थः । असु क्षेपणे इत्यस्माल्लोट् ॥ ४८ ॥

---

४७ एनसां विरामाय ( नाशाय ) प्रथितकरा ( प्रसिद्धहस्ता ) हरिरामा ( रमा ) अमायतया ( मायारहिततया, शुद्धाचरततयेति यावत् ) असुरे काके ऽपि ( साऽपराधे जयन्ते ऽपि ) परां कृपाम् आयतया ( प्राप्तया ) तया ( प्रसिद्धया ) आयतया ( दीर्घया ) दृशा मां पुनात्विति कटाक्षक्षेपेण स्वपावनं याचते ।

४८ हे श्रीः ! अस्य वारां राशेः ( समुद्रस्य ) दुहिता, नवोत्सवाऽऽरामस्य ( नवीनोत्सवोपवनरूपस्य ) रामस्य प्रिया अवनिभवा ( पृथिव्युत्पन्ना सीतारूपा ) त्वं सदोषवारां ( दोषसमूहसहितां ) नो धियम् अस्य ( प्रक्षिप ) इति निजधियो दोषदूरीकरणं प्रार्थयते ।

हरिसुरदारुण्येनःस्थितिमुषि वल्लिवदभूयदारुण्येन ।
भृतवन्दारुण्येनत् त्वीडे दैवतमसङ्गि दारुण्येन ॥ ४९ ॥

हरीति । एनसः पातकस्य स्थितिं वसतिं मुष्णाति नाशयति तस्मिन्, तथा भृताः पोषिताः वन्दारवः येन तस्मिन् । वन्दारुरभिवादके इत्यमरः । हरिर्वेङ्कटपतिरेव सुरदारु तत्प्रकृतिभूतः कल्पवृक्षः तस्मिन् आरुण्येन श्रीविद्यारूपेण 'बालार्कसन्निभा'मित्यादिना तस्या आरक्तत्ववर्णनात् । लक्षितलक्षणया रागेण वा वल्लिवत् लतासदृशम् अभूत् वृक्षे वल्लिवत् हरौ संलग्नं बभूवेति भावः । एनत् दारुणस्य कठिनस्य भावः दारुण्यं तेन असङ्गि अभाववत् दैवतं श्रीरमादेव्याख्यम् अहं स्तौमीत्यर्थः ॥ ४९ ॥

श्रीर्हितकरवाणी यान् पश्यति तेभ्यो नमांसि करवाणीयान् ।
हृतशोकरवाऽणीयान् हातुमनर्थान्सुमप्रकरवाणीयान्॥५०॥

श्रीरिति । हितकरा वाणी यस्याः सा । अत्र कवभावश्चि-

---

४९ आरुण्येन उपलक्षितम् (अरुणवर्णा) यत् (दैवतम्) एनःस्थितिमुषि (पापस्थितिविनाशके) भृतवन्दारुणि (पोषिताऽभिवादके) हरिसुरदारुणि ( हरिरूपे कल्पवृक्षे ) वल्लिवत् ( लतावत् ) अभूत् दारुण्येन ( क्रौर्येण ) असङ्गि ( अस्पृष्टं ) तद्दैवतमीडे ( स्तौमि ) इति हरिरूपे कल्पवृक्षे लतामिव शोभमानां दयामयीं श्रीदेवीं स्तौमीत्याह ।

५० इयान् अणीयान् ( अत्यल्पकः ) अहं सुमप्रकरवाणीयान् (पुष्पबाणसम्बन्धिनः)अनर्थान् हातुं हितकरवाणी (हितोत्पादकवाक्) हृतशोकरवा ( अपहृतदुःखशब्दा ) श्रीर्यान् पश्यति तेभ्यो नमांसि करवाणि, इति भगवतीदृग्विषयान् नमस्करोति ।

न्त्यः । समासान्तविधेरनित्यत्वाद्वा । तथा ह्रुतः शोक इति रुतः शब्दो यया भक्तशोकनाशिकेति यावत् । सा श्रीः यान् पुरुषान् पश्यति तेभ्यः सुमप्रकराः पुष्पसमूहा बाणाः शरा यस्य स कामः तस्य इमे सुमप्रकरत्राणीयास्तान् । वा नामधेयस्येत्यत्र वृद्धसंज्ञाविकल्पाच्छप्रत्ययस्य साधुत्वम् । अनर्थान् हातुं त्यक्तुं इयान् अणीयानत्यल्पो ऽहं नमांसि नमस्कारान् करवाणि कर्तुमर्हामि(?) ॥ ५० ॥

महोदयासारभुजात्वयातया
महोदया सारभुजा त्वया तया ।
त्रिलोपकारातिशयास्तदे विभा-
त्रिलोपकारातिशया ऽऽस्त देवि भा ॥ ५१ ॥

मह इति । त्रिलोपकानामरातीनाम् अतिशयस्योत्कर्षस्याऽस्तं ददाति तत्संबुद्धौ हे देवि ! महस्तेजः ददाति तया, तथा सारम् उत्कृष्टभोगं भुनक्ति तया, तथा महतः विपुलस्योदयस्य आसारः संपातः यत्र स भुजो यस्यास्तत्त्वं यातया प्राप्तया त्वया लक्ष्म्या

---

५१ हे त्रिलोपकाऽरातिशयाऽस्तदे ! ( त्रिलोपकानां लोकनाशकानामरातीनां शयेन हस्तेन अस्तं नाशं ददाति तत्संबुद्धौ ) देवि ! महोदयाऽऽसारभुजात्वयातया ( महान् उदयाऽऽसार उदयपरम्परा ययो स्तथाविधौ भुजौ यस्याः सा महोदयाऽऽसारभुजा, तस्या भावस्तत्त्वं तद् यातया प्राप्तया ) महोदया ( तेजोदायिन्या ) सारभुजा ( सारं भुनक्ति तया ) तया ( प्रसिद्धया ) त्वया हेतुभूतया विभौ ( हरौ ) इलोपकारातिशया ( इलाया भूम्या उपकारस्याऽतिशयो यस्यास्तादृशी ) भा ( कान्तिः ) आस्त ( अवर्तत ) इति हरौ भूम्युपकारकारिणी प्रभा त्वद्धेतुकैवेत्याह ।

हेतुभूतया विभौ वेङ्कटनायके इलायाः पृथ्व्याः उपकारे अतिशयो यस्याः सा भा कान्तिः आस्त स्थिता । आस उपवेशने इत्यस्माल्लुङ् । अयं अर्धाऽभ्याससमुद्गकयमकालङ्कारभेदः । तदुक्तं दण्डिना ।

'अर्धाऽभ्यासः समुद्गः स्यात्तस्य भेदास्त्रयो मताः ।
पादाऽभ्यासो ऽप्यनेकात्मा दर्श्यते स निदर्शनैः' ॥ इति ।

वंशस्थं वृत्तम् । इदं पादाऽभ्यासयमकचित्रम् ॥ ५१ ॥

सुरक्षया देवहिता दृशा ऽवमा-
ऽसुरक्षयादेव हि तादृशा ऽव मा ।
मुदा रमे धेहि गिरा विहानता-
मुदारमेधे ऽहिगिराविहाऽऽनता ॥ ५२ ॥

सुरेति । उदारा मेधा बुद्धिर्यस्यास्तत्सम्बुद्धौ हे रमे ! अहिगिरौ आनता प्राप्ता असुराणां क्षयादेव देवानां हिता हितकारिणी, तथा अवमा अवस्थिता मा कान्तिर्यस्याः, कान्तिमतीत्यर्थः । रक्षणकर्त्री वा । अव रक्षणादावित्यस्माच्छाम्यवेति मूत्रेणाऽऽम्प्रत्ययान्तो निपातः । सुष्ठु रक्षति तया प्रसिद्धया दृशा मा इति माम् अव रक्ष । अव्ययानामनेकार्थत्वात् । हि पुनः

---

५२ हे उदारमेधे ! ( महाप्राज्ञे ! ) रमे ! इह अहिगिरौ ( शेषाऽचले ) आनता ( प्राप्ता ) त्वं मुदा गिरा ( वाचा ) विहानतां ( हान्यभावं ) धेहि ! एवम् अवमाऽसुरक्षयात् ( अवमा अधमा ये ऽसुरास्तेषां नाशात् ) सुरक्षया ( शोभनया रक्षया ) देवहिता ( सुरहितकारिणी ) त्वं तादृशा ( हितकारिण्या ) दृशा मा ( माम् ) अव हीति निश्चये, इति स्वहानिविनाशं पालनं च प्रार्थयते ।

मां हरिरामा ऽऽयतया दृशा पुनात्वेनसां विरामाय तया ।
प्रथितकरामायतया काके ऽप्यसुरे परां कृपामायतया ॥ ४७ ॥

मामिति। या दृक् अमायतया निष्कपटत्वेन असुखदे ऽविचार्यकारित्वात् असुरे ऽपि काके परां कृपामायत प्राप्ता । अय गतावित्यस्माल्लङ् । तया आयतया दृशा हरेः रामा स्त्री मां पुनातु पावयत्वित्यर्थः । कीदृशी सा एनसां पापानां विरामाय प्रथितः प्रख्यातः करो यस्याः सा ॥ ४७ ॥

राशेर्वारामस्य श्रीस्त्वं दुहिता नवोत्सवाऽऽरामस्य ।
अवनिभवा रामस्य प्रिया धियं नः सदोषवारामस्य ॥ ४८ ॥

राशेरिति । हे श्रीः ! अस्य वारां राशेः सिन्धोर्दुहिता कन्या पुनरवनिभवा सती नवोत्सवानामारामस्य उपवनभूतस्य रामस्य प्रिया सा त्वं नः दोषवारेण दोषसमूहेन सहितां धियं अस्य क्षिप दूरीकुर्वित्यर्थः । असु क्षेपणे इत्यस्माल्लोट् ॥ ४८ ॥

———

४७ एनसां विरामाय ( नाशाय ) प्रथितकरा ( प्रसिद्धहस्ता ) हरिरामा ( रमा ) अमायतया ( मायारहिततया, शुद्धचित्ततयेति यावत् ) असुरे काके ऽपि (माऽपराधे जयन्ते ऽपि) परां कृपाम् आयतया ( प्राप्तया ) तया ( प्रसिद्धया ) आयतया ( दीर्घया ) दृशा मां पुनात्विति कटाक्षक्षेपेण स्वपावनं याचते ।

४८ हे श्रीः ! अस्य वारां राशेः ( समुद्रस्य ) दुहिता, नवोत्सवाऽऽरामस्य ( नवीनोत्सवोपवनरूपस्य ) रामस्य प्रिया अवनिभवा ( पृथिव्युत्पन्ना सीतारूपा ) त्वं सदोषवारां ( दोषसमूहसहितां ) नो धियम् अस्य ( प्रक्षिप ) इति निजधियो दोषदूरीकरणं प्रार्थयते ।

हरिसुरदारुण्येनःस्थितिमुषि वल्लिवदभूद्यदारुण्येन ।
भृतवन्दारुण्येनत् त्वीडे दैवतमसङ्गि दारुण्येन ॥ ४९ ॥

हरीति। एनसः पातकस्य स्थितिं वसतिं मुष्णाति नाशयति तस्मिन्, तथा भृताः पोषिताः वन्दारवः येन तस्मिन्। वन्दारुरभिवादके इत्यमरः। हरिर्वेङ्कटपतिरेव सुरदारु तत्प्रकृतिभूतः कल्पवृक्षः तस्मिन् आरुण्येन श्रीविद्यारूपेण 'बालार्कसन्निभा'मित्यादिना तस्या आरक्तत्ववर्णनात्। लक्षितलक्षणया रागेण वा वल्लिवत् लतासदृशम् अभूत् वृक्षे वल्लिवत् हरौ संलग्नं बभूवेति भावः। एनत् दारुणस्य कठिनस्य भावः दारुण्यं तेन असङ्गि अभाववत् दैवतं श्रीरमादेव्याख्यम् अहं स्तौमीत्यर्थः ॥ ४९ ॥

श्रीर्हितकरवाणी यान् पश्यति तेभ्यो नमांसि करवाणीयान् ।
हृतशोकरवाऽणीयान् हातुमनर्थान्सुमप्रकरवाणीयान्॥ ५० ॥

श्रीरिति। हितकरा वाणी यस्याः सा। अत्र कबभावश्चि-

---

४९ आरुण्येन उपलक्षितम (अरुणवर्णम्) यत् (दैवतम्) एनःस्थितिमुषि (पापस्थितिविनाशके) भृतवन्दारुणि (पोषिताऽभिवादके) हरिसुरदारुणि (हरिरूपे कल्पवृक्षे) वल्लिवत् (लतावत्) अभूत् दारुण्येन (क्रौर्येण) असङ्गि (अस्पृष्टं) तद्दैवतमीडे (स्तौमि) इति हरिरूपे कल्पवृक्षे लतामिव शोभमानां दयामयीं श्रीदेवीं स्तौमीत्याह।

५० इयान् अणीयान् (अत्यल्पकः) अहं सुमप्रकरवाणीयान् (पुष्पबाणसम्बन्धिनः) अनर्थान् हातुं हितकरवाणी (हितोत्पादकवाक्) हृतशोकरवा (अपहृतदुःखशब्दा) श्रीर्यान् पश्यति तेभ्यो नमांसि करवाणि, इति भगवतीदृग्विषयान् नमस्करोति।

न्त्यः । समासान्तविधेरनित्यत्वाद्वा । तथा हृतः शोक इति रवः शब्दो यया भक्तशोकनाशिकेति यावत् । सा श्रीः यान् पुरुषान् पश्यति तेभ्यः सुमप्रकराः पुष्पसमूहा बाणाः शरा यस्य स कामः तस्य इमे सुमप्रकरत्राणीयास्तान् । त्रा नामधेयस्येत्यत्र वृद्धसंज्ञाविकल्पाच्छप्रत्ययस्य साधुत्वम् । अनर्थान् हातुं त्यक्तुं इयान् अणीयानल्पो ऽहं नमामि नमस्कारान् करवाणि कर्तुमर्हामि(?) ॥ ५० ॥

महोदयासारभुजात्वयातया
महोदया सारभुजा त्वया तया ।
त्रिलोपकारातिशयास्तदे त्रिभा-
त्रिलोपकारातिशया ऽऽस्त देवि भा ॥ ५१ ॥

मह इति । त्रिलोपकानामरातीनाम् अतिशयस्योत्कर्षस्याऽस्तं ददाति तत्संबुद्धौ हे देवि ! महस्तेजः ददाति तया, तथा सारम् उत्कृष्टभोगं भुनक्ति तया, तथा महतः विपुलस्योदयस्य आसारः संपातः यत्र स भुजो यस्यास्तत्त्वं यातया प्राप्तया त्वया लक्ष्म्या

---

५१ हे त्रिलोपकाऽरातिशयाऽस्तदे ! ( त्रिलोपकानां लोकनाशकानामरातीनां शयेन हस्तेन अस्तं नाशं ददाति तत्संबुद्धौ ) देवि ! महोदयाऽऽसारभुजात्वयातया ( महान् उदयाऽऽसार उदयपरम्परा ययो स्तथाविधौ भुजौ यस्याः सा महोदयाऽऽसारभुजा, तस्या भावस्तत्त्वं तद् यातया प्राप्तया ) महोदया ( तेजोदायिन्या ) सारभुजा ( सारं भुनक्ति तया ) तया ( प्रसिद्धया ) त्वया हेतुभूतया विभौ ( हरौ ) इलोपकाराऽतिशया ( इलाया भूम्या उपकारस्याऽतिशयो यस्यास्तादृशी ) भा ( कान्तिः ) आस्त ( अवर्तत ) इति हरौ भूम्युपकारकारिणी प्रभा त्वद्धेतुकैवेत्याह ।

हेतुभूतया विभौ वेङ्कटनायके इलायाः पृथ्व्याः उपकारे अति-शयो यस्याः सा भा कान्तिः आस्त स्थिता । आस उपवेशने इत्यस्माल्लुङ् । अयं अर्धाऽभ्याससमुद्गकयमकालङ्कारभेदः । त-दुक्तं दण्डिना ।

'अर्धाऽभ्यासः समुद्गः स्यात्तस्य भेदास्त्रयो मताः ।
पादाऽभ्यासोऽप्यनेकात्मा दर्श्यते स निदर्शनैः'॥इति।

वंशस्थं वृत्तम् । इदं पादाऽभ्यासयमकचित्रम् ॥ ५१ ॥

सुरक्षया देवहिता दशा ऽवमा-
ऽसुरक्षयादेव हि तादृशा ऽव मा ।
मुदा रमे धेहि गिरा विहानता-
मुदारमेधे ऽहिगिराविहाऽऽनता ॥ ५२ ॥

सुरेति । उदारा मेधा बुद्धिर्यस्यास्तत्सम्बुद्धौ हे रमे ! अ-हिगिरौ आनता प्राप्ता असुराणां क्षयादेव देवानां हिता हि-तकारिणी, तथा अवमा अवस्थिता मा कान्तिर्यस्याः, कान्ति-मतीत्यर्थः। रक्षणकर्त्री वा। अव रक्षणादावित्यस्माच्छाश्चेति सू-त्रेणाऽऽम्प्रत्ययान्तो निपातः। सुष्ठु रक्षति तया प्रसिद्धया दशा मा इति माम् अव रक्ष । अव्ययानामनेकार्थत्वात् । हि पुनः

---

५२ हे उदारमेधे ! ( महाप्रज्ञे ! ) रमे ! इह अहिगिरौ ( शेषा-ऽचले ) आनता ( प्राप्ता ) त्वं मुदा गिरा ( वाचा ) विहानतां ( हा-न्यभावं ) धेहि ! एवम् अवमाऽसुरक्षयात् ( अवमा अधमा ये ऽसुरा-स्तेषां नाशात् ) सुरक्षया ( शोभनया रक्षया ) देवहिता ( सुरहित-कारिणी ) त्वं तादृशा ( हितकारिण्या ) दशा मा ( माम् ) अव ही-ति निश्चये, इति स्वहानिविनाशं पालनं च प्रार्थ्यते ।

मुदा गिरा विहानतां हान्यभावं धेहि देहि। डुधाञ् धारणपोषणयोः, दानेऽप्येके इत्यस्माल्लोटि घ्वसोरेद्धावभ्यासलोपश्चेत्येत्वाऽभ्यासलोपौ ॥ ५२ ॥

केवलं तुच्छविमता हरिणा क्षितवामताः ।
के वलन्तु च्छविमता हरिणाक्षि तवामताः ॥ ५३ ॥

केवलमिति । हे हरिणाऽक्षि ! तव अक्षता अक्षया वामता सुन्दरता सा केवलम् एकं तुच्छानां विमता मान्या न भवति । वरं तु छविः कान्तिरस्याऽस्ति तेन सुन्दरेणेत्यर्थः। हरिणा श्रीकृष्णेन के सुखविषये । कं वारिणि सुखे ऽपि च इत्यमरः । आमता सर्वतो मता अङ्गीकृता, किं पुनरन्यैर्विद्वद्भिरिति भावः । यद्वा छविमता ऽपि हरिणा ते अक्षि तवामता आमता इति तु वरं(?)श्रेष्ठमिति भावः । यद्वा हरिणा मनोहरेणाऽपि भगवता ते अक्षितवामता वरं श्रेष्ठं यथा भवति तथा आमता न तु सामान्येन इति भावः। यद्वा हे इ ! तव तुच्छवद्विमता केति प्रश्ने आमता भक्ते अपकृतत्वमेवेति । इदमर्धाऽभ्यासयमकचित्रम् ॥ ५३ ॥



५३ हे हरिणाऽक्षि ! केवलं तुच्छविमताः (तुच्छमसारं विरुमतं येषां ते) तव अमताः (असंमताः) छविमता (कान्तिमता) हरिणा क्षितवामताः (विनाशितसौभाग्याः सन्तः) के जले वलन्तु (मज्जन्तु) इति त्वदनभिमता निःसारविपरीतमताऽवलम्बिनो भगवता विनाशितसौभाग्याः सन्तो लज्जया जले मज्जन्त्वित्याह ।

वैरस्य हानिदा ऽनेन मा ऽन्यासाध्येन सा ऽद्य तु[१]।
वैरस्यहानिदानेन मान्या साध्येन सा द्यतु[२] ॥ ५४ ॥

वैरस्येति। अपराधे सत्यपि वैरस्यं दुःखं तस्य हानिः सुखं तस्य दानेन समर्पणेन मान्या श्रीदेवी साध्येन भुक्तिमुक्तिरूपफलेन साध्यति फलिता भवति, माऽन्या मायाः अन्या सा का चित्प्रसिद्धा यक्षिण्यादिः वैरस्य विरोधस्य निदानेनाऽऽदिकारणेनैनसा पातकेनाऽपराधेन हेतुना अधि अधिकम् आध्यति आधेर्दुःखस्य निमित्तं यद्वस्तु शत्र्वादि तदाध्यम्। गोद्व्यचोऽसङ्ख्येति निमित्ते यत्। यस्येति लोपः। तद्वदाचरति आचारे क्विप्। ईषदपराधे सति या शत्रुर्भवति तत्र का साध्याऽशेति भावः। विपुलावृत्तम् ॥ ५४ ॥

वृषाचले ऽशङ्करतोद्यमान-
वृषाचले शंकरतोद्यमा न।

---

५४ अद्य तु ( अस्मिन्नेव समये ) अन्याऽसाध्येन ( इतरदुष्करेण, मदेकसाध्येन ) अनेन ( स्तवेन ) वैरस्य ( विरोधस्य ) हानिदा ( नाशप्रदा ) सा मा लक्ष्मीः ) असाधि, ( साधिता, ऽनुकूलिता ) एन ( वासुदेवेन ) मान्या ( आदरणीया ) सा वैरस्यहानिदान् ( वैरस्यं विरसत्वमप्रीतिः, तत्प्रदान् खलान् ) द्यतु ( खण्डयतु ) इति अनेन मत्स्तवेन प्रसादिता भगवती अप्रीतिप्रदान् खलान् नाशयत्वित्याशास्ते।

५५ हे उद्यमानवृषाऽचले! ( उद्यमानस्य विधीयमानस्य वृषस्य सुकृतस्य अचले, भूस्वरूपे! ) हे ऽम्ब! यद्वा ( उद्यमानेन विधीयमानेन वृषेण धर्मेण अचलं स्थिरं धर्मपूर्णं इति सप्तम्यन्तं वृषाचले इत्यस्य विशेषणम्।) वृषाचले ( शेषाद्रौ ) अशङ्करता ( निःशङ्कमासक्ता ) शङ्करतोद्यमा ( शङ्करतायां शुभकारितायाम् उद्यमो यस्यास्तथाभूता

---

१-२ साध्यति, १ पु० पा०।

वृषाचलेशं करतोद्यमान-

मंब त्यजेर्वष्टि दृशो गिरस्ते ॥ ५५ ॥

वृषाचलेति । हे अम्ब ! वृषाऽचले शेषाऽद्रौ शङ्करतोद्यमा शं कल्याणं करोतीति शङ्करा तस्या भावस्तत्ता जगतः सुखं तत्र उद्यमः उद्योगो यस्याः सा त्वम् मा इति मां करतः हस्तात् न त्यजेः त्यागं मा कुरु मा मुञ्चेत्यर्थः । तां रमां विशिनष्टि—वृषा इन्द्रः सङ्कटे सति वृषः नन्दी अचलः कैलासपर्वतः तयोरीशं महादेवमपि न वष्टि कामयते किं तु करताद्यमानं करैस्तत्र द्वार-पालहस्तैस्ताड्यमानो व्यथां प्राप्यमाणो यथा भवति तथा ते गिरः वाणीः किं बहुना ते दृशः दृष्टिलेशं लवं वष्टि कामयते । उपजातिवृत्तम् । इदं पादत्रयाऽभ्यासयमकचित्रम् ॥ ५५ ॥

राजीवाऽऽयतनाऽगबाहुमहतीं कुर्यान्मुदे नः कृपां

राजीवायतनागबाहुरघहृत् कृष्णो न देवो ऽपरः ।

———

त्वं ) करतोद्यमानं ( त्वन्मन्दिरद्वौवारिकपाणिभिः पीड्यमानं ) वृषाऽचलेशं ( नन्दिकैलासेश्वरं शिवं ) न त्यजेः, स ते दृशौ ( दृष्टिपातान् ) गिरः ( प्रसादवचनानि ) च वष्टि वाञ्छतीति त्वन्मन्दिरद्वारपालकिङ्करनिःसार्यमाणं शिवं न त्यजेः, स ते कटाक्षवचनान्यभिवाञ्छतीति भगवतीमाहात्म्याऽतिशयं बोधयति ।

५६ राजीवाऽऽयतना ( कमलाऽऽलया, लक्ष्मीः ) अगबाहुमहतीं गिरिप्रस्थपृथुलां ) नः मुदं कुर्यात, कृपाराजी ( दयया राजते यः सः ) आयतनागबाहुः ( दीर्घकरिशुण्डादण्डसमबाहुः ) देवः

रा जीवाय तनाविहापि सुखदा शुद्धा तवैवाऽऽप्यते
राजीवाऽऽयत नायकं फणिगिरेर्या ऽसौ दयास्रोतसाम्॥५६॥

राजीवेति । राजीवाऽऽयतना पद्माऽऽलया भवती नो ऽस्माकम् अगबाहुमहतीं पर्वतशिखरपृथुलां मुदं कुर्यात्, ननु हरिमपहायेयमहमेव कुतः प्रार्थ्यत ? इति चेत्, नागवद्भुजङ्गवत् आयता दीर्घा बाहवो यस्य स इति । आहिताऽग्न्यादित्वात् साधुः । बाहाधरः कृष्ण एव देवः उपास्यः, न अपरः । यद्यप्येवं तथा ऽपि सः कृपया राजतीति कृपाराजी एवंशीलो ऽपि अघद्दगपराधं गणयति[1], तस्माच्छुद्धा ऽनुकम्पा न भवति, तव तु दया आदौ स्रोतसां प्रवाहाणां राजीव पङ्क्तिरिवाऽपारेत्यर्थः । तादृशी सती इहाऽपि अघसत्त्वे ऽपि जीवाय रा इव धनमिव तनौ सुखदा, तस्माच्छुद्धैवाऽऽप्यते इति त्वामेवमभ्यर्थये, यद्यस्माज्जगत्कल्याणकृते एव या ऽसौ भवती फणिगिरेः शेषाऽचलस्य नायकं हरिम् आयत प्रापत् तस्याऽघदृक्त्वनिवारणायेति भावः ॥ ५६॥

कौमारमारचयतः सफलं तपो ऽस्य
सा मारमारकनुतस्य वृषाऽचलेन्दोः ।

---

( कृष्णो ) सा ऽघहृत् ( दुःखनाशदः, सन्तोषद इति यावत् ) अपरो देवो न, ( अघहृत् न ) तव या दयास्रोतसां राजी फणिगिरेर्नायकं हरिं प्राप, इहापि (अस्मिन् लोके ऽपि) तनौ रा इव (धनमिव) सुखदा शुद्धा ऽसौ ( दयास्रोतसां राजी ) (अस्माभिः) अवाप्यते । इति भगवतो दुःखाऽपहारकत्वे ऽपि त्वद्दयाया एव तत्रोपसंक्रमात् शुद्धा तवैव दया ऽस्माभिः प्राप्यते इति त्वमेवाऽस्माकं मुदं कुर्या इत्याह ।

५७ कौमारं ( कुमाराऽवस्थायां कृतं ) तपः सफलं ( लक्ष्मीप्रा-

[1] अघदृगिति पाठानुसारेणेयं व्याख्या ।

रामा रमा रहितकोपतया कृताऽस्मत्-

क्षेमा ऽरमारविसुधांशु जयत्यवन्याम् ॥ ५७ ॥

कौमारेति। मारमारकेण शिवेन नुतस्य स्तुतस्याऽस्य पुनः कुमारयतीति कुमारः। कुमार क्रीडायाम्,अस्मात् पचाद्यच्। तस्य भावः कौमारं बाल्यम् आ आरभ्य वामनतया रचयतः कुर्वतः अर्थात्तप एव। ततो ऽन्यत्राऽपि दृश्यते इति द्वितीया, गुणमूते इति वत्। वृषाऽचलेन्दोर्वेङ्कटेशस्य सफलं तपस्तपःफलभूता रमारूपा रामा स्त्री रहितकोपतया कृपयेति यावत्। अरं शीघ्रं कृतम् अस्माकं क्षेमं यया सा अवन्यां पृथिव्यां रविश्च सुधांशुश्च तौ मर्यादीकृत्य जयति शो तेभइत्यर्थः। वसन्ततिलकावृत्तम् ॥५७॥

कलितमसारमनाशा-

ऽऽध्यायामहितं न रामरामाऽन्यम्।

---

त्या कृतार्थम )आरचयतः मारमारकनुतस्य (स्मरहरस्तुतस्य) वृषाचलेन्दोः ( हरेः ) रामा, रहितकोपतया ( कोपशून्यतया, दययेति यावत् ) कृताऽस्मत्क्षेमा ( संपादिताऽस्मत्कुशला, रमा आरविसुधांशु ( आसूर्यचन्द्रम ) अवन्यां जयतीति सर्वदा ऽस्मच्छुभकारिणी भगवती पृथिव्यां सर्वोत्कर्षेण वर्तते इत्याह।

५८ कलितमसारम् ( अतिशयितः कलिः कलितमो ऽतिद्वेषः, स एव सारो यस्मिन् तम्) अनाशाऽऽध्यायामहितम ( अनाशो नाशरहितो य आधिर्मनोव्यथा तस्य य आयामो विस्तारस्तस्मै हितं, मनोव्यथाविस्तारकमिति यावत् ) तं रामरामाऽन्यं ( रामरामा सीतारूपा लक्ष्मीस्तदन्यं ) न ध्यायाम, किं तु कलितमसारम ( कलितो ऽवलम्बितो मसार इन्द्रनीलमणित्वेनाऽध्यवसितो

कलितमसारमनाशा

ध्यायाम हि तन्नरामतं नराऽऽमान्यम् ॥ ५८ ॥

कलीति। हि यस्माद्वयम् अनाशाऽथा अक्षयया मानमव्ययया कलितं व्याप्तम्। अत्र पुंस्याधिरित्यमरादाधिशब्दस्य पुंस्त्वे ऽपि स्त्रीत्वप्रयोगोपपत्तिर्मारमातरित्यग्रिमतृतीयश्लोकस्थवक्ष्यमाणरीत्या ऽवसेया। अत एव असारं तुच्छं नराणाममराणां चाऽमान्यं तं संसारमिति शेषः। अयाम प्राप्तवन्तः। यातेर्लङि रूपम्। तेन कालतमसा कलिरूपेणाऽन्धकारेण अरं शीघ्रम् इदानीं अनाशा आशारहिताः निष्कामाः सन्तः रामस्य या रामा स्त्री सीतारूपिणी त्वं तस्या अन्यः तं हितं हितकारकं कमपि न ध्यायाम न स्मरामः। ध्यै चिन्तायामित्यस्मादाशीर्लिङ्। आर्यागीतिवृत्तम् ॥ ५८ ॥

सारसेनमहितापहारिका-

सारसेनमहितापहारिका।

---

भगवान् येन तत्)· नराऽमराऽऽमान्यं (नरैरमरैश्च आसमन्ताद् मान्यं) हि तत् (रमाभिधं दैवतम्)· अनाशाः (निराशाः निरभिसन्धयः सन्तः ध्यायाम लोट् चिन्तयाम) इति इतरं सर्वं देवं विहाय रमारूपं दैवतमेव ध्यायामेत्याह।

५९. सारसेन (कमलेन) महिता, हारिका (हारिण्येव हारिका मनोहारिणी) अहिताऽपहारिका (अहितानपहरति सा) या (रमा) सारसेनमहितापहारिकासारसेनम् (सारसानां पक्षिविशेषाणाम् इनैः श्रेष्ठैर्महिताः पूजिता आपो येषां ते सारसेनमहिताऽपाः, तथाभूता हारिणो मनोहरा ये कासारास्ते एव सेना बलं यस्य तं, सकलजलाधिपं समुद्रम्) आप, अनन्तगा (अनन्तो भगवान् तं

सारसेन महिता ऽऽप हारिका

ऽनन्तगा जयति सा ऽनघं रमा ॥ ५९ ॥

सारसेनेति । सारसश्चन्द्रः इनः सूर्यः ताभ्यां महिता पूजिता । यद्वा सारसेनेन स्कन्देन स्ववाञ्छिताऽऽप्तये महिता । यद्वा सारसेनस्य विष्णोर्मह्या निवासस्थानस्य साधुहृदयस्य तापहारिका । यद्वा सः शिवः अः विष्णुः रसाया इनः तद्धारकत्वाच्छेषः भूपो वा तैर्महिता । सः शूलिनि च कीर्तित इत्येकाऽक्षरः । यद्वा सारसेन कमलेन वा सारसस्य इनेन श्रेष्ठकमलेन महिता सहिता, अपहारिका अपगतं हारि हरणभावो यस्य तत्कं सुखं यस्याः नित्यसुखशालिनीत्यर्थः । यद्वा अपगता हालिका सुरा यस्याः सा रलयोरैक्याद् । सात्त्विकत्वाद् । सारा दृढा सेना यस्मिन्कर्मणि तद् यथा भवति तथा अहितान् शत्रून् अपहरति हन्ति सा, पुनः महेर्भूमेस्तापं दुष्टशुम्भादिकृतं हरति सा, सा श्रीः रसेन प्रेम्णा अनन्तं शेषाऽचलं वा विष्णुं वा विष्णुपदं वा गच्छति सा, तथा एन हारिणा सहिता सा अनघं निर्दोषं यथा तथा जयति । सारसः पक्षिभेदेन्द्वोः क्लीबं तु सरसीरुहे । इनः पत्यौ नृपाऽर्कयोः इति मेदिनी । महिर्मही इत्यमरटीकायाम् । रथोद्धतावृत्तम् ॥ ५९ ॥

त्वं गतिं जननि यच्छ वैभ्रत्रीं

मानयामितरसामहोदयाम् ।

---

गच्छति तादृशी ) सा रमा अनघं ( निर्दोषं यथा तथा ) जयतीति समुद्रपुत्रीत्वेनाऽनन्तभार्यात्वेन श्रेष्ठपितृपतिकुला रमादेवी निर्दोषं सर्वाऽतिशायितया वर्तते इत्याह ।

६० हे जननि ! त्वं वैभर्त्रीं ( विभुसम्बन्धिनीं ) गतिं यच्छ

मानयामितरसामहोदयां
मानयामितरसामहोदयाम् ॥ ६० ॥

त्वमिति । अहो जननि ! त्वं वैभवीं गतिं वैष्णवीं गतिं वैकुण्ठमिति यावत् यच्छ देहि । भक्तियोगस्य मद्गतिरिति भागवतात् । किं च मा माम् अमितरसां दयां नय प्रापय, मयि दयां कुर्वित्यर्थः । अहं मा नास्त्यनयो यस्यां ताम् इतरेषां साम सख्यं हन्ति तादृशः उदयो यस्यास्तां यस्यास्तवोदये सति इतरसख्यकारणं नास्तीति भावः । महः दयते ददाति सा महोदया ताम् । दय दानरक्षणादिषु पचाद्यच् । त्वामिति शेषः । तरसा तीव्रसंवेगेन मानयामि पूजयामि ।

अस्मिन् पद्ये प्रथमार्धस्य द्विरावृत्तिकल्पनयापि पद्यं भवति । तद्यथा—

"त्वं गतिं जन नियच्छ वैभवी-
मानयाऽमितरसामहोदयाम् ।
त्वं गतिं जननि यच्छ वैभवीं
मानयामि तरसा महोदयाम् ॥"

त्वमिति । अहो जन ! त्वं वैभवीं विभवसम्बन्धिनीं गतिं

---

( अन्वय ) अहो ! आम् ( एवम ) अमितरसां ( अपरिच्छिन्नसुखां ) दयाम् आनय, इतरसामहोदयाम् ( इतरां त्वदन्यां सामहः शान्तिनाशक उदय-आविर्भावो यस्या स्तां देवतां ) मा नय ( न प्रापय, माम् ) महोदयां ( महानुदयो यस्या स्तां त्वां तरसा ( दृढं ) मानयामि ( पूजयामि ) इति त्वमेव कृपां कृत्वा मामितरदेवताऽधीनामकृत्वा शुभां गतिं मह्यं देहि, त्वामहं दृढसुं पूजयामीत्याह ।

रीतिं नियच्छ नियमय त्यजेति यावत् । धनमदाकुलो मा भूः । अमितरसां बहलाऽऽनन्दां श्रियं दयाम् आनय प्रापय । यथा दयां कुर्यात्तथा कुर्वित्यर्थः । एवं श्रुत्यादिकं बोधयति । तत्तस्मादहो जननि ! महोदयां त्वां तरसा वेगेनाऽन्यत्र व्यापृतो न भूत्वा मानयामि पूजयामि, त्वं वैभवीं विभोरियं वैभवी तां वैष्णवीमित्यर्थः गतिं यच्छ देहि । श्रियं मे, इति चाऽऽर्थिकशेषौ ज्ञेयौ । रथोद्धतावृत्तम् ॥ ६० ॥

[१]मारमातरणिमानमस्यतां
मा रमातरणिमानमस्यताम् ।

---

६१ हे मारमातः ! ( कामजननि ! ) अणिमानं ) लघुत्वम् ) अस्यतां ( त्यजताम् ) तां ( प्रसिद्धां ) रमातरणिं ( त्वत्सौन्दर्यरूपां नावम् ) आनमस्यतां (समन्ततः प्रणमतां,) मारमाऽऽतरणिमानं (मारस्य कामस्य या मा शोभा सौन्दर्यं ताम् अतन्ति सततं प्राप्नुवन्ति तथाभूता अतिसुन्दरा ये रणिनो युद्धवन्तः शूरास्तेषां मानम् अहङ्कारम् अस्यतां प्रतिक्षिपताम् अतिसुन्दराणां शूरतराणामिति यावत् ) अरमा अलक्ष्मीः मा मा ऽस्तु ) ( त्वं ) तेषां ) मानं ( चित्तसमुन्नतितम ) आतरणि (जगति सूर्यस्थितिपर्यन्तं) मा ऽस्य (मा प्रतिक्षिप) इति लघुतां विहाय त्वत्सौन्दर्यरूपां नावमाश्रित्य त्वां प्रणमतामत एव सुन्दराणां शूराणां चाऽभिमानप्रतिक्षेपसमर्थानां जनानां

---

१ मारमातः, अणिमानम्, अस्यताम्, मा, रमातरणिम, आनमस्यताम्, मारमाऽऽतरणिमानमस्यताम्, मा, अरमा, आतरणि, मानम्, अस्य, ताम्, इति पदविभागः ।

मारमाऽऽतरणिमानमस्यतां
मा ऽरमा ऽऽतरणि मानमस्य ताम् ॥ ६१ ॥

इति श्रीमद्वेङ्कटाऽध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे
यमकस्तबकश्चतुर्दशः सम्पूर्णः ॥ १४ ॥

---

मारमातरिति। अस्य पञ्जिका—मारमातः अणिमानं अस्य तां मा रमातरणिम् आनमस्यतां मारम् आतरणिमानं अस्यतां मारम् आतरणिमानं अस्यताम्। हे मारमातः! स्मरजननि! मा माता त्वम् अस्यतां अस्यन्ति उपतापं भवाख्यं प्राप्नुवन्ति तेषाम्। असु उपतापे कण्ड्वादिः। अतः रमातरणिं रमारूपां तरणिं भवसिन्धुनौकां आनमस्यतां नमस्कुर्वतां किं च अस्यताम् अं वासुदेवं स्यतां स्पृहयताम्। सर्वप्रातिपदिकेभ्यः क्यचि लालसायामिति सुक्। अस्माकमिति शेषः। ताम् अणिमानं कार्श्यं दारिद्र्यम्। किं च आतः सततव्याप्तः। आङ् पूर्वादत सातत्यगमने इत्यस्मात्पचाद्यच्। रणिषु घोषेषु मानो ऽभिमा-

---

चित्तौन्नत्यं कदापि मा दूरीकुर्विति प्रार्थयमानः प्रकृतं स्तबकमुपसंहरति।

इति श्रीमानवल्ल्युपाख्यतैलङ्गरामशास्त्रिविरचितायां लक्ष्मीसहस्राऽवतरणनिःश्रेणिकायां यमकस्तबकः ॥ १४ ॥

नः सन्मानो वा यस्य तं महाशूरमित्यर्थः । मारं मदनम् । किं च आतरणि सूर्यमभिव्याप्य मानः सत्कारो यस्य तं प्रख्या-ख्यानाऽयोग्यमित्यर्थः। मारं मृत्युम् अस्यतां दूरीकुर्वित्यर्थः(?) । अत्र अणिमानमित्यस्य इमनिच्प्रत्ययान्तत्वेन, ल्युः कर्तरीम-निज् भावे इत्यमरात्पुंस्त्वेपि लिङ्गमशिष्यं लोकाऽऽश्रयत्वाल्लि-ङ्गस्येति भाष्यात् तत्रेयं महिमेत्यादिप्रयोगदर्शनाच्च । स्त्रीत्व-मपि। यथा ऽन्यत्र । नाभिरक्षत्रिये इति सूत्रेण शरीराऽवयव-नाभिशब्दस्य स्त्रीत्वे ऽपि । 'समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रे-ण्युपनीविनाभिभि'रिति भारविः पुंस्त्वं प्रायुङ्क्त । स्यान्निकायः पुञ्जराशी इति राशिशब्दस्य पुंस्त्वे ऽपि 'अलभ्यं घोराभिः सुविमलतपोराशिभिः' इति पण्डितराजो ऽपि स्त्रीत्वमभ्यधत्त । अयं चतुष्पादयमकरूपालङ्कारः । समुद्गकभेदः । इन्द्रवज्रा-वृत्तम् ॥ ६१ ॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन
विरचितायां बालबोधिन्याऽऽख्यायां श्रीमल्ल-
क्ष्मीसहस्रटीकायां यमकस्तबकश्चतुर्दशः
सम्पूर्णतामगमत् ॥ १४ ॥



## अथ नक्षत्रमालास्तबकः ॥ १६ ॥

यथा नक्षत्रमालीयां द्विजराजः प्रकाशते ।
तथा यः कपिसेनायां स रामः श्रेयसेऽस्तु नः ॥ १५ ॥

अथाऽस्मिन्पञ्चदशस्तवके 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरात्सप्तविंशतितारावलिग्रथितसप्तविंशतिश्लोकरूपनक्षत्रमालया लक्ष्मीं भूषयन् मालायाश्च ग्रथनाऽनन्तरं समर्पणीयत्वात्समर्पणप्रतिपादकेनाऽष्टाविंशतिश्लोकेन नक्षत्रमालेति लिङ्गं दर्शयिष्यन् तदर्थं प्रतिपद्यं तत्तन्नक्षत्रनाम निर्दिशिष्य(?)न्नुद्देश्यक्रमाऽनुसारेण प्रथममश्विनीनक्षत्रनाम बध्नन्नाह ।

आनन्दमैन्दिराः कुर्युरपाङ्गा यत्प्रसादतः ।
अश्विनीहस्तिसंपन्ना संपदुज्जृम्भते नृणाम् ॥ १ ॥

आनन्दमिति । येषामपाङ्गानां प्रसादतो ऽनुग्रहात् नृणां अश्विनी वडवा, अश्विनीकुमारादिषु दृष्टत्वात्, हस्ती च ताभ्यां संपन्ना युक्ता, यद्वा अश्वा अस्यां सन्ति सा हस्तिभिः संपन्ना चेति पदद्वयं संपदुज्जृम्भते वर्धते ते इन्दिराया रमाया इमे ऐन्दिरा अपाङ्गाः कटाक्षाः आनन्दं कुर्युः । अस्मिन्स्तवके सर्वपद्ये नक्षत्रनामसूचनेन मुद्राऽलङ्कारस्तथाऽपि क चि-

१ अथ प्रतिश्लोकं यथाक्रमं तत्तन्नक्षत्रनामविन्यासचातुरीपुरस्सरं नक्षत्रमालारूपेण पञ्चदशेन स्तवकेन स्तोतुकाम आदौ प्रथमनक्षत्रनाम अश्विनी इति निर्दिशन् ऐन्दिराः ( रमासम्बन्धिनः ) नेत्रप्रान्ता आनन्दं कुर्यु,र्यत्प्रसादात् पुरुषाणाम् वडवावारणासमृद्धा सम्पत्तिरुदयते, इति मङ्गलमाचरति ।

यथासम्भवमन्येऽपि लिख्यन्ते । तैरस्य सङ्करो ज्ञेयः । पथ्यावक्त्रं वृत्तम् ॥ १ ॥

भगवति सुधाऽब्धिकन्ये भवतीं भूष्णुः प्रपद्ये ऽहम् ।
परमाऽऽभरणीभूतां भुजान्तरे भोगिशैलेन्दोः ॥ २ ॥

भगवतीति । भो भगवति ! हे सुधाऽब्धिकन्ये ! भोगिशैलेन्दोर्विष्णोः भुजाऽन्तरे बाहुमध्ये परमत्यन्तमाभरणीभूतां भूषीभूतां भवतीं भूष्णुः । भूष्णुर्भविष्णुर्भवितेत्यमरः । अहं प्रपद्ये । उपगीतिवृत्तम् ॥ २ ॥

निजशिरसि निदधदुच्चैः संपन्मय्यास्तवाऽम्ब सोदर्यम् ।
अपि सकलविभवदायी हा वस्त्रीभूतकृत्तिको भिक्षुः ॥३॥

निजेति । हे ऽम्ब ! संपन्मय्याः । तत्प्रकृतवचने मयट् । तव सोदर्यम् । समानोदर्यसोदर्येत्यमरः । उच्चैर्निजशिरसि दध-

---

२ हे क्षीरसागरसुते ! भगवति ! भूष्णुः भविष्णुर्विवर्धिषुः अहं वैकुण्ठपतेर्वक्षसि श्रेष्ठाऽलङ्कारतां प्राप्तां भवतीं प्रपन्नो ऽस्मीति स्वोद्गाय भगवतीप्रपन्नतां प्रतिजानानो भरणीमिति द्वितीयं नक्षत्रं निर्दिशन्नाह ।

३ हे अम्ब ! सम्पत्तिरूपायास्तव सहोदरं ( चन्द्रम् ) उच्चैर्निजोत्तमाङ्गे धारयन् सकलैश्वर्यप्रदो ऽपि अजिनवासाः ( शिवः ) भिक्षुः ( आस ) हा खेदं, इति संपद्रूपायास्तव भ्रातुरादरेण सविशेषसंपल्लाभो भविष्यतीति बुद्ध्या तं शिरसि वहन् शिवः सकलसम्पत्प्रदोऽपि स्वयं कृत्तिवासा भिक्षुरजायतेति तस्य विपरीतफलप्राप्त्या साश्चर्यं खेदं प्रकटयन् अजिनवाससो भिक्षुकस्य शिवस्य त्वत्सोदरस्य चन्द्रस्य निजशिरसि धारणादेव निखिलसम्पत्प्रदत्वमजायतेति बोधयन् त्वद्भ्रातुरादरे ईदृशफललाभः किं पुनस्तव सेवकस्ये ?ति कृत्तिका इति तृतीयं नक्षत्रनामोपन्यस्यन्नाह ।

तु अवशं वशं सम्पन्नं भवतीति वशीभूता, कृभ्वस्तियोगे इति च्विः। कृत्तिरजिनं यस्य सः। शेषाद्विभाषेति समासान्तः कप्। भिक्षुरपि सकलं विभवं दयते स आस। अत्र लक्ष्मीगुणवर्णनेन शिवस्यौदार्यगुणवर्णनादुल्लासालङ्कारः। गीतिवृ० ॥३॥

तामसह्यभवतापशान्तये
स्तौमि तामरसवासिनीमहम्।
वर्णयन्ति यदपाङ्गमालिकां
वासुदेवनिलयाऽधिरोहिणीम् ॥ ४ ॥

तामिति। यस्याः अपाङ्गानां मालिकां पङ्क्तिं वासुदेवनिलयस्य वैकुण्ठस्याऽधिरोहिणीं निःश्रेणिं वर्णयन्ति तां तामरसवासिनीं सोढुमशक्यस्य भवतापस्य शान्तये शमायाऽहं वैकुण्ठाऽध्वरी स्तौमि स्तुतो करोमि ॥ ४ ॥

तुहिनधामजयाऽभिमुखं मुखं
मृगशिरोमणिदर्पमुषौ दृशौ।
विघटकं च वपुस्तडिदुन्नते-
र्भुवनमातरतो न तवोपमा ॥ ५ ॥

तुहिनेति। हे भुवनमातः! तव मुखं तुहिनधाम्नश्चन्द्रस्य

---

४ यदपाङ्गपङ्क्तिं वैकुण्ठलोकाऽऽरोहणनिःश्रेणिकां जना वदन्ति तां कमलवासिनीमहम् असह्यस्य संसारसन्तापस्य शान्त्यै नौमीति रोहिणीमिति चतुर्थनक्षत्रनाम निबध्नन्नाह।

५ हे लोकमातः! तव वदनं चन्द्रविजयाऽभिमुखं, नेत्रे च हरिणश्रेष्ठगर्वापहारिणी, शरीरं च विद्युद्दामविवृद्धिविनाशकम्, अतो जगति तवोपमा नास्तीति पञ्चमं मृगशिर इति नक्षत्रनाम निर्दिशन् भगवत्यां निरुपमत्वं प्रतिपादयति।

जये विजये ऽभिमुखं संमुखमस्ति, दृशौ मृगशिरोमणेर्मृगश्रेष्ठस्य दर्पं गर्वं मुष्णीतश्चौर्यं कुर्वतः ते स्तः, चेत्यपरं वपुः तडित उन्नतेः श्रैष्ठ्यस्य विघटकं नाशकं भवति, अतस्तवोपमा साम्यं नास्ति । द्रुतविलम्बितं वृत्तम् ॥ ५ ॥

वरुणाऽऽलयेन्द्रतनये करुणाऽऽर्द्रा-
स्तव लोकमातुरवलोकविशेषाः ।
परितन्यमानदुरितस्तम्बकं मा-
मधुना पुनन्तु मधुनाशनकान्ते ॥ ६ ॥

वरुणेति । हे वरुणाऽऽलयेन्द्रस्य तनये ! भो मधुनाशनस्य कान्ते ! लोकस्य भुवनस्य मातुस्तव करुणया ऽऽर्द्राः स्निग्धाः अवलोकविशेषाः कटाक्षाः परितन्यमानः विस्तार्यमाणः दुरितस्य स्तबकः समूहः येन तं मामधुना पुनन्तु पावयन्त्वित्यर्थः । कुटजाऽऽख्यं वृत्तम् ॥ ६ ॥

शापेन रोषणमुनेः शमितप्रभावो
देवोत्तमो मधुजितो दयिते विषण्णः ।

---

६ हे सागरसुते ! मधुरिपुप्रिये ! जगज्जनन्यास्तव दयाऽऽर्द्रा दृक्पातविशेषाः प्रसरत्कल्मषराशिं मामिदानीं पवित्रयन्त्विति आर्द्रापदं षष्ठनक्षत्रबोधकमुपन्यस्यन् सपापस्याऽऽत्मनः पवित्रीकरणं याचते ।

७ हे मधुविजयिप्रिये ! रोषणमुनेः ( दुर्वाससः ) शापेन कुण्ठितपराक्रमः ( स्वाराज्याच्च्युतः ) ( अत एव ) विषादं प्राप्तो देवेन्द्रस्तव वचःस्तबकैः ( स्तोत्रवचननिचयैः ) तव सपर्यां ( पूजां ) कुर्वन् भूयो वसुरुद्रगणसेवनीये स्थाने ( स्वाराज्यपदे ) विराज-

तन्वंस्तव स्तववचःस्तबकैः सपर्यां
स्थाने विराजति पुनर्वसुरुद्रसेव्ये ॥ ७ ॥

शापेनेति । हे मधुजितः दयिते ! रोषणमुनेर्दुर्वाससः शापेन आक्रोशेन शमितः शान्तः प्रभावः सामर्थ्यं यस्य सः अतो विषण्णः खिन्नः देवोत्तम इन्द्रः स्तवस्य स्तोत्रस्य स्तबकैः सङ्घैः तव सपर्यां पूजां तन्वन्वसुभिरष्टभिरुद्रैरेकादशैः(?) सेव्ये स्थाने पुनर्विराजति शोभते । वसन्ततिलकावृत्तम् ॥ ७ ॥

निगमकथितमायुर्निस्तुलाऽऽरोग्यभाग्यं
निरवधिकविभूतिं नित्यहृद्यां च विद्याम् ।
भगवति गुणपूर्तिं भासमानां च कीर्तिं
बलिरिपुपदभक्तिं भेजुषां पुष्यसि त्वम् ॥ ८ ॥

निगमेति । हे भगवति ! बलिरिपोर्विष्णोर्भक्तिम्, भज सेवायामित्यस्मात् क्विन् । भेजुषां सेवितवतां क्वस्वन्तमेतत् । कवीनां निरङ्कुशत्वात् । कुर्वतामिति पाठः श्रेयान् । त्वं निगमैर्वेदैः कथितमुक्तम् आयुः । 'जीवेद्वर्षशतं साग्र'मित्यादि जीवितं चेत्यपरं निस्तुलं निरुपममारोग्यरूपं भाग्यं च परं निरवधिका अनन्ता चाऽसौ विभूतिः संपच्च तां च परं नित्यं सदा हृदय-

---

सीति पुनर्वस्विति सप्तमनक्षत्रवाचकपदोपन्यासपूर्वकं त्वत्पूजया निखिलाऽरिष्टशान्तिपूर्वकमुत्तमपदप्राप्तिर्भवतीत्याह ।

८ हे भगवति ! त्वं कृतसेवानां वेदोक्तं शतसंवत्सरं पूर्णमायुः, निरुपममनामयभागधेयं, निर्मर्यादमैश्वर्यं, सर्वदा रमणीयां विद्यां, गुणपूर्णतां, विराजमानां कीर्तिं, हरिपदभक्तिं च पुष्णासीति त्वत्सेवाया एतानि फलानीति पुष्येत्यष्टमनक्षत्रनाम निर्दिशन्नाह ।

स्य प्रियां हृद्याम् । हृदयस्य हृल्लेखयवण्लासेष्विति हृदादेशः । तां विद्यां च परं गुणानामौदार्यादीनां पूर्तिं समग्रत्वं च परं भासमानां शोभमानां कीर्तिं पुष्यसि पुष्टां करोषि, भक्ताय सर्वमप्यभीष्टं ददासीति भावः । मालिनीवृत्तम् ॥ ८ ॥

शेषाऽचलाऽधीशाऽङ्ककाऽऽश्लेषाऽचलाऽऽमोदोन्नतिः
सैषा भवोन्मेषाऽब्धिसंशोषाऽवहा विश्वप्रसूः ।
तोषाय नः कल्पेत दुर्दोषाऽपहं यस्याः पदं
भाषाशचीमुख्यद्युसद्योषाशिरोभूषायते ॥ ९ ॥

शेषेति । दुर्दोषाऽपहं दुष्टदोषनाशकं यस्याः पदं चरणं भाषा वाणी शचीन्द्राणी ते मुख्ये यासु तासां द्युसदां देवानां योषाणां स्त्रीणां शिरोभूषायते, मुकुटमणिरिवाऽऽचरतीत्यर्थः । सा प्रसिद्धा एषा लक्ष्मीः शेषाऽचलाऽधीशस्य श्रीकृष्णस्य अङ्कस्य शरीरस्येत्यर्थः आश्लेष आलिङ्गनं तेनाऽऽमोदस्य हर्षस्य उन्नतिराधिक्यं यस्याः सा अन्यच्च भवोन्मेषः संसारोदय एवाऽब्धिः समुद्रस्तस्य शोषाऽऽवहा नाशिका विश्वप्रसूर्जगन्माता नो ऽस्माकं तोषाय हर्षाय कल्पेत भवेता(?)मित्यर्थः ॥९॥

द्रुहोपास्ते यस्ते चरणकमलद्वन्द्वममलं
स पूज्यः स्वाराज्यं जनिने कलयिष्यन्नविकलम् ।

---

९ दुष्टदोषविनाशकं यस्याश्चरणं सरस्वतीशचीप्रभृतिदेवाङ्गनाशिरोलङ्कारवदाचरति सा वेङ्कटाऽचलपतिशरीराऽऽलिङ्गनान्तर-संतोषाऽतिशया संसाराऽऽविर्भावसागरशोषिका एषा लोकमाता ऽस्माकमानन्दाय प्रभवत्विति आश्लेषेति नवमं नक्षत्रनामोल्लिखन्नाह ।

१० यः पुमानस्मिन् लोके तव चरणकमलं सेवते महनीयः सो

मघोनः साम्राज्यं मदनमथनस्याऽपि विभवं
तृणप्रायं प्रायो गणयति पदं द्रौहिणमपि ॥ १० ॥

इहेति । इह लोके अमलं निर्दोषं ते चरणकमलयोर्द्वन्द्वं युग्मं यः पुमानुपास्ते पूजयति हे जननि ! स पूज्यः सकविकलं पूर्णं स्वाराज्यं कलयिष्यन्स्वीकुर्वन्सन्(?) मघोनः साम्राज्यमिन्द्रपदं तथा मदनमथनस्य शिवस्य विभवं संपदं प्रायः । प्रायो भूम्न्यन्तगमने इत्यमरः । द्रौहिणं पदं ब्रह्मपदमपि तृणप्रायं तृणसदृशं गणयति । शिखरिणीवृत्तम् ॥ १० ॥

आर्यसेवितमक्षयं फलमिष्टमर्यमतारकं
यत् क्षणेन निजेक्षणेन मुदा ददाति सनातनम् ।
तत् तडित्समधाम मङ्गलनाम तामरसाऽऽलयं
पालयत्विममानमत्सुरयौवतं परदैवतम् ॥ ११ ॥

आर्येति । यत् अर्यम्णः सूर्यस्य तारकं रक्षकम् । आर्यमे-

---

ऽखण्डितं परलोकराज्यं मोक्षरूपं पश्यन् इन्द्रस्याऽऽधिराज्यं, शिवस्याऽणिमादिवैभवं, ब्रह्मपदमपि तृणतुल्यं जानातीति त्वच्चरणोपासका ऐहिकाऽऽमुष्मिकफलभोगे विरक्तः सन् श्रेयसभाग् भवतीति मघेति दशमनक्षत्रनामोद्दङ्कयन्नाह ।

११ यत् ( परदैवतं ) आर्यैः (श्रेष्ठैः) सेवितम् अर्यमतारकं (सूर्यमण्डलस्य विभेदपुरःसरं तत्पारप्रापकम् ) अभीप्सितमक्षयं फलं मोक्षरूपं स्वकटाक्षपातमात्रेण क्षणमात्राद्ददाति तद्विद्युत्समानदेहकान्ति, मङ्गलकराऽभिधेयं, कमलवासि, देवाऽङ्गनानम्यमानमुत्कृष्टं, दैवतं ( रमारूपम् ) इमं जनं ( मां ) पालयत्विति अर्यमदेवतमित्यनेन सूर्यदेवताकपूर्वाफल्गुनीति एकादशनक्षत्रनाम निवेशयन्नाह ।

नि पाठे तद्देवाऽऽर्यमतारकमिति स्वार्थे ऽण् । तथा सनातनं पुराणं पुनस्तामरसाऽऽलयं पद्माऽऽवासं अन्यच्च युवतीनां समूहो यौवतम् । शत्रन्तादनुदात्तादेरञ् । आनमत् नम्रीभवत्सुराणां यौवतं यस्मिन् तत् अपि च मङ्गलं नाम यस्य तत् च परं तडिता समं सदृशं धाम तेजो यस्य तत् यत्परदैवतं रमारूपं आर्यैः सेवितम् इष्टमक्षयमविनाशि फलं क्षणमात्रेण मुदा ददाति तद्दैवतमिमं कविं पालयतु । अत्राऽर्यमस्वामितारकमिति पूर्वाफल्गुन्युक्ता । मार्तण्डादिज्योतिर्ग्रन्थेषु चाऽर्यमस्वामिकम् उत्तरानक्षत्रमुक्तम्, अतो ऽयं कविभ्रम एवेति चेत् शृणु । 'फल्गुनी नक्षत्रमर्यमा देवता'इत्यापस्तम्बश्रुतिः । 'गवां पतिः फल्गुनीनामसि त्वं तदर्यमन्वरुणमित्रचारु तं त्वावयं सवितारं सतीनां जीवाजीवन्तमुपसंविशेम येनेमा भुवनानि सञ्जिताअस्य देवा अनुसंयन्ति चेतः अर्यमा राजा जरस्तुविष्मान्' इत्यापस्तम्बब्राह्मणम्, इति निगमप्रमाणत्वात्पया तत्रभ्रमसहितानि सर्वाण्यपि गणकपञ्चाङ्गान्युद्धतानीत्सवेहि । विबुधप्रियापा० ॥ ११ ॥

एकेनाऽञ्जलिनैव कञ्जनिलये सर्वाऽर्थमुर्वीतले
सन्दायाऽथ मुकुन्दमन्दिरगतिं संतन्वतीं त्वां विना ।

---

१२ हे कमलालये! एकेनाऽञ्जलिना ( सकृत्प्रणाममात्रेण ) ( नमते जनाय ) भूतले सकलमभीप्सितार्थं वितीर्य परत्र वैकुण्ठगतिं विस्तारयन्तीं भवतीं विहाय ( मम ) श्रेष्ठा वाक् अतिचञ्चले क्षुद्रे नरपतिगणे मा रंस्त (न रमताम्) इति इयं सदा मम वाञ्छा, तदन्यत् ( किं चिदपि ) कदा चिदपि न याचामीति उत्तराफल्गुनीति

मा रंस्ताऽतिखले चले नृपकुले वागुत्तरा फल्गुनी-
स्त्वाशासेयमहर्निशं तदितरद्याचामि नो जातु चित्॥१२॥

एकेनेति । हे कञ्जनिलये ! एकेनाऽञ्जलिना करसंपुटेनैव उर्वीतले पृथ्व्यां सर्वार्थं चतुर्विधपुरुषार्थं सन्दाय अथाऽनन्तरं मुकुन्दमन्दिरस्य वैकुण्ठस्य गतिं सन्तन्वतीं दवतीं त्वां विना अतिचले तथा खले दुर्जने पुनः फल्गुनि निःसारे नृपकुले उत्तरोत्तमा वाक् मम वाणी मा रंस्त मा क्रीडतु(?)। रमु क्रीडायामित्यस्मात् लुङि न माङ्योगे इत्यटो निषेधः । इति इयमहर्निशं रात्रिन्दिवम् आशासा इच्छा ममेति शेषः । तस्मादितरदन्यत् जातु चित्कदा चिदपि नो याचामि । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

क्षिपतु क्षिप्रमनल्पमप्रतिहतस्तापत्रयं मामकं
भवदवाग्निभयाऽपहस्तव कृपावीक्षासुधानिर्झरः ।

---

द्वादशं नक्षत्रनाम विन्यस्यन् पुरुषार्थचतुष्टयप्रदां त्वामेव मद्वाक् स्तवीतु, न निःसारान् चञ्चलान् नृपानित्येव मे वाञ्छेत्याह ।

१३ हे शीतमहःसहोदरि ! अम्ब ! अप्रतिबद्धसंसारदावानलभीतिविनाशकस्त्वदीयदयाकटाक्षपीयूषप्रवाहः सत्वरं मदीयं बहुलमाध्यात्मिकाऽऽधिदैविकाऽऽधिभौतिकतापत्रयं प्रतिक्षिपतु, यतः साधुकदम्बं ( सज्जनसमूहं, नीपसङ्घं च ) पीडयन् विहितप्रौढागमव्याहतिः ( कृतवुरुहयास्त्रोल्लङ्घनः, कृतप्रवृद्धवृक्षविनाशश्च ) हानिदाघविभवः ( हानिप्रदपापपराक्रमः, हा ( खेदे ) निदाघस्य ग्रीष्मस्य ऐश्वर्यं ( संतापः ) शान्तिं प्राप्नोतीति श्लेः

व्यथयन् साधुकदम्बमम्ब विहितप्रौढागमव्याहतिः
शशिनः सोदरि हानिदाघविभवः शान्तिं यतो विन्दति॥ १३॥

क्षिपत्विति । हे ऽम्ब अप्रतिहतः अनिवार्यः तथा भव एव दवाऽग्निस्तस्य भयाऽपहः भीतिनाशकः तव कृपायुक्ता वीक्षा कृपावीक्षेति शाकपार्थिवादित्वान्मध्यमपदलोपिसमासः । सैव सुधानिर्झरो ऽमृतप्रवाहः अनल्पं बहु मामकं तापत्रयं क्षिपतु नाशयतु । हे शशिनः सोदरि ! निर्झरपक्षे विहिता कृता प्रौढानामगमानां वृक्षाणां, वीक्षापक्षे आगमानां शास्त्राणां च व्याहतिर्नाशो येन सः तथा साधुकदम्बं सत्कदम्बवृक्षं सद्वृन्दं च व्यथयन्व्यथां कुर्वन्(?) हा इति खेदे, निदाघस्योष्णोपगमस्य अन्यत्र हानिदस्य नाशकस्याऽघस्य पापस्य च विभवः ऐश्वर्यं यतः कटाक्षसुधाझराच्छान्तिं विन्दति स इति पूर्वाऽन्वयेन सम्बन्धः ? ॥ १३ ॥

लोके पाकाऽरिमेके विरचितयजनश्रेणयः प्रीणयन्ते
के चित् त्रासाऽपनुत्त्यै विदधति नृहरेर्योगिवर्याः सपर्याम्।

---

वेण प्रचण्डग्रीष्मसंतापसदृशः पापतापो यस्मात् शाम्येत्स ते कटाक्षनिर्झरो मम तापत्रयं शमयत्विति त्रयोदशं वृत्तेति नक्षत्रमालोपम्यस्याह ।

१४ हे जलधिसुते ! जगति के चित्पुरुषाः कृतयागपरम्पराः सन्त इन्द्रं तोषयन्ति, के चिच्च योगिश्रेष्ठा भयविनाशाय नृसिंहस्य पूजां रचयन्ति, अन्ये शिवसेवां कुर्वन्ति, अमी वयं तु इह अनवगम्य-

अन्ये पाथोधिकन्ये हरपरिचरणं कुर्वते सर्वदेह
त्वामेवाऽमेयरूपां मनसि वयममी सर्वदा भावयामः ॥ १४॥

लोके इति । हे पाथोधिकन्ये ! इह लोके विरचिताः कृताः यजनानां श्रेणयः पङ्क्तयः यैः एके पुरुषाः पाकारिमिन्द्रं प्रीणयन्ते, के चिदन्ये योगिवर्याः त्रासस्याऽपनुत्त्यै नाशाय नृहरेर्विष्णोः सपर्या विदधते । सपर्याऽर्चाऽर्हणाः समा इत्यमरः । अन्ये हरस्य शिवस्य परिचरणं सेवनं कुर्वते, अमी वयम् अमेयरूपामपरिमितस्वरूपां त्वामेव मनसि हृदि सेवया भक्त्या सर्वदा । सर्वैकान्यकिंयत्तदः काले दा इति दाप्रत्ययः । भावयामः ध्यायामः । शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

मयि सर्वाऽपकृतिक्षमे ऽपि कलय स्वातीव शीतां दयां
हरिकान्ते भुवनोपकारनिरतेष्वन्येषु धन्येष्विव ।
पनसाऽऽम्रादिमहीरुहेषु ददती भूरीणि वारीणि सा
विषवृक्षे ऽपि मुहुः प्रवर्षति न किं विश्वाऽम्ब कादम्बिनी १५

मयीति । भुवनस्य जगत उपकारेषु निरतेषु तत्परेषु हे हरिकान्ते ! अन्येष्वितरेषु धन्येषु पुरुषेष्विव सर्वाऽपकृतिषु

---

स्वरूपां त्वामेव सर्वदा ध्यायाम इति चित्रेति चतुर्दशनक्षत्रनामनिर्देशपूर्वकमाह ।

१५ हे जगन्मातः ! हरिप्रिये ! लोकोपकारासक्तेषु धन्यपुरुषेष्विव सकलाऽपकारसमर्थे मयि अतीव शीतां कृपां कलयस्व, ( कुरु ) पनसाऽऽम्रादिवृक्षेषु बहूनि जलानि ददाना मेघमाला विषद्रुमे ऽपि भूयो न वर्षति किम्? इति पञ्चदशस्वातीनक्षत्रनाम निबध्नन् पुष्पवर्षातस्वाव पापिष्ठे ऽपि मयि कृपां कुर्विति याचते ।

सकलाऽपकारेषु क्षमे समर्थे ऽपि मयि अतीवाऽत्यन्तं शीतां शीतलां दयां कृपां कलयस्व कुरु। तत्र दृष्टान्तः। हे विश्वाऽम्ब! जगन्मातः! पनसश्चाऽऽम्रश्च। पनसः कण्टकिफलः, आम्रश्चूतो रसालो ऽसौ इत्यमरौ। तौ आदी प्रथमौ येषु तेषु महीरुहेषु वृक्षेषु भूरीणि। स्फारं भूयश्च भूरि चेत्यमरः। वारीण्युदकानि ददती कादम्बिनी मेघमाला सा जडरूपा ऽपि विषवृक्षे न प्रवर्षति किं न वर्षणं करोति किम्? अपि तु प्रवर्षत्येव, तस्मात्तदधिका त्वं पापिन्यपि मयि दयां कुर्विति भावः ॥१५॥

पूर्णं वर्णयितुं तवाऽङ्ग निगमा न प्राभवन् प्राभवं
यस्याः स्वर्गणिका मुदं विदधते दास्येन लास्येन च।
वाणी सा ऽपि विशाखदन्तिमुखयोर्माता ऽपि जाताऽऽदरे
धन्ये चामरवीजनं रचयतो धत्ते कलाचीं शची ॥१६॥

पूर्णमिति। अङ्ग! धन्ये! यस्यास्तव स्वर्गणिका अप्सरसः लास्येन नर्तनेन दास्येन सेवया च मुदं विदधते कुर्वन्ति तथा सा वाणी सरस्वती, विशाखः षण्मुखः, दन्तिमुखो हेरम्बः, तयोर्माता च जाताऽऽदरे सत्यौ चामरयोर्वीजनं कुरुतः, एवं कलाची। 'पिकदानी'ति लोके। तां शची इन्द्राणी धत्ते, तस्यास्तव

---

१६ अङ्ग रमे! यस्या अप्सरसः परिचरणेन नृत्येन च संतोषं जनयन्ति, प्रसिद्धतमा शारदा स्कन्दहेरम्बजननी (पार्वती) च सादरं चामरं वीजयन्तः. इन्द्राणी च कलाचीं (निष्ठीवनपात्रं) धारयति, तस्यास्तव पूर्णां प्रभुतां वर्णयितुं वेदाऽअपि न समर्था इति भगवत्याः सामर्थ्यमपरिच्छिन्नमिति वदन् विशाखेति षोडशनक्षत्रनाम प्रदर्शयन्नाह।

प्राभवं सामर्थ्यं वर्णयितुं निगमा वेदाः न प्राभवन् समर्थाः ।
शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

बहुतरमनूराधारयता मुखैरखिलश्रुती-
र्नलिनजनुषा निर्मातुमहो यदम्ब न शक्यते ।
कथमिह तव स्तोत्रे कवयः शक्ता स्वयमिन्दिरे
जगति शिशवः शक्याऽर्थकृतोऽथ वा जननीमुदे ॥ १७ ॥

बह्विति । हे इन्दिरे ! मुखैश्चतसृभिर्बहुत्वम । बहुतरा मनवो मन्त्रा यासु ताः श्रुतीर्वेदानाराधयता ऽध्येत्रा नलिनजनुषा ब्रह्मणा यत्स्तोत्रं निर्मातुं कर्तुं न शक्यते, अहो आश्चर्यं, इहैतस्मिन् तव स्तोत्रे जगति कवयः स्वयं त्वत्कृपां विना शक्याऽर्थकृतः कथं भविष्यन्तीति काकु । अथ वा जनन्या मातुर्मुदे हर्षाय शिशवो वयं शक्याऽर्थकृतः करणे समर्था इति यावत् । आक्षेपालङ्कारः ॥ १७ ॥

त्रस्यत्ताताऽभिहितवचनत्राणधर्माय सीते
ज्येष्ठेकाऽर्हे रघुपरिवृढे राज्यमुत्सृज्य याते ।

---

१७ हे अम्ब ! इन्दिरे ! चतुर्भिः मुखैः समधिकमन्त्रघटितान् वेदान् धारयता कमलोद्भवेनापि यत् ( त्वत्स्तोत्रं ) रचयितुं न शक्यते ( तस्मिन् ) तं स्तोत्रे कवयो वयं कथं शक्ताः ? अथ वा आत्मना यावच्छक्यकार्यकृतो बाला जननीं संतोषमुत्पादयन्तीति साकल्येनाऽशक्यो ऽपि तव स्तवो यथाशक्ति मया क्रियमाणस्त्वां तोषयेदेवेति अनूराधेति नक्षत्रनाम्नोपन्यासपूर्वकमाह ।

१८ हे सीते ! उद्विजमानपितृकथितवचनपालनधर्ममनुष्ठातुं रामचन्द्रे ज्येष्ठाऽत्मनामयोग्यं राज्यं परित्यज्य ( वनं ) याते सति

विश्वं त्रातुं त्वमनुचलिता वीरमेनं हि नो चेत्
कस्माद्भस्मीभवतु जगतां कण्टकः पङ्क्तिकण्ठः ॥ १८ ॥

अस्यादिति । हे सीते ! असता कैकेयीवचसा त्रासं प्राप्नुवता तातेन दशरथेनाऽभिहितस्योदितस्य वचनस्य त्राणाय पालनाय । 'ज्ञानतो ऽपि सुतः कुर्यात्पितुः कार्यं स उत्तमः' इत्यध्यात्मरामायणे श्रीरामोक्तेः । ज्येष्ठः ज्यायान् एकः केवलम् अर्हः योग्यः यस्य तद्राज्यमुत्सृज्य त्यक्त्वा रघुषु परिवृढे श्रेष्ठे श्रीरामे । प्रभौ परिवृढ इति निपातनात्साधुः । याते चलिते सति विश्वं जगत् त्रातुं रक्षितुं वीरं शूरमेनं श्रीरामं त्वं लक्ष्मीः अनुचलिता पश्चाद्गता ऽसीत्यर्थः । नो चेत्त्वदनुगमं विना जगतां भुवनानां कण्टकः कण्टक इव सर्वदा पीडक इत्यर्थः । पङ्क्तिकण्ठः दशकण्ठः कस्माद्धेतोर्भस्मीभवतु ? नाशं प्राप्नोतु । शक्तिं विना किमपि कर्म न भवति, अतः शक्तिरूपया त्वयैव तद्दुष्करं कर्म कृतमिति भावः । मन्दाक्रान्तावृत्तम् ॥ १८ ॥

द्विषच्चमूलयेच्छया तवाऽङ्घ्रिपद्ममिन्दिरे
स्फुरत्सरोजमन्दिरे सुराः पुरा ववन्दिरे ।

———

एनं वीरं ( रामं ) त्वं जगद्रक्षणायाऽनुयाता, अन्यथा लोकपीडको दशग्रीवः कुतो हतः स्यात् ? इति रामे पितृवचनपालनमात्रकृते याते त्वं सकललोकपालनायैवैनमनुगतेति भगवतो ऽपि त्वयि रक्षणलालसा साऽतिशयेति सूचयन् अष्टादशाऽयेऽष्ठानक्षत्रनाम निर्दिशन्नाह ।

१९ हे विलसत्कमलगृहे ! इन्दिरे ! पुरा देवाः शत्रुसेनानाशेच्छया तव चरणसरोजं प्रणेमुस्तुष्टुवुर्वा, तदेव ( चरणसरोजं वयम-

तदेव संपदे वयं निरापदे तमोभिदे
भजामहे भुजायुगीयुजा नतेन मौलिना ॥ १९ ॥

द्विषादिति । हे इन्दिरे ! हे स्फुरत् सरोजं शोभमानकमलं मन्दिरं यस्यास्तत्सम्बुद्धौ, सुराः पुरा पूर्वं द्विषतां शत्रूणां चमूनां सेनानां लयस्येच्छया यत्तवाऽङ्घ्रिपद्मं ववन्दिरे तदेव तव पादपद्मं वयं तमो ऽज्ञानं भिनत्ति तस्यै निर्गता आपद्यस्यास्तस्यै संपदे मुक्तिरूपश्रियै भुजयोर्युग्या युग्मेन युनक्ति युक्तो भवति तेन मौलिना मूर्ध्ना भजामहे । पञ्चचामरं वृत्तम् ॥ १९ ॥

कलितनियमपूर्वाऽऽषाढकाषायचेला
यतसकलहृषीका यद्यन्तीन्द्रा विशन्ति ।
तदपि भजति धाम न्यस्य भारं त्वदङ्घ्रौ
मम जननि नृपाशो मादृशो बालिशोऽपि ॥ २० ॥

कलितेति । हे मम जननि ! कलिते स्वीकृते नियमपूर्वे आषाढः दण्डः । यतिनां दण्ड आषाढ इत्यभिधानम् । कषायेण रक्तं काषायम् । तेन रक्तं रागादित्यण् । तच्च तच्चेलं वस्त्रं च ते यैस्ते तथा यतानि स्वाधीनीकृतानि सकलानि हृषीकाणीन्द्रियाणि यैस्ते यतीन्द्रा यत् धाम विशन्ति तदपि धाम

---

ज्ञाननाशिकायै विगताऽऽपत्त्यै सम्पदे ( मोक्षलाभाय ) भुजयुगलसंयुक्तेन शिरसा सेवामहे इति ऊनविंश मूल नक्षत्रनामोपन्यस्यन्नाह ।

२० हे मम मातः ! धृतनियमपूर्वदण्डकाषायवस्त्रा नियमितनिखिलेन्द्रिया यतिभर्या यत् प्रविशन्ति तदपि धाम ( वैकुण्ठरूपं ) त्वयि भारं निवेद्य मत्सदृशो मूढो नराऽपसदः प्राप्नोतीति विंशपूर्वाषाढानक्षत्रनामनिर्देशपूर्वकमाह ।

तेजः प्रति बालिशो ऽज्ञः मादृशो मत्सदृशः कुत्सितो ना नृपाशः । याप्ये पाशप् । त्वदङ्घ्रौ भारं न्यस्य भजति प्राप्नोति । अत्र हितेषु साधुषु अहितेषु बालिशेषु समानवर्तनात्तुल्ययोगिताऽलङ्कारः । मालिनीवृत्तम् ॥ २० ॥

सारापदानशतमोदितविश्वदेव-
तारापतिस्थमपि भानुसुतेन राज्यम् ।
त्वत्प्राप्तिकार्यसहकारगिरैव लब्धं
कार्योद्यमो हि महतां कमले शिवाय ॥ २१ ॥

सारेति । हे कमले ! पद्मे ! साराणां सारभूतानाम् अपदानानां वृत्तकर्मणां शतेन बहुनेत्यर्थः । मोदिता हर्षिता विश्वदेवाः समग्राऽमरा येन तस्मिन् तारापतौ तिष्ठति तत्तारापतिस्थं तदपि राज्यं भानुसुतेन सुग्रीवेण तव प्राप्तिकार्ये उपलब्धिकर्मणि सहकारिणी साहाय्यकारिणी गीर्वाणी य(?) स्तयैव लब्धं प्राप्तं, तथा हि—महतां श्रेष्ठपुरुषाणां कार्योद्यमः कर्तव्योद्योगः शिवाय कल्याणाय भवति । 'उद्योगः खलु कर्तव्यः फलं मार्जारकर्मवत् । जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः' 'उद्योगिनं पुरुषमिह मुपैति लक्ष्मी'रित्याद्यभियुक्तोक्तेः' । अर्थान्तरन्यासाऽलङ्कारः । वसन्ततिलकावृत्तम् ॥ २१ ॥

---

२१ हे कमले ! बलकृतनानाकर्मसमूहसंतोषितनिखिलाऽमरे तारापतौ ( वालिनि ) स्थितमपि राज्यं त्वल्लाभकर्मणि साहाय्यवाक्यमात्रेण सुग्रीवेण लब्धमिति महात्मनां कार्यप्रयत्नः कल्याणाय भवतीत्युक्त्या समर्थयन् विश्वदेवतारेति आश्विनेयदेवताकैकाविंशोत्तरपादाननक्षत्रनामोपन्यासपुरस्सरमाह ।

दुरितं विषह्य निखिलं दयानिधे
परिपात्वकिञ्चनजनं भवानिति।
जगदुद्भवाऽऽदिनिरतस्य शार्ङ्गिणः
श्रवणेऽभिधेहि रहसि स्वयं रमे॥ २२॥

दुरितमिति। हे दयानिधे! रमे! 'अखिलं समग्रं दुरितं दुष्कृतं विषह्य सोढ्वा भवान् भगवान् अकिञ्चनं दरिद्रं जनं परिपातु रक्षतु' इति जगत उद्भवादिः, आदिशब्देन पालनसंहारौ, तेषु निरतस्याऽऽसक्तस्य शार्ङ्गिणो हरेः श्रवणे कर्णे रहसि स्वयम् अभिधेहि कथय। मञ्जुभाषिणी वृत्तम्॥ २२॥

अशक्तोऽस्मि दुःसाधनिष्ठासहस्रे-
ष्वहं कर्मबोधाद्युपायान्तरेषु।
अतस्तावकीने सुरद्रोरनूने
पदे लोकमातः प्रपद्येऽतिभीतः॥ २३॥

अशक्त इति। हे लोकमातः! अहं दुःखेन साधितुमशक्यो दुःसाधः। साध संसिद्धावित्यस्मादीषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्। स निष्ठायाः सहस्रं सहस्रांशः येषु तथा क-

22 हे रमे! त्वं, "हे दयानिधे! भवान् दीनं जनं समग्रं दुष्कृतं मर्षयित्वा रक्षतु" इति लोकसर्गादिकार्यव्यापृतस्य हरेः कर्णे स्वयं कथयेति द्वाविंशश्रवणनक्षत्रनामोद्धप्रश्नाह।

23 हे जगन्मातः! अहं दुष्कराऽनुष्ठानसहस्रेषु कर्मज्ञानप्रभृतिष्वन्येषूपायेषु असमर्थोऽस्मि, अतोऽत्यन्तं चकितः सन् कल्पवृक्षकल्पे तावके चरणे शरणे कुर्वे इति त्रयोविंशधनिष्ठानक्षत्रनामोपनिबध्नन्नाह।

र्मसन्ध्याऽऽदिबोध आत्मज्ञानम् एते आदी येषु तेषु उपायान्त-रेषु अन्योपायेषु अहमशक्तः असमर्थः अस्मि, अतः सुरद्राः अनूने अधिके इति यावत्, तावकीने त्वदीये पदे स्थाने(?) अत्यन्तं भीतः भययुक्तः अहं प्रपद्ये प्राप्तो ऽस्मीत्यर्थः । भुजङ्गप्रयातं वृत्तम् ॥ २३ ॥

त्वत्परिग्रहजुषं द्विषन् रमे
क्षीयते बहुसहायवानपि ।
तन्निदर्शनमपास्तवारिज-
श्चन्द्रमाः शतभिषङ्निषेवितः ॥ २४ ॥

त्वदिति । हे रमे ! तव परिग्रहं गृहीतं जनं, पत्नीपरिजनादानमूलशापाः परिग्रहा इत्यमरः । तं जुषते सेवते तं पुरुषं द्विषन् जनः बहवः सहाया अस्य सन्ति तादृशो ऽपि क्षीयते क्षयं प्राप्नोति तस्य निदर्शनं दृष्टान्तः अपास्तं वारिजं येन स चन्द्रमा इन्दुः शतभिषग्भिः शतताराभिर्बहुवैद्यैश्च सेवित इति । अत्र लिङ्गप्रमाणाऽलङ्कारः । रथोद्धतावृत्तम् ॥ २४ ॥

भगवति यस्य भवद्गुणकीर्तनकम्प्रौष्ठपदमास्यम् ।

---

२४ हे रमे ! त्वया परिगृहीतं जनं द्विषन् पुरुषः बहुलसहायसंपन्नो ऽपि क्षयं प्राप्नोतीत्यत्र त्वदावासभूतकमलविरोधी शतभिषङ्निषेवितः (शतसंख्यकचिकित्सकसेवितः, शततारकाख्यतारासेवितश्च) चन्द्र उदाहरणमिति चतुर्विंशशतभिषङ्नक्षत्रनाम प्रदर्शयन्नाह ।

२५ हे भगवति ! यस्य पुरुषस्य मुखं त्वद्गुणवर्णनेन कम्पमानस्यौष्ठस्याऽऽस्पदं भवति तत्पादकमलधूलिर्जगत्यस्माकं शरणं भवतीति

भवति हि जगति गतिस्तच्चरणाऽम्बुजेरेणुरस्माकम्॥२५॥

भगवतीति । हे भगवति ! यस्य पुंस आस्यं भवत्या गुणानां कीर्तने वर्णने कम्प्रस्य कम्पमानस्य ओष्ठस्य । चलनं कम्पनं कम्प्रमित्यमरः । पदं स्थानं भवति तस्य चरणाऽम्बुजस्य रेणुर्धूलिः अस्माकं गतिर्भवति इति जगति लोके हीति प्रसिद्धम् । उपगीतिवृत्तम् ॥ २५ ॥

त्वत्पदमरविन्दगृहे वन्दन्ते जन्तवो भुवि ये ।
भुवनोत्तरभाद्रपदक्षुण्णममीषां गृहद्वारम् ॥ २६ ॥

त्वदिति । हे अरविन्दगृहे ! कमले ! भुवि त्वत्पदं भवचरणं ये जन्तवः प्राणिनः वन्दन्ते नमस्कुर्वन्ति अमीषां जन्तूनां गृहद्वारं भुवने उत्तराण्यधिकानि भद्रस्य भद्राजातीयगजस्येमानि भाद्राणि । भद्रः शिवे खञ्जरीटे वृषभे तु कदम्बके । करिजातिविशेषे चेति मेदिनी । पदानि तैः क्षुण्णं चूर्णितम् । क्षुदिर् संपेषणे इत्यस्माभिष्ठायां रदाभ्यां निष्ठातो नः पूर्वस्य च द इति नः । भवतीत्यर्थः । उपगीतिवृत्तम् ॥ २६ ॥

शिशिरेवतीर्य सिन्धौ साकं शीतांशुना पद्मे ।

---

पञ्चविंशपूर्वभाद्रपदानक्षत्रनाम प्रोष्ठपदमित्यनेन विन्यस्यन्नाह ।

२६ हे कमलालये ! भूतले ये जनास्त्वच्चरणमभिवादयन्ते स्तुवते वा एतेषां मन्दिरद्वारं भुवनोत्तरभाद्रपदक्षुण्णं ( लोकोत्तरहिमवदाकरजभद्राख्यगजसम्बन्धिपादक्षुण्णं ) भवतीति त्वां नमतां गजादिसमृद्धसम्पल्लाभो भवतीति उत्तरभाद्रपदमिति षड्विंशनक्षत्रनाम निर्दिशन्नाह ।

२७ हे कमले ! त्वं शीतले सागरे शिशिरकरेण सहाऽवतीर्य

करुणाऽऽर्द्रे कान्तहृदि स्थास्नुर्मुष्णासि तापं मे ॥२७॥

शिशिरे इति । हे पद्मे ! शीतांशुना चन्द्रेण साकं सह। अत्र चन्द्रस्याऽप्रधानत्वद्योतिका सहयुक्ते ऽप्रधाने इति तृतीया ज्ञेया । शिशिरे शीतले सिन्धौ भवतीर्ग, यद्वा हे करुणाऽऽर्द्रे ! दयाक्लिन्ने ! अतः हे शिशिरे ! इति सम्बुद्धिः। कान्तस्य हरेर्हृदि हृदये तिष्ठतीति स्थास्नुः। ग्लाजिस्थश्च क्स्नुरिति क्स्नुप्रत्ययः । मे तापं सन्तापं मुष्णासि चोरयसि । अत्र लक्ष्म्या शीतलत्वगुणस्य अन्यसंसर्गेणाऽधिक्यवर्णनादनुगुणालङ्कारः । उपगीतिवृत्तम् ॥ २७ ॥

संग्रथ्य चित्रैः पदरत्नखण्डैः
समर्पिता दास्यजुषा मयैषा ।
नक्षत्रमाला नदराजकन्ये
हृद्या त्वदीये हृदये चकास्तु ॥ १८ ॥

इति श्रीमद्वेङ्कटाऽध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे नक्षत्रमालास्तबकः पञ्चदशः सम्पूर्णः ॥ १५ ॥

संग्रथ्येति । हे नदराजकन्ये ! हे सुधाऽब्धिपुत्रि ! चित्रैः

---

दयार्द्रे हरिहृदये ऽवस्थिता सती, मम सन्तापं शमयसीति रेवतीति सप्तविंशनक्षत्रनामोपन्यासमुखेनाह ।

२८ एवं सप्तविंशत्या क्रमात्सप्तनक्षत्रनामघटितैः श्लोकैः स्तुत्वा सम्प्रति हे सागरसुते ! विचित्रैः पदरूपैर्मणिशकलैः संगुम्फ्य दासेन मया समर्पिता हृदयप्रियेयं नक्षत्रमाला ( सप्तविंशतिमौक्तिकघटितहारसदृशी तत्तन्नक्षत्रनामघटितसप्तविंशतिपद्यकृता स्तुतिः ) तावकीने हृदये दीप्यतामिति भगवत्यै समर्पयन् स्तबकं परिपूरयति ।

इति श्रीमानवल्ल्युपाख्यनैलङ्कुरामशास्त्रिविरचितायां लक्ष्मीसहस्राऽनुवादानिःश्रेणिकायां नक्षत्रमालास्तबकः ॥ १५ ॥

विचित्रैः पदानि सुप्तिङन्तानि तान्येव रत्नानां मौक्तिकादीनां खण्डास्तैः संग्रथ्य सम्यक् गुम्फयित्वा दास्यं सेवनं जुषते तेन दासेनेति यावत्, मया वेङ्कटाऽध्वरिकविना समर्पिता कण्ठे दत्तेति यावत् । हृद्या हृदयप्रिया मनोहारिणीति यावत् । एषा नक्षत्रमाला पूर्वोक्ता त्वदीये हृदये वक्षसि चकास्तु दीप्यतु(?) इत्यर्थः । उपजातिवृत्तम् ॥ २८ ॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन विरचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मीसहस्रटीकायां नक्षत्रमालास्तबकः पञ्चदशः सम्पूर्णः ॥ १५ ॥

## अथ विचित्रस्तबकः ॥ १६ ॥

एकवक्त्रोऽपि समरे दशवक्त्रं जघान यः ।
इत्थं विचित्रचरितः स रामः श्रेयसेऽस्तु नः ॥ १६ ॥

अथाऽस्मिन् षोडशस्तबके लक्ष्म्या विचित्रचरित्रं वर्णयितुं प्रथमपद्ये विचित्रमिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति ।

पवित्रं पद्मनाभस्य कलत्रं तत् पुनातु नः ।
विचित्रं त्रिषु लोकेषु चरित्रं यस्य गीयते ॥ १ ॥

पवित्रमिति । यस्य विचित्रं चरित्रं त्रिषु लोकेषु गीयते तत् पवित्रं पद्मनाभस्य हरेः कलत्रम् । कलत्रं श्रोणिभार्ययोरित्यमरः । नोऽस्मान् पुनातु पवित्रान् करोतु । युग्मविपुलावृत्तम् ॥ १ ॥

अप्राकृतेऽपि भगवानवतारूपे
प्रायः प्रजाऽनुगुणमेव करोति जन्म ।
मातस्त्वया हि मथिते प्रथमे हि भूते
चित्रं पुरा जनिरकारि तथा द्वितीये ॥ २ ॥

अप्राकृतेति । हे मातः ! भगवान् अप्राकृते प्रकृतिकार्य-

---

१ अथेदानीं षोडशं विचित्रस्तबकमारिप्सुर्यस्य विचित्रं चरितं लोकत्रये गीयते तत् हरेः पवित्रं कलत्रं नः पवित्रयत्वित्याह ।

२ हे जननि ! भगवान् हरिः लोकोत्तरेऽप्यवतारूपे प्रजाऽनुरूपमेव जन्म करोति, त्वया तु पुरा मथिते प्रथमे भूते ( जलराशौ ) यथा जन्माऽकारि तथैव द्वितीयेऽपि भूते ( पृथिव्यां ) जन्माऽकारीति त्वमेकरूपेणैव जलपृथिव्योरुत्पन्नेति जलोत्पन्नाया जलीयत्वे पृथिव्युत्पन्नायाश्च पार्थिवत्वे समुचितेऽप्येकरूपेणैवोभयोस्त्वमुत्पन्नेति चित्रं, भगवांस्तु जलेऽवतीर्णो मत्स्यादिरूपेण दशरथादिमनुष्येष्ववतीर्णो रामादिमनुष्यरूपेण कारणाऽनुरूपं विभिन्नरूपेणाऽजायतेत्याह ।

भिन्नेऽपि तस्य स्वेच्छाऽऽविर्भावत्वादप्राकृतभौतिके सत्यपि अवतारस्य रूपे स्वरूपे प्रायो बाहुल्येन प्रजाऽनुगुणं लोकाऽनुरूपं जन्म करोति । प्रकृतत्वशत्वेपि प्रकृतित्वाल्लोका यथा स्वयोनिसदृशं जन्म बिभ्रति गोर्गोवत् तथा दशरथान्मनुष्यान्मनुष्य इति । हिस्त्वर्थे । त्वया प्रथमे भूते नीरे मथिते सति यथा जनिरकारि येन रूपेण जन्म कृतं द्वितीये ऽपि भूते मथिते लाङ्गलेन कर्षिते सति तेनैव रूपेण न तु तद्योनिसदृशं यादोवृक्षादिरूपेण जनिर्जन्माऽकारि कृतम् । तथा च सर्जनश्रुतिः । 'आप एव ससर्जाऽदौ तासु बीजमवासृज'दिति श्रुतेः(?) । वसन्ततिलकावृत्तम् ॥ २ ॥

ख्यातो भुवि ज्वलनशीतलिमाऽनुमानं
बाधाऽनुविद्धमिति तार्किकसम्प्रदायः ।
वालाऽनले कमलवासिनि वायुसूनो-
श्चित्रं चकर्थ कृपया शिशिरं त्वमेव ॥ ३ ॥

ख्यात इति । हे कमलवासिनि ! ज्वलनस्य वह्नेः शीतलिम्न अनुमानं बाधेन प्रत्यक्षेणाऽनुविद्धं बाधितम् इति तार्किकाणां संप्रदायः आचारः ख्यातः प्रसिद्धः, इति सति वायुसूनोर्वालस्य पुच्छस्याऽनलं वह्निं कृपया त्वमेव शिशिरं शीतं चकर्थ इदं चित्रम् । अत्र पक्षे साध्याऽभावो बाधः, अनुमानं च वह्निः शीतः द्रव्यत्वात् वन्हिशीतत्वं प्रत्यक्षबाधितमिति

---

३ लोके ज्वलने शैत्याऽनुमानं बाधितमिति नैयायिकसंप्रदायः प्रसिद्धः, परं हे कमलालये ! त्वं मारुतेः पुच्छाऽग्नौ कृपया शैत्यमकार्षीरिति बाधितकार्यकरणमेतच्चित्रमिति भगवतीमाहात्म्याऽतिशयं प्रतिपादयति ।

बाधाऽनुविद्धत्वम् । सो ऽग्निर्माहातिबालाऽग्र शीतः प्रत्यक्षदृष्टः, अत इदं चित्रमित्यर्थः । वसन्ततिलकावृत्तम् ॥ ३ ॥

निमग्नमग्नौ किल वस्तु भूयो
ऽप्युन्मज्जतीति क नु देवि दृष्टम् ।
वपुर्विजित्रं तव वह्निमग्न-
मुन्मज्जनं मज्जननि प्रपेदे ॥ ४ ॥

निमग्नमिति । हे देवि ! अग्नौ किञ्चिन्निमग्नं वस्तु भूय उन्मज्जतीति क नु दृष्टं ? हे मज्जननि ! तव वपुः वह्निमग्नमप्युन्मज्जनं निर्गमं प्रपेदे इति विचित्रम् । उपजातिवृत्तम् ॥ ४ ॥

स्वबाधकान् साधुजनो ऽपि शक्तौ
बाधेत पाथोधिसुते जगत्याम् ।
बाधाविधात्रीर्भवती ररक्ष
रक्षःस्त्रियः प्रत्युत वायुपुत्रात् ॥ ५ ॥

स्वेति । हे पाथोधिसुते ! साधुजनो ऽपि शक्तौ सामर्थ्यप्राप्तौ जगति स्वस्य बाधकान् पीडकान् बाधेत । भवती तु बाधाविधात्रीः कुर्वतीः रक्षःस्त्रियः प्रति वायुपुत्रात् मारुतेः सकाशाद्ररक्ष इति उत । विचित्रं ज्ञेयम्(?) उपजातिवृत्तम् ॥ ५ ॥

---

४ हे देवि ! वह्नौ प्रविष्टं वस्तु भूय उन्मज्जतीति क नु दृष्टं ? परं हे सन्मातः ! तव वपुरग्निनिमग्नमपि पुनरुन्ममज्जेति विचित्रमित्याह ।

५ हे समुद्रपुत्रि ! पृथिव्यां सत्पुरुषो ऽपि सामर्थ्ये सति निजपीडकम् बाधेतेति प्रसिद्धं, तथापि भवती स्वबाधाप्रदा राक्षसयोषितः प्रत्युत ( वैपरीत्येन ) हनूमतो ऽरक्ष इति वैचित्र्यं प्रदर्शयन्नाह ।

शोकादपेतः स तवाऽवलोकात्
पाकारिपाकः किल काक एकः।
लोकाननेकान् लभते स्म चित्रं
भुजान्तरस्थे भुजगेश्वरस्य ॥ ६ ॥

शोकेति। हे भुजगेश्वरस्य भुजान्तरस्थे! तवाऽवलोकात् कृपाकटाक्षमात्रात्स पाकारेरिन्द्रस्य पाकः। पोतः पाको ऽर्भक इत्यमरः। एकः काकः तत्पीडकत्वेन प्रसिद्धः करटः शोकात् अपेतो मुक्तः सन्ननेकान् बहून् लोकान् लभते स्म प्राप इदं विचित्रम्। उपजातिवृत्तम् ॥ ६ ॥

कान्तः प्रियां वहति कामवशाद् दृशीति
वाङ्मात्रमेव भुवि शुश्रुम वार्धिकन्ये।
आश्चर्यमब्जनयनो हरिरब्जवासा
त्वं यत्ततो दृशि बिभर्ति तव प्रियस्त्वाम् ॥ ७ ॥

कान्त इति। हे वार्धेः सिन्धोः कन्ये! कान्तः प्रियः प्रियां स्त्रियं कामवशादिच्छावशात् दृशि चक्षुषि बिभर्तीति भुवि यच्छु-

---

६ हे हरिवक्षःस्थलस्थे! असहायः स इन्द्रपुत्रो जयन्तनामा काकः तव कृपाकटाक्षात् निःशोकः सन् बहून् लोकान्प्रपेदे इति काकस्योत्तमलोकाऽवाप्तिराश्चर्यकरीति भगवत्याः कृपामाहात्म्यं प्रतिपादयति।

७ हे जलधिकन्ये! पतिः कामवशात् पत्नीं दृशि धारयतीत्याश्चर्यकारकं वाङ्मात्रमेव वयं श्रुतवन्तः, परं कमलनयनो हरिः, त्वं च यत्कमलालया ऽतस्त्वां दृशि बिभर्तीति पूर्वश्रुतमिदानीं समञ्जसं मन्यामह इत्याह।

श्रुमाऽऽकर्णयाम तद्राज्ञात्रमुक्तिमात्रमेव इति सति यतः अब्ज-नयनः हरिः त्वम अब्जे कमले वासो यस्याः सा त्वम ततः त्व-दधीनः सन् त्वां दृशि बिभर्तीति आश्चर्यम् । सामान्यजनो ऽपि कारणवशेन प्रियां दृशि विभर्त्यवलोकयति, अयं कमल-लोचनो हरिः अतः कमलाऽऽसनां त्वां सर्वदा दृशि बिभर्तीति विचित्रमिति भावः। वसन्ततिलकावृत्तम् ॥ ७ ॥

सर्वे किं चित्कुर्वतः स्वाऽनुकूलान्
संरक्षन्तः प्रेक्षिताः सिन्धुकन्ये ।
अञ्जल्यज्ञातर्जिताऽऽगःप्रपञ्चा-
नस्मादृक्षानप्यहो रक्षसि त्वम् ॥ ८ ॥

सर्व इति । हे सिन्धुकन्ये ! सर्वे जनाः किं चित् हितं कुर्वतः अतः स्वस्याऽनुकूलान् जनानित्यर्थः । संरक्षन्तो रक्षणं कुर्वन्तः प्रेक्षिता अवलोकिताः, त्वं तु अर्जिताः संपादिता आगसामपराधानां प्रपञ्चा विस्तारा यैस्तानपि अञ्जलौ करसंपुट-करणे ऽप्यज्ञान् ज्ञानशून्यानस्मादृक्षान् मत्सदृशमूढान् रक्षसि अहो इति विचित्रम । शालिनीवृत्तम ॥ ८ ॥

दृष्टा वेणुं जडमपि जना देवि वाचालयन्तः
कृष्णो ऽप्येनं मुखरयति चेत्किं पुनस्तत्र चित्रम् ।

---

८ हे सिन्धुकन्ये ! सर्वे जनाः किंचित्स्वकार्यसम्पादकान् स्वाऽनुकूलान् रक्षन्ते प्रेक्षिताः, परम अविज्ञाताऽञ्जलिबन्धान् ( अकृत-प्रणामान् ) संपादिताऽपराधराशीनस्मादृशानपि त्वं रक्षसीत्याश्चर्यमित्याह ।

९ हे देवि ! लोके जना जडमपि ( अचित्तमपि, मूर्खमपि च ) वंशं वादयन्तो दृष्टाः, एनं कृष्णो ऽपि चेद्वादयति तत्र किं चित्रं ?

श्लोकान् मूकानपि च भवती वादयत्यप्रयत्ना-
च्चित्रं शौरेः सखि वयममी तत्र दृष्टान्तभूताः ॥ ९ ॥

दृष्टा इति । हे देवि ! जडमपि वेणुं वंशं वाद्यं वाचालयन्तः शब्दयन्तः जना मानवा अपि दृष्टाः, अत एवं वेणुं कृष्णोऽपि मुखरयति वाचालयति चेत्तत्र पुनः किं चित्रं ? न किमपि, किं तु हे शौरेः सखि ! भवती मूकान् वाग्रहितानप्यप्रयत्नाच्छ्लोकान् वादयति पाठयति । गतिबुद्धीत्यादिना द्विकर्मत्वम् । तत्र वाचने दृष्टान्तभूता वयममी स्मः । मन्दाक्रान्ता ॥ ९ ॥

मादृक्षरक्षणकृते मकराङ्कमात-
र्बाह्वन्तरे करुणया भवती निविष्टा ।
अर्चात्मना ध्रुवमवस्थितमञ्जनाऽद्रौ
विश्वम्भरं विविधकार्यकरं करोषि ॥ १० ॥

मादृक्ष इति । हे मकराङ्कस्य मदनस्य मातः ! मादृक्षाणां मत्सदृशानां रक्षणार्थं करुणया कृपया बाह्वन्तरे प्रकरणप्राप्तत्वाद्विष्णोरित्यर्थः । निविष्टा स्थिता सती अर्चात्मना प्रतिमात्मना स्थापितत्वेन अञ्जनाऽद्रौ शेषाऽद्रौ स्थितं विश्वम्भरं विष्णुं

---

भवती पुनर्मूकानप्यनायासेन श्लोकान्वाचयतीति चित्रं, तत्र च अमी वयमुदाहरणभूता इति जनैः क्रियमाणं जडवंशवादनं कृष्णः करोति चेत् किं चित्रं, परं लोकाऽप्रसिद्धं मादृशाऽवाक्श्लोकवाचनं भवती करोतीति ते माहात्म्यं लोकोत्तरमित्याह ।

१० हे काममातः ! मादृशदीनजनरक्षणाय भगवतो वक्षःस्थलाऽवस्थिता त्वं शेषाऽचले प्रतिमात्मना स्थितं हरिं नानाकार्यकारिणं करोषीत्याह ।

विविधं जगत्सर्जनादिरूपं कार्यं तस्य करं कारकं करोषि । व-
सन्ततिलकावृत्तम् ॥ १० ॥

विश्वप्रसूरपि त्वं विचित्रमुरगेन्द्रशैलपतिकान्ते ।
मन्मातासाधारणमातेव विशिष्य पुष्यसि रमे माम्॥ ११ ॥

इति श्रीमद्वेङ्कटाऽध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे
विचित्रस्तबकः षोडशः सम्पूर्णः ॥ १६ ॥

विश्वेति । हे रमे ! हे उरगेन्द्रशैलस्य शेषाऽद्रेः पत्युः स्वा-
मिनः कान्ते प्रिये ! त्वं विश्वप्रसूर्जगन्माता ऽपि मम मात्रा प्रसुत्रा
असाधारणमसामान्यं यथा तथा साक्षाद् मातेव विशिष्य विशे-
षेण मां कविं पुष्यसि पुष्टं करोषीति विचित्रम् । गीतिवृत्तम् ॥ ११ ॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन
विरचितायां बालबोधिन्याख्यायां श्रीलक्ष्मीसहस्र-
टीकायां विचित्रस्तबकः षोडशः संपूर्णः ॥ १६ ॥

---

११ हे वेङ्कटपतिनायिके ! रमे ! सकललोकजनन्यपि त्वं माम-
सामान्यमातेव ( केवलं मदेकमातेव ) मां विशेषेण पुष्णासीति स-
कलजनन्यास्ते मयि वात्सल्यमसाधारणमित्याह ।

इति श्रीमानवल्ल्युपाख्यतैलङ्गरामशास्त्रिविरचितायां
लक्ष्मीसहस्राऽवतरणनिःश्रेणिकायां
विचित्रस्तबकः ॥ १६ ॥

## अथ नामवैभवस्तबकः ।

सर्वराक्षससंहारादेवगन्धर्वकिन्नरैः ।
यन्नामवैभवं गीतं स रामः श्रेयसे ऽस्तु नः ॥ १७ ॥

अथाऽस्मिन् सप्तदशस्तबके लक्ष्म्या नामवैभवं वर्णयितुं प्रथमपद्ये नाम्नामिति तल्लिङ्गं निर्दिशन् मङ्गलमाचरति—

धाम्ना दृश्येय राजीवधाम्ना तेन दयालुना ।
आम्नानं जातु चिद्यस्य नाम्नां ज्ञानैर्युनक्ति नः ॥ १ ॥

धाम्नेति । यस्य जातु चित्कदा चिदपि नाम्नामाम्नानमुच्चारः नो ऽस्मान् ज्ञानेन युनक्ति युक्तं करोति तेन राजीवधाम्ना कमलगृहेण दयालुना कृपाशीलेन, स्पृहिगृहिपतिदयीत्यालुच् । धाम्ना तेजसा ऽहं दृश्येय । दृशिर् प्रेक्षणे अस्मात् कर्मण्याशीर्लिङ् । पथ्यावक्त्रं वृत्तम् ॥ १ ॥

अर्णवेन्द्रतनये ऽतिदुःसहै-
र्दुर्नरेशगुणवर्णनाऽऽतपैः ।
आर्तया रसनया ऽद्य शीतलं
कीर्तयामि तव नाम कोमलम् ॥ २ ॥

अर्णवेति । हे ऽर्णवेन्द्रतनये ! ऽत्यन्तं दुःसहैः दुर्नरेशानां

---

१ साम्प्रतं सप्तदशं नामवैभवस्तबकमारिप्सुर्यस्य (धाम्नः) अभिधेयानामभ्यासो ऽस्मान् ज्ञानैर्योजयति तेन दयाशीलेन कमलालयेन धाम्ना ( रमारूपेण ) अहमवलोकितो भवेयमिति मङ्गलमाचरति ।

२ हे समुद्रदुहितः ! अत्यन्तं सोढुमशक्यैर्दुष्टभूपगुणवर्णनाऽऽतपैः रुग्णया जिह्वया ऽद्य शीतं मृदुलं च ते नामोच्चारयामीत्याह ।

वर्णनाऽऽतपैः आर्तया रसनया शीतलं कोमलं च तव नाम कीर्तयाम्युच्चारयामि। रथोद्धतावृत्तम् ॥ २ ॥

राजीवगेहे तव मर्त्यराजी-
राजीवयन्ति व्यसनाऽग्निमग्नाः।
नामानि यः कीर्तयते स धन्यो
वैमानिकानामपि माननीयः ॥ ३ ॥

राजीवेति। हे राजीवगेहे ! व्यसनरूपे ऽग्नौ मग्नाः मर्त्यानां राजीः पङ्क्तीः आजीवयन्ति प्राणं धारयन्ति ते नामानि यः पुमान् कीर्तयते स वैमानिकानां देवानामपि। चरतीति ठक्। माननीयः मान्यः सन् धन्यो भवतीत्यर्थः। इन्द्रवज्रावृ० ॥ ३ ॥

पञ्चेषुचापलपलायनसिद्धमन्त्रं
घण्टाविशेषनिनदं कुहनापिशाच्याः।
कोपाऽनलप्रशमसान्त्ववचो मुरारेः
के नाम नाम न जपन्ति तवाऽब्धिकन्ये ॥ ४ ॥

पञ्चेष्विति। हे ऽब्धिकन्ये ! पञ्चेषोश्चापलस्य पलायने सिद्धमन्त्रम्, एवं कुहनापिशाच्याः कपटपिशाचस्य घण्टाविशेषो

---

३ हे कमलवासिनि ! यः पुमान् दुःखाऽनलमध्यप्रविष्टान् मनुजसमूहान् आजीवयन्ति ते नामानि कीर्तयते धन्यः स देवानामपि मान्यो भवतीत्याह।

४ हे अब्धिकन्ये ! कामचाञ्चल्यविद्रावणे सिद्धमन्त्ररूपं, कपटरूपपिशाच्या महाघण्टात्राघरूपं, मुररिपोः क्रोधाऽग्निशमने सान्त्ववचनरूपं ते नाम के वा न जपन्ती?ति रूपकमुखेन त्वन्नामोच्चारणं तत्तत्फलजनकमित्याह।

वाद्यविशेषस्तस्य निनदं शब्दभूतं पुनर्मुरारेः कोपाऽनलस्य प्रशमस्य सान्त्ववचः शान्तिवाक्यं तव नाम के नाम के नराः न जपन्तीत्युल्लेखाऽलङ्कारः । वसन्ततिलकावृत्तम् ॥ ४ ॥

आम्नायदुग्धजलधेरमृतं मदम्ब
नित्यद्विषां प्रहरणे द्रुहिणाऽस्त्रमन्त्रः ।
नारायणस्य किल नित्यजपस्त्वदीयं
नाम प्रगल्भतममभ्युदयं तनोतु ॥ ५ ॥

आम्नायेति । हे मदम्ब ! आम्नायो वेद एव दुग्धजलधिस्तस्याऽमृतं, तथा नित्यद्विषां कामाद्यरीणां प्रहरणे नाशने द्रुहिणाऽस्त्रमन्त्रः ब्रह्माऽस्त्रमनुः किल निश्चयेन नारायणस्य नित्यजपः ईदृक् अतिप्रगल्भं त्वदीयं नाम नः अभ्युदयं तनोतु विस्तारयतु । वसन्ततिलकावृत्तम् ॥ ५ ॥

नामरक्षणपरस्तवोचितं
ना ऽमरक्षणपरः क्षितौ रमे ।
यस्तनोति तव नामयोजनं
सोयमद्भुतमनामयो जनः ॥ ६ ॥

नामेति । हे रमे ! यस्तव नाम्नां योजनं तनोति विस्ता-

---

५ हे ममाऽम्ब ! वेदसागरसमुत्थाऽमृतरूपं, सार्वदिकशत्रुवधे ब्रह्मास्त्रमन्त्ररूपं, भगवतो जपविषयस्ते नाम प्रौढतमम् अभ्युदयं ( मांक्षं ) तनोतीत्याह ।

६ हे रमे ! यो ना ( पुरुषः ) क्षितौ तव नाम्नो रक्षणे आसक्तो भवति सो ऽमराणां क्षणे ( उत्सवे ) परो भवतीत्युचितं, यो जनस्तव नामयोजनम् ( अभिधेयसम्बन्धं नामोच्चारणमिति यावत् ) तनोति सः अद्भुतं यथा तथा ऽनामयो ( नीरोगः ) भवतीति नामयोजनकारी अनामयोजनो भवतीति वैचित्र्यप्रदर्शनमुखेनाह ।

रयति सोऽयमनामगोजनो भवतीति विरोधेन अद्भुतत्वं, सोऽयं जनः अनामगः नीरोगो भवतीति अद्भुताऽभावः, पुनर्यः तव नाम्नः रक्षणे परः स ना नरः क्षितौ अमराणां क्षणे उत्सवे पर इत्युचितम् । यो हि नामरक्षणपरः स नामरक्षणपर एवेति परमिदमद्भुतम् । रथोद्धतावृत्तम् ॥ ६ ॥

साम्नां जन्मान्तरमखिलऋग्वर्गसर्गान्तरं वा
पर्यायो वा सकलयजुषां प्रक्रिया ऽऽथर्वणानाम् ।
वेदान्तानां किमु विनिमयो विश्रुतं विश्वमात-
र्दिव्यं भव्यं दिशति जपतां देवि नाम त्वदीयम् ॥ ७ ॥

साम्नामिति । हे विश्वमातः ! साम्नां वेदानां जन्मान्तरमन्यज्जन्म वा, ऽखिलानां ऋचो वर्गाणां ऋग्वेदानामित्यर्थः । सर्गान्तरं जन्मान्तरं वा,यजुषां यजुर्वेदानां पर्यायो ऽपरशब्दः वा,ऽऽथर्वणानां वेदानां प्रक्रिया प्रकारान्तरं वा,वेदान्तानां विनिमयः प्रत्याम्नायः इति विश्रुतं प्रख्यातं हे देवि दीप्तिरूपे ! त्वदीयं दिव्यं नाम जपतां भव्यं कल्याणं दिशत्यर्पयति । 'सर्वे पदं हस्तिपदे निमग्नम्' इति न्यायेन । अथ च 'राम त्वत्तोऽधिकं नाम परं च नाम्नोऽस्ति यावती शक्तिः' इत्यादिवचना-

---

७ हे देवि ! जगन्मातः ! सामवेदानां जन्मान्तररूपं वा, ऋक्समूहस्य सृष्ट्यन्तररूपं वा,समग्राणां यजुषां शब्दान्तरं वा, अथर्ववेदानां प्रकारान्तरं वा, उपनिषदां व्यतिहारो वा, तव प्रसिद्धं नाम, स्वर्ग्यं कल्याणं जपतां ददातीत्याह ।

८ हे मातः ! तव श्रीयुक्तं नाम कीर्तयन्तो महाकीर्तयो वेदान्तमार्गासक्तबुद्धयः, दुरितसङ्घनिराकरणेन संतुष्टमहामनसः, उद्रिक्तसत्त्वगुणाः, मोक्षकृतकुतूहलाः सन्तस्ते प्रियं भगवन्तं तोषयन्तीत्याह ।

धारेण नामग्रहणात्सर्वे ऽपि मनोरथाः पूर्णा भवन्तीति सन्देहोत्प्रेक्षालङ्कारौ। मन्दाक्रान्तावृत्तम् ॥ ७ ॥

त्रय्यन्तैकप्रणयिमतयस्तापसाः पापसार्थ-
प्रत्यादेशप्रमुदितमहाचेतसः स्फीतसत्त्वाः।
नाम श्रीमत्तव किल लसत्कीर्तयः[१] कीर्तयन्तो
मातर्मुक्तौ विहितकुतुका मोदयन्ते प्रियं ते ॥ ८ ॥

त्रय्यन्तेति। हे मातः! त्रय्यन्ते वेदान्ते एका प्रणयिनी मतिर्येषां ते तथा पापस्य सार्थस्य समूहस्य प्रत्यादेशः निराकृतिः तेन प्रमुदितं महाचेतो येषां ते पुनः स्फीतं प्रभूतं सत्त्वं प्रभावः सत्त्वगुणो वा येषां ते अन्यच्च श्रीमत्तव नाम कीर्तयन्तः किल वपृत् प्रख्याता कीर्तिर्येषां ते। अत्रपूर्वात्पृङ् व्यायामे इत्यस्मात्क्विपि ह्रस्वस्य पिति कृतीति तुकि वष्टि भागुरीत्यल्लोपः। अत्र लसत्कीर्तय इत्यपि पाठः। अस्याऽर्थः सुगमः। तापसाः मुनयः मुक्तौ कैवल्ये कृतं कुतुकं यैस्ते सन्तः प्रियं विष्णुं मोदयन्ते। मुद हर्षे इत्यस्माण्णिजन्तात्कर्तरि लट्। मन्दाक्रान्तावृत्तम् ॥ ८ ॥

भास्वद्वर्णं वृषगिरिपतेर्भावुकं तन्वता ते
धाम्ना धाम स्फुरति जलधेः पुत्रि नाम्ना च नाम।

---

९ हे नीरधिसुते! कुशलं विस्तारयता ते तेजसा वेङ्कटपतेर्भास्वद्वर्णं (प्रकाशमानरूपं, शोभमानाक्षरं च) धाम गृहं, ते नाम्ना च तस्य नाम स्फुरतीति, महीपतेः शैलोच्चो रमणीयः प्रासादो रात्रौ प्रदीपस्थापनं विना विशेषेण शोभते किं?मित्युक्त्या समर्थयन् स्वतेज-

---

१ वपृत्कीर्तय इति १ पु० पा०।

रम्यं हर्म्यस्थलमपि महीरक्षिणः शैलतुङ्गं
दीपाऽऽरोपं रजनिषु विना देवि देदीप्यते किम् ॥ ९ ॥

भास्वदिति । हे जलधेः पुत्रि ! धामपक्षे भास्वन्तः वर्णा नीलादयः, नामपक्षे अक्षराणि च यस्मिन् तत् । वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वा ऽक्षरे इत्यमरः । वृषगिरिपतेः श्रीहरेः । भावुकं भविकं भव्यं कुशलं क्षेममित्यमरः । तन्वता विस्तारयता ते धाम्ना गृहेण धाम गृहं चेत्यपरं नाम्ना ऽभिधया नाम च स्फुरति शोभते । तत्र दृष्टान्तः—हे देवि ! महीरक्षिणः राज्ञः शैलवत्तुङ्गमुच्चं रम्यं सुन्दरमपि हर्म्यस्थलं रजनिषु दीपारोपं विना देदीप्यते किं शोभां प्राप्नोति किं ? नेत्यर्थः । अनुगुणदृष्टान्ताऽलङ्कारौ । मन्दाक्रान्तावृत्तम् ॥ ९ ॥

अप्यस्माकं वचनमचमत्कारि कंसारिकान्ते
प्राज्ञाऽऽस्वाद्यं प्रभवति भवन्नामधेयाऽनुषङ्गात् ।
कर्पूरादिस्थिरपरिमलद्रव्यसाचिव्यभूम्ना
निर्गन्धे स्यादपि सुरभिता निम्बकाष्ठस्य चूर्णे ॥ १० ॥

अपीति । हे कंसारेः कान्ते ! अस्माकं वचनं वाक्यमचमत्कार्यपि भवत्या नामधेयस्याऽनुषङ्गात्संबन्धात्प्राज्ञैः । धीरो

---

सैव हरिमन्दिरशोभा, त्वन्नाम्नैव भगवन्नाम्नः शोभा भवति, यथ नारायण इति हरिरिति वा भगवन्नामाऽऽद्रौ त्वन्नामभूतश्रीपदविन्यासेनैव श्रीनारायणः श्रीहरिरित्याकारमापन्नं सविशेषं शोभते इत्याह

१० हे कंसवैरिदयिते ! अचमत्कारकार्यप्यस्मद्वचनं त्वन्नामसम्बन्धात् बुधजनास्वाद्यं भवतीति कर्पूरप्रभृतिस्थिरसुगन्धकद्रव्याऽधिकसम्बन्धमाहात्म्येन गन्धशून्ये ऽपि पारिभद्रदारुचूर्णे सौरभं स्यादेवेत्युक्त्या समर्थयन्नाह ।

मनीषी ज्ञः प्राज्ञ इत्यमरः। भास्वाग्रमास्वादितुं योग्यं प्रभवति। दृष्टान्तः निर्गन्धे सुगन्धरहिते ऽपि निम्बकाष्ठस्य चूर्णे क्षोदे कर्पूरादेः स्थिरपरिगलद्द्रव्यस्य साचिव्यस्य साहाय्यस्य भूम्ना सुरभिता सौगन्ध्यं स्याद्भवेत्। दृष्टान्तालङ्कारः। मन्दाक्रान्तावृत्तम् ॥ १० ॥

अम्बा लक्ष्मीरमृतसहभूरब्धिराजन्यकन्या
पद्मा विश्वम्भरसहचरी पद्मसद्मा रमेति।
यो नामैवं प्रपिबति भवन्नामनामाऽमृतौघं
तस्यैवाहुर्जननि सुलभां संसृतिश्रान्तिशान्तिम् ॥११॥

अम्बेति। हे जननि! अम्बा लक्ष्मीः अमृतस्य सहभूर्भगिनी अब्धिराजन्यस्य कन्या। राजश्वशुरादिति यत्। पद्मा विश्वम्भरस्य सहचरी पद्म सद्म गृहं यस्याः सा इति यः पुमान्नाम निश्चयेन एवं पूर्वोक्तं भवत्याः नाम नाम संज्ञकः स चाऽसावमृतौघः पीयूषसमूहः तं प्रकर्षेण आदरेण पिबति गृह्णाति तस्यैव संसृतेः संसारस्य श्रान्तेः श्रमस्य शान्तिं सुलभां सुगमामाहुः। मन्दाक्रान्तावृत्तम् ॥ ११ ॥

न बहून् बहु मन्महे मनून्
न च वाचो जरतीरधीमहे।

---

११ हे जननि! यः अम्बेत्यादिरूपं त्वन्नामनामकं पीयूषप्रवाहं प्रकर्षेण पिबति नाम, तस्यैव संसाराऽऽयासशान्तिं सुलभामाहुरिति त्वन्नाम गृह्णतः संसारतापशान्तिरनायासलभ्येत्याह।

१२ हे हरिकुटुम्बिनि! वयं बहुलान् मन्त्रान्नाद्रियामहे, पुरात-

प्रयताः प्रयतामहे वयं
तव नाम्नां हरिपत्नि कीर्तने ॥ १२ ॥

नेति । हे हरिपत्नि ! वयं त्वद्दासाः बहूनधिकान्मनून्मन्त्रान्बहु अधिकान्न मन्महे । तनादेर्मनु अवबोधने इत्यस्माल्लट् । तथा जरतीः वा वाचः वेदरूपाः पुराणरूपा इत्यर्थः । न चाऽधीमहे । इङ् अध्ययने नित्यमधिपूर्व इत्यस्माल्लट् । तथापि प्रयताः पूताः सन्तः तव नाम्नां कीर्तने ग्रहणे प्रयतामहे प्रकृष्टं यत्नं कुर्मः । वैतालीयं वृत्तम् ॥ १२ ॥

अनिरास्यमधोक्षजप्रिये
भवरोगं बहुलङ्घनैरपि ।
तरितुं प्रभवन्ति लीलया
तव नामौषधसेविनो नराः ॥ १३ ॥

अनिरास्यमिति । हे ऽधोक्षजप्रिये ! बहूनि लङ्घनानि उपोषणानि तत्सहितकृच्छ्रादितपांसि येषां तैर्मुनिभिरिति यावत् । तैरप्यनिरास्यं निरसितुमयोग्यं भवरोगं, अन्यत्र बहुभिर्लङ्घनैर्निरशनैरप्यनिरास्यं भवति शरीरे प्रभवति तं रोगमामयं तव नामैवौषधं भेषजं तत्सेविनो जनाः लीलया ऽनायासेन तरितुं प्रभवन्ति, अत्र हे हरिकान्ते ! इमं बहुलं यथा तथा घनैर्दृढैः ।

---

नवाचो ( वेदान् ) च नाऽधीमहे किं तु पवित्राः सन्तस्त्वन्नाम्नां कीर्तने प्रयतामहे इत्याह ।

१३ हे हरिप्रेयसि ! तव नामरूपौषधसेविनो नराः बहुलङ्घनैः ( बहुभिरुल्लङ्घनैः, बहुभिर्लङ्घनैरनशनैश्च ) अनुत्तरणीयं संसाररोगं विलासेन तरितुं प्रभवन्तीत्याह ।

घनं त्रिषु सान्द्रे घने इति मेदिनी । अनिरास्यं भवज्वरमिति पाठः । तथा तव नाम अमृतं पीयूषं गुडवल्ली च तं सेविन इति पाठौ सुरसौ(?) वैतालीयं वृत्तम् ॥ १३ ॥

न हि नन्तुमनन्तमीश्महे
न च निर्माणकथा ऽपि कर्मणाम् ।
कमले कुलहीनवर्तिनः
कलयामस्तव नामकीर्तनम् ॥ १४ ॥

न हीति । अनन्तं नन्तुं न हि ईश्महे न समर्थाः, तथा कर्मणां सन्ध्यादीनां निर्माणकथोत्पादनवार्ता ऽपि न, हे कमले ! सत्कुला अपि हीनकुलवद्वर्तिनो वयं तव नाम्नः कीर्तनं कलयामः गृह्णीमः । वैतालीयं वृत्तम् ॥ १४ ॥

विविधानि तवाऽधुना तु नाम
व्यसनान्यब्धिसुते धुनातु नाम ।
अपि यज्जपतः कलावहानि
स्युरमून्युज्ज्वलधीकलावहानि ॥ १५ ॥

विविधेति । हे ऽब्धिसुते ! नाम निश्चयेन तव नामाऽभिधा ऽधुना विविधानि दुःखानि धुनातु, यन्नाम जपतः पुंसः कलौ युगे

---

१४ हे कमले ! निजकुले हीनतया वर्तिनः ( कुलकलङ्कायमानाः ) वयम् अनन्तं भगवन्तं प्रणन्तुमपि न शक्नुमः, कर्माऽनुष्ठानवार्तापि ( अस्मासु ) क ? किन्तु त्वन्नामकीर्तनमात्रं कुर्म इत्याह ।

१५ हे ऽब्धिकन्ये ! यत् ( नाम ) जपतो ( मम ) एतानि दिनानि कलियुगे ऽपि निर्मलबुद्धिकौशलाऽऽपादकानि स्युस्तत् तव नामाऽधुना नानाविधानि दुःखानि ध्रुवं दूरीकरोत्वित्याह ।

ऽप्यमून्यहानि उज्ज्वलाः याः धियः बुद्धेः कलास्तदावहानि स्युरिति पूर्वेण संबन्धः । औपच्छन्दसिकं वृत्तम् ॥ १५ ॥

राष्ट्रप्रसङ्गकुजनस्तुतिराजकार्य-
दुस्तर्कवादपरदूषणदोषशान्त्यै ।
नारायणप्रियतमे ननु पावनानि
नामानि कीर्तयतु ते रसना मदीया ॥ १६ ॥

राष्ट्रेति । हे नारायणप्रियतमे ! राष्ट्रप्रसङ्गश्च कुजनस्तुतिश्च राजकार्यं च दुस्तर्कवादश्च परदूषणं चैषां दोषाणां शान्त्यै मदीया रसना ते पावनानि नामानि कीर्तयतु ननु । वसन्ततिलकावृत्तम् ॥ १६ ॥

प्रादेशसंमितनिजोदरपूरणार्थै-
रत्यर्थमेभिरनृतैरभिदह्यमाना ।
निर्वातु नीरधिसुते रसना त्वदीयै-
राख्याशतैरभिमतैरमृतैरिवाऽसौ ॥ १७ ॥

प्रादेशेति । नीरधिसुते ! प्रादेशस्तर्जनीसहिताऽङ्गुष्ठविस्तृत-

१६ हे नारायणदयिते ! मामकी जिह्वा राज्यप्रसङ्ग, दुर्जनस्तव, राजकार्य, कुतर्क, वाद, परदूषणादिदोषोपशमाय पवित्रतापादकानि ते नामानि कीर्तयतु ध्रुवमित्याह ।

१७ हे जलधिकन्ये ! प्रादेशपरिमाणकस्वकुक्षिपूरणमात्रप्रयोजनैरेभिः ( निरन्तराक्रियमाणैः ) असत्यैरत्यन्तं सन्तप्ता ऽसौ ( मम ) जिह्वा तावकैर्नामशतैरभीप्सितैः पीयूषैरिव सुख्यत्वित्याह ।

भागः तेन संमितस्य निजोदरस्य पूरणमेवाऽर्थः प्रयोजनं येषां तैरेभिरनृतैरसत्यवादैः अत्यर्थम् अभितो दह्यमाना ऽसौ रसना ऽभिमतैरिष्टैरमृतैरिव त्वदीयैराख्यानां नाम्नां शतैर्निर्वातु शान्ता भवतु । वसन्ततिलकावृत्तम् ॥ १७ ॥

अगतिकदेहिदेहिवचनश्रुतिदुःखदशा-
कुपितमितपचस्तवनदुष्कृतनिष्कृतयः ।
भवदभिधासुधा भवदवानलतापमुषो
जननि पुनः पुनः परिपुनन्ति जगन्ति रमे ॥ १८ ॥

अगतिकेति । हे जननि! रमे! अगतिकानां देहिनां 'देहि' इति वचनस्य श्रुतिस्तया दुःखदशया कुपितस्य मितम्पचस्य, मितनखे चेति खशि अरुर्द्विषदिति मुम् । किम्पचानमितम्पचा इत्यमरः । स्तवनरूपं यद् दुष्कृतं पापं तस्य निष्कृतयः प्रायश्चि-त्तरूपाः भवः संसार एव दवानलः तस्य तापं मुष्णन्ति ता भवत्याः अभिधाः नामरूपाः सुधाः कर्त्र्यः, पुनः पुनः शश्व-ज्जगन्ति पुनन्ति । नर्कुटकं वृत्तम् ॥ १८ ॥

श्रुतिफणितिस्थितिस्मृतिपुराणततिश्रवणे
भगवति मादृशां जगति न प्रतिभाति गतिः ।

---

१८ हे मातः ! रमे ! अगतिकानाम् ( उपायान्तरविधुराणाम् ) देहिनां यद्देहीति वचनं तच्छ्रवणदुःखस्य या ऽवस्था तया क्रुद्धानां मित-म्पचानां ( कृपणानां ) स्तोत्ररूपस्य दुरितस्य प्रायश्चित्तस्वरूपाः, सं-सारदावाग्निसन्तापनाशिका,स्त्वन्नामरूपाः सुधाः लोकान् भूयो भूयः पवित्रयन्तीत्याह ।

१९ हे भगवति ! वेदवचनाऽनुसरणे स्मृतिपुराणश्रवणे वा मादृशानां शोभनगतिप्राप्तिर्न सम्भाव्यते, तथापि कलियुगे जडबु-

तदपि तव त्वदीयदयितस्य च नामजपो
जयति कलौ युगे जडधियामपि कामदुघा ॥ १९ ॥

श्रुतीति। हे भगवति! श्रुतिफणितौ वेदोक्तौ स्थितिः स्थैर्यं, तथा स्मृतीनां मन्वादीनां पुराणानां च ततेः पङ्क्तेः श्रवणे मादृशामज्ञानां जगति गतिर्न प्रतिभाति, तदपि तथाऽपि तव लक्ष्म्याः तव दयितस्य हरेश्च नामजपः कलौ युगे जडधियामज्ञानामपि कामदुघा इष्टदा अस्ति। तदुक्तं भागवते द्वादशे तृतीयाऽध्याये 'कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः। द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात्' इति। अवितथं वृत्तम् ॥१९॥

मनसिजतातपादमनसः परितुष्टिकरं
जननि समानमेव ननु साम च नाम च ते।
अतिशयमादिमादपरमेव तथाप्ययते
निधनमुपद्रवं च न कदाऽपि यतः सहते ॥ २० ॥

मनसिजेति। हे जननि! ननु वितर्के साम चेत्यपरं तव नाम मनसिजस्य मदनस्य तातपादस्य हरेर्मनसः परितुष्टिकरं समानमेव तथाऽप्यादिमात्साम्नः अपरं नामैवाऽतिशयमाधिक्यमयते प्राप्नोति, यतः अन्तिमं उपद्रवं पीडां निधनं मर-

—१—

ख्योनामपि त्वत्प्रियहरिनामजपो ऽभीप्सितप्रदो भवतीत्याह।

२० हे जननि! कामपितृहरिचेतसः सन्तोषकरं साम (सामगानं) तव नाम चेत्युभयं तुल्यमेव, परं तत्राऽऽदिमात्साम्नोऽपरं त्वद्वचनमेव साऽतिशयं, यत एतत् भक्तानां निधनं (मरणम्) उपद्रवं पीडां न सहते, साम तु निधनम् (निधनाख्यां भक्तिं, सामगाने सप्तविधभक्त्यन्तर्गताम्) उपद्रवं च (तदाख्यां भक्तिं च) सहते इति मरणोपद्रवाऽसहिष्णोस्त्वन्नाम्नः तत्सहिष्णोः साम्नोऽप्यतिशयितं माधुर्यमित्याह।

णं च कदापि न सहते, आदिमं साम तु सप्तविधभक्तिमध्ये यदुपेति तदुपद्रवः यन्नीति तन्निधनमिति द्वे भक्ती भजति। इयं सप्तविधा ऽपि भक्तिः छान्दोग्ये द्वितीये। नामेदमपि न सहते इत्युपमानोपमेययोर्विशेषकथनाद्व्यतिरेकालङ्कारः। कोकिलकं वृत्तम् ॥ २० ॥

पापाऽऽटोपनिदाघवर्जनकृते पर्जन्यगर्जायते
व्याधिव्यालकुले पतत्पतिगरुद्वातूलनादायते।
दारिद्र्यद्विरदेन्द्रवारणविधौ सिंहाऽट्टहासायते
पद्मे तावकनाम संसृतिनिशि प्रत्यूषकालायते ॥ २१ ॥

पापेति। हे पद्मे! तावकनाम त्वदभिधा पापाऽऽटोपः किल्बिषसङ्घ एव निदाघो ग्रीष्मस्तस्य वर्जनकृते नाशार्थं पर्जन्यस्य गर्जः शब्दः स इवाऽऽचरति। सुबन्तात्कर्तुः क्यङ् सलोपश्चेति क्यङि लटि ङित्त्वादात्मनेपदे अकृत्सार्वधातुकयोरिति दीर्घः। एवमग्रे ऽपि। व्याधिरूपे व्यालकुले सर्पवंशे पतत्पतेर्गरुडस्य गरुतोः पक्षयोः यो वातूलः। वातूलः पुंसि वात्यायामित्यमरः। तस्य नाद इवाऽऽचरति, दारिद्र्यरूपस्य द्विरदेन्द्रस्य वारणविधौ नाशकर्मणि सिंहस्याऽट्टहास इवाऽऽचरति, संसृतौ संसाररूपायां निशि। प्रत्यूषो ऽहर्मुखं कल्यम् इत्यमरः। तत्कालः स इवाऽऽचरति, अत्रैकस्य नाम्नः सर्वदोषनिबर्हणोल्लेखेन श्लोकस्य नाम्नः स एवाऽलङ्कारो जातः। शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

---

२१ हे पद्मे! त्वदीयं नाम दुरितनिचयरूपग्रीष्मनाशे घनगर्जितमिवाऽऽचरति, आमयरूपसर्पसङ्घे गरुडपक्षवात्याशब्द इवाचरति, दारिद्र्यरूपगजेन्द्रनिवारणविधौ सिंहाऽट्टहास इवाचरति, संसाररूपरजन्यां च प्रभातसमयवदाचरतीति त्वन्नाम दुरिताऽऽमयदारिद्र्यसंसारविनाशकमित्याह।

राजीवायतनेति दैत्यजिदुरोरक्षेति लक्ष्मीरिति
क्षीराब्धेर्दुहितेति कैटभरिपोर्दारा इति श्रीरिति ।
श्रेयःसाधनदेवतेति जगतां मातेति सीतेति च
प्रातर्मातरुपास्महे कृतशुभस्थेमानि नामानि ते ॥२२॥

राजीवेति । हे मातः ! राजीवाऽऽयतना इति, दैत्यजितो विष्णोः उरोरक्षा इति, क्षीराऽब्धेर्दुहिता इति, कैटभरिपोर्दाराः कुटुम्बिनीति, श्रेयसः कल्याणस्य साधनदेवतेति, जगतां माता प्रसूरिति च कृतः शुभस्य स्थेमा स्थैर्यं यैस्तानि । स्थिरशब्दात्पृथ्वादित्वादिमनिचि प्रियस्थिरेत्यादिना स्थादेशः । ते नामान्युपास्महे । वयमिति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

अब्जत्पञ्चपवर्णमर्णवसुते त्वन्नामकर्णाऽमृतं
मत्पापानि महत्तराण्यपि मुहुर्मुष्णाति कृष्णाऽङ्गने ।
अक्षीणि प्रतिरुन्धदन्धतमसं गेहेषु भूयिष्ठम-
प्यङ्गुष्ठप्रमितैव दीपकलिका हा हन्त नो हन्ति किम्॥५३

अब्जदिति । हे ऽर्णवसुते ! हे कृष्णाङ्गने ! पञ्च वा पञ्चा पञ्चपाः । सङ्ख्ययाऽव्ययाऽऽसन्नेत्यादिना बहुव्रीहौ बहुव्रीहौ

---

२२ हे मातः ! वयं प्रत्यूषसमये विरचितशुभस्थैर्याणि 'राजीवायतने'त्यादीनि ते नामानि भजामहे इत्याह ।

२३ हे समुद्रसुते ! कृष्णपत्नि ! विराजत्पञ्चपाऽक्षरं तावकनामरूपं कर्णाऽमृतम् अतिमहान्त्यपि मद्दुरितानि मुहुर्विलोपयतीति लोकनेत्रप्रतिरोधकमतिबहुलमपि गाढान्धकारम् अङ्गुष्ठमात्रपरिमिता दीपकलिका न विनाशयति किमित्युक्त्या समर्थयन्नाह ।

सञ्ज्ञेयपइति डचि टिलोपः । अश्नन्तः पञ्चषाः वर्णाः यस्मिन् तव । अनेकमन्यपदार्थे इत्युक्तत्वात्रिपदो बहुव्रीहिः । कर्णयोरमृतं त्वन्नाम महत्तराण्यपि पापानि मुष्णाति । तत्र दृष्टान्तः—गेहेषु अंक्षीणि प्रतिरुन्धत् भूयिष्ठं प्रभूतमपि अन्धयति दृष्ट्युपघातं करोतीत्यन्धम् । पचाद्यच् । तच्च तत्तमश्चाऽन्धतमसम् । अवसमन्धेभ्यस्तमस इत्यच् । अङ्गुष्ठप्रमितैव दीपकलिका हा हर्षे किं नो हन्ति ? अपि तु हन्तीति । प्रतिवस्तूपमालङ्कारः । शार्दूलविक्रीडितम् ॥ २३ ॥

अवितुमुदधिकन्यके ऽचिकित्स्याद्
मरणजरादिमयान्महाऽऽमयान्माम् ।
परमविषममान्तरं कषायं
पचति शुचिर्भवदीयनामवर्गः ॥ २४ ॥

अवितुमिति । हे उदधिकन्ये ! तव नामवर्गः शुचिः पवित्रो ऽग्निश्च चिकित्सितुमयोग्यान्मरणजरादिमयान्महत आमयाद्रोगान्माम् अवितुं परमविषमम् आन्तरं कषायम् आशयं क्वाथं च पचति । श्लेषरूपकालङ्कारौ । पुष्पिताग्रा ॥ २४ ॥

---

२४ हे उदधिकन्ये ! शुचिः ( पवित्रः, अग्निरूपश्च ) त्वन्नामसमूहः अप्रतिकार्यात मरणजरादिरूपान्महारोगान्मां रक्षितुम् अतिविषमम् आन्तरं कषायम् ( रागं, क्वाथं च ) पचतीति त्वन्नामसङ्गो मन्मनसि विषयरागादिकं विलुम्पन् जरामरणप्रतिकारकारणं भवतीत्याह ।

कृतशुभतति धारितं कृतार्थै-
र्भगवति भोग्यमतीव पावनं च ।
अभिदधति सुवर्णमात्मवन्तः
प्रशमितदुर्गति नाम तावकीनम् ॥ २५ ॥

कृतेति । हे भगवति ! तावकीनं नाम सुवर्णं कनकम् इति आत्मवन्तो ज्ञानिनः अभिदधति वदन्ति । तत्साम्यमुपपादयति-कृतार्थैः कृतकृत्यैरन्यत्र कृतः सम्पादितो ऽर्थो द्रव्यं यैस्तैश्च धारितं भोग्यं भोगाऽर्हं समानं कृता शुभानां ततिर्येनेति समानं प्रशमिता दुर्गतिर्नरकादिर्दारिद्र्यं च येन तत् नाम स्वत एवाऽतीव पावनं तद्ग्रहणेनाऽन्यपावनीकरणात् स्वर्णं तु सर्वमप्यपवित्रम् अग्निः पावनं करोति । इदं 'त्वग्नेरपत्यं प्रथमं सुवर्ण'मिति श्रुतेः । अपि च प्रसिद्धमस्य पावनत्वं पूजाभाण्डप्रायश्चित्तादावपि । 'स्वर्णं शीतं पवित्र'मिति विद्यासागरे । नाम सुष्ठु वर्णा अक्षराण्यस्मिन् तत्सुवर्णं पक्षे नाम प्रसिद्धम् । औपच्छन्दसिकं वृत्तम् ॥ २५ ॥

हरिसखि तव धूतक्लेशभूमानि नामा-
न्यहरहरहमुद्यद्भक्तिराकर्ण्य धन्यः ।

---

२५ हे भगवति ! ज्ञानिनः कृतसुकृतैर्धारितं कृतार्थैः ( सम्पादितपुरुषार्थैः, कृतद्रव्याऽर्जनैश्च ) भोग्यम् अतिपवित्रं विनाशितदुर्गति, (नाशितनरकं, क्षतदारिद्र्यं च ) तावकं नाम सुवर्णं ( शोभनाक्षरघटितं, कनकरूपं च ) वदन्तीति श्लेषेण नाम्नः कनकरूपतां प्रतिपादयति ।

२६ हे हरिसखि ! निर्धूतकष्टपरम्पराणि ते नामानि आकर्ण्य

जहि दलय बधान च्छिन्धि भिन्धीति घोरं

यमभटरटितं तद्भूरि दूरीक्रियासम् ॥ २६ ॥

हरीति । हे हरिसखि ! तव भूतः क्लेशानां भूमा बहुलं यैस्तानि नामानि अहम् अहरहः प्रतिदिनम् उन्नती भक्तिर्यस्य सः । स्त्रियाः पुंवदिति पुंवद्भावः । आकर्ण्य धन्यः सन् जहि त्यज(?) दलय पेषय बधान बन्धय छिन्धि छेदय भिन्धि विदारयेति भूरि घोरं च तद्यमभटानां रटितं शब्दितं दूरीक्रियासम् । कृधातोराशीर्लिङि च्व्यन्तं दूरीति । मालिनीवृत्तम् ॥ २६ ॥

स्वपदन्यसनेन चारुवर्णा

सुरवागोष्ठविशुद्धिहेतुभूता ।

कमले मम काङ्क्षितानि दुग्धे

स्तवनाऽर्हा तव नामकामधेनुः ॥ २७ ॥

स्वेति । हे कमले ! स्तवनस्याऽर्हा तव नामरूपा कामधेनुः मम काङ्क्षितानीष्टानि दुग्धे पूरयति । नाम स्वस्य पदस्य सुबन्तस्य न्यसनेन ईषदुच्चारादपि सुराणां वाच ओष्ठस्य च विशु-

---

आविर्भूतभक्तिरहं धन्यः सन् 'जहि दलये'त्यादि भयङ्करं भूरि तद् यमदूतवचनं दूरीकुर्यामित्याह ।

२७ हे कमले ! चारुवर्णा, ( सुन्दराऽक्षरा, सुन्दरकृष्णादिरूपा च, ) स्वपदन्यसनेन ( स्ववाचकश्रीरित्यादिसुबन्तप्रयोगेण, पादविन्यासेन च ) सुरवागोष्ठविशुद्धिहेतुभूता ( संस्कृतवागोष्ठयोर्विशुद्धिकारणभूता, शोभनरवा गोस्थानशुद्धिकारणभूता च ) स्तुतियोग्या तव नामरूपा कामधेनुर्ममाऽभीप्सितानि प्रपूरयतीत्याह ।

द्धेर्हेतुभूतं, धेनुः स्वस्य पदानां चरणानां न्यसनेन स्थापनेन गोष्ठस्य विशुद्धेर्हेतुभूता सती सुष्ठु रवः शब्दो यस्याः सा, नाम चारवः वर्णाः अक्षराणि पक्षे कृष्णाऽऽदयो यस्मिन्यस्याश्चेति । औपच्छन्दसिकम् ॥ २७ ॥

तव दिव्यनाम्नि मधुरे निराकृत-
व्यसने स्थिते ऽपि रसनेन्द्रियं मम ।
रमते रमे कथमहो रसान्तरे-
ष्वथ वा तदस्य घटते जलात्मनः ॥ २८ ॥

तवेति । हे रमे ! निराकृतं व्यसनं येनैवं मधुरे दिव्यधाम्नि स्थिते सति मम रसनेन्द्रियं रसान्तरेष्वन्यविषयेषु कथं रमते ? अथ वा रसनेन्द्रियस्य वरुणदेवतात्वाज्जलात्मनो जडाऽऽत्मनश्च घटते इति स्वोक्तविचारणादाक्षेपालङ्कारः । मञ्जुभाषिणीवृत्तम् ॥ २८ ॥

त्वन्नामदिव्यकुसुमानि दृढैर्गुणैस्ते
संग्रथ्य सौरभविशेषपरिष्कृतानि ।

---

२८ हे रमे ! मधुरे दूरीकृतदुःखे तव दिव्यनाम्नि जागरूके ऽपि मम रसनेन्द्रियमितरेषु रसेषु कथं रमते ? अथ वा जलात्मनः ( जलीयस्य, लडयोरभेदाज्जडस्य च ) अस्य ( रसनेन्द्रियस्य ) तद् रसान्तरे रमणं घटते· इति त्वन्नाम्नि मधुरे जागरूके रसान्तरे रमणं जडतां सूचयतीत्याह ।

२९ हे मातः ! इयं मामकीना वाक् ते दृढैर्गुणैः ( दयादिभिः, सूत्रैश्च ) सौरभेण ( सौन्दर्येण, सौगन्ध्येन च ) अधिकाऽलङ्कृतानि

आमुञ्चतादिह मदीयसरस्वतीयं

मातर्महापुरुषमानसरञ्जनाय ॥ २९ ॥

त्वदिति । हे मातः! सौरभस्य सुगन्धस्य विशेषेण परिष्कृतानि भूषितानि तव नामरूपाणि दिव्यकुसुमानि दृढैर्गुणैरौदार्यादिभिस्तन्तुभिश्च संग्रथ्येयं मदीया सरस्वती महापुरुषस्य विष्णोर्मानसस्य रञ्जनायेहाऽऽमुञ्चताद्बध्यादर्थाद्भगवत एवेति रूपकालङ्कारः । वसन्ततिलकावृत्तम् ॥ २९ ॥

मन्वन्तराण्यम्ब फलं तनीय-

स्तन्वन्ति मन्वन्तरमात्रवर्ति ।

आमुष्मिकं शाश्वतमैहिकं वा

त्वन्नाम किं नाम फलं न दत्ते ॥ ३० ॥

मन्त्विति । हे रमे ! अन्ये मनवो मन्वन्तराणि मन्वन्तरं स्वायंभुवादि तदेकवर्ति तनीयो ऽल्पं फलं तन्वन्ति नाम निश्चयेन । त्वन्नाम ऐहिकम् इहलोकभवम् आमुष्मिकं पारलौकिकं वा शाश्वतं मोक्षरूपं किं फलं न दत्ते ? सर्वमपि ददातीति भावः । स्वागतावृत्तम् ॥ ३० ॥

---

तावकनामरूपाणि कल्पतरुपुष्पाणि संगुम्फ्य नारायणमनोरञ्जनाय आमुञ्चतात् ( बध्नातु ) इत्याशास्ते ।

३० हे अम्ब ! मन्वन्तराणि ( त्वन्नामाऽन्यमन्त्राः ) मन्वन्तरमात्रवर्ति ( प्रचलितवैवस्वतादिमन्वन्तरमात्रस्थायि ) अल्पीयः फलं जनयन्ति, त्वन्नाम तु किं वा सदातनम् ऐहिकामुष्मिकफलं न दत्ते? त्वन्नाम सर्वमन्त्रातिशायिफलदमित्याह ।

वर्णत्रयाऽऽत्मा प्रणवः स्वनिष्ठां
वर्णत्रयीमेव पुनाति युक्तम् ।
एकद्विवर्णा ऽपि रमे तवाऽऽख्या
चित्रं पुनीते चतुरो ऽपि वर्णान् ॥ ३१ ॥

वर्णेति । हे रमे ! वर्णानाम अकारोकारमकाराणां त्रयम् आत्मा स्वरूपं यस्य सः प्रणव ॐकारः स्वनिष्ठां वर्णानां ब्रह्मक्षत्रविशां त्रयीमेव पुनाति इति युक्तं, साम्येनेति भावः । तवाऽऽख्या नाम एकवर्णा द्विवर्णा रमेति इयमपि तवाऽऽख्या चतुरः शूद्रसहितपूर्वोक्तत्रिवर्णान्पुनीते इति चित्रम् । उपजातिवृत्तम् ॥ ३१ ॥

व्याजादुपात्तमपि वारिधिराजकन्ये
त्वन्नाम कामपि ददाति मुदां समृद्धिम् ।

---

३१ वर्णत्रयात्मा (अकारोकारमकाररूपवर्णत्रयघटितः, ब्रह्मक्षत्रियवैश्यात्मकश्च ) प्रणवः ( ॐकारः ) स्वनिष्ठां ( स्वघटकां, निजभक्तां च ) वर्णत्रयीम् ( अक्षरत्रयीं, ब्राह्मणादिवर्णत्रयीं च ) पुनातीति वर्णत्रयघटितस्य वर्णत्रयपावनमुचितमेव, परम् एकद्विवर्णा ( एकद्व्यक्षरघटिता, एकद्विब्राह्मणादिवर्णघटिता च ) तवाऽऽख्या चतुरो ऽपि वर्णान् ( ब्रह्मक्षत्रियविट्शूद्रान्, अक्षरचतुष्टयं च ) पुनीते इत्याश्चर्यमिति श्लेषेण वदन् अल्पाक्षरमपि त्वन्नाम ब्रह्मणादिवर्णचतुष्टयपावित्र्याऽऽपादकमित्याह ।

३२ हे समुद्रदुहितः ! अन्याऽपदेशेनोच्चरितमपि ते नामाऽनिर्वचनीयां सन्तोषसम्पत्तिं ददातीति खरतरग्रीष्माऽऽतपसन्तापप्रश-

आपीतमुल्बणतपाऽऽतपतापशान्त्यै
दूरीकरोति दुरितान्यपि वारि गाङ्गम् ॥ ३२ ॥

व्याजादिति। हे वारिधिराजकन्ये! उल्बणस्य तपस्य ग्रीष्मस्याऽऽतपस्योष्णस्य तापस्य शान्त्यै आपीतं प्राशितं गाङ्गं वारि दुरितानि पापानि यथा दूरीकरोति तथा व्याजादन्यसम्बन्धेनोपात्तं गृहीतं त्वन्नाम कामप्यनिर्वचनीयां मुदां हर्षाणां समृद्धिं ददाति। दृष्टान्तालङ्कारः। सिंहोन्नतावृत्तम् ॥ ३२ ॥

यो वक्ति देवि पदमेकमपि त्वदीयं
सर्वाणि तस्य हृदि भान्ति सदा पदानि।
नित्योन्नतो नृपतिरेव वशीकृतश्चेत्
किंकुर्वते पुरजना इति कः प्रयत्नः ॥ ३३ ॥

य इति। हे देवि! त्वदीयं त्वत्सम्बन्धि एकमपि पदं

---

माय निपीतं गङ्गोदकं दुरितान्यपि विनाशयतीत्युक्त्वा समर्थयन् यदृच्छयोच्चारितमपि त्वन्नाम महासन्तोषदं भवति, किं पुनर्भक्त्येति नाममाहात्म्यमाह।

३३ हे देवि! यः पुमान् एकमपि त्वदीयं पदं (त्वन्नाम) वदति तस्य हृदये सर्वाणि पदानि (सुप्तिङन्तानि) भासन्ते इति सर्वदा उन्नतो राजा वशीकृतश्चेत् तस्मिन्नाज्ञाकरे पौरजनाः किंकुर्वते (किङ्करतां प्राप्नुवते, आज्ञाकारिणो भवन्ति) इत्यत्र कः प्रयत्नः? इत्युक्त्वा समर्थयन् यथा राज्ञि आज्ञा पालके सति सर्वे पौरा आज्ञापालका भवन्ति तथा सकलपदमूर्धन्ये त्वन्नामपदे जप्ते सति सर्वाणि पदानि हृदि प्रतिभासमानानि सन्ति नामजापकं महाकविं कुर्वन्तीति त्वन्नामजापकों महाकविर्भवतीत्याह।

नाम यः वक्ति उच्चारयति तस्य हृदि सर्वाणि वैकुण्ठादीनि पदानि स्थानानि भान्ति। दृष्टान्तः–निगम् उन्नतः श्रेष्ठः नृपतिरेव वशीकृतः स्वाधीनीकृतश्चेत् पुरजनाः पौराः किं कुर्वते, किंशब्दे काकुः। तद्वशीकृतौ कः प्रयत्नः? इत्यर्थः। दृष्टान्तालङ्कारः। उद्धर्षिणीवृत्तम् ॥ ३३ ॥

क्षमानिधे यम्यधिपाऽभिधेयं
वाचो विधेयं तव नामधेयम्।
पद्मालये यस्य गुणोदधे ऽयं
पचेलिमं विन्दति भागधेयम् ॥ ३४ ॥

क्षमेति। हे गुणोदधे! हे क्षमानिधे! हे पद्माऽऽलये! यमिनां योगिनामधिपैरपि अभिधातुं योग्यं तव नामधेयं यस्य पुंसः वाचः विधातुं योग्यं ग्राह्यमिति भावः। अयं पक्तुं योग्यं पचेलिमम्। पचेः केलिमर्। भागधेयं विन्दति। उपजातिवृत्तम् ॥ ३४ ॥

स्वनाथनाम्नः स्वयमुत्तरं सत्
तवाऽभिधानं गुणमादधाति।

---

३४ हे गुणोदधे! क्षमानिधे! पद्मगृहे! योगीन्द्रजप्यं तव नाम यस्य पुंसो वागनुसारि (जप्यं) भवति अयं परिपक्वं भाग्यं लभते इति स्वनामजापको महाभाग्यो भवतीत्याह।

३५ हे पुण्डरीकाक्षप्रियतमे! तव नाम भगवन्नाम्नो ऽप्युत्तरं (श्रेष्ठं, परभागाऽवस्थितं च) सत् गुणं (शुभादिगुणम्, अदेङ् गुण इति पारिभाषिकं गुणं च) आदधातीत्यत्र प्रमाणम् ॐकारमनिन्दितं प्रमाणमिति अकारोकारमकारघटिते ओंकारे विष्णुवा-

पद्मेक्षणप्रेयसि निर्विगानं
प्रमाणमत्र प्रणवं प्रतीमः ॥ ३५ ॥

स्वेति । हे पद्मेक्षणप्रेयसि ! तवाऽभिधानं स्वयं स्वनाथस्य नाम्नः उत्तरं सत् गुणं आदधाति सगुणं करोति । अत्र प्रमाणम् । निर्विवादं प्रमाणं प्रणवं प्रतीमः । अयं भावः—अकारो विष्णुरुकारो रमा, अत्रोकारपरत्वेनाद्गुण इति गुणे कृते ओकारसिद्धिरिदं गुणाधानमेव उकारस्य रमावाचकत्वे प्रमाणं यमकस्तबके उक्तम् । काव्यलिङ्गमलङ्कारः । उपजातिर्वृत्तम् ॥ ३५ ॥

पद्मे नाम्नां पामरास्तावकानां
प्रौढिं विद्युर्नैव नामान्तरेभ्यः ।
चक्रीवन्तश्चारुकर्पूरचूर्णे
भस्मभ्यः किं विस्मयं प्राप्नुवन्ति ॥ ३६ ॥

पद्मे इति । हे पद्मे ! पामरा नीचाः नामान्तरेभ्यो ऽन्यनामसकाशात्तावकानां नाम्नां प्रौढिमैश्वर्यं नैव विद्युर्न जानीयुः । दृष्टान्तः—चक्रीवन्तो गर्दभाः भस्मभ्यः धूलिभ्यः चारुणि सुन्दरे कर्पूरस्य चूर्णे विस्मयं प्राप्नुवन्ति किम् ? दृष्टान्तालङ्कारः । शालिनीवृत्तम् ॥ ३५ ॥

---

अकारादकारात् परभागे स्थितो लक्ष्मीवाचक उकारः अकारोकारयोः स्थाने आद् गुण इति सूत्रानुसारेण ओकाररूपं गुणं प्रयोजतीति बाधनपूर्वकं हरिनामतो ऽपि श्रेष्ठं त्वन्नाम जन्तुः कल्याणादिगुणोत्पादकं भवतीत्याह ।

३६ हे पद्मे ! प्राकृता जना इतरनामभ्यस्त्वन्नाम्नां माहात्म्यं नैव जानीयुरिति रासभा भस्मभ्यः सुन्दरे कर्पूरचूर्णे विशेषमानन्दं प्राप्नुवन्ति किमित्युक्त्या समर्थयन्नाह ।

जहदिह जननि त्वन्नामधेयं विधेयं
जडमतिरतिरिक्तं शर्मणे कर्म कुर्यात् ।
निधिमनवधिमुच्चैर्निष्कुटस्थं विहाय
प्रतिभवनमशङ्कः पर्यटेद्भिक्षितुं कः ॥ ३७ ॥

जहदिति । हे जननि ! विधेयं ग्राह्यं त्वन्नामधेयं जहत् त्यजन् यः शर्मणे कल्याणायाऽतिरिक्तमधिकं कर्म कुर्यात् स जडमतिरेव, 'सर्वं वाक्यं सावधारण'मिति न्यायात् । नास्त्यवधिरन्तो यस्य तम् उच्चैर्महान्तं निधिं निष्कुटे गृहे तिष्ठति तम् । निष्कुटस्तु गृहे घाते स्यात्केदारकवाटयोरिति मेदिनी । विहाय त्यक्त्वा भवने भवने इति प्रतिभवनं, प्रतिगृहं इत्यर्थः । वीप्सायामव्ययीभावः । अशङ्कः सन् भिक्षितुं भिक्षार्थं कः पर्यटेत् ? गच्छेत् । दृष्टान्तालङ्कारः । मालिनीवृत्तम् ॥ ३७ ॥

दयोदधे या तवनामधेया-
ऽभिधा सुधेयं यदि तां धयेयम् ।

---

३७ हे जननि ! इह जडबुद्धिरुपादेयं त्वन्नाम त्यजन् सन् सुखार्थमन्यत् कर्म कुर्यात् (न सुबुद्धिः) इति गृहाऽऽरामास्थितं निःसीमं महानिधिं विहाय निःशङ्कः सन् को वा प्रतिगृहं भिक्षार्थमटेत्? इत्यनेन समर्थयन्नाह ।

३८ हे दयोदधे ! कमले ! अहं यदि तव नामधेयनामिका या सुधा तां धयेयं(पिबेयं) चेत् तर्हि अजपेयं (अजैश्छागैः पालनीयं, छागनिष्पाद्यं) वाजोऽन्नमलं पेयं यस्मिंस्तथाविधं वाजपेयनामकं यागं वा महतो

न वाजपेयं कमले ऽजपेयं
न वा जपेयं महतो पि मन्त्रान् ॥ ३८ ॥

दयेति । हे दयोदधे ! हे कृपासागरे ! (?)या प्रसिद्धा इयं तव नामधेयं नाम इति अभिधा आख्या यस्यास्तां सुधां यदि धयेयं पिबेयम् । धेट् पाने इत्यस्माल्लिङ् । तर्हि वाजपेयं तन्नामकं यज्ञं न जपेयं न चिन्तयेयं, नवा महतो ऽपि मन्त्रान्मनून् जपेयं मनसा न ध्यायेयम् । जप मानसे अस्माल्लिङ् । हे कमले ! इति सम्बुद्धिः । उपेन्द्रवज्रावृत्तम् ॥ ३८ ॥

मरणशरणमन्त्रं शार्ङ्गिणः प्राणकान्ते
परमपुरुषनाम्नः प्रागुपादीयमानम् ।
विशदमहिम नाम क्षिप्रमेकाक्षरं ते
वितरति जपतामप्येकमेवाऽक्षरं तत् ॥ ३९ ॥

शरणेति । हे शार्ङ्गिणः प्राणकान्ते ? विशदः महिमा यस्य तत् एकाक्षरं नाम उ इति तन्नाम कीदृक् यत्परमपुरुषनाम्नः वासुदेवनाम्नः अ इत्याकारकात् प्राक्पूर्वमुपादीयमानं प्र-

---

मन्त्रान्वा न जपेयम् ( मनसा ऽपि न चिन्तयेयम् ) इत्याह ।

३९ हे शार्ङ्गिप्राणप्रिये ! पुरुषोत्तमनाम्नः ( अकारात् ) प्रागुपादीयमानं मरणरक्षणमन्त्रस्वरूपं स्पष्टमाहात्म्यम् एकाक्षरम् ( उकारात्मकं ) ते नाम जपताम् एकमेवाऽक्षरम् ( अकारपूर्वभागस्थितस्य उकारस्य इको यणचीति शास्त्रेण जायमानेन यणा निष्पन्नं वकारम्, अमृतं, मोक्षं ) वितरतीति उकाररूपं त्वन्नाम भगवन्नामरूपाऽकारात् पूर्वमुपादीयमानं यणादेशेन वमिति रूपमापन्नं सत्तदेव वम् अमृतं मोक्षं जपतां ददातीत्युकाररूपमेकाक्षरं त्वन्नाम जपताम् ओमित्येकाक्षरब्रह्मज्ञानपूर्वकं मोक्षं ददातीत्याह ।

युज्यमानं मरणस्य शरणं रक्षकम् अमृतं तन्मन्त्रं व इत्याकारकम्, आहुरिति शेषः । अत्र उ अ इति स्थिते इको यणचीति यणा-देशे व इति सपन्नत्वात् वमित्यस्य बीजस्य अमृतमन्त्रत्वमा-गमसिद्धं तन्नाम जपतां पुंसामपि एकमेवाऽक्षरं ब्रह्मभावं वित-रति ददाति । शरणवरणमिति पाठे शरणस्य वरणं यस्मादि-ति व्युत्पत्तिर्ज्ञेया । वस्तुतस्त्वयं लेखकप्रमाद एवेति । काव्य-लिङ्गमलङ्कारः । मालिनीवृत्तम् ॥ ३९ ॥

कण्ठे कुण्ठितनिस्वने कफचयैरक्षेषु विक्षेपिषु
सुप्ते चेतसि यातनाभिरसुषु क्षिप्रं प्रतिष्ठास्नुषु ।
साऽऽयासा ऽपि समुद्रपुत्रि समयाऽभिज्ञा रसज्ञा मम
त्वन्नामोपहितं हितं जपतु तद्देवस्य नाम स्वयम्॥४०॥

कण्ठेति । हे समुद्रपुत्रि ! कण्ठे कफचयैः श्लेष्मसमूहैः कु-ण्ठितः स्तब्धः निःस्वनः शब्दो यस्य तस्मिन्सति, अक्षेष्विन्द्रि-येषु विक्षेपिषु विक्षेपं प्राप्नुवत्सु, यातनाभिः पीडाभिश्चेतसि सुप्ते मूढे, क्षिप्रम् असुषु प्राणेषु प्रतिष्ठास्नुषु गन्तुमिच्छत्सु सत्सु, इति सर्वत्र । आयासेन प्राणोत्क्रमणाऽऽयासेन सहिता ऽपि म-म रसज्ञा जिह्वा समयाऽभिज्ञा कालज्ञा सती तत्र नाम्ना उ-पहितं युक्तं तथा हितं हितकारकं स चाऽसौ देवो वैकुण्ठपतिश्च

---

४० हे समुद्रपुत्रि ! कण्ठे कफौघैः प्रतिबद्धशब्दे सति, इन्द्रिये-षु विकलेषु, चित्ते प्रमीलति, तीव्रवेदनाभिः प्राणेषु यियासुषु सत्सु सश्रमापि मदीया जिह्वा ऽवसरज्ञा सती त्वन्नामधेयसहितं भगव-तो नारायणस्य नाम लक्ष्मीनारायणेति श्रीहरिरिति वा आत्मना जपतु इति प्राणप्रयाणसमये मज्जिह्वा त्वन्नामसहितं भगवतो नामाऽऽमुष्मिकगतिप्रदं जपत्वित्याह ।

तस्य श्रीलक्ष्मीनारायणेत्यादिरूपं जपतु । शार्दूलविक्रीडितं वृत्तम् ॥ ४० ॥

अभ्यासैः पवमानमन्त्रविततेरब्लिङ्गभङ्ग्यन्तरै-
रादेशैरघमर्षणस्य यमकैरष्टाक्षरस्येन्दिरे ।
गायत्र्याः पुनरुक्तिभिः परिपणैरोङ्कारपुंसूक्तयोः
शुद्धिं व्याहृतिसोदरैर्न भजते को नाम ते नामभिः ॥ ४१ ॥

अभ्यासैरिति। हे इन्दिरे ! पवमानमन्त्राः। 'स्वादिष्ठये'-त्याद्यध्यायचतुष्टयगतसकलऋग्रूपा मन्त्रास्तेषां विततेः पङ्क्तेः अभ्यासैः पुनरुच्चारभूतैः, एवमब्लिङ्गानाम् 'आपोहिष्ठामयोभुव' इत्यादीनां मन्त्राणां भङ्ग्यन्तरैः रीत्यन्तरभूतैः, अघमर्षणस्य 'ऋतं च सत्यं च'त्यादेः आदेशस्थानैस्तत्कार्यसम्पादकैः अष्टाऽक्षरस्य 'ओं नमो नारायणाये'ति मन्त्रस्य यमकैर्द्वितयैः, गायत्र्याः पुनरुक्तिभिः पुनरुच्चारणभूतैः, ॐकारपुंसूक्तयोः प्रणवपुरुषसूक्तयोः परिपणैर्मूलधनभूतैः, ते नामभिः को नाम शुद्धिं न भजते ? अपि तु सर्वो ऽपि भजते इति निदर्शनोल्लेखाऽलङ्कारौ। शार्दूलवि० वृत्तम् ॥ ४१ ॥

---

४१ हे इन्दिरे ! पवमानमन्त्रसमूहस्याऽऽम्रेडनरूपैः, अब्लिङ्गकमन्त्राणां प्रकारान्तरैः, अघमर्षणमन्त्रप्रतिनिधिभिः, 'ॐनमोनारायणाये'त्यष्टाक्षरस्य मन्त्रस्य सहजैः, गायत्र्याः पुनरुक्तिरूपैः, प्रणवपुरुषसूक्तयोर्मूलधनैः, व्याहृतीनां भूरादीनां सहोदरैस्ते नामधेयैः को वा शुद्धिं न लभते? इति भगवतीनाम्नामतिपाविऽपापादकत्वं प्रतिपादयति ।

प्रायश्चित्तविशुद्ध्यै प्रायश्चित्तं समस्तपापानाम् ।
गायतु तव नामैषा कमले कलिताऽन्यनिरसना रसना ४२॥

इतिश्रीमद्वेङ्कटाऽध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे नाम-
वैभवस्तबकः सप्तदशः ॥ १७ ॥

प्रायश्चित्तेति । हे कमले ! प्रायो बाहुल्येन चित्तस्य वि-शुद्ध्यै समस्तानां पापानां प्रायश्चित्तं निष्कृतिभूतं तव नाम कलितं कृतम् अन्येषामुपायानां निरसनं यया सा रसना गायतु गीतं करोतु । गीतिवृत्तम् ॥ ४२ ॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन
विरचितायां बालबोधिन्याख्यायां श्रीलक्ष्मी-
सहस्रटीकायां नामवैभवस्तबकः
सप्तदशः सम्पूर्णः ॥

---

४२ हे कमले ! एषा मदीया जिह्वा त्यक्तोपायान्तरा सती चित्तस्य विशुद्ध्यै सकलदुरितानां प्रायश्चित्तरूपं ते नाम प्रायो गायत्विति प्रार्थयमानः स्तबकं समापयति ।

इति श्रीमानवल्ल्युपाख्यतैलङ्गरामशास्त्रिविरचितायां लक्ष्मी-
सहस्राऽवतरणानिःश्रेणिकायां नामवैभवस्तबकः ॥ १७ ॥



अथ सप्तवैभवस्तबकः ॥ १८ ॥

शत्रुभ्रात्रे ऽपि कृपया यो लङ्कासप्तवैभवम् ।
विभीषणाय प्रददौ स रामः श्रेयसे ऽस्तु नः ॥ १८ ॥

अथाऽस्मिन्नष्टादशस्तबके लक्ष्म्याः सप्तवैभवं वर्णयितुं प्रथमपद्ये ऽरविन्दवनमिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

अरविन्दवनं वन्दे तदहं यदहर्निशम् ।
प्रीतिपूर्वकमध्यास्ते पीताम्बरकुटुम्बिनी ॥ १ ॥

अरविन्देति । पीताम्बरस्य विष्णोः कुटुम्बिनी दाराः यत्र प्रीतिपूर्वकम् अध्यास्ते उपविशति तदरविन्दानां कमलानां वनम् अहं कविरहर्निशं सदा वन्दे । पथ्यावक्त्रं वृत्तम् ॥ १ ॥

सारसात्मनि तवाऽम्ब मन्दिरे
द्वारपालकजना इवेन्दिरे ।
चारुकेसरसुवर्णयष्टिका-
धारिणः प्रतिवसन्ति षट्पदाः ॥ २ ॥

सारसेति । हे ऽम्ब ! हे इन्दिरे ! सारसं सरसीरुहमित्यमरः । तदात्मनि तद्रूपे तव मन्दिरे गृहे चारुकेसरा एव सुव-

---

१ अथाऽष्टादशेन सप्तवैभवस्तबकेन भगवतीनिवासस्थानं तुष्टूषुः हरिगृहिणी यत्र (कमलवनं)प्रेमपुरस्सरमधिवसति तत् कमलवनं वन्दे इति मङ्गलमाचरति ।

२ हे अम्ब ! कमलात्मके तव गृहे मञ्जुलकिञ्जल्करूपसुवर्णदण्डधारिणो भ्रमरा द्वारपालसमूहा इव निवसन्तीत्याह ।

र्णयष्टिकास्ता धरन्ति तच्छीलाः ते द्वारपालकजना इव षट्पदा भृङ्गाः प्रतिवसन्ति, वासं कुर्वन्तीत्यर्थः । रथोद्धतावृत्तम् ॥ २ ॥

तावकं पदमभिख्यया रमे
वारिजं प्रणिगदन्ति सूरयः ।
प्रौढशोभनखरांशुवैभव-
प्राप्तमञ्जिम सदालिसेवितम् ॥ ३ ॥

तावकमिति । हे रमे ! तावकं त्वत्सम्बन्धि पदं स्थानं चरणं चाऽभिख्यया शोभया नाम्ना च वारिजं कमलमिति सूरयः कवयः प्रणिगदन्ति वदन्ति । तत्र हेतुः—कमलं प्रौढाः शोभनाः खरास्तीक्ष्णाश्चांशवः कराः यस्य स सूर्यः तस्य पदं तु प्रौढा शोभा येषां ते च ते नखरा नखाश्च तेषामंशूनां यद्वैभवं तेन प्राप्तः मञ्जोः सुन्दरस्य भावः मञ्जिमा येन तत् । पृथ्वादिभ्य इतीमनिच् । तथा कमलं सदा अलिभिः साधूनां पङ्क्तिभिश्च सेवितमित्यर्थः । रथोद्धतावृत्तम् ॥ ३ ॥

प्रबिभ्रति भवत्पदप्रणयतद्विपर्यासयो-
र्जना विभवदुर्गती जननि तत्र चोदाहृतिः ।



३ हे रमे ! सूरयः पण्डिताः प्रौढशोभनखरांशुवैभवप्राप्तमञ्जिम (तरुणारम्यसूर्यकिरणसंपलब्धसौन्दर्यं, समधिकशोभानां नखानां किरणसमृद्ध्या प्राप्तसौन्दर्यं च ) सदालिसेवितं (सर्वदा अलिभिः सेवितं, सज्जनमालया सेवितं च ) वारिजं तावकीनं पदं ( स्थानं, चरणं च ) कथयन्तीति श्लेषेणाह ।

४ हे जननि ! जना भवत्याः पदे (वासस्थाने, चरणे च)प्रेमतदभावाभ्यामैश्वर्यदारिद्र्यं बिभ्रति, तत्र भवत्या निवासस्थानभूतकमला-

सहस्रवसुरेधते सरसिजाऽनुकूलो रविः
स भिक्षुकशिरोमणिः श्रयति तत्प्रतीपः क्षयम् ॥ ४ ॥

प्रेति । हे जननि ! जनाः भवत्याः पदे स्थाने यः प्रणयः प्रेमा तद्विपर्ययो द्वेषः तयोः सतोः विभवः दुर्गतिश्चैनं प्राबभ्रतीत्यत्र यथासंख्यलापनेन स एवाऽलङ्कारः । तत्र तस्मिन्नुदाहृतिरुदाहरणं तु सरसिजस्याऽनुकूलः प्रणयी रविः सहस्रं वसु किरणा द्रव्यं च यस्य स एधते, तस्य कमलस्य प्रतीपः भिक्षुकस्य शिवस्य शिरोमणिर्मस्तभूषा दरिद्रश्रेष्ठश्च स चन्द्रः क्षयं श्रयतीति गुणदोषवर्णनेनोल्लासाऽलङ्कारः । काव्यलिङ्गं च । पृथ्वीवृत्तम् ॥ ४ ॥

कपटकिटिदशायां कैटभारिः क्षमाभाक्
प्रभुरकृत यतो ऽसौ पङ्कजाते निवासम् ।
तादहह भजसि भर्तुर्धर्ममेवाऽनुसर्तु
परमपुरुषकान्ते पङ्कजातस्थितिं किम् ॥ ५ ॥

कपटेति । हे परमपुरुषस्य कान्ते ! कपटरूपः यः किटिः । कोलः पोत्री किरिः किटिरित्यमरः । तस्य दशायामवतारे कैट-

---

ऽनुकूलः सूर्यः सहस्रवसुः (सहस्रसंख्यकिरणः, सहस्रधनश्च) वर्धते, तद्विरुद्धश्चन्द्रो भिक्षुकशिरोमणिः (शिवमौलिभूषणं, याचकमुख्यश्च) सन् क्षयं कलानाशं, धनक्षयं च) आश्रयतीति वदन् त्वत्पदभक्त्यभक्त्योः साध्वसाधुगतिप्राप्तिः फलमित्याह ।

५ हे पुरुषोत्तमपत्नि ! प्रभुः कैटभासुररिपुः पुरा वराहाऽवतारे क्षमाभाक् (पृथ्वीं प्राप्त, शान्तिशाली च सन्) यतः पङ्कजाते समुद्रजम्बाले निवासमकरोत् तस्मात् त्वं पत्युर्धर्ममनुगन्तुं पङ्कजातस्थितिं (जम्बालसमूहस्थितिं, कमलवासं च) करोषि किं ? मित्युत्प्रेक्षते ।

भारिः प्रभुरसौ क्षमां पृथ्वीं भजति स सन् पङ्कजाते कर्दमसमूहे निवासं स्थितिमकृताऽकरोत् तत्तस्मादिह लोके भर्तुः धर्मम् अनुसर्तुं पङ्कजाते कमले स्थितिं भजसि किम् । गूढोत्प्रेक्षालङ्कारः । मालिनीवृत्तम् ॥ ५ ॥

स्थानं समस्तवसुवृद्धिपुषस्तवाऽपि
पद्मं रमे नवसुमत्वमुपैति चित्रम् ।
अप्यन्यदद्भुतममुष्य तु यो ऽनुकूलः
शश्वद्बिभर्ति वसुमत्त्वमसौ पतङ्गः ॥ ६ ॥

स्थानमिति । हे रमे ! समस्तं वसु द्रव्यं, तस्य पक्षे समस्तैर्वसुभिः किरणैश्च वृद्धिं पुष्णाति तस्यास्तव स्थानं कमलं वसुमत्त्वं द्रव्यवत्त्वं नोपैतीति चित्रं, नवसुमत्वं नूतनकमलपुष्पत्वमेतीति चित्राऽभावः । तथा अमुष्य वसुमत्त्वरहितस्याऽप्यनुकूलः पतङ्गः सूर्यः वसुमत्त्वं द्रव्यवत्त्वं(?) बिभर्तीत्यद्भुताऽभावः । वसन्ततिलकावृत्तम् ॥ ६ ॥

---

६ हे रमे ! समग्रवसु(धन)वृद्धिपोषिकायास्तवापि निवासस्थानं पद्मं नवसुमत्वं(नवीनपुष्परूपत्वं, न वसुमत्त्वं धनवत्त्वं च ) उपैतीति वसुवृद्धिकरायास्तव स्थानं कमलं न वसुयुक्तत्वमुपैतीति एकं चित्रं प्रदर्शयन् अमुष्य कमलस्य यो ऽनुकूलः सूर्यः स वसुमत्त्वं (किरणवत्त्वं,धनवत्त्वं च ) मुहुर्बिभर्तीति वसुवृद्धिकरायास्तव वासस्थानं तु न वसुमत्त्वमुपैति, तदनुकूलश्च सूर्यो वसुमत्त्वं बिभर्तीत्यार्थान्तरं प्रदर्शयन् नवं कमलकुसुमं तव निवासस्थानमिति प्रतिपादयति ।

सन्मानसोल्लसनदः सदसद्विवेके
शक्तः सरोजनिलये सदनं त्वदीयम् ।
शब्दैः शुभैः श्रुतिपथं सुखयन् गभीरैः
संसेवते जननि हंसगणोऽवदातः ॥ ७ ॥

सदिति । हे सरोजनिलये ! सतां साधूनां मानसस्य हृदः, पक्षे सतः मानससरसः उल्लसनमानन्दं शोभां च ददाति सः, एवं सदसतोश्चिज्जडयोः क्षीरनीरयोश्च विवेके शक्तः समर्थः, पुनः शुभैः शब्दैर्गम्भीरैर्ब्रह्माऽनुभवरूपैरन्यत्र रुतैश्च श्रुतिपथं वेदान्तमार्गं कर्णमार्गं च सुखयन्, तथा ऽवदातः पवित्रः स्वच्छश्च हंसानां परमहंससनकादीनां मरालानां च गणः त्वदीयं सदनं कमलरूपं संसेवते भजते । वसन्ततिलकावृत्तम् ॥ ७ ॥

कमले कमलेषु सन्निधत्से
सकलेषु स्ववशेषु विष्टपेषु ।

---

७ हे सरोजनिलये ! सन्मानसोल्लसनदः ( सतो मानसाख्यसरोवरस्य शोभाप्रदः, सज्जनमनस उल्लासप्रदश्च ) सदसद्विवेके ( क्षीरनीरभेदज्ञाने, जडाऽजडयोर्भेदज्ञाने च ) समर्थः, गभीरैः शुभैः शब्दैः ( तारस्वरैः, महावाक्यैश्च ) श्रुतिपथं ( श्रवणेन्द्रियं, वैदिकमार्गं च ) सुखयन् अवदातः ( सशुभ्रवर्णः, पवित्रश्च ) हंसगणः ( मरालसमुदायः, परमहंससङ्घश्च ) त्वदीयं सदनं ( कमलं, वैकुण्ठगतं तत्र मन्दिरं च ) सेवते इति श्लेषेणाह ।

८ हे कमले ! समस्तेषु भुवनेषु स्ववशङ्गतेष्वपि केवलं कमलेषु सान्निध्यं करोषीति लोकेषु जलजातेषु (जडेष्वपत्येषु, जलजेष्वपि च)

सहजं जननीजनस्य लोके
जलजातेषु विशेषवत्सलत्वम् ॥ ८ ॥

कमले इति । हे कमले ! सकलेषु विष्टपेषु भुवनेषु वासाय स्वस्य वशेष्वधीनेषु सत्स्वपि कमलेषु सन्निधत्से उपविशसि, तथा हि–जननीजनस्य मातृजनस्य जलजातेषु जडजातेषु विशेषवत्सलत्वम् अधिकवात्सल्यं लोके सहजं स्वाभाविकमिति । अर्थान्तरन्यासालङ्कारः । औपच्छन्दसिकं वृत्तम् ॥८॥

कल्हारोत्पलकैरवाऽऽदिषु तथा कल्याणि माल्यादिषु
प्रायः सत्सु सुमेषु वस्तुषु परं पद्मानि सद्मानि ते ।
भाग्यं कुत्र चिदेव नृत्यतितरां भूयःसु तुल्येष्वपि
त्वत्कान्ताय सुगन्धिवस्तुषु तुलस्येकैव सा रोचते ॥ ९॥

कल्हारेति । हे कल्याणि । भूयस्सु तुल्येषु सुगन्धिवस्तुषु सत्स्वपि तव कान्तायाऽनन्ताय यथैका तुलस्येव रोचते प्रीणाति तथा कल्हारमुत्पलं सूर्यविकासि कैरवं चन्द्रविकासि इत्यादिषु माल्यादिषु च प्रायः बहुषु सुमेषु वस्तुषु पदार्थेषु सत्स्वपि परमत्यन्तं पद्मानि कमलानि ते सद्मानि भवन्ति, अतः प्रायः वस्तुषु मध्ये भाग्यं दैवं कुत्र चिन्नृत्यतितरामतिशोभते । विकस्वराऽलङ्कारः । शार्दूलविक्रीडितम् ॥ ९ ॥

---

समधिकं वात्सल्यं मातुः स्वाभाविकमिति वचनेन समर्थयन्नाह ।

९ हे कल्याणि ! कल्हारोत्पलकैरवप्रमुखेषु माल्यप्रभृतिषु च वस्तुषु सत्स्वपि कुसुमेषु मध्ये केवलं पद्मान्येव ते निवासस्थानानीति, समानेष्वपि पदार्थेषु क चिदेव भागधेयं विलसति यत् तुल्येष्वपि सुगन्धिवस्तुषु सत्सु त्वद्भर्त्रे हरये एका तुलस्येव रोचते इत्युक्त्या समर्थयन्नाह ।

त्वद्गेहं कमलं यतस्त्वदविनाभूतस्य विष्णोः पदं
सूर्याऽऽलोकविकासमञ्चति ततः पद्मे मधुस्वादु तत् ।
अन्नादो ऽहमितीव गीतिनिनदैः श्रुत्यन्तसञ्चारिभिः
कृष्णाकारजुषोत्र केचिदनिशं नन्दन्ति लब्ध्वा रसम् ॥१०॥

त्वदिति । हे पद्मे ! यतः त्वद्गेहं कमलम् अतस्त्वया अविनाभूतस्य नञ्द्वयस्य प्रकृताऽर्थवाढ्यबोधकत्वात्त्वत्सहायेन स्थितस्य विष्णोः पदं स्थानं कमलमेव वैकुण्ठं सूरेः सूर्यस्य चाऽऽलोके दर्शने प्रकाशे च विकासं प्रसन्नतां विकचत्वं चाऽञ्चति । किं च भ्रमरमेन मधुना मकरन्देन च स्वादु मधुरं तथा कृष्णाऽऽकारं हरिस्वरूपं नीलदेहं च जुषन्ति ते के चिज्ज्ञानिनः भ्रमराश्च अत्र रसं ब्रह्मरसं मकरन्दं च लब्ध्वा प्राप्य अन्नादोऽहमिति "अहमन्नादो ३ ऽहमन्नादो ऽहमन्नाद' इति श्रुत्यन्ते तैत्तिरीयोपनिषदि सञ्चरन्त्युपलब्धा भवन्ति तैर्गीतिनिनदैः सामगानशब्दैः, पक्षे अहमन्नम् अत्तीत्यन्नाद इति तृप्त्युद्गाररूपैरिति या-

---

१० हे पद्मे ! यस्मात् कारणात् त्वदावासभूतं कमलं त्वत्सहचरस्य विष्णोः निवासस्थानं वैकुण्ठरूपं ततः कारणात् मधुमधुरं तत्पद्मं सूर्यालोकविकासं ( सूर्यस्याऽऽलोकेनोन्मीलनं, सूरीणां दर्शनविस्तारं च) अञ्चति, अत्र (पद्मे, वैकुण्ठे च) कृष्णाऽऽकारजुषः (नीलवर्णं प्राप्ताः, भगवदाकारधारिणश्च ) के चित् ( भ्रमराः, पुण्यवन्तश्च ) रसं ( मकरन्दं, ब्रह्मानन्दं च ) प्राप्य श्रुत्यन्तसंचारिभिः ( श्रवणप्रान्तसंचारिभिः उपनिषद्वर्तिभिश्च ) अन्नादोऽहमित्याकारकैः "अहमन्नादो ऽहमन्नादो ऽहमन्नाद" इत्यादिब्रह्मानन्दोद्गारैः, मकरन्दरूपाऽन्नभिक्षुको ऽहमिति तृप्त्युद्गाररूपैश्च) गीतिनिनदैः (गुञ्जारवैः, 'अहमन्नाद' इत्यादिसामभिश्च ) निरन्तरमानन्दं प्राप्नुवन्तीति श्लेषेणाह ।

वत् । श्रुत्यन्ते कर्णान्ते सञ्चारिभिर्गीतिमधुरैर्निनदैर्झङ्काररूपैः रवैश्चाऽनिशं सदा नन्दन्ति । टुनदि समृद्धावस्मात्कर्तरि लट् । काव्यलिङ्गालङ्कारः । शार्दूलविक्रीडितं वृत्तम ॥ १० ॥

सूर्याऽऽलोकदशासु हर्षमयते दोषाकराऽऽलोकने
संकोचं भजति श्रितालिषु रमे दत्ते परं जीवनम् ।
स्थानं पङ्कमधः करोति वहते नालीकशब्दं च ते
कां वा तावकसन्निधानमहिमा कुर्यान्न चर्यां शुभाम् ११ ॥

सूर्येति । हे रमे ! सूरेः सूर्यस्य चाऽऽलोकस्य दशासु हर्षं तोषं विकासं च अयते, एवं दोषाकरस्य पुंसश्चन्द्रस्य चाऽऽलोकने सङ्कोचं मुकुलीभावं भजति, पुनः श्रितानामाश्रितानामालिषु पङ्क्तिषु श्रितेषु भ्रमरेषु च परं जीवनं दत्ते, तथा पङ्कं पापं कर्दमं चाऽधः करोति तिरस्करोति नीचैः करोति च, ततः न अलीकमनृतं नालीकं सत्यं कमलमिति च शब्दं वहते, तत्तस्मात्तावकं च तत्सन्निधानं च तस्य महिमा कां वा शुभां चर्यां न कुर्यादपि तु त्वत्सान्निध्यं सर्वत्राऽपि शुभकरमिति भावः । शार्दूलविक्रीडि० ॥ ११ ॥

---

११ हे रमे ! तव स्थानं (कमलं, त्वत्कृपापात्रं पुरुषश्च) सूर्यालोकदशासु (सूर्यस्य प्रकाशावस्थासु, सूरीणां दर्शनावसरेषु च) हर्षं प्राप्नोति, दोषाकराऽऽलोकने ( चन्द्रोदये, दोषखनिरूपाणां खलानां दर्शने च ) संकोचं ( निमीलनम्, अनुल्लासञ्च ) प्राप्नोति, श्रितालिषु ( श्रितेष्वलिषु भ्रमरेषु, आश्रितानामालिषु पङ्क्तिषु च ) परं जीवनम् ( उत्कृष्टं मधुरं जलं मकरन्दरूपम्, उत्कृष्टां जीविकां च ) ददाति, पङ्कं ( कर्दमं, पापं च ) अधः करोति ( नीचैः करोति, प्रतिहन्ति च ) नालीकशब्दं वहते ( कमलवाचकं नालीकमित्याकारकं शब्दं धारयति, अलीकशब्दम् असत्यशब्दं न वहते च ) इति त्वत्सान्निध्यमाहात्म्यं कां वा शुभां गतिं न कुर्यादित्याह ।

धत्ते सदैव शिरसा तव पादरेणून्
पद्मे बिभर्ति तव नाम च पद्ममेतत् ।
वर्वर्ति धारकतया तव हस्तमेव
तद्युक्तमृच्छति तवोज्ज्वलदास्यलक्ष्मीम् ॥ १२ ॥

धत्ते इति । हे पद्मे ! एतत्पद्मं शिरसा सदैव तव पादरेणून्धत्ते, तथा तव नाम बिभर्ति । यो हि यस्य दृढदासः स तन्नाम्ना व्यपदिश्यते । पुनर्धारकतयाऽपि तव हस्तमेव वर्वर्ति सदा वृणोति । तत्तस्मात्तवोज्ज्वलदास्यस्य लक्ष्मीं शोभां बिभर्तीति युक्तमेव । वसन्ततिलकावृत्तम् ॥ १२ ॥

प्रातः कृताऽऽप्लवविधिः पयसां निधाने
ब्रह्मो ऽर्चकः शुचिकरो भृततप्तचक्रः ।

---

१२ हे पद्मे ! एतत् पद्मं सर्वदैव शिरसा ( उपरिभागेन, मस्तकेन च ) तव पादपांसून् धारयति, तव नाम ( त्वद्वाचकं शब्दं पद्मेत्याकारकं ) वहति, त्वन्नाम जपति च, त्वद्धस्तस्य कमलधारकतया तदालम्बनतया वृणीते, तस्मात् तत्पद्मं तव उज्ज्वलदास्यलक्ष्मीं (निर्मलां दास्यशोभाम्, उज्ज्वलतः प्रकाशमानस्याऽऽस्यस्य शोभां च)प्राप्नोतीति युक्तमिति श्लेषेण वदन् दासो हि स्वामिनः पादधूलिं शिरसा वहति, स्वामिनामसंबन्धं चात्मनि वहति, ( जनास्तं स्वामिनामपूर्वकं'ममुकदास' इति व्यपदिशन्ति ) स्वामी तं हस्तेनाऽवलम्ब्य गच्छतीति निजाऽङ्गेन दासः स्वामिकरेणालम्ब्यते, पद्मं चैवं करोतीति तस्य दास्यप्राप्तिरुचितैवेति बोधयन् पद्मं यस्मात्तव पादरेणुं शिरसा धारयति, त्वन्नाम च जपति, त्वद्धस्तालङ्कारतां च प्राप्नोति तेन सुकृतेन त्वन्मुखलक्ष्मीं वहतीत्यर्थमाविष्कुर्वन्नाह ।

१३ हे जगदम्ब ! प्रत्यूषे पयसां निधाने ( जलधौ, जलाशये च )

उद्घाटयत्युदितविष्णुपदैकसक्ति-
र्विश्वाऽम्ब पद्ममयसद्मदलान्तरं ते ॥ १३ ॥

मातरिति । हे विश्वाम्ब ! पयसां निधाने समुद्रे कृताऽऽप्लवविधिः कृतस्नानविधिः, शुभाः कराः किरणा हस्तौ च यस्य सः, भृतं तप्तं चक्रं, पक्षे भृतस्तोषितः तप्तश्चक्रवाको येन विष्णुपदे आकाशे हरिचरणे च एका केवला सक्तिर्भक्तिर्यस्य सः ब्रध्नः सूर्य एवाऽर्चकः पूजकः दलरूपमन्तरं व्यवधायकं यस्य तत्पद्मरूपं सद्मोद्घाटयति पूजार्थमिति भावः । वसन्ततिलकावृत्तम् ॥ १३ ॥

ब्रह्मा यस्मादजनि वहते चारु पीतांशुकं यत्
सान्द्राऽऽमोदं सततममृतस्थानमेवाऽऽश्रितं च ।

---

कृतस्नानविधिः, शुचिकरः, (प्रीष्मकारक उज्ज्वलकिरणो वा, पवित्रहस्तश्च ) भृततप्तचक्रः ( पोषितवियोगतापसंतप्तचक्रवाकः, धारिततप्तमुद्रश्च[1] ) उदितविष्णुपदैकसक्तिः ( सञ्जाताऽऽकाशमात्रसंयोगः, समुत्पन्नविष्णुचरणैकभक्तिश्च ) ब्रध्नः ( सूर्य एव ) अर्चको ( देवपूजकः ) तव पद्मरूपस्य गृहस्य दलान्तरं ( पर्णमध्यं, कपाटं च ) उद्घाटयतीति श्लेषेणाह ।

१४ हे मातः ! यस्मात् ( अब्जात् ) ब्रह्मा ऽजनि, यत् चारु मनोहरं पीतांशुकं ( पीतवर्णकिञ्जल्ककान्ति, पीताम्बरं च ) वहते, सान्द्राऽऽमोदं ( घनसौरभं, आनन्दघनं च ) अमृतस्थानं ( जलाशयम, मुक्तिस्थानं वैकुण्ठं च ) आश्रितम, अतः तत्र पदं (निवासस्थानम) इदं कमलं श्रीनिवासाऽभिधानं (लक्ष्मीगृहमिति नाम, श्रीनिवास इत्याकारकं हरिनाम च ) अर्हत्येव, एवं धर्मबाहुल्येन साहश्ये सिद्धे भगवतो मधुदैत्यवैरिता, कमले च मधु( मकरन्द )स्निग्धता ( मसृणत्वं,

---

१ तप्तमुद्राधारणं हि माध्वानां मुख्यो धर्मः ।

अर्हत्यब्जं तव पदमिदं श्रीनिवासाऽभिधानं

मातर्दोषो न भवति मधुस्निग्धता धर्मभूम्नि ॥ १४ ॥

अर्हतीति। हे मातः! तव पदं स्थानमिदम् अब्जं कमलं श्रियो निवासो वसतिस्थानम्, अत एव श्रीनिवास इत्यभिधानमर्हति । एतच्छ्रीनिवासमिति वक्तुं प्रतिबन्धो नास्तीति भावः। तत्साम्यमुपपादयति—यस्माद्ब्रह्मा ऽजनि उत्पन्नः, चारु पीतांशुकं पीताऽम्बरं पक्षे किञ्जल्कं च वहते धारयति, सान्द्रः आमोदः सुगन्धः प्रीतिश्च यस्मिन् तत् अमृतं मोक्ष उदकं च तद्रूपं स्थानम् आश्रितं साम्य समर्थनीये पक्षे मधुस्निग्धता हरौ मधुघातुता इति पक्षे दोषश्चेद्धर्मस्य भूम्नि भूयस्त्वे काचित्कभिन्नता दोषो न भवति । श्लेषालङ्कारः । मन्दाक्रान्तावृ० ॥ १४ ॥

अहो मुकुन्दसुन्दरि त्वदीयमन्दिराऽहितः

स्वयं क्षयं व्रजन्नयं स्वरक्षिणं क्षिणोत्यपि ।

सरोरुहद्रुहः शिवः शिरोऽधिरोहदुष्कृताद्

विदिक्षु दिक्षु भिक्षुकः स्फुटं नटन्नटाट्यते ॥ १५ ॥

अहो मुकुन्दसुन्दरि ! त्वदीयमन्दिरस्य कमलस्याऽहितः

---

प्रीतिमत्त्वं च ) दोषः ( सादृश्यप्रतिबन्धको ) न भवतीति ब्रह्मजनकत्वादिबहुलधर्मैः सदृशं कमलं श्रीनिवास इति भगवन्नाम लभते, केवलं मधुरिपुत्वविरुद्धमधुस्निग्धत्वरूपधर्मसम्बन्धो न सादृश्यविघटको भवेदित्याह ।

१५ अहो मुकुन्दकान्ते ! तावकगृहस्य अहितः आत्मना क्षयं प्राप्नुवन् निजरक्षकमपि क्षिणोतीति शिवस्त्वन्मन्दिररूपकमलद्वेषुश्चन्द्रस्य मूर्धस्थापनदुरितादिक्षु दिक्षु विदिक्षु च नृत्यन् भिक्षुकः सञ्जातस्ततो भूयो ऽटतीत्युक्त्या समर्थयन्नाह ।

मावुश्चन्द्र इति यावत् । स्वयं क्षयं व्रजन्नपि रक्षिणं रक्षकमपि क्षिणोति । श्नुविकरणात्क्षि क्षये अस्माल्लट् । तथा हि-शिवः सरोरुहद्रुहश्चन्द्रस्य शिरसि स्वमूर्ध्नि अधिरोहाद्धारणरूपाद् दुष्कृतात्पापाद्भिक्षुकः सन्विदिक्षु दिक्षु च स्फुटं नटन्नृत्तं कुर्वन्सञ्जटाट्यते पुनः पुनर्भ्रमति । अट गतावित्यस्मात्सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यः यङ्‌वाच्य इति वार्तिकेन पौनःपुन्याऽर्थे यङि लटि यस्य हल इति यलोपे दीर्घोकित इत्यभ्यासदीर्घः । पञ्चचामरं वृत्तम् ॥१५॥

त्वद्धाम्नः सरसीरुहस्य च मिथस्त्वत्कान्तधामाऽऽत्मनो
मार्तण्डस्य च पुण्डरीकनिलये मैत्री निसर्गोदिता ।
कल्याणी युवयोरियं विवृणुते कैमुत्यनीत्या मिथः
प्रीतिं कामपि भूयसीमविदिताक्षेपामनौपाधिकीम् ॥ १६ ॥

त्वदिति । हे पुण्डरीकनिलये ! तव धाम्नो गृहस्य सरसीरुहस्य चेत्यपरं तव कान्तस्य हरेर्धामाऽऽत्मनो गृहरूपस्य मार्तण्डस्य । 'योसावादित्ये पुरुष' इति याजुषश्रुतिः । मिथोऽन्योन्यं मैत्री निसर्गोदिता स्वभावसिद्धा सती इयं प्रीतिर्युवयोर्लक्ष्मीनाराणयोः अविदितः अज्ञातः आक्षेपो यस्याम् । चोद्यमाक्षेपाऽभियोगौ इत्यमरः । तां पुनर्नास्त्युपाधिर्यस्यां तथा कल्याणकारिणीं युवयोर्मिथः परस्परं कामपि अतिशयेन बह्वी इति भूयसी । बहोर्लोपो भू च बहोरिति भूरादेशः । तां

---

१६ हे सिताम्भोजगृहे ! त्वन्निवासस्थानस्य कमलस्य त्वत्प्रियवसतिस्थानस्य सूर्यस्य चेति तव त्वत्प्रियस्य च स्थानयोः परस्परमैत्री स्वाभाविकी, इयं च गृहमैत्री कैमुतिकन्यायेन महीयसीमचोद्यां निरुपाधिकामनिर्वचनीयां युवयोः प्रीतिं प्रकटयतीति युवयोर्गृहमैत्र्यां स्वाभाविक्यां युवयोर्मैत्री कैमुत्यन्यायसिद्धेत्याह ।

कामप्यनिर्वचनीयां प्रीतिं कैमुत्यनीत्या ययोः स्थानयोर्मिथ एतावती प्रीतिः तत्र तयोः साक्षात्किमु वक्तव्येति कैमुत्येनाऽर्थसिद्धेः काव्याऽर्थापत्त्यलङ्कारदर्शककैमुत्यनीत्या विवृणुते विस्तारयतीत्यर्थः । शार्दूलविक्रीडि० ॥ १६ ॥

कति न कुसुमंमन्यान्यन्यानि देवि वने वने
न हि समुदितेष्वप्येतेषु क्षमा कमलोपमा ।
भगवति भवत्सान्निध्येन प्रभोः कमलानि यत्
करचरणदृक्कल्पानीति स्थिरं दधते यशः ॥ १७ ॥

कतीति । हे भगवति ! वने वने प्रतिवने अन्यानीतराणि कुसुममात्मानं मन्यन्ते तानि । आत्ममाने खश्चेति खश् । कति न ? तथा ऽपि यद्यस्मात् हे देवि ! भवत्याः सान्निध्येन समागमेन प्रभोर्हरेः करैश्चरणाभ्यां दृग्भ्याम् ईषदूनानि करचरणदृक्कल्पानि कमलान्येव स्थिरं यशः दधते, अतः समुदितेष्वप्येतेषु अन्यपुष्पेषु कमलोपमा न क्षमा न युक्ता । हरिणीवृत्तम् ॥१७॥

हरेः करस्पर्शनतः प्रहृष्टा
पयस्युदीता रुचिराऽलिकान्ता ।

---

१७ हे देवि ! प्रतिवनमितराणि आत्मनः कुसुमानि मन्यमानानि कति न सन्ति ? समुदितेष्वपि तेषु कमलसादृश्यं नोपपद्यते, यतो हे भगवति ! कमलानि त्वत्संनिधानात् भगवतो हस्तपादनयनतुल्यानीति स्थास्नुं कीर्तिं धारयन्ति, तानि तु नेति कथं तेषु कमलसादृश्यमुपपद्यतेत्याह ।

१८ हे जलधिसुते ! हरेः ( सूर्यस्य, नारायणस्य च ) करस्पर्शनतः ( किरणसम्बन्धात्, पाणिग्रहणाच्च ) प्रहृष्टा ( विकसिता,

वाराशिकन्ये वसतिस्त्वदीया
बिभर्ति युक्तं कमलाऽभिधानम् ॥ १८ ॥

हरेरिति। हे वाराशिकन्ये! त्वदीया वसतिः कमलाऽभिधानं बिभर्ति इदं युक्तं, यतः हरेः सूर्यस्य विष्णोश्च करागां करस्य च स्पर्शनतः स्पर्शाद्धेतोः प्रहृष्टा च परं पयसि जले क्षीरोदे च उदीता, पुनः रुचिरैरलिभिः सखीभिश्च कान्ता, यद्वा रुचिरः अलिकान्तो ललाटप्रान्तो यस्याः सा इति। उपजातिवृत्तम् ॥ १८ ॥

भृङ्गीसङ्गीत्युदयसुभगं मञ्जुकिञ्जल्कपुञ्ज-
स्फारस्तम्भं किमपि विकसत्पत्रसच्चित्रभित्ति।
पर्याश्लिष्टं विमलसरसा कर्णिकास्वर्णपीठं
पद्मं विद्मः परमनुगुणं सद्म पद्मे भवत्याः ॥ १९ ॥

भृङ्गीति। हे पद्मे! भृङ्गीणां सङ्गीतीनाम् उदयेन सुभगम्, एवं मञ्जूनां मनोज्ञानां किञ्जल्कानां पुञ्जा एव स्फारा विपु-

---

सन्तुष्टा च) पयसि (जलाशये, समुद्रे च) उत्पन्ना, रुचिरालिकान्ता (सुन्दरैरलिभिर्मनोहरा, रुचिरः अलिकान्तो ललाटप्रान्तभागो यस्यास्तथाभूता च) त्वदीया वसतिः कमलाऽभिधानं (कमलमिति कमलेति च नाम) युक्तमेव बिभर्तीति श्लेषेण कमले कमलवासिन्याः साम्यं वर्णयन्नाह।

१९. हे पद्मे! भृङ्गाङ्गनानां सङ्गीतोदयेन सुन्दरं, मनोज्ञकेसराऽऽवलिरूपविशालस्तम्भयुक्तं, विकसत्पर्णरूपसच्चित्रभित्तिविराजितं, निर्मलसरोवरसङ्गतं, कर्णिकारूपसुवर्णसिंहासनसमलङ्कृतं पद्मं भवत्या अनुरूपं सद्मेति पद्मालया भवत्याः पद्मं सद्म योग्यमित्याह।

लाः स्तम्भा यस्मिन् तत् पुनर्विक्रमन्ति पत्राण्येव सच्चित्रा भित्तयो यस्मिन् तत्, तथा परितः आश्लिष्टं विमला स्वच्छा सरसा सुन्दरी च या आ समन्तात् कर्णिका सैव स्वर्णपीठं हाटकाऽऽसनं यस्मिन् तत्, ईदृक्पद्मं भवत्याः परमनुगुणं योग्यं सद्म गृहं विद्मः। अत्राऽनुरूपवर्णनात्समालङ्कारः। मन्दाक्रान्ता० ॥ १९ ॥

दुग्धाऽम्बुराशिदुहितुस्तव सन्निधानात्
स्वर्णस्थितिर्भवति हन्त कुशेशयस्य।
तत्सम्भवोऽप्यभवदम्ब हिरण्यगर्भो
धन्याः खलु त्वदनुबन्ध्यनुबन्धिनोऽपि ॥ २० ॥

दुग्धेति। हे दुग्धाऽम्बुराशेर्दुहितः! तव सन्निधानात्कुशेशयस्य कमलस्य तृणं निद्रितस्य च सुष्ठु अर्णस्युदके स्वर्णे च स्थितिर्भवति। हे ऽम्ब! पुनस्तत्सम्भवोऽपि हिरण्यगर्भः ब्रह्मा हिरण्यं गर्भे यस्य स च, अतस्तवाऽनुबन्धिनामनुचराणाम् अनुबन्धिनः संसर्गिणोऽपि धन्या इति गुणेन गुणवर्णनादुल्लासालङ्कारः। वसन्ततिलकावृत्तम् ॥ २० ॥

---

२० हे क्षीरोदपुत्रि! तव सन्निधानात् कुशेशयस्य (शतपत्रस्य, दर्भेशयस्याऽकिञ्चनस्य च) स्वर्णस्थितिः (शोभनजलस्थितिः, कनकस्थितिश्च) भवति, हे अम्ब! तत्सम्भवः कुशेशयजो (ब्रह्मा) ऽपि हिरण्यगर्भः (सुवर्णपूर्णः, तन्नामा च) भवति, इति त्वत्सम्बन्धिसम्बन्धिनोऽपि धन्याः (कृतार्थाः, धनिकाश्च) भवन्तीति साक्षात् त्वत्सम्बन्धिनां धनप्राप्तिर्भवतीत्यतिलघु, त्वत्सम्बन्धिसम्बन्धिनामपि सा भवतीत्याह।

नवसारसवासमाचरन्त्या-
स्तव साधर्म्यमिवाऽम्ब लब्धुकामः ।
परमः पुरुषः सदा विधत्ते
पुरमध्यस्थितपुण्डरीकवासम् ॥ २१ ॥

नवेति । हे ऽम्ब ! नवे सारसे वासम् आचरन्त्यास्तव सा-धर्म्यं समानधर्मं लब्धुकामः परमः पुरुषः हरिः सदा पुरस्य शरीरस्य मध्ये स्थिते पुण्डरीके हृत्कमले वासं विधत्ते । 'पुरमेकादशद्वारमजस्ये'ति काठकश्रुतेः । 'नवद्वारे पुरे देहीति'गीतायां च । 'ऋचो अक्षरे परमे व्योम'न्निति बह्वृचश्रुतौ । 'परमे व्योम्नि हार्दाऽऽकाशे' इति भाष्यम् । 'सर्वस्य चाऽहं हृदि सन्निविष्ट' इति च गीतायाम् । 'दहर उत्तरेभ्य' इति ब्रह्मसूत्रम् । उत्प्रेक्षाऽलङ्कारः । औपच्छन्दसिकं वृत्तम् ॥ २१ ॥

अस्ति ते हरिपुरन्ध्रि नीरज-
स्थानमित्युदितमास्पदद्वयम् ।

---

२१ हे अम्ब ! नवीननलिने निवासं कुर्वत्यास्तव समानधर्मतामाप्तुकाम इव पुरुषोत्तमो भगवान् सदा पुरमध्यस्थिते ( शरीरिहृदयमध्ये स्थिते ) पुण्डरीके वासं करोतीत्युत्प्रेक्षते !

२२ हे हरिकुटुम्बिनि ! तवाऽऽस्पदद्वयं नीरजस्थानं ( नीरजो रजोगुणरहितं वैकुण्ठरूपं स्थानं, कमलरूपं स्थानं च ) कथितमस्ति, इह ( एतयोर्मध्ये ) प्रथमं त्रिपात्पदं, ( त्रिविक्रमस्थानं, चरणत्रयवतः स्थानं च ) द्वितीयं तु षट्पदपदं ('भ्रमरस्थानं, पादषट्कवतः स्थानं च ) आहुरिति उभयोः साम्ये ऽपि त्रिपात्पदाऽपेक्षया षट्प-

१ नीरजं स्थानामिति १ पु० पा० ।

एकमाहुरिह तु त्रिपात्पदं
देवि षट्पदपदं परं पुनः ॥ २२ ॥

अस्तीति । हे हरिपुरन्ध्रि ! हे देवि ! ते नीरजं निर्गतं रजोगुणो यस्मात्तव शुद्धसत्त्वप्रधानं(?), अथ च कमलं चेति आस्पदद्वयं स्थानद्वयम् उदितं गदितम् इति स्थाने युक्तम्, इहाऽनयोर्मध्ये एकं त्रयः पादा यस्य स हरिः । सङ्ख्यासुपूर्वस्येति पादशब्दस्य लोपः। तस्य हरेः पदं स्थानं वैकुण्ठं पुनः परं षट्पदानां पदं स्थानं कमलम् इति उभयसाधारणपदाऽऽपेक्षया केवलभगवत्पदद्विगुणवैभवशालीति लक्ष्मीश्रैष्ठ्यं ध्वन्यते । श्लेषव्यतिरेकालंकारौ । रथोद्धतावृत्तम् ॥ २२ ॥

सुरादिजीवैरमृतैकनिष्ठै-
श्चिराय यैरम्ब विभाव्यसे ऽन्तः ।
आलोकमग्र्यं हरिरेषु तन्व-
न्नामोदमन्यादृशमादधाति ॥ २३ ॥

सुरेति । हे ऽम्ब ! अमृते पीयूषे तोये च एका निष्ठा येषां

---

द्पदस्य साऽतिशयत्वं श्लेषेणाह ।

२३ हे अम्ब ! अमृतैकनिष्ठैः ( जलमात्राश्रितिभिः, मुमुक्षुभिश्च ) यैः सुरादिजीवैः ( शोभन'रा'वर्णयुक्ताऽऽद्यभागैः जीवैः राजीवैरिति यावत्, देवादिप्राणिभिश्च ) अन्तः ( मध्ये, मानसे च ) विभाव्यसे ( धार्यसे, ध्यायसे च ) तेषु ( राजीवेषु, देवेषु च ) हरिः ( सूर्यः, नारायणश्च ) श्रेष्ठम् आलोकं ( प्रकाशं, ब्रह्मज्ञानं च ) विस्तारयन् अननुभूतपूर्वम् आमोदं ( सौगन्ध्यम्, आनन्दं च ) आदधातीति श्लेषेणाह ।

तैः सुरादिभिर्देवाऽऽदिभिर्जीवैः प्राणिभिः, पक्षे सुष्ठु रावर्णः आदिः प्रथमं येषां तैः सुराजीवैः कमलैश्च या ऽन्तर्मध्ये विभाव्यसे अत एषु सुरादिजीवेषु हरिर्विष्णू रविश्च आलोकं दर्शनं प्रकाशं च तन्वन् विस्तारयन् अन्यादृशमसाधारणम् आमोदं मकरन्दं(?) हर्षं चाऽऽदधाति स्थापयति । श्लेषालङ्कारः। उपजातिवृत्तम् ॥ २३ ॥

अदो दधानं कमलाऽभिधान-

मम्भश्च पद्मं च समं तवाऽऽस्ताम् ।

आद्यस्य पुंसः पदमाहुराद्यं

वासं द्वितीयं जननि त्वदीयम् ॥ २४ ॥

अद इति । हे जननि ! कमलमित्यभिधानं दधानम् अदः अम्भः पद्मं च तव समम् आस्ताम् । यत आद्यस्य पुंसः आद्यमम्भः, त्वदीयं द्वितीयं कमलं पदमित्याहुः । ज्ञातार इति शेषः । उपजातिवृत्तम् ॥ २४ ॥

क्षमास्वर्णस्फूर्तिं सततमधिगम्याऽपि कमले

गुणादाढ्याच्छब्दं कमपि भजते नालमिति यत् ।

---

२४ हे जननि ! एतत् जलं पद्मं चेति द्वयं कमलमिति नाम दधत् तुल्यमस्तु, पर तयोराद्यं कमल ( जलं )पुराणपुरुषस्य भगवतः स्थानं ( समुद्रशायित्वात् ) आहुः, द्वितीयं कमलं ( पद्मं ) त्वदीयं निवासस्थानमाहुरिति सामान्यतः साम्ये सत्यपि त्वदावासभूतं पद्मं विशेषाऽभ्यर्हितमित्याह ।

२५ हे कमले ! मातः ! यत् ( नालं ) क्षमासु ( भूतलेषु ) अर्णःस्फूर्तिं ( अर्णसि जले उदयं ) सततं प्राप्यापि आढ्याद् गुणाद् बिसतन्तोर्हेतोः नाल ( कमलदण्ड ) इत्याकारकं शब्दं भजते तदेव नालं

तदेवाऽलङ्कारं नयति नलिनं स्पर्शनवशात्
तनोति ह्यौदार्यं तव जननि सान्निध्यमहिमा ॥ २५ ॥

क्षमेति । हे कमले ! क्षमा अर्णसि उदके स्फूर्तिं स्फुरणशोभां, पक्षे क्षमां क्षान्तियुक्तां स्वर्णस्य हाटकस्य स्फूर्तिं सततमधिगम्य प्राप्याऽपि आढ्याद्गुणात्तन्तोः नालं कमलदण्ड इति । नालो नालमथाऽस्त्रियामित्यमरः । अथाऽऽढ्याद्गुणादौदार्यादेरलं पर्याप्तशब्दं च न भजते इति यत् तत् नालमेव स्पर्शनवशाद्धेतोः नलिनमलङ्कारं नयति, पद्मपक्षे नाले कण्टकसत्त्वान्मास्तु मास्त्विति स्पर्शकानामलम्भावं नयति, अन्यत्र स्पर्शनाद्दानादर्थिनाम् अलङ्कारं पर्याप्ततां नयति। ततः हे जननि ! तव सान्निध्यमहिमा औदार्यं तनोति । अत्र लक्ष्मीसान्निध्येनाऽन्यस्य गुणोत्कर्षलाभवर्णनादनुगुणालङ्कारः । शिखरिणीवृत्तम् ॥२५॥

भगवति परब्रह्माऽद्वैतप्रसङ्गजुषस्तव
प्रथयति लसद्धर्मालीकत्वमत हि दर्शनम् ।

---

स्पर्शनवशात् ( स्वसंयोगात् ) नलिनम् अलङ्करोति, एवं यत् ( गम्यं दातृकुलम् ) सततं क्षमास्वर्णस्फूर्तिं भूसुवर्णसंपत्तिमधिगम्यापि आढ्याद् गुणात् ( औदार्यात् ) याचकानाम् 'अलं'मिति पर्याप्तिवाचकं शब्दं न लभते तदेव (त्वत्सान्निध्ये सति) स्पर्शनवशात् ( दानाऽतिशयात् ) नलिनं ( व्यग्रं याचककुलम् ) अलङ्कारं 'अलं'मिति पर्याप्तिवाचकशब्दं नयतीति तन्तुविशिष्टं नालं स्वसंयोगेन कमलमलङ्कुरुते, एवं यद्दातृकुलं निजौदार्यगुणात् याचककुलानां पर्याप्तमिति शब्दं न लभते ( न पर्याप्तं ददाति ) तदेव त्वत्सान्निध्ये औदार्यातिशयसंपन्नं सत् याचकान् पर्याप्तं पर्याप्तमिति अलंशब्दं प्रापयतीति अर्थद्वयं तव सान्निध्यमहिमा औदार्यं विस्तारयतीत्युक्त्या समर्थयन्नाह ।

२६ हे भगवति ! परब्रह्मणा ऐक्यं प्राप्तायास्तव दर्शनम् ( अन-

त्वमुचितमधिष्ठानं नालीकमाश्रयसे तत-
स्तव किल सदालोकः सर्वो ऽपि कल्पनगो रमे ॥ २६ ॥

भगवतीति । हे भगवति ! परब्रह्मणा साकम् अद्वैतप्रसङ्गं जुषते तस्यास्तव दर्शनमवलोकनं कर्तृ ब्रह्मणः सन्नतां(?) लसतां नामरूपरूपजगद्रूपधर्माणाम् अलीकत्वं मिथ्यात्वं च प्रथयति तदुचितम् । प्रथ प्रख्याने ऽस्मात् कर्तरि लट् । तथा हि—यत् त्वं नालीकं पद्मरूपं अलीकं मिथ्या न भवति तत्सत्यं चाऽविनाशि ब्रह्मैवेत्यर्थः । अधिष्ठानमाश्रयसे ततस्तव सत्ताधिष्ठानत्वात्सर्वो ऽपि लोकः भूर्भुवःस्वर्जनादिर्जनो ऽपि कल्पनं गच्छतीति कल्पनगः त्वत्कल्पनामात्रं सर्वं जगदिति भावः । अथ च सर्वो ऽपि तव सन् आलोकः सदालोकः अवलोकनम् इष्टदातृत्वात्कल्पनगः कल्पवृक्ष इति । अयं भावः—त्वां पश्यतो जनस्य इदं द्वयं स्फुरति, तत्किमिति चेत्, अधिष्ठानं नालीकं धर्मरूपं जगत्कल्पितत्वान्मृषेति च । हरिणीवृत्तम् ॥ २६ ॥

---

लोकनम्, अद्वैतवेदान्तशास्त्रं च ) इह ( अस्मिन् लोके, ब्रह्मणि च ) लसद्धर्मालीकत्वम् ( विराजमानसुकृतसमूहकत्वं, प्रतिभासमानप्रपञ्चधर्मोऽसत्यत्वं च ) प्रथयति ( वर्द्धयति, प्रख्यापयति च ) त्वं योग्यं नालीकमधिष्ठानं ( कमलरूपमास्पदं, न अलीकाऽधिष्ठानमसत्याधिष्ठानं सत्यभूतब्रह्मातिरिक्ताऽसत्याऽधिष्ठानं ) भजसे, ततः कारणात् तव सदालोकः ( सन् आलोको दर्शनं, सदा लोकः प्रपञ्चश्च ) सर्वोऽपि कल्पनगः (कल्पवृक्षः काल्पनिकश्च) इति भगवद्भिन्नायास्तव दृक्पातस्तदाश्रयस्य सुकृतवृद्धिं विधत्ते, त्वं योग्यं कमलरूपं स्थानमाश्रयसे, ततः साधुस्तव सर्वोऽप्यालोकः कल्पवृक्षरूपः । एवम् अद्वैतशास्त्रं परब्रह्माऽभिन्नायास्तव प्रातिभासिकप्रपञ्चधर्माणामसत्यत्वं प्रकटयति, त्वं चोचितमनलीकं सत्यस्थानमाश्रयसे, ततः सर्वोऽपि प्रपञ्चः केवलं काल्पनिक इति श्लेषेणार्थद्वयं प्रतिपादयन्नाह ।

यत्रोत्तमस्फुरणयन्त्रितचित्तवृत्तौ
नित्योल्लसद्रजसि राजति सारसत्वम् ।
स्थानं प्रधानमिदमब्धिसुते यतस्ते
स्थाने तदत्र रमते महदादितत्त्वम् ॥ २७ ॥

यत्रेति । हे अब्धिसुते ! उद्गतमाविर्भूतं यत्तमसः तमोगुणस्य स्फुरणं तेन यन्त्रिता चित्तवृत्तिर्यस्य, अन्यत्रोत्तमं यत्स्फुरणं शोभा तया यन्त्रिता स्वस्मिन्नियमिता चित्तवृत्तिर्येन । किं च नित्यम् उल्लसत् रजः रजोगुणः परागश्च यत्र एतादृशे यत्र वस्तुनि सारसत्वं दृढः सत्त्वगुणः कमलत्वं च राजति तत्प्रधानं नाम तत्र स्थानं सत्त्वरजस्तमसां साम्याऽवस्था प्रकृतिः सा साङ्ख्याऽभिमतं प्रधानं तस्य प्रधानस्य शक्त्युपाधित्वेन स्थानत्वम् । तदुक्तं सूतसंहितायाम् 'चिन्मात्राऽऽश्रयमायायाः शक्त्याकारो द्विजोत्तमाः । अनुप्रविष्टा या संवित् निर्विकल्पा स्वयंप्रभा' इति । अन्यत्र तत्तव प्रधानं मुख्यं स्थानं यतश्चैतत् ततः तत्र महदादितत्त्वं रमते जातावेकवचनम् ।



२७ हे ऽब्धिसुते ! उत्तमस्फुरणयन्त्रितचित्तवृत्तौ ( उत्तमेन स्फुरणेन विलसनेन निबद्धजनमनोवृत्तौ, उत्कृष्टतमोगुणेन मोहितचित्तवृत्तौ च ) नित्योल्लसद्रजसि ( सदास्फुरत्परागे, नित्यप्रकाशमानरजोगुणे च ) यत्र सारसत्वं ( कमलत्वं, सारभूतः सत्त्वगुणश्च ) विराजति इदं प्रधानं ( मुख्यं, सत्त्वरजस्तमोरूपगुणसाम्यावस्थात्मकसांख्योक्तप्रकृतिरूपं च ) ते स्थानं, तस्मात् महदादितत्त्वं ( महत् आदितत्त्वं नारायणस्वरूपं परमहत्तत्वात्, बुद्ध्यहंकारादितत्त्वं प्रकृतिकार्यं च, सांख्यानां सत्कार्यवादित्वात् ) अत्र रमते इत्युचितमेवेत्याह ।

महदहङ्कारपञ्चभूतादीनि सत्त्वानि सन्तीति यावत् । तज्जत्वात् । पक्षे महत् आदिसर्वकारणं तत्त्वं परमेश्वरो हरिः रमते, अन्यथा त्वां कमलमपि यद्वोभयमपि कथं स्वकरे कुर्यादिति । वसन्ततिलकावृत्तम् ॥ २७ ॥

सिंहासनस्थितिजुषस्तव वासयोग्यं
नित्यं भवेयमिति निश्चयमेत्य नूनम् ।
केसर्यभूत् सरसिजं नरसिंहकान्ते
तद्वेषमेष तनुते तत एव पद्मः ॥ २८ ॥

सिंहासनेति । हे नरसिंहकान्ते ! सिंहासने, नृपासनं तु यद्भद्राऽऽसनं सिंहासनमित्यमरः । तस्मिन् स्थितिजुषस्तव वासयोग्यमहं नित्यं भवेयम् इति निश्चयमेत्य प्राप्य सरसिजं केसराः किञ्जल्का अस्मिन् सन्ति तत्, केसरी सिंहश्चाऽभूत् । हर्यक्षः केसरी हरिरित्यमरः । तत एवैष पद्मः इभः । अत्र प्रमाणमग्रे द्वात्रिंशत्पद्ये लिख्यते । तस्य पद्मस्य द्वेषं तनुते । वसन्ततिलकावृत्तम् ॥ २८ ॥

---

२८ हे नरहरिप्रिये ! अहं सिंहासनस्थितायास्तव वासयोग्यं स्यामिति निश्चित्यैव सरसिजं केसरि (किञ्जल्कसहितं सिंहरूपं च) अभूत्तत एव पद्मः (गजः[१]) तद्वेषं तनुते इति सिंहासनस्थायास्तव वासयोग्यं स्थानं स्यामिति निर्धार्यैव पद्मं केसरितामापन्नमत एव सिंहरूपस्य तस्य गजः शत्रुतामाचरतीत्युत्प्रेक्षमाणाः सकिञ्जल्कं पद्मं ते योग्यं निवासस्थानमित्याह ।

१ पद्मो ऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरे ऽम्बुजे । ना नागे इति मेदिनी ।

अब्जं विधौ द्विषति देव्यमृतैकवृत्ति
कामेन हन्त यदनीयत मार्गणत्वम् ।
तस्य त्वतो ऽम्बरमणिस्फुटवस्ववाप्ति-
रुल्लासहेतुरभवत्तत्र सन्निधानात् ॥ २९ ॥

अब्जमिति । हे देवि ! अमृतेन पीयूषेणोदकेन चैका वृत्तिर्यस्य तत् । अब्जं विधौ सुधांशौ दैवे च विद्विषति सति, हन्तेति खेदे । कामेन मदनेनेच्छया मार्गणत्वं, मार्गणो याचके शरे इति कोशः । अनीयत तस्याऽब्जस्य उल्लासस्य हर्षस्य हेतुः कारणभूता अम्बरमणेः रवेः स्फुटा वसूनां किरणानां, पक्षे वस्त्ररत्नस्फुटद्रव्यादेश्चाऽवाप्तिः तव सन्निधानात्त्वतः अभूत् । वसन्ततिलकावृ० ॥ २९ ॥

उत्फुल्लवारिरुहतल्लजकेलिगेहे
सर्वेश्वरस्य दयितां शयितां ननु त्वाम् ।
वैतालिका इव गृहीतसुजातगीताः
प्रातः शनैर्मधुकराः प्रतिबोधयन्ति ॥ ३० ॥

उत्फुल्लेति । उत्फुल्लं प्रशस्तं यद्वारिरुहं वारिरुहतल्लजम् ।

---

२९ हे देवि ! अमृतैकवृत्ति ( जलमात्रस्थिति, मुमुक्षु च ) यदब्जं विधौ ( चन्द्रे, दैवे च ) द्विषति ( प्रतिकूले सति ) कामेन मार्गणत्वं ( बाणत्वं, याचकत्वं च ) अनीयत, तस्याऽब्जस्य तव सांनिध्यात् अम्बरमणिस्फुटवस्ववाप्तिः ( अम्बरमणेः सूर्यस्य स्फुटानां वसूनां किरणानामवाप्तिः, अम्बराणां वस्त्राणां मणीनां स्फुटं वसुनो द्रव्यस्याऽवाप्तिश्च ) उल्लासहेतुः ( विकासकारणम्, आनन्दकारणं च ) त्वत एवाऽभवदिति श्लेषेणाह ।

३० विकसितजलजोत्तमक्रीडामन्दिरे सुप्तां जगदीश्वरपत्नीं त्वां समारब्धसुन्दरगीता भ्रमराः प्रातर्मागधा इव बोधयन्तीत्याह ।

प्रशंसावचनैश्चेति समासः । प्रकाण्डमुद्धतल्लजाविस्यमरः । त-देव केलिगेहं तस्मिन् शयिताय । शीङ् स्वप्ने इत्यस्मान्निष्ठायां निष्ठाशीङ्स्विदिमिदिक्ष्विदिधृष इति किद्वद्भावनिषेधः । वि-श्वेश्वरस्य दयितां त्वां, ननु वितर्के, गृहीतं सुजातं सुन्दरं गीतं यैस्ते मधुकराः । वैतालिका बोधकरा इत्यमरः । त इव बो-धयन्ति जागृतां कुर्वन्ति । उपमालङ्कारः । वसन्ततिलका० ॥ ३० ॥

सहंसकासारबहूर्मिकोज्ज्वला
पयोजराजिः प्रतिपन्नकर्णिका ।
सहस्रवस्त्वाप्तित एधते रमे
श्रियः श्रयन्ते ह्यखिलास्त्वदाश्रयम् ॥ ३१ ॥

सहंसेति । हे रमे । सहंसस्य समरालस्य कासारस्य सर-स्याः बहुभिरूर्मिकाभिर्लहरीभिः, पक्षे, हंसकः पादकटक इ-त्यमरः । तेन सहिता साराभिः श्रेष्ठाभिः बहुभिः अङ्गुलीय-कमूर्मिकेत्यमरः । ताभिश्चोज्ज्वला । तथा प्रतिपन्ना एकत्र क-र्णिका ऽन्यत्र 'तानवड' इति लोके । कर्णिका तालपत्रं स्यादित्य-मरः । यस्याः सा पयोजानां पङ्क्तिः सहस्रवसोः सूर्यस्य सह-स्रस्य च प्राप्तितः लाभात् एधते दीप्यते । अखिलाः सर्वाः

---

३१ हे रमे ! सहंसकासारबहूर्मिकोज्ज्वला ( सहंसाः सम-राला ये कासाराः सरांसि तत्सम्बन्धिभिर्बह्वीभिरूर्मिकाभिस्तरङ्गैरु-ज्ज्वला, सहंसका पादकटकसहिता सारभूताभिर्बह्वीभिरूर्मिकाभि-रङ्गुलीयकैरुज्ज्वला च ) प्रतिपन्नकर्णिका ( सकर्णिका, सतालपत्रा च ) कमलपङ्क्तिः सहस्रवस्वाप्तितः ( सूर्यकिरणसम्बन्धात्, सह-स्रसंख्यधनलाभाच्च ) एधते ( विकासेन वृद्धिं प्राप्नोति, सोदयो भवति च ) इति अखिलाः सम्पदस्तवाश्रयमाश्रयन्ते इत्युक्त्या सम-र्थयन्नाह ।

श्रियः त्वदाश्रयं श्रयन्ते । अर्थान्तरन्यासश्लेषालङ्कारौ । वंशस्थं वृत्तम् ॥ ३१ ॥

स ते निवासः शयनीकृतो वा
नाथेन नित्यं नयनीकृतो वा ।
फणैः सहस्रेण वृतो दलैर्वा
शेते बिले वा कमले कुशे वा ॥ ३२ ॥

स इति । हे कमले ! कस्ते निवास ? इति पृष्टे यो वा सहस्रेण फणैर्वृतो, यो वा बिले शेते, यो वा ते नाथेन हरिणा शयनीकृतः मञ्चीकृतः, किं च यो वा जले शेते, यो वा ते नाथेन नयनीकृतः, तदुभयरूपः पद्मः(?) पन्नग' पङ्कजं च ते निवास इत्युत्तरं रमणाऽवस्थानमित्यर्थः । पद्मो ऽस्त्री पद्मके व्यूहनिधिसङ्ख्यान्तरे ऽम्बुजे । ना नागे स्त्री फञ्जिका श्रीचारटीपन्नगेषु चेति मेदिनी । नूनमित्युत्प्रेक्षालङ्कारः । इयं द्विःसमस्तबहिर्लापिकाजातिः । तल्लक्षणं विदग्धमुखमण्डने—

"एकश्रुत्या वचो यत्र भिन्नार्थप्रतिपादकम् ।
प्रभेदं द्विःसमस्तस्य तमेकालापकं विदुः" ॥ इति ।

उपेन्द्रवज्रावृत्तम् ॥ ३२ ॥

---

३२ हे कमले ! नाथेन ( हरिणा ) शयनीकृतः (शेषशायित्वात्) अथ वा तेन नेत्रीकृतः (पुष्कराक्षत्वात् ) फणासहस्रवृतो वा, पर्णसहस्रेण वृतो वा, बिले वा, कुशे वा, (जले वा) यः शेते स ते कमलरूपः शेषरूपो वा निवास इत्याह ।

श्रीसूक्तं ते जननि नलिनं स्थानमाख्याति मुख्यं
दृष्टान्तं त्वत्प्रियतमदृशोरन्तरादित्यविद्या ।
जन्मस्थानं तव तनुभुवो धातुराथर्वणादि
त्वत्सान्निध्यात्क च न भवति श्रीरनिम्ना महिम्नाम् ॥ ३३ ॥

श्रीरिति । हे जननि ! ते मुख्यं स्थानं नलिनमिति 'पद्मे स्थितां पद्मवर्णा'मित्यादिश्रीसूक्तमाख्याति कथयति । तव प्रियतमस्य दृशोर्दृष्टान्तं 'यो ऽयमन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णमयस्तस्य यथा कप्यासं पुण्डरीकं नयन'मिति अन्तरादित्यविद्या आख्याति । पुनस्तव तनुभुवो धातुर्ब्रह्मणः जन्मस्थानमिति 'आपो वा इदमासन् सलिलमेव स प्रजापतिरेकः पुष्करपर्णे समभव'दिति आथर्वणीयनृसिंहतापनीये इयमाथर्वणादि आख्याति । अतः हे श्रीः ! त्वत्सान्निध्यात्क चन स्थले महिम्नाम् अनिम्ना बाहुल्यं(?) न भवत्यपि तु भवति । उल्लासालङ्कारः । मन्दाक्रान्तावृत्तम् ॥ ३३ ॥

शैवालकान्तरगतं तव सद्म विद्मः
सारङ्गलाञ्छितवपुर्मिलिताऽमृतौघम् ।

---

३३ हे जननि ! लक्ष्मीसूक्तं कर्तृ ते प्रधानं स्थानं नलिनं कथयति, आदित्यविद्या च त्वत्प्रियतमनेत्रयोरन्तर्मध्यं पुण्डरीकरूपतया तदनुहरणं कथयति, अथर्ववेदादिकं च त्वत्पुत्रस्य ब्रह्मणो जन्मस्थानं तस्य कमलोद्भवत्वात् कथयति, तत् तव सान्निध्यात् क च(कुत्र) महिम्ना श्रीः ( अनिम्ना न निम्ना उत्तानेति यावत् ) न भवति?इति त्वत्सान्निध्यात् सर्वत्रास्तानां श्रीर्भवतीत्यर्थः ।

३४ हे मातः ! शैवालकान्तरगतं ( शैवालकस्य जलनील्याः, शैवा-

पूष्णा च दत्तरुचि पुंसि नपुंसके च
ख्यातस्य मातरिदमब्जपदस्य वाच्यम् ॥ ३४ ॥

शैवालेति । हे मातः ! पुंसि नपुंसके च ख्यातस्य अब्जपदस्य वाच्यमभिधेयभूतं चन्द्रो वा कमलं वा तव स्थानमिति विद्मः । वयमिति शेषः । तत्र हेतवः—पुंसि शिवस्याऽयं शैवः यो ऽलकः केशः, नपुंसके शैवालं जलनीली तस्यान्तरे गतं, तथा । सारङ्गः पशुपक्षिणोरित्यमरः । ताभ्यां मृगहंसाभ्यां लाञ्छितं वपुर्यस्य सः तच्च, पुनर्मिलितः अमृतस्योदकस्य चौघो यस्मिन् स तच्च । पुंसि पूष्णा दत्ता रुचिः कान्तिर्यस्य, 'आदित्येन चन्द्रमा भातीति' श्रुतिः । 'आदित्याद्वै चन्द्रमा जायते इत्यपि श्रुतिः' । अयं विस्तर अस्मत्कृतचम्पूभारतटीकायां चतुर्थस्तबकद्वादशपद्ये द्रष्टव्यः । नपुंसके सूर्यकरैः कमलस्य विकासवत्त्वं प्रसिद्धमिति । वसन्ततिलकावृत्तम् ॥ ३४ ॥

कान्तः पदत्रयमितस्थलयाचकस्ते
त्वं त्वम्ब षट्पदमिते निलये निविष्टा ।

---

नां शिवसम्बन्धिनामलकानां जटाजूटस्य च ) अन्तरं मध्यं गतं, सारङ्गलाञ्छितं ( हंसचिन्हितदेहं, हरिणाऽङ्कितशरीरं च ) मिलिताऽमृतौघं ( जलसंयुक्तं, सुधापूर्णं च ) पूष्णा ( सूर्येण ) दत्तरुचि ( दत्तविकासं, वर्द्धिततेजश्च ) इदं तव गृहं पुल्लिङ्गे नपुंसकलिङ्गे च ख्यातस्य अब्जपदस्य ( नपुंसकलिङ्गे अब्जमिति कमलवाचकतया प्रसिद्धस्याऽब्जशब्दस्य, पुंसि अब्ज इति चन्द्रवाचकत्वेन प्रसिद्धस्याऽब्जशब्दस्य ) वाच्यमभिधेयं (कमलरूपं चन्द्ररूपं च) जानीम इति श्लेषेण कमलचन्द्रयोः सादृश्यं प्रदर्श्य तदुभयं तव निवासस्थानभूतं जानीम इत्याह ।

३५ तव प्रियो हरिः पदत्रयमितस्थलयाचकः ( त्रिविष्टपयाचकः,

स्थानान्यथाऽपि विपुलानि समाश्रितानां
चित्रं युवां कलयथश्चिरमुच्छ्रितानि ॥ ३५ ॥

कान्त इति । हे ऽम्ब ! ते कान्तः पादत्रयमितस्य स्थलस्य याचकः, त्वं तु षट्पदैर्भ्रमरैश्च मिते निलये कमलरूपे निविष्टा ऽभिनिविष्टा चेति युवाम् आश्रितानां विपुलान्युच्छ्रितानि च स्थानानि कलयथ दत्थ इति चित्रम् । वसन्ततिलकावृत्तम् ॥ ३५ ॥

त्वत्पादपङ्कजरजःकणधन्यधन्ये-
ष्वम्भोरुहेषु वसतामलिपोतकानाम् ।
वर्गेषु हन्त जननं बलशासनाऽऽद्या
वाञ्छन्ति किं पुनरमी वयमब्धिकन्ये ॥ ३६ ॥

त्वदिति । हे ऽब्धिकन्ये ! त्वत्पादपङ्कजरजःकणेन धनं लब्धा धन्यः । धनगणं लब्धेति यत् । तेषु धन्येषु ये धन्याः

---

पदत्रयपरिमितस्थानस्य याचकश्च ) त्वं च षट्पदमिते निलये ( भ्रमरपूर्णे गृहे कमलरूपे, पादषट्कपरिमिते गृहे च) निविष्टा, अथापि युवां निजाश्रितानां विपुलानि उच्छ्रितानि स्थानानि दत्थ इति चित्रमिति पदत्रयपरिमितस्थानयाचकस्ते पतिः षट्पदपरिमितस्थलवासिनी त्वं, तथापि युवामाश्रितानां विशालान्युच्छ्रितानि दत्थ इत्याश्चर्यमिति वदन् त्रिलोकीपतिस्ते स्वामी कमलवासिनी त्वं च भक्तानामूर्ध्वगविशालपदानि दत्थ इत्याह ।

३६ हे अब्धिकन्ये ! त्वच्चरणाऽब्जधूलिधन्यतमेषु कमलेषु निवसतां भ्रमरशिशूनां समूहेषु इन्द्राद्या देवा अपि जन्म वाञ्छन्ति, अमी दीना मर्त्या वाञ्छामश्चेत् किमाश्चर्यमित्याह ।

तेष्वम्भोरुहेषु वसताम् अलिपोतकानां भृङ्गशिशूनां वर्गेषु हन्त हर्षे, बलशासन इन्द्रः आद्यः येषां ते देवा इति यावत् । जननं वाञ्छन्ति, तत्र पुनरमी वयं किं, का कथेति लौकिको ऽर्थः । वसन्ततिलकावृत्तम् ॥ ३६ ॥

सरोगमुपसेविते ऽप्यहह पूर्णचन्द्रोदये
ज्वरोपहृतमम्बुजं तव परिग्रहादिन्दिरे ।
विकासयति विज्वरं विरचयन्नसौ भास्करो
रवेररुजमाप्नुयादिति न पूर्वभाषा मृषा ॥ ३७ ॥

सरोगेति । हे इन्दिरे ! सरोगम् अम्बुजं सरः गच्छति रोगयुक्तं च पूर्णचन्द्रस्य षोडशकलात्मकस्योदये ऽन्यत्र पूर्णचन्द्रोदयाऽभिधे रसाऽऽयने सेविते ऽपि हन्त ज्वरेण सन्तापेनान्यत्र तत्संज्ञकरोगेण उपहृतं नष्टं तव परिग्रहात्स्वीकारात् विगतः ज्वरः चन्द्रकरसन्तापः पक्षे रोगश्च यस्य तं विरचयन् कुर्वन् असौ भास्करः विकासयति प्रफुल्लयति, अतः रवेः सकाशादरुजमारोग्यम् इच्छेत् इति पूर्वभाषा प्राचीनशिष्टवाक्यं न मृषा न मिथ्येति । अस्मिन्प्रमाणाऽलङ्कारे प्रमाणं यत्नस्तबके द्रष्टव्यम् । पृथ्वीवृत्तम् ॥ ३७ ॥

---

३७हे इन्दिरे ! सरोगं (सरोवरगतं, रोगसहितं च) पूर्णचन्द्रोदये ( पूर्णस्य चन्द्रस्योदये, पूर्णचन्द्रोदयाख्यरसविशेषे च ) सेविते ऽपि ज्वरोपहतं ( सतापं, ज्वररोगविकृतं च ) अम्बुजं ( कमलं, व्यङ्ग्यं रोगिणं च ) तव स्वीकारात् असौ भास्करः ( सूर्यः, कश्चन वैद्यश्च व्यङ्ग्यः ) विज्वरं ( विगततापम्, अपगतज्वरविकारं च ) विरचयन् विकासयति ( विकसितं करोति, पोषयति च ) इति हेतोः 'रवेरारोग्यमाप्नुयात्' ( 'आरोग्यं भास्करादिच्छेत्') इति पूर्वजनानां भाषा ( वाक् ) असत्या न भवतीत्याह ।

कल्याणधर्मा कमलासनाया
मूर्तिं हि यस्ते मतिमानुपास्ते ।
कन्ये सुधाब्धेः कमलाऽऽसनत्वं
तस्योचितं तत्क्रतुनीतिभूम्ना ॥ ३८ ॥

कल्याणेति । हे सुधाब्धेः कन्ये ! कल्याणः धर्मो यस्य सः यः पुमान् । धर्मादनिच् केवलादित्यनिच्प्रत्ययः । कमलाऽऽसनायास्ते मूर्तिमुपास्ते तस्य स चाऽसौ क्रतुश्च संकल्पश्च तस्य नीतेर्भूम्ना बाहुल्येन कमलासनत्वं ब्रह्मत्वमुचितमित्यर्थः । अत्र प्रमाणमत्रैव मङ्गलस्तबके ऽन्तिमपद्यटीकायां द्रष्टव्यम् । इन्द्रवज्रावृत्तम् ॥ ३८ ॥

विच्छिन्नमब्दशतकव्यवधानतो य-
त्सन्दर्शनं सहभुवः शशिनः कदा चित् ।
तत्पद्मवासिनि तदीक्षणवर्जनाय
तस्योदयेषु निजसद्म किमावृणोषि ॥ ३९ ॥

विच्छिन्नेति । हे पद्मवासिनि ! यद्यस्मात्सहभुवो बन्धोः

---

३८ हे ऽमृताऽब्धिसुते ! कल्याणधर्मा ( अधिकतरपुण्यसंभारः ) यो बुद्धिमान् कमलासनायास्ते मूर्तिमुपास्ते तस्य 'देवो भूत्वा देवं यजेते'ति तत्क्रतुन्यायमाहात्म्येन कमलासनत्वं ( ब्रह्मत्वं ) समुचितमेवेति कमलासनायास्तवोपासनेन कमलासनपदप्राप्तिरुचिता भवतीत्याह ।

३९ हे पद्मवासिनि ! अब्दशतकव्यवधानतः (मेघशतव्यवधानात्, संवत्सरशतकव्यवधानाच्च)सोदरस्य शशिनो दर्शनं कदा चिद्विच्छिन्नं, तस्मात् कारणात् तद्वीक्षणवर्जनाय ( चिरान्तरितदर्शनस्य चन्द्रस्य दर्शनवर्जनाय, भ्रातृभगिन्योर्विच्छिन्नदर्शनयोर्द्वादशाब्दोत्तरं पुनर्दर्शनप्रतिषेधात् ) तस्य ( चन्द्रस्य ) उदयावसरे निजसद्म ( स्वगृहं कमलम् ) पिदधासि किमित्युत्प्रेक्षते ।

शशिनो ऽब्दशतकस्य वर्षपूगस्य मेघपटलस्य च व्यवधानतः दर्शनं विच्छिन्नं नष्टं, तत्तस्मात्तस्य चन्द्रस्येक्षणस्य वर्जनाय परिहाराय सद्मरूपं पद्मम् आवृणोषि आच्छादयसि किम् ? अत्र प्रमाणं ज्योतिर्निबन्धे—

"पुत्रिकापितरौ चैव भगिनीभ्रातरौ तथा।
द्वादशाऽब्दे व्यतीते तु दूरदेशान्तरे गते।
एतेषामेकमेको ऽपि नाऽन्योन्यमवलोकयेत्" ॥ इति।

उत्प्रेक्षालङ्कारश्च। वसन्ततिलकावृत्तम् ॥ ३९ ॥

वारिजवनस्य भाग्यं वर्णयितुं नैव वयममी शक्ताः।
कमले तव स्थितौ यद्विकल्पितं वक्षसा समं विष्णोः ॥४०॥

इति श्रीमद्वेङ्कटाऽध्वरिविरचिते लक्ष्मीसहस्रे सद्म-
वैभवस्तबको ऽष्टादशः पूर्णः ॥ १८ ॥

वारिजेति। हे कमले ! तव स्थितौ सत्यां यत्कमलं वि-

---

४० हे कमले ! वयं कमलवनस्य भाग्यं वर्णयितुं नैव शक्ताः, यतो हि तत् वारिजवनं तव स्थितौ विष्णोर्वक्षःस्थलेन विकल्पितं ( लक्ष्मीनिवासत्वेन तुल्यमाहात्म्यं कथितम् ) इति लक्ष्मीनिवासस्य हरेरुरसो भाग्यं वर्णयितुं यथा वयमशक्तास्तथैव लक्ष्मीनिवासिरूपं कमलवनभाग्यमपि वर्णयितुं वयमशक्ता इत्याह।

इति श्रीमानवल्ल्युपाह्वतलङ्करामशास्त्रिविरचितायां लक्ष्मी-
सहस्राऽवतरणिःश्रेणिकायां सद्मवैभव-
स्तबकः ॥ १८ ॥

---

ष्णोर्वक्षसा उरसा समं विकल्पितं तस्य वारिजवनस्य कमला-
रण्यस्य भाग्यं वर्णयितुं वयममी नैव शक्ताः। उभयत्राऽपि लक्ष्मी-
वासत्वेन समत्वान्न समर्था इति भावः। गीतिवृत्तम् ॥ ४० ॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डि-
तेन विरचितायां बालबोधिन्याख्यायां श्रील-
क्ष्मीसहस्रटीकायां सम्रवैभवस्तवको ऽष्टा-
दशः सम्पूर्णो ऽभवत् ॥ १८ ॥





अथाऽभीतिस्तबकः ॥ १९ ॥

भयाऽऽर्तसर्वभूतेभ्यो ऽभीतिं दत्वा हुताशनात् ।
आविर्भूतां प्राप सीतां स रामः श्रेयसे ऽस्तु नः ॥१९॥

अथाऽस्मिन्नेकोनविंशतिस्तबके श्रीमहालक्ष्म्या अभयप्रदानस्वभावं वर्णयितुं प्रथमपद्ये अभयमिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

अभयं भयमित्येतदुभयं सर्वदेहिनाम् ।
यत्सेवातदभावाभ्यां तामहं श्रियमाश्रये ॥ १ ॥

अभयमिति । सेवा शुश्रूषा च तस्या अभावश्च सेवातदभावौ यस्या लक्ष्म्याः सेवातदभावाभ्याम् अभयं भयं चेत्येतदुभयं सर्वदेहिनां भवति इति यथा सङ्ख्यमलङ्कारः । तां श्रियमहमाश्रये भजामीति । युग्मविपुलावृत्तम् ॥ १ ॥

भजामि तां त्वां भयरोगभीतिं
पयोधिकन्ये परिहर्तुकामः ।
वह्नेर्भयं वायुभुवो ययैव
न्यवारि तस्माच्च निशाचरीणाम् ॥ २ ॥

भजामीति । हे पयोधिकन्ये ! यया वायुभुवः मारुतेर्वह्नेः

१ अथोनविंशेनाऽभीतिस्तबकेन भगवत्या अभयदानशीलतां वर्णयितुमिच्छुरादौ यस्याः सेवातदभावाभ्यां निखिलप्राणिनाम् अभयभये भवतस्तां श्रियमाश्रये इति मङ्गलमाचरति ।

२ हे पयोधिकन्ये ! संसाररोगभयं त्यक्तुकामो ऽहं त्वां भजामि, यथा मारुतेरग्निभयं न्यवार्यत, निशाचरीणां मारुतेर्भयं च न्यवार्यतेति भयनाशनशीलां त्वां भवभीतिनाशायाऽऽश्रये इत्याह ।

सकाशाद्भयं तस्मान्मारुतेः सकाशान्निशाचरीणां राक्षसीनां च भयं न्यवारि तां त्वां भवरोगभीति परिहर्तुकामः अहं भजामि । तुल्ययोगितालङ्कारः । उपजातिवृत्तम् ॥ २ ॥

प्रह्लादस्य भयं विनेतुमचिरादेकस्य शोकस्पृशो
लोकस्यैव भयङ्करं तव पतिर्जग्राह सैंहं वपुः ।
त्रैलोक्याऽम्ब तदीयकोपदहनज्वालास्तु वेलाऽतिगा-
श्चाटूक्तैरमृतैर्निवार्य भवती चक्रे जगन्निर्भयम् ॥ ३ ॥

प्रह्लादेति । हे त्रैलोक्याऽम्ब ! शोकस्पृशः खेदकारिण एकस्य प्रह्लादस्य भयम् अचिराच्छीघ्रं विनेतुं तव पतिर्हरिः लोकस्य भयङ्करं सैंहं सिंहसम्बन्धेन वपुर्जग्राह स्वीचकार, भवती तु वेलाऽतिगा अमर्यादास्तदीयकोप एव दहनज्वालाश्चाटूक्तैः प्रियवाग्रूपैरमृतैः पीयूषैस्तोयैश्च निवार्य जगत् निर्भयं चक्रे ऽकरोत् । विषादनरूपकश्लेषाऽलङ्काराः । शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

अशरणजनक्लेशाऽऽलोकक्षणोपनतोन्नतेः
स तव हृदयग्लानेर्भीतो जगत्पतिरिन्दिरे ।

---

३ हे त्रिलोकीमातः ! तव पतिर्हरिः दुःखितस्य प्रह्लादस्य हिरण्यकशिपुतस्य भयं दूरीकर्तुं सकललोकभयङ्करीं सैंहीं तनुं धृतवान्, तदा त्वया निर्मर्यादास्तदीयक्रोधाऽनलज्वाला अमृतकल्पैश्चाटुवचनैः शमयित्वा जगद्भयहीनमकारीति एकभयहरणाय सकललोकभयङ्करनृसिंहमूर्तिधारिणस्ते पत्युरपेक्षया निजवचनैस्तत्कोपशमनपूर्वकं जगदभयदानमाचरन्त्यास्तव को ऽपि महिमा स्तुत्यतर इत्याह ।

४ हे इन्दिरे ! अनाथजनदुःखदर्शनक्षणे प्रवोदितायास्त्वदीयहृदयग्लानेर्भीतो जगत्पतिर्हरिस्तैरपाचरितमपराधशतमपि मर्षयन्

अहह विहिते क्षाम्यन्नागःसहस्रमजस्रम-
प्यभयमुभयोरारात्तेभ्यः प्रयच्छति लोकयोः ॥ ४ ॥

अशरणेति । हे इन्दिरे ! अशरणानां जनानां क्लेशानां दुःखानामवलोकेन क्षणाय उपनता यद्वा ऽऽलोकसमये एवोपनता उद्गतिरुदयो यस्यास्तस्यास्तव हृदयग्लानेर्भीतः जगत्पतिर्विष्णुः, अहहेत्यद्भुते, ऽजस्रं सततं विहितम आगःसहस्रं, बह्वपराधानित्यर्थः । क्षाम्यन्मृष्यन्सन् तेभ्यो जनेभ्य आराच्छीघ्रम उभयोः स्वर्गमृत्युलोकयोः अभयं प्रयच्छति ददाति । हरिणीवृत्तम् ॥ ४ ॥

मुक्तस्त्वया मुह्यति साध्वसं गतः
सर्वाम्ब युक्तं खलु साध्वसङ्गतः ।
यस्त्वामुपासीत भया ऽतिचञ्चलां
चित्रं स धन्यो न भयाऽतिचञ्चलः ॥ ५ ॥

मुक्त इति । हे सर्वाऽम्ब ! त्वया मुक्तः पुमान् साध्वसं भी-

---

सन् क्षाम्यति तेभ्यो ऽनागेभ्यो ऽजस्रमिहाऽमुत्राऽभयं प्रयच्छतीति भीतो ऽभीतिं प्रच्छतीति वैचित्र्यप्रदर्शनपूर्वकं हरेर्भगवत्याश्छन्दानुवर्तनाऽतिशयं प्रतिपादयन्नाह ।

५ हे सर्वाम्ब ! साध्वसङ्गतः ( साधूनाम असङ्गतः ) हतास्त्वया परित्यक्तः पुमान् साध्वसं गतः ( भीतिं प्राप्तः सन् ) मुह्यतीति साध्वसङ्गतः साध्वसङ्गतस्यैव युक्तरूपमेवैतत्, परं तु यः भयाऽतिचञ्चला (भया कान्त्या ऽतिक्रान्तविद्युतं ) त्वामुपासीत धन्यः स भयाऽतिचञ्चलः ( भीत्या ऽत्यन्तचपलचित्तः ) न भवतीति भयाऽतिचञ्चलायास्तवोपासको भयाऽतिचञ्चलो न भवतीति चित्रमिति वदन् विद्युत्सवर्णायास्तवोऽपासकः कदापि भयाऽऽकुलो न भवतीत्याह ।

र्ति गतः सन्मुह्यति भ्राम्यतीति युक्तम् । कुतः ? स खलु साध्वसङ्गतः साधुषु असङ्गतः स साध्वसं गत एव, ततः भया कान्त्या ऽतिक्रान्ता चञ्चला विद्युद्यया तां यः पुमानुपासीत स धन्यः भयेन भवादिभीत्या अतिचञ्चलः न भवतीति द्वितीयाऽर्थे नञा विरोधद्योतकं चित्रम् । समविरोधाऽऽभासालङ्कारौ । इन्द्रवज्रावृत्तम् ॥ ५ ॥

वन्देत मन्देतरनित्यबोध-
नन्दे मुकुन्देष्टपुरन्ध्रि यस्त्वाम् ।
अत्रासमत्राऽऽसनमेति सैंहं
चित्राममुत्राऽपि स याति ऋद्धिम् ॥ ६ ॥

वन्दे इति । हे मन्देतरः अनल्पः बहुरिति यावत् । यो बोधो ज्ञानं तेन नन्दति तत्सम्बुद्धौ, हे मुकुन्दस्य भगवतः इष्टपुरन्ध्रि इष्टनायिके ! यो नरस्त्वां वन्देत नमस्कुर्यात् सो ऽत्र इह लोके अत्रासं निर्भयं सिंहस्येदं सैंहम् आसनं सिंहासनमित्यर्थः, राज्यमिति यावत् । एति प्राप्नोति, अमुत्राऽपि परलोके ऽपि चित्रां विचित्रां, वागगोचरामिति यावत् । ऋद्धिं याति प्राप्नोतीत्यर्थः । इन्द्रवज्रावृत्तम् ॥ ६ ॥

---

६ हे अमन्दाऽक्षयज्ञानाऽऽनन्दपूर्णे ! मुकुन्दप्रियपत्नि ! यस्त्वां नमस्कुर्यात् सो ऽत्र लोके निर्भयं सिंहासनं ( राजासनम् ) अमुत्रापि अद्भुतां समृद्धिं प्राप्नोतीति त्वत्प्रणामशीलः पुमानिह राजा भूत्वा परलोके ऽपि महावैभवशाली भवतीत्याह ।

कारागारादपि किल भृशं तापदे पापदेहे
हन्ताऽहन्तामतिमतिविपन्मिश्रितामाश्रितानाम् ।
पारावाराऽधिपतितनये मादृशामीदृशानां
हित्वा हि त्वा त्रिजगति गतिर्नेतरा कातराणाम् ॥७॥

कारागारादिति । हे पारावाराऽधिपतितनये । कारायाः अगारादपि । कारा स्याद्बन्धनाऽऽलये इत्यमरः । हन्त खेदे । किल तापदे पापरूपे देहे अतिमतिर्बुद्ध्यधिका या विपत्तया मिश्रिताम् अहन्तामहङ्कारम् आश्रितानाम् । इयं विधा प्रकारो येषां ते ईदृशास्तेषाम् । इदं किमोरीश् की । मादृशानां मत्सदृशानाम् । आ सर्वनाम्न इत्याकारादेशः । कातराणां भीतानां, हि निश्चये, त्वा त्वां हित्वा त्रिजगति लोकत्रये इतरा गतिर्नास्ति । मन्दाक्रान्तावृत्तम् ॥ ७ ॥

भावी यस्मिन् भगवति भवदृष्टिलेशः कृतार्थे
त्रासो ऽन्यासोपहतविपदस्तस्य न स्यात् कुतो ऽपि ।

---

७ हे पारावाराऽधिपतितनये ! बन्धनगृहादपि समधिकक्लेशदायिनि पापिष्ठे शरीरे विपद्भिर्युक्तामहन्तामभिमानम् ( आत्मत्वबुद्धिम् ) आश्रितानाम् ईदृशां कातराणाम् (अतिभीरूणाम् ) मादृशजनानां त्वा ( त्वाम् ) हित्वा त्रिलोकेऽपि गतिर्नास्ति हीति निश्चयेनेत्यर्थः

८ हे भगवति ! यस्मिन् कृतार्थे जने भवत्या अवलोकनलेशोऽग्रे भावी अन्यासोपहतविपदः ( अन्येषां भीतिप्रदानाम् आसेन निरासेन उपहता विपदो येन तस्य ) कस्माच्चिदपि भयं न स्यादित्यत्र विषये सुरसा ( नागमाता हनुमद्विघ्नकारिणी ). सिंहिका ( छायाग्राहिणी समुद्रस्था ग्राहिणी ) तत्प्रदेशेभीतो लङ्कापुरेऽप्यप्रतिहतगतिर्हनूमान् प्रमाणमिति त्वद्दर्शनात् पूर्वमेव सुरसासिंहिकादीन्निरस्य निरा-

अस्मिन्नर्थे जननि सुरसासिंहिकादेरभीतो
लङ्कायामप्यविहतगती रामदासः प्रमाणम् ॥ ८ ॥

भावीति । हे भगवति ! यस्मिन् कृतार्थे पुंसि भवत्या दृष्टेर्लेशः भावी भविता न्यासेन त्वत्पूजार्थकृतपादक्षेपेन(?) निपूर्वादस्युक्षेपणे अस्माद्धञ् । उपहता विपद्यस्य तस्य त्रासः कुतो ऽपि न स्यात्, अस्मिन्नर्थे हे जननि ! सुरसा नागमाता सिंहिका मकरी तदादेः अभीतः सन् लङ्कायामपि अविहतगतिः रामदासो हनुमान्प्रमाणम् इति । काव्यलिङ्गमलङ्कारः । मन्दाक्रान्ता० ॥ ८ ॥

जनिमृतिजराभीष्माद्ग्रीष्माऽऽतपोग्रतराद्भवा-
ज्जननि न वयं वित्रस्यामस्त्वदङ्कमुपाश्रिताः ।
सति बलवदालम्बे स्याद्दुर्बलोप्यकुतोभय-
स्त्रसति मृगयोः किं वा पद्मे मृगो विधुमाश्रितः ॥९॥

जनीति । ग्रीष्मस्याऽऽतपादुष्णात् उग्रतरात् पुनः जनिश्च मृतिश्च जरा च ताभिर्भीष्माद्भयङ्कराद्भवात्संसारात्तवाङ्कम् उत्सङ्गम् उपाश्रिता वयं न वित्रस्यामस्त्रासं न प्राप्नुमः । तथा

---

पद्म लङ्कायां स्वैरगामी हनूमानिव भावित्वत्कटाक्षलाभो ऽपि पुरुषः सकलशत्रुनाशेनाऽऽपद्रहितः सन् कुतो ऽपि न भयं प्राप्नोतीत्याह ।

९ हे मातः ! जरामरणाभयङ्कराद् ग्रीष्मकालिकाऽऽतपादपि दारुणात् संसारात् तवोत्सङ्गमाश्रिता वयं न बिभीमः, यत बलिष्ठाश्रये सति बलहीनोऽपि निर्भयः स्यादिति चन्द्राऽऽश्रितो हरिणो व्याधाद् बिभेति किमित्युक्त्वा समर्थयन्नाह ।

हि-बलवति समर्थे आलम्बे ऽवलम्बे सति दुर्बलो हीनो ऽपि नास्ति कुतोभयं यस्य सः निर्भयः स्यात्। मयूरव्यंसकादिना साधुः। दृष्टान्तः-हे पद्मे! विधुम् आश्रितः मृगः हरिणः मृगयोः। व्याधो मृगवधाऽऽजीवी मृगयुरित्यमरः। त्रसति किम्? अपि तु नेत्यर्थः। विकस्वराऽलङ्कारः। हरिणीवृत्तम् ॥ ९ ॥

अनाघ्राताः श्रौताः स्मृतिभिरुपदिष्टाश्च कमले
समीचामाचारैरपि च विदिता धर्मनिचयाः।
कथङ्कारं घोरं निरयमतियायामिति भयं
जहामि स्मृत्वा ते जगदवनवात्सल्यजलधेः ॥ १० ॥

अनाघ्राता इति। हे कमले! श्रौताः श्रुत्युक्ताः स्मृतिभिः श्रुत्यर्थप्रतिपादिकाभिः उपदिष्टा आज्ञप्ताः अपि च समीचां श्रेष्ठानाम् आचारैराचरणैर्विदिता ज्ञाताः धर्माणां निचयाः सङ्घा अनाघ्राताः अनास्वादिता, तल्लेशो ऽपि न गृहीत इत्यर्थः। तथा ऽपि जगत् अवने रक्षणे वात्सल्यस्य कृपाया जलधेः समुद्रभूतां ते त्वां स्मृत्वा। अधीगर्थदयेशाङ्कर्मणीति कर्मणि षष्ठी। कथमिव कथङ्कारं, णमुलन्तमेतत्। घोरं भीमं निरयं नरकम् अतियायामतिक्रमणं कुर्याम्। या प्रापणे इत्यदादेर्लिङि शब्लुकि अदन्तत्वाऽभावादियादेशो न। इति भयं त्यजामि।

---

१० हे कमले! मया धर्ममूलश्रुतिस्मृतिसदाचाराऽनुशिष्टा धर्मसमूहा आघ्राता अपि न, सो ऽहं कथमिव नरकमतिगच्छेयमिति भीतिं वात्सल्यसागररूपां त्वां, स्मृत्वा उत्सृजामीति अनाचरितधर्मलेशस्य मम नरकभवनाशिका दयोदधिस्त्वमेवेत्याह।

कृपाजलधिस्त्वं स्वङ्कं कदाऽपि नाऽधः पातयसीति निर्भीको ऽस्मीति भावः। शिखरिणी० ॥ १० ॥

विवित्सामात्सर्यस्फुरणदुरहङ्कारकुहना-
पिशाचीभ्यो बिभ्यज्जगदभयदानैकनिरताम्।
नुतां भूतेशाद्यैरपगमितरक्षोगणमदां
प्रपद्ये दासस्त्वां परमपुरुषप्राणदयिते ॥ ११ ॥

विवित्सेति। हे परमपुरुषस्य प्राणदयिते! प्राणप्रिये! विवित्सा च लब्धुमिच्छा च मात्सर्यस्याऽन्यशुभद्वेषस्य स्फुरणं च दुरहङ्कारश्च कुहना दम्भाऽऽचरणं च ता एव पिशाच्यः ताभ्यः, कुहना दम्भचर्यायामिति विश्वः। बिभ्यद्भयं प्राप्नुवद्यज्जगत् तस्य अभयदाने निरतां तत्पराम्, एवं भूतेशाद्यैर्हरादिभिः नुतां स्तुतां, तथा ऽपगमितो निष्कासितः रक्षोगणमदः राक्षससमूहदर्पो यया तां त्वां लक्ष्मीं दासो ऽहं शरणं प्रपद्ये प्राप्तो ऽस्मीत्यर्थः। शिखरिणीवृत्तम् ॥ ११ ॥

जन्तोर्हन्त त्रिलोकीजननि तव समाराधनासाधनेषु
व्यापारेष्वाभिमुख्यत्यजनभजनयोर्भीत्यभीती भवेताम्।

---

११ हे पुरुषोत्तमप्राणप्रेयसि! विवित्सा(लिप्सा)द्वेषोद्रेक, दुष्टाऽहङ्कार, कपट, रूपपिशाचीभ्यो बिभ्यद्दासो ऽहं लोकाऽभयदानासक्तां शिवप्रभृतिभिः स्तुतामपनीतराक्षससङ्घदर्पां त्वामेव शरणं वृणे इत्याह।

१२ हे त्रिभुवनजननि! तवाऽर्चनसाधनभूतेषु व्यापारेषु प्रातिमुख्याभिमुख्ययोर्भयाऽभये भवेतामित्यत्र, वालिवधोत्तरम् आदौ रामणवधाऽनभिमुखं (भोगासक्ततया विस्मृतत्वदन्वेषणकार्यं) प-

सुग्रीवं वालिभङ्गे तदहितदमनाऽनुन्मुखं रामकोपाद्
भीतं पश्चात्तदास्थावहनगतभियं तत्र दृष्टान्तयामः॥१२॥

जन्तोरिति । हे त्रयाणां लोकानां समाहारस्त्रिलोकी । अकारान्तोत्तरपदो द्विगुस्त्रियामिति भाष्यकारेष्ट्या स्त्रीत्वं, द्विगोरिति ङीप् । तस्याः जननि ! मातः ! तव सम्यक् भक्तिपूर्वकं आराधनासु अर्चनासु साधनभूतेषु व्यापारेषु आभिमुख्यस्य सिद्धतायास्त्यजनं च भजनं च तयोः सतोः यथासङ्ख्यं यथाक्रमं भीत्यभीती भयाऽभये भवेतां स्यातां, तत्र विषये वालिभङ्गे वालिनाशे कृते सति तस्य रामस्याऽहितस्य रावणस्य वमे नाशे अनुन्मुखं पराङ्मुखं रामकोपाद्भीतं पश्चात्तस्य रामस्यास्थायाः सीताशुद्धिरूपाया वहनेन करणेन गतभयं निर्भीकं सुग्रीवं दृष्टान्तयाम उदाहरामः, वयमिति शेषः । यथासङ्ख्यकाव्यलिङ्गालङ्कारौ ज्ञेयौ । स्रग्धरावृत्तम् ॥ १२ ॥

रक्षःस्तोमोऽप्यखिलभयकृद् राघवप्राणकान्ते
त्रासोत्पत्त्यै न खलु भवति त्वत्पदाब्जाऽनुकूले ।
कष्टं मातस्तृणमपि भियै कल्पते त्वत्प्रतीपे
प्राच्ये साक्षी पवनतनयः पश्चिमे काक एकः ॥ १३ ॥

रक्ष इति । हे राघवस्य प्राणकान्ते ! तव पदाऽब्जयोः

---

आद्य रामचन्द्रक्रोधाद् भीतं तत्कार्याऽभिमुखं सुग्रीवं[illegible]हरणांकुमे इत्याह ।

१३ हे भगवति ! रामप्रेयसि ! निखिललोकभीतिदो राक्षससमूहोऽपि त्वच्चरणकमलाभिमुखे पुरुषे भयोत्पादनाय न कल्पते, त्वत्पराङ्मुखे तु तृणमपि भयदं भवतीत्यत्राद्ये त्वत्सेवको राक्षसेभ्योऽभीतो हनूमान्, अन्त्ये च पक्षे त्वदहितकर इषीकाऽस्त्राद् भीतो जयन्तः काकः साक्षिभूत इत्याह ।

अनुकूले पुरुषे अखिलानां जनानामित्यर्थः । भयकृद्रूपकारकः रक्षःस्तोमः यातुसमूहो ऽपि त्रासस्योत्पत्त्यै उत्पादनाय न भवति खलु । हे मातः ! तव प्रतीपे अननुकूले तृणमपि भिये कल्पते समर्थं भवति, कष्टम् । तथा हि—प्राच्ये अभये पवनतनयो हनूमान्, पश्चिमे भये काकः एकः इन्द्रपुत्रत्वात्प्रधानः साक्षीत्यर्थः । काव्यलिङ्गमलङ्कारः । मन्दाक्रान्तावृत्तम् ॥ १३ ॥

कान्तारे महतीव संसृतिपथे हन्त भ्रमन्तश्चिरं
विष्णोः प्रेयसि वानरा इव नरा वेलाऽतिगग्लानयः ।
सम्पातेरिव सन्मतेरथ गुरोर्बुद्ध्वा स्थितिं तावकी-
माज्ञालङ्घनभीतिमम्ब जहति प्राज्ञा हरेः स्वामिनः ॥ १४ ॥

कान्तारे इति । हे विष्णोः प्रेयसि ! कान्तारे दुर्गममार्गे इव संसृतेः संसारस्य जन्ममरणरूपस्य पन्था मार्गस्तस्मिन् संसारपथे । पथो विभाषेति पाक्षिकष्टच् । हन्त चिरं बहुकालं भ्रमन्तः, वानरपक्षे वेला अवधिकालाऽतिक्रमणरूपा, नरपक्षे मर्यादातिक्रमणरूपा च, तामतिक्रम्य गच्छति सा । गमेर्ड इति डप्रत्ययः । ग्लानिर्हर्षाऽभावो येषां ते वानराः कपय इव नरा

---

१४ हे विष्णुदयिततमे ! महति दुर्गमारण्यमार्गे इव संसारे चिरं भ्रमन्तो नरा वानरा इव ( सुग्रीवाऽऽज्ञया सीताऽन्वेषणाय भ्रमन्तो ऽङ्गदहनूमदादय इव ) निरवधिग्लानिमापन्ना अनन्तरं सद्गुरोः सम्पातेरिव ( जटायुज्येष्ठभ्रातुस्तन्नामकात् लङ्कायां सीतास्थितिबोधकाद् गृध्रादिव ) दत्तिकात्तावकीं स्थितिं निवासं (लङ्कायां भगवद्वक्षसि च ) ज्ञात्वा स्वामिनः ( प्रभोः ) हरेः ( कपीन्द्रस्य सुग्रीवस्य नारायणस्य च ) आज्ञायाः ( मासाऽभ्यन्तरे प्रत्यावृत्तिबोधिकायाः, तत्स्वधर्मबोधिकायाश्च ) उल्लङ्घनभयं त्यजन्तीत्याह ।

मानवाः, हे अम्ब ! अथ ग्लान्यनन्तरं सम्पातेर्गृध्राविव सन्मतेर्गुरोः सकाशात् प्राज्ञाः मनीषिणः तावकीं स्थितिम् अवस्थानं हरिरूपमित्यर्थः । बुद्ध्वा ज्ञात्वा हरेः सुग्रीवस्य विष्णोश्च, स्वामिन्नैश्वर्ये इति निपातनात्साधुः । आज्ञाया लङ्घनस्याऽनङ्गीकरणस्य भीतिं जहति त्यजन्ति । उपमाश्लेषालङ्कारौ । शार्दूलविक्रीडि० ॥ १४ ॥

पादाऽब्जं भजनादिकर्मणि सुरैर्यस्यैव कर्मीकृतं
यो धत्ते ऽर्कयमेन्द्रवह्निमरुतां भीतावपादानताम् ।
तस्याऽप्यम्ब सकृत्कृतप्रपदनस्ते ऽस्मीति याचन् जनो-
प्यत्रासाऽर्पणसांप्रदान्यमयते देवि प्रसादेन ते ॥ १५ ॥

पादाब्जमिति । हे देवि ! त्वत्प्रसादेन त्वत्कृतसगुणत्वाऽऽपादनेन । 'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पने'ति तापनीयश्रुतेः । सुरैर्भजनादिकर्मणि यस्य पादाब्जं निर्गुणत्वादकर्माऽपि सगुणत्वेन कर्म सम्पद्यमानं कृतम् । अयं भावः । कर्तुरीप्सिततमं कर्मेत्यत्र गमनकर्तुरीप्सिततममत्यन्तमिष्टं कृतमिति । यः, भीषास्माद्वातः पवते इत्यादिश्रुतेः अर्कयमेन्द्रवन्हिमरुतां भीतौ भयदाने अपादानतां धत्ते इति । भीत्रार्थानां भयहेतुरि-

---

१५ हे देवि ! देवैर्यस्यैव चरणकमलं सेवादिक्रियासु कर्मीकृतं, ( देवा यस्यैव चरणं सेवन्ते ) यः सूर्ययमेन्द्राऽनलाऽनिलानां भये अपादानत्वं धत्ते, ( यस्मादेव सूर्यादयो बिभ्यति, 'भीषाऽस्माद्वातः पवते' इत्यादिश्रुतेः ) तस्या ऽपि ( निःसीममाहात्म्यस्य नारायणस्य ) सकृत्कृतप्रणाम 'स्तवास्मी'ति प्रार्थयमानो जनस्तव प्रसादेनाऽभयदानसम्प्रदानतां प्राप्नोति ( भगवांस्तस्मै अभयं ददाति, 'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं ममे'ति साक्षाद्भगवदुक्तेः ) इत्याह ।

ति सूत्रे यो भयहेतुः सोपादान इत्युक्तत्वाद्भयहेतुनियमनेनाऽऽपादानत्वमस्य । हे ऽम्ब ! तस्याऽपि सकृदेकवारं कृतं प्रपदनमुपसदनं येन स सन्नपि ते तवाऽस्मीति याचन् जनः अत्रासः । त्रसी उद्वेगे अस्माद्घञ् । उद्वेगाऽभावस्यार्पणस्य सम्प्रदानम् । कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रादत्रासाऽर्पणकर्मसम्बन्धरूपसम्प्रदानत्वम् अयते प्राप्नोतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

आरोढुं किल यत्सनीडममरा बिभ्यत्यहिद्विण्मुखा-
स्तद्ब्रह्माऽपि तवाश्रयेण सुलभीकर्तुं न भीतो ऽस्म्यहम् ।
लेढुं दाडिमकल्परत्नखचितं राज्ञः किरीटं रमे
किं वा सर्वदुरासदस्य दयिताकेलीशुकस्त्रस्यति ॥ १६ ॥

आरोढुमिति । हे रमे ! यस्य ब्रह्मणः सनीडं समीपम् अहिद्विडिन्द्रः स मुखं येषां ते अमरा अपि आरोढुं न्यग्भावयितुं बिभ्यति । इयं गाथा कठवल्ल्यां श्रूयते । तद्ब्रह्म सच्चिदानन्दरूपं तवाऽऽश्रयेणाऽसुलभमपि सुलभीकर्तुम् अहं भीतो नाऽस्मि । दृष्टान्तः—सर्वेषां दुरासदस्य राज्ञः दाडिमेन कल्पैः(?) दाडिमबीजसदृशैः रत्नैः खचितं किरीटं लेढुमास्वादितुं दयितायाः प्रियायाः केलीशुकः त्रस्यति किम् ? इति स्वस्य लक्ष्मीहस्तकीरत्वेन भयाऽभावः सूचितः(?) दृष्टान्तालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥१६॥

---

१६ हे रमे ! अहिद्विण्मुखा (इन्द्राद्याः) अमरा अपि यत्सनीडं (यस्य समीपम्) आरोढुं बिभ्यति तद्ब्रह्मापि त्वदालम्बेन सुलभं कर्तुम् अहं न भीतो ऽस्मीति दाडिमबीजसमानकान्तिमाणिक्यजटितं सर्वजनदुरापस्य राज्ञः किरीटं लेढुं राजपत्नीक्रीडाशुको बिभेति किं ? मित्युक्त्वा समर्थयन् त्वदाश्रयेण ब्रह्मापि मे सुलभमित्याह ।

दातव्या स्वयमेव दाशरथये देवीति यो वीतभी-
रग्रे साऽऽग्रहमग्रजस्य कथयन्नार्तो दशास्याऽनुजः ।
तस्मै त्वद्दयितेन दत्तमभयं प्राज्यं च राज्यं रमे
यत्स्वल्पं व्यसनं भवेत्तव कृते तद्भूयसे श्रेयसे ॥ १७ ॥

दातव्येति । हे रमे ! यः दशास्याऽनुजो विभीषणः वीतभीर्गतभयः सन् स्वयमेव दाशरथये रामाय त्वया देवी सीता दातव्येति अग्रजस्य रावणस्याऽग्रे आग्रहेण हठेन सहितं यथा तथा कथयन् सन्नार्तः पीडितः, तस्मै त्वद्दयितेन रामेण अभयं चेतरपरं प्राज्यं विपुलं राज्यं दत्तम्, अतस्त्वत्कृते त्वदर्थं यत्स्वल्पं व्यसनं तद्भूयसे श्रेयसे कल्याणाय भवेद्भूयात् । अर्थान्तरन्यासाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

तव साधु वर्ष्म नवसारसाऽऽलये
भवसागराऽन्तरवसादमेयुषाम् ।
अभयाय भात्यशुभयातुदीप्तिहृत्
प्रभया सुवर्णनिभया मनोरमम् ॥ १८ ॥

तवेति । हे नवसारसाऽऽलये ! सुवर्णनिभया तत्सदृशया प-

---

१७ हे रमे ! यो रावणाऽनुजो (विभीषणो) निर्भयः सन् रावणस्य पुरः स्वयमेव रामाय सीता समर्पणीयेति साग्रहं वदन् रावणेनापमानितो दुःखमवाप, तस्मै भगवान् रामोऽभयं प्रचुरं लङ्काधिपत्यं च ददावतस्त्वदर्थं स्वल्पमपि दुःखमनुभूतं महीयसे कल्याणाय स्यादित्याह ।

१८ हे नवसारसालये ! अशुभानां राक्षसानां, राक्षसतुल्यानामशुभानां वा कान्तिहृत् सुवर्णसवर्णया दीप्त्या मनोहरं साधु तव शरीरं संसारसागराऽन्तः खेदं प्राप्तवतां जनानामभयाय संपद्यते इत्याह ।

भया मनोरमे ! सुन्दरमपि अशुभानां पापूनां रक्षसां दीप्तिं प्रभां हरति तव तव साधु वर्ष्म विग्रहः भवसागरस्याऽन्तर्मध्ये ऽवसादं खेदम् एयुषां प्राप्तवताम् । आङ्पूर्वादिणो लिटि क्वसौ उपेयिविवक्षितत्वादुपेयिवाननाश्वाननूचानश्चेति निपातनात्साधुः । अभयाय भवति । मञ्जुभाषिणीवृत्तम् ॥ १८ ॥

प्रत्यासीदति मृत्युरन्वहमहो गत्यागतिभ्यां रवेः
पापीयानहमस्मि पापिनि जने कोपी च वैवस्वतः ।
हा किं वा भवितेति वेङ्कटपतेः क्रीडासखि त्रस्यते
मह्यं गर्ह्यतमाय मातरभयं देयं दयालो स्वयम् ॥ १९ ॥

प्रतीति । हे वेङ्कटपतेः क्रीडासखि ! अहो इत्याक्रोशे । रवेर्गत्यागतिभ्याम् अन्वहं प्रतिदिनं मृत्युः प्रत्यासीदति, अहं पापीयानस्मि, पापिनि पापयुक्तजने वैवस्वतो यमः कोपी च । हा खेदे । किं वा भविता भविष्यतीति त्रस्यते उद्वेगवते गर्ह्यतमायाऽतिगर्ह्याय मह्यं हे दयालो ! हे मातः ! अभयं देयं, दातुं योग्यमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

परब्रह्मप्राणप्रणयिनि हरब्रह्ममघव-
न्मुखानां लेखानामपि भयमभीतिश्च भवतः ।

———

१९ हे दयाशीले वेङ्कटेशकेलीसखि ! मातः ! सूर्यस्योदयाऽस्ताभ्याम् प्रतिदिनं मृत्युः संनिधत्ते, अहं पापिष्ठः, पापिनि च जने यमः सक्रोधः, हा किं वा भविता ? इति बिभ्यते दूषणीयतमाय मह्यं त्वया स्वयमभयं देयमिति प्रार्थयते ।

२० हे जननि ! परब्रह्मप्राणप्रिये ! तव दृष्टेर्निमीलनोन्मीलनाभ्यां शिवब्रह्मेन्द्रादीनां देवानामपि भीत्यभीती भवत इति महानयं

निमेषोन्मेषाभ्यां तव जननि दृष्ट्योरिति महा-
नयं घण्टाघोषः क इह विमृशेन्मानमपरम् ॥ १२० ॥

परेति। हे परब्रह्मणः प्राणप्रणयिनि ! हरश्च ब्रह्मा च मघवांश्च ते मुखा आदयो येषां तेषां लेखानां देवानां भयम् अभीतिश्च हे जननि ? तव दृष्ट्योः निमेषो निमीलनं च उन्मेष उद्घाटनं च ताभ्यां यथासङ्ख्यं भवतः, इत्ययं महान्घण्टाघोषः, अपरमितरत् किं मानं प्रमाणं विमृशेत ? अपि त्वन्यमानापेक्षा नास्तीति भावः। यथासङ्ख्यमालङ्कारः। शिखरिणीवृत्तम् ॥ २० ॥

घनार्तौ कातान्तः कदननिपुणः किङ्करगणो
भ्रमद्भिर्लोकाऽम्ब क्रुधमिव वमद्भिश्च नयनैः।
प्रगल्भां दुर्भीतिं प्रथयति यथा मे न बहुधा
तथा शीताऽपाङ्गैः प्रसभमनुगृह्णातु भवती ॥ २१ ॥

घनेति। हे लोकाऽम्ब ! घनार्तौ निबिडपीडायां क्रुधं वमद्भिरुद्गिरद्भिरिव भ्रमद्भिर्नयनैः कदने पीडायां निपुणः कातान्तः कृतान्तसम्बन्धी किंकराणां गणः यथा मे प्रगल्भां दुर्भीतिं बहुधा न प्रथयति न ख्यापयति तथा भवती शीतै-

———

घण्टाघोषः ( महाप्रसिद्धिः ) इह विषये को वा ऽन्यत्प्रमाणं विचारयेत् ? ( नात्र प्रमाणाऽन्तराऽपेक्षा ) इत्याह।

२१ हे लोकजननि ! घनाऽऽर्तौ ( प्राणप्रयाणपीडाऽवसरे ) दुःखदानपटुः कृतान्तसंबन्धी किङ्करसङ्घो घूर्णमानैः क्रोधमुद्गिरद्भिरिव नेत्रैर्यथा महतीं मे दुष्टां भीतिं न विस्तारयति तथा भवती शीतलैः कटाक्षैर्मामनुगृह्णात्विति प्रार्थयते।

रपाङ्गैर्मां प्रसभं हठेन अनुगृह्णातु । ग्रह्न ग्रहणे इत्यस्मात्प्रार्थनायां लोट्। शिखरिणीवृत्तम् ॥ २१ ॥

तत्तत्पापौघजफलतया दारुणैस्तन्यमाना
याम्याः श्रुत्वा मुनिवचनतो यातनाश्चेतनानाम् ।
कामं भीतः कमलनिलये कम्पमानाऽखिलाङ्गो
विश्वस्य त्वामहमशरणो विश्वधात्रीं प्रपद्ये ॥ २२ ॥

तदिति । हे कमलनिलये ! तानि च तानि पापानि च तेषामोघात्सङ्घाज्जातं यत् फलं तथा दारुणैर्भीमैर्यमकिङ्करैरिति यावत् । तन्यमाना विस्तार्यमाणाश्चेतनानां प्राणिनां याम्या यमसम्बन्धिनीर्यातनाः पीडाः मुनिवचनेभ्यः स्मृत्यादिभ्यः श्रुत्वा । कामं प्रकामं पर्याप्तमित्यमरः । भीतः, अतः कम्पमानान्यखिलान्यङ्गानि यस्य सः अशरणः, अतः विश्वस्याऽखिलस्य धात्रीं मातरं त्वाम् विश्वस्य उद्धरसीति विश्वासं प्राप्य प्रपद्ये शरणाऽऽगतो ऽस्मि । मन्दाक्रान्तावृत्तम् ॥ २२ ॥

देशे काले सततविकृते देवि देहस्य वृत्ते
दृष्टे शौरेरघजुषि जने तीक्ष्णकोपे च चित्ते ।

---

२२ हे कमलाऽऽलये ! तत्तत्पापनिचयफलत्वेन भीषणैर्यमकिङ्करैः क्रियमाणा यमसंबन्धिनीः प्राणिनां तीव्रवेदना मुनिवचनेभ्यः (स्मृतिपुराणादिभ्यः ) श्रुत्वा ऽत्यन्तं भीतो वेपमाननिखिलशरीरो ऽगतिरहं विश्वासेन जगन्मातरं त्वां शरणं वृणे इत्याह ।

२३ हे देवि ! वत्सदेशकालयोर्विकारभाजि मनसो वृत्तान्ते, पापिनि जने दारुणक्रोधे हरेश्चित्ते च पर्यालोचिते महती भीतिराविर्भ-

भीतिः प्रादुर्भवति महती शक्तिमत्या भवत्याः
कारुण्याऽऽर्द्रे मृदुनि हृदये चिन्तिते हन्त धैर्यम् ॥ २३ ॥

देश इति। हे देवि ! देशे काले सततं विकृते विकारभाजि देहस्य वृत्ते, किं च शौरेर्विष्णोः अग्रजुषि पापकारिणि जने मानवे तीक्ष्णः खरः कोपो यस्य तस्मिन् चित्ते चेतसि दृष्टे सति महती भीतिः प्रादुर्भवत्युत्पद्यते, ततः कारुण्येनाऽऽर्द्रे क्लिन्ने अतः मृदुनि शक्तिमत्याः सामर्थ्यवत्या भवत्याः हृदये चिन्तिते स्मृते सति, हन्तेति हर्षे, धैर्यं प्रादुर्भवति। मन्दाक्रान्तावृत्तम्॥२३॥

बाधन्ते विषया बहिः सततमप्यन्तस्तु कामाऽऽदय-
स्त्रातुं हन्त विपन्नमर्णवसुते धात्रादयो ऽप्यक्षमाः ।
शक्तो यद्यपि केशवः स तु दुराराध्यः स्वयं मद्विधै-
रित्युद्वेगवतो मम क्लमहराऽऽलोका त्वमेका गतिः ॥ २४ ॥

बाधन्ते इति। हे ऽर्णवसुते ! बहिर्विषयाः अन्तस्तु कामादयः सततं बाधन्ते। हन्त खेदे। विपन्नं विपत्तियुक्तं त्रातुं रक्षितुं धात्रादयः ब्रह्मप्रभृतयो ऽप्यक्षमाः, यद्यपि केशवो विष्णुः शक्तः समर्थः, स तु मद्विधैर्मत्सदृशपापिभिः स्वयं दुराराध्यो दुःखेनाऽऽराधितुं शक्यः, इत्युद्वेगवतः मम क्लमस्य श्रमस्य हरति

---

यति, शक्तिशालिन्यास्तव दयाऽऽर्द्रे कोमले हृदये च चिन्तिते सति धैर्यमाविर्भवतीत्याह ।

२४ हे अर्णवसुते ! बहिः शब्दादयो विषया अन्तश्च कामादयः सर्वदा पीडयन्ति, विपद्ग्रस्तं त्रातुं ब्रह्मादयो ऽप्यसमर्थाः, यद्यप्येको हरिः समर्थः परं स मादृशां कृच्छ्रेणाराधयितुं शक्यः, इत्युद्विग्नस्य ममाऽऽयासहरदर्शना त्वमेवैका गतिरित्याह ।

स हरः आलोको यस्याः सा त्वं एका केवला गतिस्तारि-
केति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

वाल्मीकौ तमसाऽन्वयो वलरिपौ भूयस्तरा मन्यवो
योगस्थे यमसंगतिर्दृढगदाऽवाप्तिस्तु नारायणे ।
रुद्रे क्षुद्रहितक्रमो भवकृतं दुःखं रतिप्रेयसि
त्रासः कुत्सितमौक्तिकेषु न पुनस्त्वत्संश्रितेष्विन्दिरे ॥२५॥

वाल्मीकाविति । हे इन्दिरे ! तमसाऽन्वयः तमसाख्यनदीसम्बन्धः अज्ञानसम्बन्धश्च वाल्मीकौ मुनावेव, न त्वत्संश्रितेषु त्वद्भक्तेषु तमसा अज्ञानेनाऽन्वयः सम्बन्धः, एवमुत्तरत्राऽपि लापनरीतिर्ज्ञेया । वलरिपाविन्द्रे भूयस्तरा बहवो मन्यवो यज्ञाः क्रोधाश्च, न त्वत्संश्रितेषु मन्यवः क्रोधाः, योगनिष्ठे यमानाम् अहिंसाब्रह्मचर्यापरिग्रहादीनां सङ्गतिः कृतान्तमेलनं च, न त्वत्संश्रितेषु यमस्य कृतान्तस्य सङ्गतिः, नारायणे दृढा कठोरा या गदा कौमोदकी तस्या अवाप्तिः प्राप्तिः, न त्वत्संश्रितेषु दृढानां गाढानामपि गदानां रोगाणामवाप्तिः प्राप्तिः, गदो भ्रातरि वि-

---

२५ हे इन्दिरे ! वाल्मीकिमुनौ तमसाऽन्वयः ( तमसा ऽज्ञानेन संबन्धः, तमसाख्याया नद्याः संबन्धश्च, तस्य तमसातीरस्थाश्रमवासित्वात् ) इन्द्रे भूयांसो मन्यवः ( क्रोधाः दैन्यानि वा, यज्ञाश्च ) योगिनि यमसङ्गतिः ( कृतान्तसम्बन्धः, अहिंसादिसम्बन्धश्च ) नारायणे दृढगदाऽवाप्तिः ( कठोररोगाऽवाप्तिः, गदाऽऽयुधाऽवाप्तिश्च ) रुद्रे क्षुद्रहितक्रमः ( नीचहितकरणरीतिः, क्षुधा रहितस्य क्रमो नित्यतृप्तत्वं च ) रतिप्रियतमे कामे भवकृतं ( संसारकृतं, शिवकृतं च ) दुःखं, कुत्सितमुक्ताफलेषु त्रासः ( भयं, त्रासाख्यदोषश्च ) वर्तते, त्वदाश्रितेषु तु अज्ञानदैन्ययमसम्बन्धरोगाऽवाप्ति,क्षुद्रहितकरत्व, संसारदुःख, त्रासा न भवन्तीति श्लेषेणाह ।

ष्णोः स्यादामये चाऽयुधे गद इति विश्वः । रुद्रे सदाशिवे क्षुद्रहितक्रमः क्षुधः रहितं राहित्यं भावे क्तः । तस्य क्रम उद्योगः भैक्ष्यचर्येत्यर्थः । क्षुद्राणां दुर्मेधसां रावणादीनां हिते क्रम उद्योगश्च, न त्वत्संश्रितेतु अयं क्रम इति भावः । रतिप्रेयसि कामे भवकृतं शिवकृतं संसारजश्च दुःखं मरणरूपं, न त्वत्संश्रितेषु भवकृतं संसारकृतं दुःखं, कृत्रिममौक्तिकेषु त्रासः त्रासाख्यो मुक्तादोषः 'मोर्चा' इति लोके, भीश्च, न त्वत्संश्रितेषु त्रासः उद्वेग इत्यर्थः । त्रासो भीमणिदोषयोरिति विश्वः । परिसङ्ख्यालङ्कारः । शार्दूलविक्री० ॥ २५ ॥

हन्त प्राकृतचक्षुराद्यविषये व्यापिन्यनिर्वाच्यतां
प्राप्ते विश्वजनिस्थितिक्षयपुषि ब्रह्मण्यनन्याश्रये ।
मातस्त्वामभयं विधातुमुषितां मन्ये प्रतिष्ठामहं
तस्मिंस्ते दरमन्तरं भवति चेत्कस्याऽत्र न स्याद्भयम् ॥ २६ ॥

हन्तेति । हे मातः ! हन्तेति हर्षे । प्राकृतानां चक्षुरादीनाम् आदिशब्देन कर्णादयः । तेषामविषये ऽगोचरे व्यापिन्यपि अनिर्वाच्यतां प्राप्ते तथा ऽपि विश्वस्य जगतः जनिरुत्पत्तिः स्थि-

---

२६ हे मातः ! स्वाभाविकचक्षुरादीन्द्रियाऽगोचरे (योगिदृष्टिमात्रवेद्ये) सर्वव्यापके नामरूपाद्यनिर्वचनीये जगदुत्पत्तिस्थितिलयकारणे ऽनितराश्रिते (जगदाधारे) अभयं (निःश्रेयसदानेन बन्धभीतिनाशं) कर्तुं कृतनिवासां त्वां प्रतिष्ठां (नित्यस्थिरां) मन्ये, तस्मिन् विषये ते ईषदन्तरायः स्याच्चेत् कस्य वा ऽत्र भयं न स्यात्? इति ब्रह्मरूपे नित्यसंनिहितायास्तव कृपयैव लोकानामभयप्राप्तिः, अन्यथा निरुक्तरूपस्य ब्रह्मणो ज्ञानस्य कथमप्यसम्भवात् सर्वदा भयस्यैव प्रसङ्ग इत्याह ।

तिः पालनं क्षयो नाशः तान्पुष्यति तस्मिन्नपि नास्त्यन्यः आश्रयो यस्य तस्मिन्ब्रह्मणि अभयं विधातुं त्वां शक्तिरूपाम् उषितां स्थितां प्रतिष्ठामहं मन्ये तस्मिन् ब्रह्मणि ते जीवबुद्धौ दरम् ईषदन्तरं भवति चेत्कस्य पुरुषस्य भयं न स्यादपि तु भवेदिति भावः । 'उदरमन्तरं कुरुते ऽथ तस्य भयं भवती'ति श्रुतेः । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

दशमुखसहजं तं देवि नाम्ना ऽर्थतो वा
ऽप्युदितमुखविकारं भीतमप्यूष्मणा ऽऽप्तम् ।
अकुरुत रघुवीरस्त्वत्प्रसादप्रभावा-
दभयवितरणेन क्षिप्रमानन्दसान्द्रम् ॥ २७ ॥

दशेति । हे देवि ! तं प्रसिद्धं नाम्ना ऽऽख्यया वा ऽर्थतः आकृत्या ऽपि दशमुखस्य सहजं बन्धुं, नामपक्षे उदित उत्पन्नः मुखे नामाऽऽदौ विकारः विवर्णो यस्य तं, तथा भीइत्यक्षरेण इतं युक्तं, पुनः शषसहा ऊष्माणः तन्मध्यस्थषकारोष्मणा णवर्णेन च आप्तं युक्तं विभीषणमित्यर्थः । अथाऽर्थतः उदितः मुखे वक्त्रे विकारः प्रत्याख्यानाद्वैवर्ण्यं य-

---

२७ हे देवि ! शब्दतो ऽर्थतो वा उदितमुखविकारम् ( उदित आदौ 'वि'शब्दो यस्य तथाविधं 'वि'शब्दादिभागं, रावणाकृताऽवमानेन सञ्जाताऽऽननवैवर्ण्यं च ) भीतमपि 'भी' इति शब्देन युक्तं, चकितं च ) ऊष्मणाप्तं ('ष'कारेण 'ण' कारेण च युक्तं, 'विभीषण'नामानमिति यावत्, क्रोधेन युक्तं च ) तं रावणाऽवरजं राममद्रस्त्वदनुग्रसामर्थ्यात् अभयदानेना ऽऽनन्दघनं चकारेति भगवान् त्वदनुग्रहेण विभीषणमभयदानेनाऽनुजग्राहेति भयक्रोधादिविकारनिधे रपि त्वदनुग्रहेण ब्रह्मानन्दलाभो भवतीत्यर्थं सूचयन्नाह ।

स्य सः, तथा भीतं भययुक्तं पुनरूपमगा रावणकृताऽपकारसन्तापेनाऽऽप्तमपि तव प्रसादस्य प्राप्तेः प्रभावात्सामर्थ्याद्रघुवीरः अभयस्य वितरणेन दानेन क्षिप्रं शीघ्रम् आनन्दसान्द्रं मोदपूर्णमकुरुत। तथा चाऽध्यात्मरामायणे श्रीरामः—सकृदेव प्रपन्नाय तवाऽस्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम। इति । इयमपि प्रतिज्ञा त्वत्सम्बन्धप्रकटितेति भावः । अन्तर्लापिकाचित्रमिदं, श्लेषश्च । मालिनीवृत्तम् ॥ २७ ॥

अल्पश्रुतेभ्य इव राशिमनादिवाचा-
मंहस्ततिभ्य इव बिभ्यतमर्भकं ते ।
पुण्यैः पुराणवचनैरिव वीक्षणैस्त्व-
मुच्चैर्नृसिंहसखि मामुपबृंहयेथाः ॥ २८ ॥

अल्पेति । अल्पश्रुतेभ्यः अल्पज्ञेभ्यः सकाशादनादिवाचां राशिमिव, तथा अंहस्ततिभ्यः पापसङ्घेभ्यः बिभ्यतं भयं प्राप्नुवन्तं ते तवाऽर्भकं शिशुममुङ्क्वि पुण्यैः पुराणवचनैरिव हे नरसिंहसखि ! मां दासम् उपबृंहयेथाः वर्धयेथाः । बृह बृंहि वृद्धौ अस्माण्णिजन्ताल्लिङ् । 'बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति । इतिहासपुराणाभ्यां वेदाऽर्थमुपबृंहयेदि'ति वचनात् । उपमालङ्कारः । वसन्ततिलकावृत्तम् ॥ २८ ॥

---

२८ हे नरहरिप्रिये !, स्तोकबोधेभ्यो वेदवाक्समूहमिव पापसमुदायेभ्यो बिभ्यतमिव ते शिशुं मां कल्याणकारकैः पुराणोक्तैरिवोच्चैरवलोकनैर्वर्द्धयेथा इत्याह ।

दुष्कालाऽनुगुणक्रमैः श्रुतिपथाऽऽविष्कारनिष्कासकै-
र्निष्कारुण्यतमैस्तुरुष्कयवनैर्निष्कारणत्रासिभिः ।
कञ्जावासिनि तत्समैरपि जनैः सञ्जायमानं भयं
त्वं जालेन दृशां हि तारयसि नः खञ्जानिवाम्भोनिधिम् ॥ २९ ॥

दुष्कालेति । हे कञ्जावासिनि ! दुष्कालानाम् अनुगुणाः क्रमाः येषां तैः, तथा श्रुतिपथस्याऽविष्कारस्य प्राकट्यस्य निष्कासकैः पुनः निष्कारुण्यतमैरतिनिर्दयैः, अथ च निष्कारणं निष्प्रयोजनं यथा तथा त्रासयन्ति तैः तैः समाः सदृशास्तैर्जनैर्दुर्जनैरित्यर्थः । सञ्जायमानं भयं प्रति नो ऽस्मान् खञ्जान् पदहीनान् अम्भोनिधिमिव दृशां जालेन समूहेन तारयस्युद्धारयसि । उपमालङ्कारः । शार्दूलविक्री० ॥ २९ ॥

का का ऽभयप्रदेति प्रश्नो यद्वाचकः समस्तपदः ।

---

२९ हे पङ्कजवासिनि ! कलिकालाऽनुरूपरीतिभिः, श्रौतमार्गप्रकाशनिरासकैः, रतिनिष्कृपैः, अकारणभयप्रदैस्तुरुष्कदर्शीयैर्यवनैरन्यैरपि तत्समगुणैर्जनैरुत्पद्यमानां भीतिं त्वं गतिविकलान् सागरमिव दृग्जालेनाऽस्मान् उत्तारयसीत्याह ।

३० 'का का अभयप्रदा ?' इत्यसमस्तपदकः प्रश्नः समस्यमाननिखिलपदो यद्वाचकः ( 'काकाऽभयप्रदा' खस्तनविदारकजयन्तकाकाऽभयप्रदेति भगवतीवाचकः ) सन् स्वयमुत्तररूपत्वं प्रा-

स्वयमुत्तरतां धत्ते रमा समस्तोत्तरा विराजति सा ॥ ३० ॥

इति श्रीमद्वेङ्कटाऽध्वरिविरचिते श्रीमल्लक्ष्मसिहस्रे
अभीतिस्तबक एकोनविंशः सम्पूर्णः ॥ १९ ॥

काकेति । का का अभयं प्रददाति, का अभयप्रदा ? इति व्यस्तपदप्रश्नः । समस्तानि समस्यमानानि सुबन्तादीनि यस्मिन् सः स यस्याः काकस्य अभयं प्रददाति इत्येवंरूपेण वाचकः अभिधेयवान् सन् स्वयम् उत्तरतां समाधानतां धत्ते धारयति सा समस्तेभ्यः देवेभ्यः उत्तरा श्रेष्ठा रमा विराजति इति। इदं प्रश्नोत्तरसमजातिचित्रम् । तल्लक्षणं विदग्धमुखमण्डने द्वितीयपरिच्छेदे—'प्रश्नवर्णश्रुतेस्तुल्यं यत्र स्यादुत्तरं वरम् । प्रश्नोत्तरसमं तज्ज्ञास्तदाहुः' इति । इयमेव अपन्हुतिप्रश्नजातिश्चेति । गीतिवृत्तम् ॥ ३० ॥

इति रावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन
विरचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मी-
सहस्रटीकायाम् अभीतिस्तबक एकोनविं-
शः सम्पूर्णतामगमत् ॥ १९ ॥

---

प्रोन्ति समस्तोत्तरा ( सर्वोत्कृष्टा, कृतसमासपदोत्तररूपा च ) सा रमा विराजतीति प्रश्नोत्तरसमनामकचित्रनिबन्धनपुरस्सरं स्तबकं पूरयति ।

इति श्रीमानवल्ल्युपाख्यनेलङ्करामशास्त्रिविरचितायां लक्ष्मीसह-
स्राऽवतरणनिःश्रेणिकायाम् अभीतिस्तबकः ॥ १९ ॥

## अथ परिसङ्ख्यास्तबकः ॥ २० ॥

कपिभ्यो यत्सुतेः ब्रह्मेशादिभ्यो देवतान्तरम् ।
परिसङ्ख्यानमगमत्स रामः श्रेयसे ऽस्तु नः ॥ २० ॥

अथाऽस्मिन्विंशतिस्तबके देवताऽन्तराऽकिंचित्करत्वेन श्रीमहालक्ष्मीमहत्त्वं वर्णयितुं प्रथमपद्ये यत्प्रसादात् वन्दार्वि- त्यादिभ्यां तल्लिङ्गं दर्शयन् मङ्गलमाचरति—

वन्दारुरक्षणे दक्षां वन्दे गोविन्दसुन्दरीम् ।
यत्प्रसादादृते देवाः सर्वे रक्षितुमक्षमाः ॥ १ ॥

वन्दार्विति । यस्या रमायाः प्रसादादृते प्रसादं विनेत्यर्थः । अन्यारादितरर्तेदिगित्यादिना पञ्चमी । सर्वे ब्रह्मादयो देवाः रक्षितुम्पालयितुम् अक्षमा असमर्थाः ताम् । वन्दारुरभिवादके इत्यमरः । तेषां रक्षणे दक्षां गोविन्दस्य सुन्दरीं रमणीम् अहं वन्दे नमामि । उदात्तालङ्कारः । पथ्यावक्त्रं वृत्तम् ॥ १ ॥

अम्ब त्वया हन्त शरीरभाजा-
मरक्षितानामपि रक्षितानाम् ।

---

१ अथेतरदेवताप्रतिषेधेन भगवतीमाहात्म्यं विशेन परिसंख्यास्तबकेन तुष्टूषुर्यस्या अनुग्रहं विना सर्वे ऽपि देवा रक्षितुमसमर्थास्तामभिवादकजनत्राणनिपुणां गोविन्दपत्नीं वन्दे इति इतरेषु देवेषु रक्षणाऽसामर्थ्यं रमायां च तत्परिसंख्याविधया वर्णयन् मङ्गलमाचरति ।

२ हे अम्ब ! वकारिपुपत्नि ! त्वयाऽरक्षितानां रक्षितानां वा जनानां देवा यथासंख्यं सन्तोषणायाऽऽपद्दानाय चा कल्पन्ते किमिति

देवा मुदे वा पुनरापदे वा
भवन्ति किं ते बकवैरिकान्ते ॥ २ ॥

अम्बेति । हे ऽम्ब ! हे बकवैरिकान्ते ! हन्त त्वया रक्षिताnाम् अपि वा अरक्षितानां शरीरभाजां प्राणिनां ते प्रसिद्धा देवा अमराः मुदे हर्षाय वा पुनरापदे विपत्तये भवन्ति किम् ? अपि तु नेत्यर्थः । अथाऽन्येषां देवानां रक्षणे मारणे वा सामर्थ्यं नास्ति तर्ह्येतद्द्वये ऽप्यस्या एव सामर्थ्यमित्यनुपदमेव प्रकटयिष्यति । यथासङ्ख्यमलङ्कारः । उपजातिराख्यानकी वा वृत्तम् ॥ २ ॥

शीतस्वभावां भवतीं श्रितेभ्यो
दिव्यां समृद्धिं ददतीमतीत्य ।
उपाश्रितध्वंसकमुष्णमग्नि-
मुपासते के जगदम्ब लोके ॥ ३ ॥

शीतेति । हे जगदम्ब ! शीतः स्वभावो यस्यास्तां तथा श्रितेभ्यः दिवि स्वर्गे भवां दिव्यां समृद्धिं ददतीं त्वाम् अतीत्य त्यक्त्वा उष्णं दाहकस्वभावं तथा उपाश्रितानां ध्वंसकं नाशकम् अग्निं लोके ऽस्मिन् के सुज्ञा उपासते ? न के ऽपीति भावः । अत्र यथा ऽग्नेरुष्णत्वं रमायाश्च शीतत्वं तथा ऽस्योपासकनाशकत्वं तस्याश्च समृद्धिदातृत्वं यथा नाशकविशेषणद्वयदर्शनेनाऽग्ने-

---

त्वया ऽरक्षितानां सन्तोषणाय रक्षितानां चाऽऽपद्दानायेतरे देवा न समर्था इत्याह ।

३ हे जगन्मातः ! शीतलप्रकृतिं, संश्रितेभ्यो दिव्यां समृद्धिं ददतीं, भवतीमतिक्रम्य उपाश्रितनाशकमुष्णम् ( त्वद्विपरीतस्वभावम्, आश्रयाशत्वात् ) अग्निं जगति के वा समुपासन्ते ? इत्याह ।

स्त्याऽजयत्वं तथैव तत्प्रतिद्वन्द्विसुखकरविशेषणद्वयदर्शनेन रमायाः सेव्यत्वं दर्शितम् । अनयैव रीत्याऽस्मिन् स्तबके यावन्ति वर्णनीयवस्तूनि गुणप्रदर्शकविशेषणानि तावन्त्यपि तत्प्रतिपिद्धवस्तूनि दोषकराणि दर्शयिष्यन्ति । तत्प्रकारो विस्तृतिभिया न प्रदर्श्यते । तथाऽपि प्रतिपद्यं सूक्ष्मदृष्ट्या सुधीभिर्विभावनीयमिति । काव्यलिङ्गमलङ्कारः । उपजातिवृत्तम् ॥ ३ ॥

अज्ञाततृप्तिममिते विभवे ऽपि दीन-
बन्धुं विहाय भवतीं भवतो ऽप्यवन्तीम् ।
सख्युः शुचेरपि समाप्तिदमम्ब कार्श्ये
कस्तं प्रभञ्जनमिहाऽर्चतु गन्धवाहम् ॥ ४ ॥

अज्ञातेति । हे अम्ब ! अमिते समृद्धे विभवे सत्यपि अज्ञाता तृप्तिर्दानाऽलम्भावो यया ताम्, तथा दीनबन्धुं दीनरक्षिकां पुनर्भवतः संसारादप्यवन्तीं भवतीं लक्ष्मीं विहाय कार्श्ये न्यूनतायां सख्युर्मित्रस्य शुचेरग्नेरपि समाप्तिदं नाशकं प्रकर्षेण भञ्जयति मर्दयति तं गन्धवाहं वायुं साऽभिमानः कः पुमानर्चतु पूजयतु । परिकरपरिकराऽङ्कुरकाव्यलिङ्गालङ्काराः । वसन्ततिलकावृत्तम् ॥ ४ ॥

---

४ हे अम्ब ! अपरिच्छिन्ने ऐश्वर्ये सत्यपि अज्ञाततृप्ति ( सतृष्णां, संसारोत्तरणाऽनधिकारिणमपि जनं ) भवतो ऽपि ( संसारादपि ) रक्षन्तीं दीनबन्धुं भवतीमतिक्रम्य कार्श्ये ( दारिद्र्ये, क्षीणावस्थायां ) निजसुहृदः शुचेः ( पवित्रस्य, अग्नेश्च, ) समाप्तिदं ( नाशप्रदं, पूर्णताप्रदं प्रवर्धकं च ) प्रभञ्जनं ( वायुं, प्रकर्षेणाऽऽमर्दकं च ) गन्धवाहं ( गन्धवाहकं वायुं, गर्विणं च त्वद्विपरीतस्वभावं ) को वा पूजयेदित्याह ।

यमविषयगतिः स्याद्यद्गृहीतस्य जन्तो-
रमतिरमुमुपास्तामप्रभुं पाशहस्तम् ।
जननि परिगृहीतत्राणजाताऽऽदरां त्वा-
महमखिलनियन्त्रीमब्जहस्तां प्रपद्ये ॥ ५ ॥

यमेति । हे जननि ! येन गृहीतस्याऽऽत्मत्वेन स्वीकृतस्य जन्तोः यमः विषयो यस्याः सा गतिः स्याद्भवेत् । अस्य पाशहस्तत्वात्ताद्दृशहस्तगृहीतस्य पाशः स्पष्ट एव, स चाऽऽसन्नमृत्युरेवेति । अमुं पाशहस्तं न तु पाशनिवर्तकम्, अत एव अप्रभुम् अपां प्रभुं, 'मोक्षदायी प्रभुः स्मृत' इत्युक्तेर्मोक्षदानाऽसमर्थम् । उक्तं च भागवते मुचुकुन्दवरप्रदानसमये देवैः ।

'वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः ।
एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः' ॥ इति ।

तच्छक्तित्वाच्छ्रियो ऽपि मोक्षदातृत्वं सूचितम् । परिगृहीतानां त्राणे जातः आदरो यस्यास्ताम्, एवमब्जं कमलं हस्ते यस्यास्तां, पुनरखिलानां नियन्त्रीं त्वाम् अहं दासः प्रपद्ये शरणो(?) ऽस्मीति भावः । श्लेषपरिकरकाव्यलिङ्गालङ्काराः । मालिनीवृत्तम् ॥ ५ ॥

---

५ हे जननि ! येन गृहीतस्य पुंसो यमविषयगतिः ( कृतान्तदेशगतिः, वरुणगृहीतस्य जलोदरादिव्याधिपीडिततया यमसमीपगतिरेव ) स्यात्, अमुम् अप्रभुम् ( असमर्थम्, अपां स्वामिनं च ) पाशहस्तं ( जनबन्धकपाशपाणिं, वरुणं च ) अर्वाञ्चरुपास्ताम्, अहं तु स्वीकृतजनरक्षणबद्धाऽऽदराम् अखिलप्रभुं कमलहस्तां ( तद्विपरीतप्रकृतिं ) त्वामेवाऽऽश्रये इत्याह ।

कुर्वाणं परुषैः करैः कुवलयक्लेशं भृशं सद्गण-
श्रीहार्यभ्युदयं तमम्ब तपनं के चिन्नमस्कुर्वताम् ।
विश्वाऽऽनन्दकरीं वयं तु विदुषां विश्वाऽधिकां सम्पदं
तन्वानां प्रणमेम तत्रभवतीं तापत्रयध्वंसिनीम् ॥ ६ ॥

कुर्वाणमिति । हे ऽम्ब ! परुषैः करैः किरणैर्हस्तैश्च कुवलयस्य कमलस्य पृथ्वीवलयस्य च क्लेशं कुर्वाणम्, एवं भृशं सद्गणानां नक्षत्रसमूहानां साधुमङ्गानां च श्रीहारी अभ्युदयो यस्य तं प्रसिद्धं तपनं सन्तापकं सूर्यं के चिदज्ञाः नमस्कुर्वतां प्रणमन्तु । वयं तु विश्वस्य जगत आनन्दकरीं तथा विदुषां विश्वाधिकां सम्पदं ददतीं पुनस्तापानामाधिभौतिकाऽऽधिदैविकाऽऽध्यात्मिकरूपाणां त्रयस्य ध्वंसिनीं नाशिकां तत्रभवतीं, पूज्ये तत्रभवानत्रभवांश्च भगवानपीति हेमचन्द्रः । प्रणमेम नमस्कुर्मः । श्लेषाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम ॥ ६ ॥

---

६ हे अम्ब ! तीक्ष्णैः करैः ( किरणैः, हस्तैश्च, ) कुवलयक्लेशं ( कैरवपीडां, भूमण्डलबाधां च ) कुर्वाणं, सतां ( नक्षत्राणां, साधूनां च ) गणस्य श्रियः ( शोभायाः, सम्पत्तेश्च ) हरणशील उदयः ( आविर्भावः, वृद्धिश्च ) यस्य तथाविधं तपनं ( सूर्यं सन्तापकं च ) के चिज्जना नमस्यन्तु, परं वयन्तु जगदानन्दकरीं, विदुषां लोकाऽधिकसंपद्विस्तारकारिणीम् आध्यात्मिकाऽऽधिदैविकाऽऽधिभौतिकतापत्रयविनाशिनीं पूज्यां त्वां प्रणमेमेति श्लेषेण तत्तद्विशेषणैः सूर्ये भगवत्यां च वैधर्म्यं प्रदर्श्य त्वामेव वयं नमस्कुर्यामित्याह ।

हरिसखि शतमन्युं वायसस्य स्वसूनो-
रपि विपदपनीतावक्षमं नो यजेय ।
अहमविदितमन्युं हन्त तस्य स्वशत्रो-
रपि परिहृतभीतिं त्वां शुभामाश्रयेयम् ॥ ७ ॥

हरीति । हे हरिसखि ! स्वस्य सूनोः पुत्रस्य वायसस्याऽपि विपदः अपनीतौ निरसने अक्षममसमर्थं शतमन्युमिन्द्रं बहुरुषं च अहं नो यजेय । यज देवपूजनादेर्लिङ् । हन्तेति हर्षे । अविदितः मन्युः क्रोधो यया, तथा स्वस्य शत्रोरपि परिहृता भीतिर्यया, पुनः शुभां कल्याणीं त्वामेवाऽऽश्रयेयम् । श्लेषकाव्यलिङ्गालङ्कारौ । मालिनीवृत्तम् ॥ ७ ॥

प्रौढैश्वर्यजुषोऽपि यस्य सुहृदा भिक्षाशिता नोज्झिता
यत्र श्रीदपदं वदन्ति विबुधा रूढ्या ऽश्वकर्णादिवत् ।

---

७ हे हरिसखि ! अहं स्वपुत्रस्यापि जयन्तनाम्नः काकस्याऽऽपद्दूरीकरणाऽसमर्थं शतमन्युम् ( शतमखम्, बहुकोपञ्च ) नो पूजयेय, किंतु अज्ञातकोपां स्वाभयहितकारिणोऽपि तस्य जयन्तकाकस्याऽपहृतभयां शुभकरीं त्वामेवाऽऽश्रयेयमिति भगवतीमहेन्द्रयोः वैधर्म्यं प्रदर्श्य त्वामेवाऽहमाश्रयेयमित्याह ।

८ हे मातर्लक्ष्मि ! महासम्पत्तेरपि यस्य मित्रेण ( शिवेन ) याचिताऽन्नभक्षकत्वं नोज्झितं, विद्वांसो यत्र श्रीद इति पदं वृक्षविशेषवाचकाऽश्वकर्णादिपदवत्संरवयवार्थं रूढं वदन्ति, तं यक्षं ( कुबेरम ) अज्ञः पूजयतु, वयन्तु अभीप्सितप्रदां त्वां नुमो, यस्यास्ते निर्दोषः परमैश्वर्यशाली हरिः सखेति कुबेरसखा भिक्षाशी, त्वत्सखा

यक्षं तं यजतामधीर्वयममी त्वामिष्टदात्रीं स्तुमो
मातर्लक्ष्मि महाविभूतिरनघो यस्याः सखा ते हरिः ॥ ८ ॥

प्रौढेति । प्रौढमैश्वर्यं जुषते तस्याऽपि सुहृदा मित्रेण हरेण भिक्षा । याच्ञा भिक्षाऽर्थनाऽर्दनेत्यमरः । तामश्नाति भक्षयति सः तस्य भावस्तत्ता नोज्झिता न त्यक्ता, यत्र श्रीद इति पदं, रूढ्या अश्वकर्णो वृक्षविशेषः, तद्वदिवन्न त्वन्वर्थमिति भावः । तं यक्षं कुबेरम् अधीरज्ञः यजतां, हे महालक्ष्मि ! वयममी यस्यास्ते महाविभूतिरैश्वर्यवान् अनघः शुद्धश्च हरिः सखा तां इष्टदात्रीं त्वां स्तुमः । श्लेषकाव्यलिङ्गपरिकराऽलङ्काराः । शार्दूलवि० ॥ ८ ॥

प्रौढिर्यस्य हि पूर्वपक्षविदिता यो लुब्धचूडामणि-
र्यश्चाऽहीनमुखेन दूषितकलस्तं कः कलङ्काऽऽश्रयम् ।
अञ्चेत्सोममपामरः श्रुतिशिरःसिद्धान्तसिद्धोन्नतिं
पद्मे काङ्क्षितदां बुधस्तुतकलां त्वां निष्कलङ्कां विना ॥ ९ ॥

प्रौढिरिति । हे पद्मे ! श्रुतीनां शिरसामुपनिषदां सिद्धा

---

परमेश्वरः, अकिञ्चित्प्रदः सः, त्वन्तु वाञ्छितार्थदात्रीति त्वामेव धयं स्तुम इत्याह ।

९ हे पद्मे ! यस्य प्रागल्भ्यं पूर्वपक्षे ( शुक्लपक्षे, प्राथमिकाऽपसिद्धान्तपक्षे च ) विदिता, यो लुब्धचूडामणिः ( किरातरूपधारिणः शिवस्य शिरोभूषणं, लोभिजनाग्रगण्यश्च ) यश्च अहीनमुखेन ( नागश्रेष्ठरूपराहुवदनेन, वावदूकेन च ) दूषितकलः ( निन्दितषोडशभागः, निन्दितविद्यश्च ) कलङ्काश्रयम ( अङ्कधारिणं, विगीतं च ) चन्द्रम् उपनिषत्सिद्धान्तस्थिरीभूतोन्नतिम वाञ्छितप्रदां विद्वज्जनश्लाघितविद्यामनघामेन एव चन्द्रप्रतिलोमस्वभावां भवतीं विना ऽनीचः-को वा ऽचयेदित्याह ।

उन्नतिर्यस्यास्तां तथा काङ्क्षिनदाम इच्छतदां(?) पुनर्बुधैः स्तुताः कला गीतादयो यस्यास्ताम् एवं निर्गतः कलङ्को लाञ्छनं यस्यास्तां त्वां विना यस्य मौढिः पूर्वपक्षे शुक्लपक्षे शङ्कारूपप्रश्ने च विदिता तथा यः लुब्धस्य शबररूपिशिवस्य लुब्धेषु कृपणेषु च चूडामणिर्मुकुटमणिः श्रेष्ठश्च । लुब्धो मृगयुकाङ्क्षणोरिति विश्वः । यश्चाऽहीनस्य अन्यूनस्य महत इति यावत्, राहोश्च । ध्वान्ते वृत्राऽसुरे ऽप्यहिरित्यमरः । मुखेन दूषिताः लुप्ताश्च कला गान्धर्वादयः षोडशभागाश्च यस्य तं पुनः कलङ्कस्य लाञ्छनस्य दूषणस्य चाऽऽश्रयं सोमं चन्द्रं कः अपामरो ज्ञाता प्रश्नेत्पूजयेत् । श्लेषकाव्यलिङ्गपरिकरालङ्काराः । शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

पद्मे येषामुच्चभावो न नित्यो
ये सर्वे ऽपि स्थानभेदेन तीक्ष्णाः ।
यष्टुं तुष्टिर्न ग्रहांस्तानतस्त्वां
नित्यौन्नत्यां नौमि सर्वत्र मृद्वीम् ॥ १० ॥

पद्मे इति । हे पद्मे ! येषां ग्रहाणाम् उच्चभावः उच्चेषु मेषादिस्थानेषु भावः सत्ता स्थितिरिति यावत् । सूर्यादिक्रमेण, ग्रहोच्चस्थानानि बृहज्जातके–'अजवृषभमृगाङ्गनाकुलीरा झषव-

———

१० हे पद्मे ! येषां ( रव्यादिग्रहाणाम् ) उच्चभावो ( ज्योतिःशास्त्रोक्तोच्चस्थानाऽऽस्थितिः ) स्थिरा न भवति ( कदाचिन्नीचस्थानगत्वात्तेषाम् ) ये स्थानभेदेन तीक्ष्णाः ( पीडाकारिणो भवन्ति ) तान् ग्रहान् पूजयितुं मम सन्तोषो नास्ति, अतः सर्वदा औन्नत्यशालिनीं सर्वत्र कोमलामत एव ग्रहविपरीतस्वभावां त्वां नौमीत्याह ।

णिजौ च विवाकराविव तुङ्गा' इति। नित्यं न तर्हि राश्यन्तरसञ्चारेण नीचत्वमपि भवतीति भावः। तथा ये सर्वेऽपि स्थानानां जन्मधनादिद्वादशानां भेदेन तीक्ष्णाः, यथा गुरुः सौम्योऽपि जन्माऽष्टमद्वादशस्थानगो दुःखकारित्वेन तीक्ष्णो भवति, तथा खलाः शन्यादयो त्रिषड्दशस्थानगाः शुभा भवन्ति तथाऽप्यन्यत्राऽनिष्टफलदा एव, अतस्तान् ग्रहान् यष्टुं पूजितुं तुष्टिर्न, तर्हि सर्वत्र मृद्वीं मृदुस्वभावां नित्यमौन्नत्यं यस्यास्तां त्वां नौमि। श्लेषकाव्यलिङ्गपरिकरालङ्काराः। शालिनी ॥ १० ॥

शाखावृन्दप्रथितविभवां सत्सुपर्णाऽधिरोहां
त्वामस्तुत्वा जलनिधिभुवं कल्पवल्लीमतल्लीम्।
आकाङ्क्षन्तः फलमविकलं देव्यपर्णोद्भवं के
संसेवेरन् शरवणभवं स्थाणुजातं विशाखम् ॥ ११ ॥

शाखेति। हे देवि! अविकलं समग्रं फलम् आकाङ्क्षन्त इच्छन्तो, नरा इति भावः। शाखानां शिफानां वेदानां च वृन्दैः समूहैः प्रथितः प्रख्यातः विभव ऐश्वर्यं यस्यास्तां, तथा सतां सुपर्णानां विद्यमानसुपत्राणां सति सुपर्णे गरुडे च अधिरोहो

११ हे देवि! सम्पूर्णं फलं (प्रयोजनं, मधुरं फलं च) वाञ्छन्तः के पुरुषाः, शाखानां (वैदिकशाखानां, शिफानां च) समूहैः प्रसिद्धसमृद्धिं, सत्सुपर्णाधिरोहां (साधुवैनतेयाऽऽरोहिणीं, समीचीनपत्रभरितां च) समुद्रोद्भवां त्वद्रूपां श्रेष्ठां कल्पलताम् अस्तुत्वा अपर्णोद्भवं (पार्वत्या उत्पन्नं, पर्णोत्पत्तिहीनं च) शरवणभवं (शरवणजन्मानं) स्थाणुजातं (शिवात्मजं, शुष्कवृक्षसमुद्भूतं च) विशाखं (स्कन्दं, शाखारहितं वृक्षं च) संसेवेरन्? इति उभयोः श्लेषेण वैधर्म्यं प्रदर्शयन् शुभफलार्थिभिस्त्वमेव सेव्येत्याह।

यस्यां यस्याश्च, पुनर्जलनिधिभुवं सोदकाऽऽलवालभूमिम् एवं कल्पवल्लीमतल्लीं श्रेष्ठां कल्पवल्लीं त्वाम् अस्तुत्वा अपर्णायाः पर्णरहितायाः पार्वत्याश्च सकाशादुद्भवो यस्य तं, पुनः शराणां वनम् इति शरवणम्। वनं पुरगामिश्रकेत्यादिना णत्वम्। तस्मिन्भवमुत्पन्नं शुष्कस्थलपङ्कभुवं च । अत्र शरभवमभुमिति पाठः साधीयान् । स्थाणोर्वृक्षाच्छिवाच्च जातं विगताः शाखाः शिफा यस्य तं कार्तिकेयं च, यद्वा शाखारहितवृक्षसमूहं के सुज्ञाः सेवेरन् ? अपि तु न केऽपि सेवेरन्नित्यर्थः । श्लेषकाव्यलिङ्गपरिकरालङ्काराः । मन्दाक्रान्तावृत्तम् ॥ ११ ॥

त्वां कृतश्रुतिपथप्रवर्तनां
सज्जनादरकृताननां विना ।
निर्मितश्रुतिविकम्पनं रमे
साधुवारणमुखं श्रयेत कः ॥ १२ ॥

त्वामिति । हे रमे । कृतं श्रुतिपथस्य वेदमार्गस्य प्रवर्तनं यया, तथा सज्जनानामादरे सत्कारे कृतम् आननं यया, तां त्वां विना निर्मितं श्रुतीनां कर्णानां च विकम्पनं धूननं येन सः साधोर्वारणस्य गजस्य मुखमिव मुखं यस्य पक्षे साधोर्भक्तस्य निवारणं मुखे लपने यस्य तं च कः श्रयेत ? न कोऽपीति भावः । श्लेषकाव्यलिङ्गालङ्कारौ । रथोद्धतावृत्तम् ॥ १२ ॥

---

१२ हे रमे ! कृता श्रुतिपथस्य ( वेदमार्गस्य, श्रवणमार्गस्य च ) प्रवृत्तिर्यया तां, सज्जनादरकृताननां ( सज्जनानामादरेण कृतमननं प्राणनं यया तां, सज्जनानामादरे कृतं मुखं यया तां च ) त्वां विना निर्मितं श्रुतिविकम्पनं ( कर्णचालनं, वेदकम्पनं च ) येन तं साधुवारणमुखं ( साधु यथा तथा वारणमुखं गजाननं, सज्जननिवारकमुखं च ) कः सेवेतेति त्वमेव सर्वसेव्येत्याह ।

दुर्गां परे गाढभवाऽनुषङ्गा
शिलोच्चयादभ्युदितां श्रयन्ताम् ।
भक्त्यैकलभ्यां भवसिन्धुनावं
सुधाऽब्धिजे त्वां वयमाश्रयामः ॥ १३ ॥

दुर्गामिति । हे सुधाऽब्धिजे ! परे ऽन्ये जनाः गाढः भवस्य शिवस्य संसारस्य चाऽनुषङ्गो यस्यास्तां तथा शिलोच्चयाद्धिम-नगात्प्रस्तरसमूहाच्चाऽभ्युदितामुत्पन्नां पुनर्दुःखेन गन्तुं प्राप्तुं शक्यां दुर्गां पार्वतीं श्रयन्तां, वयं तु भवसिन्धोर्नावं नौकाभूतां तथा भक्त्यैकलभ्यां त्वामाश्रयामः । अत्र शिलोच्चयादभ्यु-दितामिति पदस्य प्रतिद्वन्द्वि सुधाब्धिजे इति पूर्वसम्बोधनम् । श्लेषकाव्यलिङ्गपरिकरालङ्काराः । उपजातिवृत्तम् ॥ १३ ॥

स्थानं यस्य श्मशानं सततमनुचरो भूतवेतालवर्ग-
श्चेलं चर्म स्रगस्थ्नां ततिरहह तमप्युग्रमेके भजन्ताम् ।
पद्मे पद्मे स्थितां त्वां सततमनुसृतां देवतायौवतेन
ध्यायेम क्षौमभाजं वयमनुदिनमामुक्तमुक्ताकलापाम् ।१४।

स्थानमिति । हे पद्मे ! यस्य स्थानं श्मशानं, श्मशानंस्यात्पितृव ण-

---

१३ हे सुधाब्धिजे ! परे जनाः गाढभवाऽनुषङ्गां ( शिवे गाढाऽनु-रागां,मतिसंसाररक्तां च ) शिलोच्चयात् ( हिमाचलात्, पाषाण-समुदायाच्च )उदितां दुर्गां ( पार्वतीं, दुर्गमां च ) आश्रयन्तु, वयं तु भक्तिमात्रसुलभां संसारसागरतरणिं त्वामेवाऽऽश्रयाम इत्याह ।

१४ हे पद्मे ! यस्य स्थानं पितृवनम्, परिचारकश्च पिशाचवेता-लसङ्घः, गजचर्म वसनम्, अस्थिपङ्क्तिर्माला, तमप्युग्रं ( शिवं, भय-ङ्करं च ) एके सेवन्तां, वयं तु कमलनिवासिनीं, देवाङ्गनाऽनुसृतां, दु-कूलवसनां, धृतमुक्ताहारां त्वामेव प्रतिदिनं ध्यायेमेत्याह ।

मित्यमरः। अनुचरः सेवकः भूतानां वेतालानां च सर्गः, चेलं वस्त्रं चर्म कृत्तिः, स्रक् माला अस्थ्नां ततिः, तमप्युग्रं क्रूरं हरम् एके नराः भजन्तां; वयं तु पद्मे स्थितां देवतानां यौवतेन युवतिसमूहेन, ग्रत्रन्तादनुदात्तादेरञ् । सततमनुसृतां सेवितां क्षौमं दुकूलं भजति ताम् आमुक्ता धृताः मुक्तानां कलापा भूषणानि यया तां त्वाम् अनुदिनं नित्यं ध्यायेम । काव्यलिङ्गमलं०। स्रग्धरावृत्तम् ॥ १४ ॥

नाभिजातमधरीकृतहंसं
जन्तवः कतिपये कलयन्ताम् ।
सेवते जगति हंसगतिं त्वां
सिन्धुनन्दिनि सुधीरभिजाताम् ॥ १५ ॥

नाभीति। हे सिन्धुनन्दिनि ! नाभौ हरेर्नाभिकमले जातमपि अभिजातः कुलजो न भवति तम्, अधरीकृतः हंसः आसनमरालः परमहंसश्च येन तं ब्रह्माणं कतिपये जन्तवः कलयन्तां, सुधीस्तु अभिजातां कुलीनां प्राप्तरूपां च हंसवद्गतिर्गम्या: तथा परमहंसानां गतिरूपां जगति सेवते भजते । श्लेषकाव्यलिङ्गालङ्कारौ। स्वागतावृत्तम् ॥ १५ ॥

---

१५ हे सिन्धुनन्दिनि ! अधरीकृतहंसं ( हंसवाहनं, तिरस्कृतपरब्रह्माणं च ) नाभिजातं ( हरिनाभिजन्मानं ब्रह्माणं, न अभिजातम् अकुलीनं च ) कति चन. प्राणिनो भजन्ताम, सुमतिस्तु जगति हंसगतिं ( मरालगमनां, परमहंसशरणभूतां च ) अभिजातां ( कुलीनां सुन्दरीं च ) त्वामेव सेवते इत्याह ।

चित्तवृत्तिरिह कञ्जमन्दिरे
धुन्वतीं दुरितपुञ्जमिन्दिरे ।
सिद्धये जननि सेवतान्तरां
त्वामनाकलितदेवताऽन्तरा ॥ १६ ॥

चित्तेति । कञ्जमन्दिरे ! हे इन्दिरे ! हे जननि ! अनाकलितं फलदाने ऽनपेक्षितं देवताऽन्तरं यया सा चित्तवृत्तिः दुरितानां पुञ्जं समूहं धुन्वतीं त्वां रमां सिद्धये सकलसिद्धिप्राप्त्यर्थम् इह सेवतान्तरामतिशयेन सेवतामित्यर्थः । काव्यलिङ्गमलङ्कारः । रथोद्धतावृत्तम् ॥ १६ ॥

यद्यादधासि करुणां यदि वा न पद्मे
किं दैवतैस्त्वदितरैरपवर्गलिप्सोः ।
तुष्टो यदि क्षितिपतिर्यदि वा न तुष्टः
किं नाम शौरिसखि पारिषदैर्विवित्सोः ॥ १७ ॥

यदीति । हे शौरिसखि ! हे पद्मे ! त्वं यदि करुणाम् आदधासि करोषि यदि वा न करोषीत्यर्थः । अपवर्गं मोक्षं लब्धु-

---

१६ हे कमलालये ! इन्दिरे ! मच्चित्तवृत्तिरनासेविताऽन्यदेवता सती इह लोके पापौघनाशिनीं त्वामेव सिद्धये भजतामित्याह ।

१७ हे हरिसखि ! पद्मे ! त्वं यदि दयसे तर्हि मुमुक्षोर्मम ( त्वत्कृपयैवाऽभीप्सितमोक्षप्राप्तेः ) अन्यदेवताभिः किं प्रयोजनं ? यदि त्वं न कृपां करोषि तर्ह्यपि मोक्षमात्रार्थिनो मम लौकिकफलप्रदैरितरैर्देवैः किं प्रयोजनम्? इति धनार्थिनो नृपतौ तुष्टे ऽभीप्सितसिद्धेर्न तत्पारिषदैः प्रयोजनं, रुष्टे च तेषामकिञ्चित्करत्वान्नार्थस्तैरित्युक्त्या समर्थयन् मुमुक्षोर्ममाऽऽकाङ्क्षितपूरणं त्वन्मात्रायत्तमित्याह ।

मिच्छति तस्य । डुलभष्प्राप्तावित्यस्मात्सनि मीमाघुरभलभेत्यादिना इत्वाऽभ्यासलोपे सनाशंसभिक्ष इत्युप्रत्ययः । त्वत्तः इतरैरन्यैर्दैवतैः किं ? दृष्टान्तः—यदि क्षितिपतिः राजा तुष्टः प्रीतः यदि वा न तुष्टः अर्थादुदासीनो रुष्टो वा तर्हि पारिषदैः सेवकैः विवित्सोः प्राप्तुमिच्छोः किं नाम ? किमपि फलं नास्तीति भावः । प्रतिवस्तूपमालङ्कारः । वसन्ततिलकावृत्तम् ॥ १७ ॥

दृष्टाऽदृष्टेप्सितपुषि भवत्पादपद्माऽवलम्बे
दिष्ट्या लब्धे क इह भजतां देवतां भूष्णुरन्याम् ।
दृष्टे स्पष्टं ननु दिनकरे दृश्यसन्दर्शनार्थं
दीपाऽऽरोपव्यसनमजडो देवि कः स्वीकरोति ॥ १८ ॥

दृष्टेति । हे देवि ! दृष्टम् ऐहिकम् अदृष्टमामुष्मिकं ते ईप्सिते इष्टे पुष्णाति तस्मिन्भवत्याः पादपद्मयोरवलम्बे आधारे दिष्ट्या दैवेन लब्धे सति भूष्णुर्हितेच्छुः पुमान् इह लोके अन्यां देवतां कः सेवताम् । दृष्टान्तः—नन्विति वितर्के, दिनकरे सूर्ये स्पष्टं दृष्टे सति दीपाऽऽरोपस्य दीपोद्योजनस्य व्यसनमुद्योगं कः अजडः निपुणः स्वीकरोति ? न कोऽपीति । दृष्टान्तालङ्कारः । मन्दाक्रान्तावृत्तम् ॥ १८ ॥

---

१८ हे देवि ! ऐहिकाऽऽमुष्मिकार्थदायके त्वच्चरणाऽवलम्बे भाग्याल्लब्धे सति निजहितेप्सुः को वा परां देवतां सेवताम् ? इति सहस्रकिरणे उदिते सति दृश्यघटादिविषयाऽवलोकनार्थं को वा प्रभिज्ञः प्रदीपोद्योजनाऽऽग्रहं समङ्गीकरोतीत्युक्त्या समर्थयन्नाह ।

त्वयि जननि जयन्त्यां शाश्वतैश्वर्यदात्र्यां
परिमितफलदात्रीर्देवताः सेवतां कः ।
फलभरनतसस्यां प्राप्य चोलक्षितिं किं
प्रकटमटति विन्ध्यप्रान्तभूमीरमूढः ॥ १९ ॥

त्वयीति । हे जननि ! शाश्वतं ध्रुवम् ऐश्वर्यं ददाति तस्यां त्वयि जयन्त्यां विजयन्त्यां(?) सत्यां परिमितं फलं ददति ताः देवताः कः सेवताम् ? दृष्टान्तः—फलभरैर्नतं सस्यं धान्यतरुं 'पिक' इति लोके, यस्यां तां चोलदेशस्य क्षितिं प्राप्य अमूढः सुधीः प्रकटं यथा तथा विन्ध्यस्य प्रान्ते समीपे भूमीः अटति किम् ? अपि तु नेत्यर्थः । दृष्टान्ताऽलङ्कारः । मालिनीवृत्तम् ॥ १९ ॥

तव जलनिधिकन्ये दैवतैः पामरोऽन्यैः
कलयतु समतामप्यन्ततः किं ततस्ते ।
दरमपि गरिमाणं दर्दुरोऽकर्दमाया
विबुधपुरतटिन्या वेत्ति किं पल्वलेभ्यः ॥ २० ॥

तवेति । हे जलनिधिकन्ये ! पामरः प्राकृतः अन्यैर्दैवतैः

---

१९ हे जननि ! शाश्वतैश्वर्यदायिन्यां त्वयि जयन्त्यां सत्यां परिच्छिन्न( अल्प )फलप्रदा देवताः कः सेवताम्?मिति फलभारविनम्रसस्यां चोलदेशभूमिं प्राप्य को वा चतुरो विन्ध्यकान्तारभूमीं गच्छती?त्युक्त्या समर्थयन्नाह ।

२० हे जलनिधिकन्ये ! पामरः इतरैर्दैवतैस्तव सादृश्यं वदतु, तेन वस्तुतो निरुपमायास्ते का हानिः ?' इति भेको निष्पङ्कायाः मन्दाकिन्या वेशन्तेभ्यः स्तोकमपि महत्त्वं जानाति किं? मिति वचनेन समर्थनपूर्वकमाह ।

तव समतां कलयतु करोतु, अन्ततः ततः ते तव किं ? न किमपीत्यर्थः । दृष्टान्तः—दर्दुरो भेकः अकर्दमाया अपङ्काया विबुधतटिन्या भागीरथ्याः पल्वलेभ्यः अल्पसरोभ्यः सकाशाद्गरमीषदपि गरिमाणं गुरुत्वं, गुरुशब्दादिमनिचि प्रियस्थिरेत्यादिना गरादेशः । वेत्ति जानाति किं ? तर्हि नेत्यर्थः । प्रतिवस्तूपमालङ्कारः । मालिनीवृत्तम् ॥ २० ॥

विष्णोः पत्नि भवत्प्रसादविरहव्यावर्त्यमानश्रियां
संपत्तिष्ठति सा न दीर्घमुदिता या क्षुद्रदेवाऽर्चनैः ।
अन्नाऽलाभत एव शुष्कवपुषां कुक्षौ पुनः पीनता
कष्टं श्वासनिरोधनैरुपनता कालं कियन्तं वसेत् ॥ २१ ॥

विष्णोरिति । हे विष्णोः पत्नि ! भवत्याः प्रसादस्य विरहेण राहित्येन व्यावर्त्यमाना निष्कास्यमाना श्रीर्येषां तेषां संपत् सा क्षुद्राणां देवानामर्चनैः उदितोत्पन्ना ऽपि दीर्घं चिरं न तिष्ठति । दृष्टान्तः—अन्नस्याऽलाभतः शुष्कं वपुर्येषां तेषां श्वासानां निरोधनैः कुक्षौ उपनता प्राप्ता पीनता पुष्टता कष्टं कियन्तं कालं वसेदिति काकुः । अत्र द्वितीया प्रतिवस्तूपमा । शार्दूल० ॥ २१ ॥

———

२१ हे विष्णुपत्नि ! त्वदनुग्रहाऽभावनिवर्त्यमानसंपदां जनानां क्षुद्रदेवताऽऽराधननात्पन्ना श्रीश्चिरं न तिष्ठतीति अन्नाऽप्राप्त्या क्षीणशरीराणामुदरं श्वासनिरोधोपनता पीवरता कियत्कालपर्यन्तं तिष्ठेदिति वचनेन समर्थयन्नाह ।

कल्याणं भवती करोति भजतामेका ऽपि लोकाऽम्ब यत्
संभूयाऽपि च देवताऽन्तरशतैर्नैतद्विधातुं क्षमम् ।
राकाचन्द्रिकया कया ऽपि सुकरं विश्वप्रजाऽऽह्लादनं
नैकाभिर्ननु तारकाभिरपि वा नो शक्यनिष्पादनम्॥२२॥

कल्याणमिति । हे लोकाम्ब ! भवती एका ऽपि भजतां कल्याणं यत्करोति एतद्देवताऽन्तराणां अन्यदेवानां शतैः सम्भूय मिलित्वापि विधातुं न क्षमम् । दृष्टान्तः—कया ऽपि राकायाः पौर्णमास्याश्चन्द्रिकया सुकरं यद्विश्वप्रजानां सर्वजनानाम् आह्लादनं तन्ननु । नैकाभिर्बहुभिः, नशब्देन सुप्सुपेति समासः । ताराभिर्नक्षत्रैः शक्यं निष्पादनमुत्पादनं यस्य तन्नो भवति । अत्र 'कामं नृपा' इतिवद् दृष्टान्तालङ्कारः । शार्दूलविक्रीडि० ॥ २२ ॥

ननु तव पदाऽम्भोजद्वन्द्वे निविष्टमना मना-
गपि वितनुते देवेष्वन्येषु मेदुरमादरम् ।

—·——

२२ हे लोकाम्ब ! एकापि त्वं सेवमानानां यत् कल्याणं करोषि एतद्देवतान्तरशतैर्मिलितैरपि कर्तुं न शक्यमिति एकयापि पूर्णिमाज्योत्स्नया सुकरं सकललोकाऽऽह्लादनमनेकाभिस्ताराभिः संभूयापि न सूत्पादमित्यनेन समर्थयन्नाह ।

२३ हे कमलवासिनि ! तव चरणकमलद्वये समासक्तमानसो ऽपरेषु देवेषु घनमादरं कुरुते ननु ? (कुरुते किम् ?) इति सुन्दरं

ललितमृदुले लब्धस्वादो रसालकपल्लवे
स्पृहयति पिकः कञ्जाऽऽवासे करीरदलानि किम्॥२३॥

नन्विति । हे कञ्जाऽऽवासे ! तव पदाऽम्भोजद्वन्द्वे निविष्टं मनो येन स नरः मनागीषदपि अन्यदेवेषु मेदुरं सान्द्रम् आदरं वितनुते ननु विस्तारयति किम् ? दृष्टान्तः—ललितः सुन्दरश्चासौ मृदुलः कोमलश्च तस्मिन् रसालकस्याऽऽम्रस्य पल्लवे लब्धः प्राप्तः स्वादो येन सः पिकः कोकिलः, करीरः 'नेपती' इति लोके, तस्य दलानि पर्णानि स्पृहयति किम् ? इति काकुः । दृष्टान्ताऽलङ्कारः । हरिणीवृत्तम् ॥ २३ ॥

मातः पद्मे मृत्युमत्येतुकामो
मुक्त्वा कस्त्वां मानयेत् क्षुद्रदेवान् ।
प्रौढां नावं प्राप्य सिन्धुं तरिष्यन्
काशस्तम्बाऽऽलम्बनं कश्चिकीर्षेत् ॥ २४ ॥

मातरिति । हे मातः ! पद्मे ! त्वां मुक्त्वा त्यक्त्वा मृत्युं मरणमत्येतुमतिक्रमितुं कामो यस्य सः कः पुमान् क्षुद्रदेवान् मानयेत् ? मान पूजायामित्यस्मात्कर्तरि विधिलिङ् । दृष्टान्तः—सिन्धुं तरितुमिच्छंस्तरिष्यन्नरः प्रौढां नावं प्राप्य काशस्तम्बस्य आलम्बनमाश्रयं क इच्छेत् ? न कोऽपीति भावः । दृष्टान्तालङ्कारः । शालिनीवृ० ॥ २४ ॥

———

कोमले च चूतपल्लवे प्राप्तास्वादः कोकिलो वंशाङ्कुरपत्राणि वाञ्छति किमित्युक्त्या दृढीकुर्वन्नाह ।

२४ हे मातः ! कमले ! अमरत्वमिच्छन् कस्त्वां विहाय क्षुद्रानितरदेवान् पूजयेत ? इति समुद्रमुत्तितीर्षुः को वा महतीं तरणिं प्राप्य काशदण्डाऽवलम्बनं कर्तुमिच्छेदित्यनेन साधयन्नाह ।

संदत्ते सकृदर्चिता ऽपि भवती साम्राज्यमत्यूर्जितं
त्वद्भिन्नैस्तु किमस्ति देवि बहुधा ऽप्यासेवितैर्दैवतैः ।
सत्सिद्धिं सकृदीक्षितो ऽपि दिशति श्रीरामसेतुर्नृणा-
मर्थः को ऽस्ति तटाकसेतुशतकैरश्रान्तदृष्टैरपि ॥ २५ ॥

समिति । हे देवि ! भवती सकृदेकवारम् अर्चिता ऽपि अत्यूर्जितं विपुलं साम्राज्यं सन्दत्ते, त्वत्तः भिन्नैर्दैवैर्बहुधा आसेवितैरपि किमस्ति ? नेति भावः । दृष्टान्तः—श्रीरामसेतुः सकृद ईक्षितो ऽपि नृणां सत्सिद्धिं चित्तशुद्धिं मुक्तिं वा दिशति, ततः अश्रान्तं सततं दृष्टैरपि तटाकानां सरसां सेतुशतकैः को ऽर्थो ऽस्ति ? न किमपि प्रयोजनमित्यर्थः । प्रतिवस्तूपमालङ्कारः । शार्दूलविक्रीडितम् ॥ २५ ॥

देवि त्वत्पदपद्मवन्दनधना दुर्दैवतोपासना-
लब्धं मुग्धवधूकटाक्षतरलं नैवाऽऽद्रियन्ते धनम् ।
वेधा विष्टपचित्रसृष्टिपटुधीरर्थक्रियादूरगं
व्यामोहाऽऽवहमैन्द्रजालिकजगच्चित्रं किमु श्लाघते ॥ २६ ॥

देवीति । हे देवि ! तव पादपद्मस्य वन्दनमेव धनं येषां

---

२५ हे देवि ! त्वमेकवारं पूजितापि अतिप्राज्यं साम्राज्यं वितरसि, त्वदितरैर्बहुधा सेवितैर्देवैः किम् ( फलम् ) अस्ती?ति रामबद्धः समुद्रसेतुः सकृद् दृष्टोऽपि ब्रह्महत्यादिदुरितदूरीकरणलक्षणां सिद्धिं ददाति, सरःसेतुशतैर्निरन्तरदृष्टैरपि पुरुषाणां किं प्रयोजनं सिध्यती?त्यनेन दृढयन्नाह ।

२६ हे देवि ! तावकचरणवन्दनमात्रधना जना देवतान्तराऽऽराधनसमासादितं नवोढाङ्गनाऽवलोकनचञ्चलं धनं न मानयन्तीति जगच्चित्रसर्गक्षमगतिर्ब्रह्मा निरर्थकं मोहाऽऽवहमैन्द्रजालिकप्रदर्शितमसत्यं लोकचित्रमभिनन्दति कि?मित्युक्त्या पोषयन्नाह ।

ते नराः दुष्टानां क्षुद्राणां देवतानामुपासनया लब्धं तथा मुग्धवधूनां कटाक्षवत्तरलं धनं नवाऽऽद्रियन्ते । दृष्टान्तः—विष्टपानां भुवनानां चित्रायां सृष्टौ पटुधीः कुशलबुद्धिर्वेधा ब्रह्मा अर्थस्य जलादेः क्रियाया आहरणादिरूपायाः दूरं गच्छति निरुपयोगीत्यर्थः। इन्द्रजालं तन्निर्वृत्तं, मायिकमित्यर्थः। निर्वृत्तेऽक्षद्यूतादिभ्य इति ठक् । तच्च तज्जगन्मोहाऽऽवहं चित्रमिति श्लाघते किमु ? नेति भावः । दृष्टान्ताऽलङ्कारः । शार्दूलविक्रीडितम् ॥ २६ ॥

सत्यप्यागसि संश्रितान् करुणया संरक्षसि त्वं रमे
क्षोदिष्ठादपराधतोऽपि भजके कुप्यन्ति देवाः परं ।
छेत्तृणामपि तापमम्ब हरते शाखी निजच्छायया
गाढस्पर्शत एव पोषकमपि घ्नन्ति क्रुधा पन्नगाः ॥२७॥

सतीति । हे रमे ! आगसि सत्यपि कृते सतीति भावः। संश्रितान् करुणया त्वं रक्षसि, परे देवाः क्षोदिष्ठादतिक्षुद्रात् । स्थूलदूरयुवेत्यादिना साधुः। अपराधतोऽपि कुप्यन्ति । दृष्टान्तः—हे ऽम्ब ! शाखी वृक्षः निजच्छायया छेतृणां स्वच्छेदकानामपि तापं हरते, पन्नगास्तु गाढस्पर्शनतः दृढाऽऽलम्भनमात्रेण(?) पोषकमपि क्रुधा घ्नन्ति हिंसन्ति । दृष्टान्तालङ्कारः । शार्दूलविक्री० ॥ २७ ॥

———

२७ हे रमे ! त्वम् अपराधे सत्यपि आश्रितान् दयया रक्षसि, परे देवाः क्षुद्रतमादप्यपराधादाराधके कुप्यन्तीति वृक्षो निजच्छेदकानामपि तापं स्वच्छायया हरति, सर्पास्तु निजपालकमपि गाढस्पर्शमात्रादेव कोपेन घ्नन्तीति वचनेन साश्चर्यमाह ।

सुभूयानायासः फलमगुरु दुर्दैवतजुषां
प्रयासः क्षोदीयान् फलमतिमहत् त्वां तु भजताम् ।
लघिष्ठो लाभः स्याल्लवणवणिजां श्रान्तिरधिका
फलत्यल्पो यत्नः फलमलघु कर्पूरवणिजाम् ॥ २८ ॥

सुभूयानिति । दुर्दैवतजुषां यक्षिण्यादिसेविनां पुंसाम् आयासः सुभूयान् फलं अगुर्वीयत्, त्वां भजतां तु प्रयासः क्षोदीयानल्पः फलम् अत्यन्तं महत् । दृष्टान्त उभयत्राऽपि—लवणवणिजां लवणविक्रयिणां लाभः लघिष्ठः अतिलघुः श्रान्तिरधिका, कर्पूरवणिजां यत्नः अल्पः अलघु फलम् फलत्युत्पादयति। दृष्टान्तालङ्कारः । शिखरिणीवृत्तम् ॥ २८ ॥

स्थास्नु श्रेयः स भजति रमे यः पदं त्वत्कृपाया
बाधोदर्कं विभवमुपयात्यन्यदेवोपसेवी ।
दृष्टान्तो ऽन्त्ये गिरिशभजनप्राप्तभूतिर्दशास्य-
स्तद्भ्राताऽऽद्ये तव करुणया लब्धनिष्कम्पसम्पत् ॥२९॥

हे रमे ! यस्तव कृपायाः पदं सः स्थास्नु स्थिरं श्रेयः

---

२८ दुष्टदेवतासेवकानां परिश्रमो महीयान् फलं चाऽल्पं, त्वां भजतां तु अतिस्तोकः श्रमः फलं त्वतिमहत्, इति लवणव्यवहारिणां लाभो ऽतिक्षुद्रः परिश्रमश्च भूयान्, कर्पूरव्यवहारिणां तु यत्नः स्वल्पो लाभश्च महीयानित्युक्त्या दृढीकुर्वन्नाह ।

२९ हे रमे ! यस्त्वत्करुणाभाजनं स स्थिरतरं कल्याणं भजते, अन्यदेवाराधकश्च विनश्वरं विभवं प्राप्नोतीत्यत्राऽन्तिमे शिवभजनसंप्राप्तनश्वरैश्वर्यो रावण, आदिमे च त्वद्दयया ऽऽसादितस्थिरसम्पद्रावणाऽनुजो विभीषणो दृष्टान्त इत्याह ।

भजति, यो ऽन्यान् देवानुपसेवते स तु बाधो नाशः उदर्क उत्तरफलं यस्य तद्विभवम् उपयाति । अत्राऽन्ये बाधविषये गिरिशस्य भजनेन प्राप्तभूतिर्लब्धसंपद्दशाऽऽस्यः, आद्ये संपत्स्थैर्ये तत्र करुणया लब्धा निष्कम्पा संपद्येन स तज्ज्ञाता विभीषण इत्यर्थः । काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥२९॥

त्वां मातरुपासीना न देवतान्तरमुपासते सन्तः ।
लब्धे निधौ निरवधौ कदर्यसेवाव्यथां सहन्ते के ॥३०॥

इति श्रीमद्बङ्कटाध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे
देवतान्तरपरिसङ्ख्यास्तबको विंशः ॥ २० ॥

त्वामिति । हे मातः ! त्वाम् उपासीनाः सन्तः साधवः देवतान्तरं नोपासते । दृष्टान्तः—निरवधौ निधौ लब्धे सति कदर्यस्य कृपणस्य सेवाया व्यथां के सहन्ते ? न केपीति भावः । दृष्टान्तालङ्कारः । गीतिवृत्तम् ॥ ३० ॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन विरचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मीसहस्रटीकायां
देवतान्तरपरिसङ्ख्यास्तबको विंशः संपूर्णो ऽभूत् ॥२०॥

---

३० हे मातः ! त्वामाश्रिताः साधवो ऽन्यां देवतां न सेवन्ते, इति अक्षये शेवधौ प्राप्ते सति कृपणसेवाऽऽयासं के वा सहन्ते ? इत्युक्त्वा स्थिरीकुर्वंस्तबकं पूरयति ।

इति श्रीमानवल्लपुपाळयतैलङ्गरामशास्त्रिविरचितायां लक्ष्मीसहस्राऽवतरणिकाश्रीशिक्षायां परिसंख्यास्तबकः ॥ २० ॥

## अथ दशाऽवतारस्तबकः ॥ २१ ॥

दशस्वप्यवतारेषु पूर्णं ब्रह्म सनातनम् ।
यमाहुर्ज्ञानिनः सर्वे स रामः श्रेयसे ऽस्तु नः ॥ २१ ॥

अथाऽस्मिन्नेकविंशस्तबके श्रीविष्णोरवतारदशकं वर्णयंस्तत्राऽपि श्रीमहालक्ष्म्या महत्त्वं वर्णयितुं प्रथमनमनपद्ये दशस्वप्यवतारेष्वति तल्लिङ्गं दर्शयन्मङ्गलमाचरति—

दशस्वप्यवतारेषु देवो यद्रूपसंश्रयात् ।
साधयामास कार्याणि सतां तस्यै श्रिये नमः ॥ १ ॥

दशस्विति॰ । देवो विष्णुः दशस्वप्यवतारेषु मत्स्यादिषु यस्या लक्ष्म्याः रूपस्य संश्रयात्संबन्धात्सतां साधूनां कार्याणि संपादयामास तस्यै श्रिये नमः । अत्र रूपेत्युपलक्षणमन्येषां, तच्च तत्र तत्र वर्णयिष्यते । यथा तृतीयश्लोके त्वद्दृष्टिरूपं मात्स्यं वपुरिति । उदात्तालङ्कारः । पथ्यावक्त्रं वृत्तम्॥१॥

देवि त्वदालब्धदयारसेन
देवेन मात्स्यं वपुराश्रितेन ।

---

१ साम्प्रतं हरेर्दशस्वप्यवतारेषु रमासम्बन्धादेव तत्तत्कर्मसंपादनसामर्थ्यमिति प्रदर्शनमुखेन दशाऽवतारस्तबकेनैकविंशेन तुष्टूषुरादौ भगवान् हरिर्यद्रूपाश्रयणादेव सज्जनानां कार्याणि सम्पादयामास तस्यै श्रिये नम इति मङ्गलमाचरति ।

२ हे देवि ! त्वत्तः प्राप्तकरुणारसेन मत्स्यमूर्तिना भगवता कर्त्रा अष्टश्रुतिः ( श्रोत्राऽष्टकयुक्तः ) अपि ब्रह्मा अनष्टश्रुतित्वम् ( परिस्फुरितवेदवत्त्वं, श्रोत्राष्टकाऽभाववत्त्वं च ) अनीयतेति अष्टश्रुतिमतो

आश्चर्यमष्टश्रुतिरप्यनष्ट-

श्रुतित्वमापद्यत पद्मजन्मा ॥ २ ॥

देवीति । हे देवि ! त्वत्तः आलब्धः प्राप्तः दयारसो येन तथा मत्स्यस्येदं मात्स्यम् । तस्येदमित्यण् । वपुः शरीरमाश्रितेनाऽऽस्थितेन देवेन विष्णुना करणेन अष्टौ श्रुतयः कर्णाः यस्य सो ऽपि पद्मजन्मा कमलासनः ब्रह्मा, न अष्टश्रुतयो यस्य इत्याश्चर्यं । अनष्टाः प्राप्ताः श्रुतयो यस्य इत्यर्थकरणेनाऽऽश्चर्याऽऽभावः । तत्त्वम् अनष्टश्रुतित्वम् आपद्यत प्राप्तवानित्यर्थः । अत्र दयारसाऽऽश्रयो ज्ञेयः । अयमेकः, अग्रिमौ द्वौ इति श्लोकत्रयेण मत्स्याऽवतारवर्णनम् । विरोधाऽऽभासालं० । उपजाति० ॥ २ ॥

भूयिष्ठां तव दृष्टिरेव कमले भूतिं चिरात् प्रोषितां

भूयोऽप्यानयति क्षणादिति नृणां व्यक्तं घृणावारिधिः ।

देवस्तावकदृष्टिरूपमनघं मीनाऽवतारे वहन्

धात्रे ऽदत्त सतां श्रियं श्रुतिमयीं दैत्याऽपनीतां पुनः ॥ ३ ॥

भूयिष्ठामिति । हे कमले ! चिरात् प्रोषितां गतां भूतिं घृणावारिधिः कृपासिन्धुः तव दृष्टिरेव क्षणात् नृणाम् आनय-

---

ऽष्टश्रुतिमत्त्वाऽभावाऽऽपादनमाश्चर्यकरमिति श्लेषेण वदन् ब्रह्मा नित्योपस्थितवेदो ऽक्रियतेत्याह ।

३ हे कमले ! दयार्द्रधिर्हरिस्ते दृष्टिर्नृणां चिराऽपगतां गरीयसीं सम्पदं क्षणात्पुनरानयतीति हेतोर्हरिर्मत्स्याऽवतारे निर्दोषं त्वद्दृशोः रूपं स्पष्टं वहन् (त्वन्नेत्रस्य मत्स्यसदृशत्वात्) दैत्याऽपहृतां वेदमयीं सज्जनसम्पत्तिं ब्रह्मणे ऽदत्तेत्याह ।

तीति व्यक्तं, यतः स देवः मीनाऽवतारे ऽनघं निष्पापं तावकदृष्टेः रूपं मीनरूपं वहन् दैत्यैरपनीतां हृतां तां श्रुतिमयीं श्रियं पुनर्धात्रे अदत्त । अत्र दृष्टिरूपाऽऽश्रयः । काव्यलिङ्गम् । शार्दूलविक्रीडितम् ॥ ३ ॥

सा हि श्रीरमृता सतामिति ननु त्वन्नामधेयाऽऽश्रया
त्वद्दास्यं भजति श्रुतिः स्वयमिति प्राप्ताऽऽदरः श्रीधरः ।
तां मग्नां पुनरुद्धरन् जलनिधौ तापाऽर्णवादुद्धरेत्
त्वद्दास्यैकधनाञ्जनानिति रमे धैर्यं चरीकर्ति नः ॥ ४ ॥

सेति । 'यमृषयस्त्रयीविदो विदुः ऋचः सामानि यजूंषि सा हि श्रीरमृता सता'मिति त्वया श्रीरिति नाम धृतं, यो हि यस्य नाम वहति स तस्य दास इति प्रसिद्धम्, इति तव नामधेयस्य नाम्न आश्रयो यस्याः सा सती तव दास्यमपि भजति, इति हेतोः प्राप्त आदरो येन स श्रीधरः जलनिधौ मग्नां ताम् उद्धरन् तव दास्यमेव धनं येषां तान् जनान् तापत्रयरूपार्णवात् उद्धरेदिति हे रमे ! नः धैर्यं चरीकर्ति । यङ्लुगन्ताड्डुकृञ् करणे इत्यस्माल्लुटि रीङ् ऋत इति रीगागमः । अत्र त्वन्नामाश्रयहेतुकं वेदोद्धरणम् । अनुमानकाव्यलिङ्गालङ्कारौ । शार्दूलविक्रीडितम् ॥ ४ ॥

---

४ हे रमे ! "सा हि श्रीरमृता सताम्" इत्येवंरूपा श्रुतिः त्वन्नामधारकतया स्वयं त्वद्दास्यं भजते (दासस्य स्वामिनामधारकत्वस्य प्रसिद्धत्वात्) इति धृतबहुमानः श्रीधरो जलधौ मग्नां तां (त्वद्दासीभूतां श्रुतिं) पुनरप्युद्धरन् सन् त्वद्दास्यमात्रद्रविणान् लोकान् उद्धरेदिति दासानामस्माकं धैर्यं भृशं करोतीत्याह ।

अथ कूर्माऽवतारः--

देवो देवि त्वय्यसौ दानवानां
हन्ता हन्ताऽमन्दरागं दधौ यः।
धर्मं कौर्मं धारयंस्त्वत्सहायो
मातः सो ऽयं मन्दरागं दधाति ॥ ५ ॥

देव इति। देवि! हन्त हर्षे, दानवानां हन्ता ऽसौ देवः यस्त्वयि अमन्दं विपुलं रागं दधौ सो ऽयं हे मातः! त्वं सहायो यस्य स सन् कूर्मसम्बन्धिनं धर्मं देहं धारयन् गृह्णन्मन्दं रागं मन्दरसंज्ञकम् अगं पर्वतं च दधाति बिभर्ति। अत्र त्वय्यमन्दरागः कृतस्तेन त्वदाश्रयः, अत एव स्वात्मनि मन्दरागश्च जातः। शालिनीवृत्तम् ॥ ५ ॥

अथ वराहाऽवतारः--

उरसि सरसिजाऽऽलये वहंस्त्वां
शिरसि दिधीर्षुरिलां त्वदंशभूताम्।

---

५ हे देवि! मातः! दानवानां हन्ता यो ऽसौ देवो हरिस्त्वयि अमन्दमनुरागं धारयामास, त्वया सम्पादितसाहाय्यः सो ऽयं कमठस्य देहं वहन् मन्दरागं (मन्दरपर्वतं, मन्दं प्रेम च) बिभर्तीति अमन्दरागधारिणो मन्दरागधारणमाश्चर्यकरमिति वैचित्र्यप्रदर्शनमुखेन मन्दरपर्वतं पृष्ठे धारयामासेत्याह।

६ हे सरसिजालये! हरिः उरसि त्वां वहन् तावता ऽतृप्त्या त्वदंशभूतां भूमिं शिरसि विवक्षुर्हताऽसुरः स वाराहं दिव्यं रूपमचि-

स्त्वयमयमचिराद्धताऽमराऽरिः

स हरिरुवाह वराहदिव्यरूपम् ॥ ६ ॥

उरसीति । हे सरसिजाऽऽलये ! उरसि हृदि त्वां वहन् सन् तवांशभूतामिलां भूमिं शिरसि धर्तुमिच्छुर्दिधीर्षुः, अंशभूतत्वे प्रमाणं विष्णुपुराणे पराशरः—'यदा च भार्गवो रामस्तदा भूद्धरणी त्वियं'मिति । सोऽयं हरिः हताः अमराणाम् अरयः शत्रुभूतदैत्या येन सः अचिराच्छीघ्रं वराहरूपं दिव्यदेहम् उवाह दधार । अत्र त्वामुरसि वहन्नपि न त्वत्सङ्गपरिपूर्तिरिति अंशभूतां त्वां(?) शिरसि कौतुकाद्धर्तुमेव वराहः अभूत्, वाराहरूपेण तस्य दंष्ट्राऽङ्कुरधारणात्सुकरत्वमिति भवदाश्रयमूलभूत एव वराहाऽवतार इति भावः । उत्प्रेक्षालङ्कारः । पुष्पिताग्रावृत्तम् ॥ ६ ॥

दैतेयेन बलात् पयोधिजठरं देवी मही प्रापिता

मातस्ते स्वसृभावमेव यदगादेकोदरस्थानतः ।

तस्मादेव कृताऽऽदरेण तरसा दामोदरेण स्वयं

दध्रे ऽसौ कुहनावराहवपुषा देवेन दंष्ट्राऽञ्चले ॥ ७ ॥

दैतेयेनेति । हे मातः ! दितेरपत्यं पुमान् दैतेयो हिरण्या-

---

राबुवाहाऽऽदिवराहरूपेणाऽवतीर्ण इति त्वदंशभूतभूमीधारणाय वराहरूपेणाऽवततारेत्याह ।

७ हे मातः ! दैत्येन ( हिरण्याक्षेण ) पयोधिजठरं हठात् प्रापिता मही त्वदुषितपूर्वपयोधिजठराऽवस्थानात् यतस्ते भगिनीत्वं प्राप्ता तस्मात् कारणात् कृताऽऽदरेण कपटवराहमूर्तिना भगवता दामोदरेण भूमिः स्वयं दंष्ट्राऽग्रे ऽधारीत्याह ।

ऽक्षरूपत्वेन। स्त्रीभ्यो ढगिति ढक्। यद्यस्मात्कुलात्पयोधेर्जठरं मध्यं प्रति प्रापिता नीता तत्तस्मात् एकं च तदुदरं च तत्स्थानं च, तस्मादिति ततः, ते लक्ष्म्याः स्वसृभावं भगिनीत्वमगात्प्राप, तस्मादेव हेतोः तरसा वेगेन कृतः आदरः सत्कारो येन तेन दामोदरेण तत्संबन्धेन देवेन कुहनया। कुहना दम्भचर्यायामिति विश्वः। यद्वराहस्य शूकरस्य वपुः शरीरं तेन असौ देवी दंष्ट्राऽञ्चले दंष्ट्रायामेव दध्रे धृतेति। अत्र त्वद्भगिनीत्वाऽऽश्रयः। उत्प्रेक्षालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

अथ नृसिंहाऽवतारः—

पद्मे चक्रभृतो नृसिंहवपुषः प्रह्लादसंक्लेशन-
क्रूराऽपुण्यहिरण्यदेहदलनावेलाऽतिवेलोदयः।
रोषाऽग्निः शमितस्त्वया वत पयोराश्येकशोष्यो ऽपि त-
त्पुत्र्या, शक्तिरुदेति कारणगता प्रायेण कार्येष्वपि॥ ८ ॥

पद्मे इति। हे पद्मे! ना सिंह इव नृसिंहः। उपमितं व्याघ्रादिभिरित्युपमितिसमासः। तस्य वपुर्यस्य तस्य चक्रभृतो विष्णोः प्रह्लादस्य निजभक्तस्य संक्लेशने पीडादाने क्रूरः अपुण्यः पापश्च यः हिरण्यः हिरण्याऽसुरः तस्य दे-

---

८ हे पद्मे! नरहरिशरीरस्य चक्रपाणेः प्रह्लादपीडाप्रदः दारुणपापिष्ठहिरण्यकशिपुशरीरविदारणसमये ऽतिमात्रोदितः समुद्रमात्रशमनीयो ऽपि क्रोधाग्निस्त्वया प्रशमित इति कारणगतं सामर्थ्यं कार्ये प्रायशः संक्रामतीत्युक्त्या समर्थयन्, पयोधिशोष्यो ऽपि (अतिप्रचण्डो ऽपि) नृहरिक्रोधाग्निः, पयोधिपुत्र्या त्वया शमित इत्युचितमेवेत्याह।

हस्य दलनायाः वेलायां समये अतिवेलः अत्यन्तः । अति-वेलभृशात्यर्थेसमरः । उदयो यस्य स रोषाऽग्निः, बत त्वि-समये, पयोराशिना एकमद्वितीयं शोषयितुं योग्यो ऽपि त्वया तस्य पुत्र्या शोषितः । तस्मादत्र कारणगता शक्तिः कार्ये-ष्वप्युदेतीति । अत्राऽवतारे भवत्कृतरोषाऽग्निशमनमूलकमेव ज-गतः सुखमिति । समाऽर्थान्तरन्यासावलङ्कारौ । शार्दूलवि-क्रीडितवृत्तम् ॥ ८ ॥

शरण्यभूतां श्रुतिरिन्दिरे[1] यां
हिरण्यवर्णां हरिणीमभाणीत् ।
सा दिव्यसिंहस्य हिरण्यभेत्तु-
र्निःशङ्कमङ्के रमसे कथं त्वम् ॥ ९ ॥

शरण्येति । हे इन्दिरे ! यां शरण्यभूतां रक्षकभूतां श्रियं हिरण्यवर्णां हरिणीम् इति अभाणीद्बभाषे । 'हिरण्यवर्णां ह-रिणी'मिति श्रीसूक्तभाष्ये हरिणीं हरिद्वर्णां हरिणीरूपधरां वा इति अर्थः कृतः । अपि च तत्रैव 'श्रीर्धृत्वा हरिणीरूपम-रण्ये सञ्चचार ह' इति वामनपुराणीयं वाक्यमुदाहृतम् । सा हरिणीरूपा त्वं हिरण्यभेत्तुर्हिरण्याऽसुरहन्तुर्दिव्यसिंहस्य अङ्के

---

९ हे इन्दिरे ! श्रुतिः ( 'हिरण्यवर्णां हरिणी'मित्यादिश्रीसूक्त-रूपा ) जगद्रक्षिकां यां त्वां हरिणीरूपामवोचत् सा त्वं हिरण्यभेत्तुः ( हिरण्यकशिपुविदारयितुः, सुवर्णनाशकस्य च ) दिव्यसिंहस्य ( नृसिंहस्य, श्रेष्ठकेसरिणश्च ) उत्सङ्गे निःशङ्कं कथं रमसे ? इति हिरण्यवर्णाया हरिणीरूपाया जगद्रक्षिकायास्ते हिरण्यभेत्तुर्मृगा-रिरूपस्य भगवतो ऽङ्के निर्भयाऽवस्थितिराश्चर्यजनिकेति वदन् नृ-सिंहाङ्के विराजमाना भवती जगद्रक्षिका भवतीत्याह ।

---

१ श्रियमिन्दिरे इति १ पु० असङ्गतः पाठः । तदनुसारिणी बालबोधिनी ।

निःशङ्कं निर्भयं यथा तथा कथं रमसे ? कथं क्रीडसीत्यर्थः । प्रमाणविरोधाऽऽभासाऽलङ्कारौ । उपजातिवृत्तम् ॥ ९ ॥

अवनमेव सदा कलयन् गज-
व्यसनभङ्गकृदद्भुतकेसरी ।
हरिणलक्षणदृष्टिरयं त्वया
ऽप्यबलया ऽम्ब गुणेन वशीकृतः ॥ १० ॥

अवनेति । हे ऽम्ब ! अयम् अद्भुतकेसरी अबलया बलरहितया स्त्रिया च त्वया गुणेन तन्तुना सौन्दर्यादिना वशीकृतः स्वाधीनीकृतः । अद्भुतत्वमेव प्रकटयति—स तु प्राकृतसिंहः सदा वनमरण्यमेव कलयन् स्वीकुर्वन्, अयं तु वनाऽभावमवनं रक्षणं च कलयन् । स गजभङ्गकृत्, अयं गजव्यसनस्य भङ्गकृत् गजरक्षक इति । पुनर्हरिणवच्चारु लक्षणं यस्याः सा दृष्टिर्यस्य, स तु हरिणभक्षणदृष्टिः, अयं हरिणानां रक्षणे दृष्टिर्यस्य स इत्यद्भुतत्वम् । श्लेषव्यतिरेकविभावनालङ्काराः । द्रुतविलम्बितं वृत्तम् ॥ १० ॥

---

१० हे अम्ब ! सदा अवनं ( रक्षणं, विपिनभिन्नं च ) स्वीकुर्वन् गजव्यसनभङ्गकृत् ( गजेन्द्रमोक्षकारी, करीन्द्रदुःखनाशकश्च ) हरिणलक्षणदृष्टिः ( हरिणवत्सुलक्षणनेत्रः, रलयोरैक्याद्धरिणरक्षकदर्शनश्च ) अयम् अद्भुतकेसरी ( नृसिंहः, लोकोत्तरचरित्रः सिंहश्च ) अबलयापि ( स्त्रियापि, बलरहितयापि ) त्वया ( गुणेन सौन्दर्यादिना, रज्ज्वा च ) वशीकृत इति श्लेषेण लौकिकात्सिंहान्नृसिंहे ऽद्भुतचरित्रशालित्वं प्रतिपादयन् बलरहितया ऽपि त्वया रज्ज्वा वशीकृत इति आश्चर्यान्तरं प्रदर्शयन् तत्पत्न्या त्वया निजसौन्दर्यादिगुणेन वशीकृत इत्याह ।

हर्यक्षो ऽयं हरिरिति वचस्त्वस्य नाऽभूतपूर्वं
न प्रह्लादोपचयकरता नो हिण्याऽङ्गदत्वम् ।
तस्मादस्मज्जननि परमं विस्मयं ते विधातुं
नाथो ऽपूर्वं किमिह जगृहे नारसिंहं शरीरम् ॥ ११ ॥

हर्यक्ष इति । हे ऽस्मज्जननि ! अयं पूर्वं हरिः इदानीं हर्यक्षो नृसिंह इति वचो वाक्यं पूर्वं भूतं भूतपूर्वं, सह सुपेति सुप्सुपा समासः । तन्न भवतीत्यभूतपूर्वं नवीनं न । हर्यक्षः केसरी हरिरित्यमरादिति भावः । एवमग्रे ऽप्यूह्यम् । पूर्वं यथा प्रह्लादस्याऽऽनन्दस्योपचयकरता ऽऽधिक्यकारकत्वं तथेदानीं प्रह्लादभक्तस्योपचयकरता, पूर्वं हिरण्यस्य स्वर्णस्याऽङ्गदे बाहुभूषणे यस्य इदानीं हिरण्याऽसुरस्याऽङ्गं द्यति खण्डयति तस्य भावस्तत्त्वं, तस्मात्ते परमं विस्मयं विधातुं नाथः हरिः अपूर्वं यत्पूर्वं स्वरूपं तदेवाऽवताराऽन्तरे ऽपि, अथ च नारसिंहं नरसिंहात्मकं शरीरम् इह जगृहे । श्लेषपूर्वरूपोत्प्रेक्षालङ्काराः । मन्दाक्रान्तावृत्तम् ॥ ११ ॥

तत्ताद्दक्षहिरण्यदाननिरतौ भक्ताऽभिरक्षाकृते
सत्कीर्तिं हरितां मुखे खलजनत्रासाऽऽवहामाश्रितौ ।

---

११ हे अस्मज्जननि ! अयं हर्यक्षः सिंहः (नृसिंहरूपः) हरिः (विष्णुः, सिंहश्च) इति वचनं ('हर्यक्षः केसरी हरि'रित्येवंरूपं) तस्य (नृसिंहस्य) अभूतपूर्वं (नवीनं) न भवति, प्रह्लादोपचयकरता (प्रह्लादनामकहिरण्यकशिपुसुतवृद्धिकरत्वं, संतोषवर्धकत्वं च) अपूर्वा न, हिरण्याङ्गदत्वं (हिरण्यकशिपुशरीरविदारकत्वम, सुवर्णाऽङ्गदयुक्तत्वं च) अपूर्वं न, तस्मात् अयं नृसिंहस्ते परममाश्चर्यं विधातुमभूतपूर्वं नारसिंहं शरीरं जगृहे किमित्युत्प्रेक्ष्यते ।

१२ हे देवि ! तत्ताद्दक्षस्य हिरण्यस्य (हिरण्यकशिपोः, सुवर्णस्य

किं चोदञ्चदनेकपापहरणक्रीडोचिताऽऽलोकनौ
देवि स्तौमि मिथः समानचरितौ दिव्यौ युवां दम्पती॥१२॥

तद्विति । हे देवि ! देवीपक्षे तच्च तत्तादृक्षं च तद्धिरण्यं सुवर्णं च तस्य दाने वितरणे, देवपक्षे स चाऽसौ तादृक्षश्च हिरण्याऽसुरश्च तस्य दाने खण्डने च निरता, एवं भक्तानामभिरक्षाकृते रक्षणार्थं खलानां जनानां त्रासाऽऽवहां हरितां दिशां मुखे स्थितां सत्कीर्तिमाश्रिता, पक्षे मुखे लपने सतां कीर्तिः प्रसादो यस्याः सकाशात्तां हरितां सिंहतामाश्रितः, किं चोदञ्चन्ति यान्यनेकानि पापानि तेषां हरणक्रीडायाम् उचितमालोकनं यस्याः, पक्षे उदञ्चताम् अनेकपानां गजानाम् अपहरणक्रीडायामुचितम् आलोकनं यस्य सः, मिथो ऽन्योन्यं समाने चरिते ययोस्तौ तौ प्रसिद्धौ दिवि भवौ दिव्यौ युवां जाया च पतिश्च दम्पती । राजदन्तादित्वात्साधुः । स्तौमि । श्लेषोपमालङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

अथ वामनाऽवतारः—

वक्षःस्थामपि वर्णिताऽनुसृतये कृष्णाऽऽजिनेनाऽऽवृणोद्
देवस्त्वामिति वर्णयन्ति कति चिद्ब्रूमो वयं त्विन्दिरे ।

---

च ) दाने ( खण्डने, वितरणे च ) निरतौ, भक्तजनरक्षणाय खलजनभीतिप्रदां सत्कीर्तिं ( साधुकीर्तिमतीं, समीचीनां कीर्तिं च ) हरितां ( सिंहतां, दिशां च ) मुखं ( आनने, आरम्भे च ) आश्रितौ, किं च उदञ्चताम् अनेकपानाम्(गजानाम्) अपहरणस्य, अनेकेषां पापानामपहरणस्य च क्रीडाया उचितदर्शनौ दिव्यौ जायापती युवां मिथः समानचरितौ स्तौमि इति नृसिंहस्य रमायाश्च श्लेषेण साम्यं प्रतिपादयन्नाह ।

१३ हे इन्दिरे ! देवो हरिर्वक्षःस्थलाऽवस्थितां त्वां वर्णिताऽनुसृतये

भव्यं वामनरूपमेत्य भगवान् भाग्यं हरिष्यन् बले-
रेनं कर्तुमगोचरं शुभपुषां त्वद्वीक्षितानामिति ॥ १३ ॥

वक्ष इति । हे इन्दिरे ! कति चित् कवयः वक्षःस्थां हृत्स्थां त्वां वर्णितया ब्रह्मचर्यस्याऽनृसृतये ऽनुमरणार्थं देवः कृष्णाऽजिनेनाऽऽवृणोदाच्छादयति स्मेति वर्णयन्ति । वयं तु भगवान् वामनरूपमेत्य प्राप्य बलेर्भाग्यं हरिष्यन् हर्तुमिच्छन् सन् शुभपुषां कल्याणकारकाणां तव वीक्षितानाम् एनं बलिम् अगोचरमविषयं कर्तुमावृणोदिति ब्रूमहे । अत्र तवाऽऽलोकाऽपलाप आश्रयः । अपह्नुत्यलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

वर्णित्वमर्णवसुते वहता ऽपि गूढं
वक्षःस्थले न निहिता वनमालिना चेत् ।
कस्त्रीण्यदास्यत पदान्यपि याचते ऽस्मै
कस्माज्जगत्त्रयतया च विवृद्धिरेषाम् ॥ १४ ॥

वर्णित्वमिति । हे अर्णवसुते ! वर्णित्वं ब्रह्मचर्यत्वं वहता ऽपि वनमालिना हरिणा गूढं यथा तथा वक्षःस्थले निहिता स्थापिता न चेत् याचते भिक्षते ऽस्मै त्रीण्यपि पदानि कः

---

( ब्रह्मचर्याऽनुसरणाय ) कृष्णाऽजिनेनाऽऽच्छादयामासेति के चिद्वर्णयन्ति, वयं तु वामनरूपं प्राप्य स भगवान् बलेर्दानवेन्द्रस्य शुभं भाग्यं हरिष्यन् एनं बलिं शुभकारिणां त्वदवलोकनानामविषयं कर्तुं त्वामावृणोदिति ब्रूमहे इत्याह ।

१४ हे अर्णवसुते ! ब्रह्मचारिणा ऽप्यनेन वामनरूपेण वनमालिना भगवता गुप्ततया त्वं वक्षसि निहिता नाऽभविष्यश्चेत् तर्हि याचयित्रे ऽस्मै पदत्रयपरिमितामपि भुवं को वा अदास्यत? कुतश्च पदत्रयस्य लोकत्रयात्मना वृद्धिरभविष्य?दिति त्वत्सांनिध्यादेवाऽस्य तल्लाभ इत्याह ।

दास्यति ? च परमेषां पदानां जगत्त्रयतया वृद्धिः कस्मादपि तु नेत्यर्थः। अत्र निर्गुणस्याऽशरीरस्य परमात्मनः शरीरग्रहणमन्तरा याचनाद्यसम्भवेन तद्ग्रहणादौ शक्त्यपेक्षायाः प्रसिद्धत्वात्त्वदाश्रयः स्पष्टः। वसन्ततिलकावृत्तम् ॥ १४ ॥

दैत्यादेत्य हि कुप्रतिग्रहमहो वृद्ध्या च पुष्णंस्तनं
गोत्रघ्नाऽवरजो मृषाबटुरधःपातं च दातुर्दिशन्।
वामाऽऽकारमगादघाऽऽवलिहृतो हृद्यम्ब ते धारणाद्
धात्रा सञ्जगृहे तदस्य शिवतासम्पादकं पादकम् ॥ १५॥

दैत्यादिति। हे ऽम्ब ! दैत्यात्तमोगुणप्रधानात्कोः पृथ्व्याः कुत्सितं च प्रतिग्रहं दानं च एत्य प्राप्य वृद्ध्या उत्तरोत्तराऽऽधिक्येन, पक्षे द्रव्यवर्धनेन च तनुं शरीरं पुष्णन् पुष्टां कुर्वन् आजीवंश्च। आजीवो जीविका वार्ता इत्यमरः। गोत्रघ्नस्य इन्द्रस्य कुलघ्नस्य च अवरजः अनुजः। यवीयोऽवरजाऽनुजा इत्यमरः। मृषाबटुः दाम्भिकबटुः कपटबटुश्च दातुर्यजमानस्य अधःपातं पातालगमनं नीचैः पातनं च दिशन्। दिश अतिसर्जने इत्य-

---

१५ हे अम्ब! दैत्यात्तामसात् कुप्रतिग्रहं (पृथ्वीदानं, निन्दितं प्रतिग्रहं च) प्राप्य वृद्ध्या तनुं पुष्णन् (प्रवृद्धशरीरः, कुसीदाजीवश्च) गोत्रघ्नाऽवरजः (इन्द्राऽवरजः, कुलघ्नाऽनुजश्च) मृषाबटुः (कपटबटुः) दातुर्बलेरधः पातं (पाताले पतनं, अधोगतिं च) दिशन् सन् वामाऽऽकारं (सुन्दराऽऽकारं, प्रतिकूलाऽऽकारं च) अगात्, तथापि हृदये पापाऽपहायास्तव धारणाद्ब्रह्मणा शिवतासंपादकं (शैवरूपताऽऽपादकं, कल्याणकारितासंपादकं च) अस्य पादोदकं गङ्गारूपं शिरसा जगृहे इति श्लेषेणाऽतिगर्हितचरितस्याप्यस्य त्वद्धारणात् तथा पावित्र्यं समपद्यत यथा ऽस्य चरणोदकं ब्रह्मदेवेनाप्यादृतेति भगवत्याः पातकराशिहनने सामर्थ्याऽतिशयं प्रतिपादयति।

स्माच्छतृप्रत्ययः । वामं सुन्दरं प्रतीपं चाऽऽकारं देहम् । वामौ वल्गुप्रतीपौ द्वावित्यमरः । अगात् प्राप । तथाऽप्यघावलीः हरतीति तस्यास्ते हृदि धारणात् शिवतायाः हरतायाः कल्याणस्य च संपादकम् अस्य हरेः पादस्य कं तीर्थं भागीरथीरूपं गोदारूपं वा जगृहे । अत्र पावित्र्ये तत्राऽऽश्रयः । श्लेषविभावने अलङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

वासस्ते क्व बटो गुहास्वशनमप्याकाङ्क्षितं ते घनं
मां जानीह्यघनाशनाऽऽदरमये किं ते विवाहे स्पृहा ।
मा स्त्री मे दिश गां पदत्रयमितां लोकत्रयी सा ममे-
त्युक्तीर्दिव्यबटोर्निशम्य तदुरस्यम्ब त्वया सिष्मिये॥ १६॥

वास इति । हे बटो ! ते वासो वस्त्रं क्व ? ति बलिना पृष्टे तत्र वसतिरित्यर्थान्तरकल्पनया गुहास्विति वामनेनोत्तरितम् । ए-

---

१६ हे बटो ! तव वासः ( वस्त्रं ) क्व ? इति बलिना पृष्टे वास इत्यस्य वसतिस्थानमित्यर्थं परिकल्प्य गुहासु इति तपस्विजननिवासयोग्यस्थानकथनरूपमुत्तरम् । योगिजनहृदयगुहास्वित्यभिप्रायः । एवं ते घनं सान्द्रमशनमाकाङ्क्षितं किम् ? इति प्रश्नः । माम् अघनाशनादरं ( घनाऽभक्षकं, तपस्विजनानुरूपरूक्षभक्षकं ) जानीहीति उत्तरम् । अघासुरहन्तारमिति वस्तूक्तिः । अये ! तव परिणये इच्छाऽस्ति किम् ? इति पुनः प्रश्नः । मम स्त्री मास्तु इत्युत्तरम् । मा ( लक्ष्मीः ) मे स्त्री वर्तते नास्ति मे विवाहरुचिरिति वास्तविकोक्तिः । पदत्रयपरिमितां गां भूमिं प्रयच्छाऽल्पापि सा ऽल्पसन्तोषिणो मे जगत्त्रयरूपा स्यादित्युत्तरम् । पदत्रयपरिमितायास्तस्या दाने त्वया ऽङ्गीकृते त्रिलोक्यपि मत्पदत्रयामिता भविष्यतीति तथ्योक्तिः । हे मातः ! इत्येवंरूपा दिव्यबटोर्वामनस्योक्तीस्तदुरःस्थतया त्वया निशम्येषद्धासितं, बलिप्रतारणचातुर्येण भगवत इत्याह ।

वमग्रे ऽप्यूह्यम्। ते घनम् अशनम भक्षणमाकाङ्क्षितम् इष्टं कि? मिति पृष्टे, अये वातः! न घनाशनम अघस्य पापस्याऽघासुरस्य च नाशनं च तस्मिन्नादरो यस्य तं मां जानीहि। किं ते विवाहे पाणिपीडने स्पृहे? त्युक्ते मे स्त्री मा, प्रयोजनं नास्ति, मा लक्ष्मीरूपा स्त्री मे वर्तते। पदत्रयमितां गां पृथ्वीं दिश प्रयच्छ, मा मम लोकानां त्रयी, त्रिपदभूदानमेवाऽलं मम भिक्षुबटोरधिकेन किं प्रयोजन?मिति बाह्यो ऽर्थः। आन्तरस्तु तयैव लोकग्रहणं करिष्यामीति। इति विप्रलम्भरूपाः दिव्यवटोः उक्तीर्निशम्य श्रुत्वा हे ऽम्ब! तस्य हरेरुरसि त्वया सिष्मिये ईषद्धासः कृतः। ष्मिङ् ईषद्धसने इत्यस्माद्धात्वे लिट्। वक्रोक्तिश्लेषाऽलङ्कारौ। शार्दूलविक्रीडितं वृत्तम ॥ १६ ॥

अथ परशुरामाऽवतारः—

श्रीमान्निःस्व इवैष वामनतनुः प्रत्यग्रहीद्गां कृता-
वित्थं दुग्धपयोधिजे तव परीहासोक्तिभिर्लज्जितः।
अंशेनाऽर्पितसन्निधिर्भृगुपतौ पूर्वाऽवताराऽर्जितां
तामेनां पुनरध्वरे स भगवान्नूनं ददावृत्विजे॥ १७ ॥

श्रीरिति। हे दुग्धपयोधिजे! श्रीमान् स वामनतनुरेष विष्णुः निःस्वो दरिद्र इव क्रतौ गां प्रत्यग्रहीत् स्वीचकार, इत्थं तव परीहासस्य विनोदस्योक्तिभिर्लज्जितः सन् अंशेन भृगु-

---

१७ हे क्षीरोदसुते! लक्ष्मीपतिरप्ययं वामनशरीरो दरिद्र इव यागे गाम् (भूमिं, धेनुं च) प्रतिजग्राहेति, तव परीहासवचनैर्लज्जितः सन् परशुरामे अंशेन कृतसंनिधानो भगवान् वामनावतारार्जितां तां गां यागे पुनः ऋत्विजे (कश्यपाय) ददावित्याह।

पतौ भार्गवे अर्पितो वत्तः सन्निधिर्येन स सन् पूर्वाऽवतारे वामनरूपे ऽर्जितां सम्पादितां तामेनां भुवं स भगवानध्वरे पुनः ऋत्विजे ददौ नूनमित्युत्प्रेक्षालङ्कारः । अत्र तव परीहास एवाऽऽश्रयः । शार्दूलविक्रीडितं वृ० ॥ १७ ॥

बाहाऽऽकल्पे भृगुकुलपतेर्वज्रकल्पे कुठारे
संग्रामेषु त्रियुगसखि ते सन्निधानं भजन्त्याः ।
क्रोधोन्मेषक्षपितविमतक्षोणिपश्रेणिलक्ष-
ग्रीवोत्थाऽसृग्घुसृणमसृणं गात्रमत्यर्थशोणम् ॥ १८ ॥

बाहेति ! अथ शाम्भवी "श्यामरूपे"ति गौडपादसूत्रे । तथा

"शाम्भवी शुक्लरूपा स्याच्छ्रीविद्या रक्तरूपिका ।
श्यामला श्यामरूपा स्यादित्येता गुणशक्तयः ॥

इति देवीभागवतोपबृंहणे च । अतः श्रीविद्यारूपां रक्तामुत्प्रेक्षते—हे त्रियुगसखि ! भृगुकुलपतेर्भार्गवस्य बाहायाः आकल्पे । भुजा बाहा च बाहौ स्यादिति त्रिकाण्डशेषः । आकल्पवेषौ नेपथ्यमित्यमरः । तथा संग्रामेषु ईषदूनं वज्रं वज्रकल्पः तस्मिन्, ईषदसमाप्ताविति कल्पप्प्रत्ययः । कुठारे परशौ सान्निधानंभजन्त्यास्ते गात्रं क्रोधस्योन्मेषणोदयेन क्षपितानां हतानां विमतानां शत्रुभूतानां क्षोणिपानां श्रेणीनां पङ्क्तीनां लक्षाणां लक्षसङ्ख्या-

---

१८ हे त्रियुगसखि ! परशुरामस्य भुजभूषणस्वरूपे वज्रतुल्ये कुठारे युद्धेषु सांनिध्यं भजन्त्यास्ते क्रोधोदयाविनाशितशत्रुराजराजिलक्षकण्ठनिःसरद्रुधिरकाश्मीराप्रतिचिक्कणां शरीरमत्यन्तरक्तवर्णमभूदिति निसर्गरक्तवर्णाया भगवत्यास्तनोः रक्तवर्णत्वं शत्रुरुधिरलेपसम्बन्धहेतुकमित्युत्प्रेक्षमाण आह ।

काभ्यो ग्रीवाभ्यः उत्थितेनाऽसृजा रक्तरूपेण घुसृणेन "केशर"मिति, तेन मसृणं दिग्धम् अत्यर्थम् अत्यन्तं शोणमभूदिति शेषः । अत्र परशौ तत्राऽऽश्रयः । उत्प्रेक्षाऽलङ्कारः । मन्दाक्रान्ता वृत्तम् ॥ १८ ॥

बिभ्राणे स्वधितिं समिद्धरणतो मन्युप्रपोषक्षमं
लोकेशास्त्रविचक्षणे नृपकुलेज्याकर्मसंस्थाकरे ।
भेजाते ननु दुर्घटाऽर्थघटिनि त्वद्वीक्षणाद्भार्गवे
सामानाधिकरण्यमर्णवसुते ब्राह्मण्यराजन्यते ॥ १९ ॥

बिभ्राणे इति । अर्णवसुते ! हे दुर्घटम् अर्थं प्रयोजनं घटयति तत्सम्बुद्धौ । तव वीक्षणात्, नन्विति वितर्के निश्चयेन वा । भार्गवः ब्राह्मणानां कर्म भावो वा ब्राह्मण्यं, ब्राह्मणादित्वात् ष्यञ् । राज्ञाम् अपत्यं जाती राजन्यम् । राजश्वशुराद्यदिति यति ये चाऽभावकर्मणोरिति प्रकृतिभावः । तयोर्भावस्तत्ते ते च समानं तुल्यम् अधिकरणं धर्मी ययोस्तौ समानाधिकरणौ तयोर्भाव इति ष्यञ् । भेजाते सिषेवाते । तदेवाऽऽह—ब्रह्मपक्षे समिधां पालाशा-

———

१९ हे दुर्घटाऽर्थघटिनि, अर्णवसुते ! समिद्धरणतः (समिधां पलाशानां हरणात्, सम्यक् इद्धाद्दीप्ताद्रणाच्च) मन्युप्रपोषक्षमं (यागसम्पादनसमर्थं, क्रोधवर्धनसमर्थं च) स्वधितिं (यज्ञाऽऽयुधं, कुठारं च) बिभ्राणे, लोकेशास्त्रविचक्षणे (जगति नानाशास्त्रनिपुणे, लोकेशस्य ब्रह्मणो ऽस्त्रे चतुरे च) नृपकुलेज्याकर्मसंस्थाकरे (नृपकुलस्य इज्यानां संस्थाकरे सप्तसंस्थासम्पादके, नृपकुले ज्याकर्मणा संस्थाकरे मरणकारके) भार्गवे त्वद्वीक्षणात् ब्राह्मण्यक्षात्रियत्वे उभे अपि सामानाधिकरण्यं भेजाते इति ब्राह्मणक्षत्रियत्वयोरघटमानसामानाधिकरण्ययोस्त्वद्वीक्षणादेव परशुरामे सामानाधिकरण्यमघटतेत्याह ।

दीनां हरणतो ग्रहणाद्धेतोः मन्योर्यज्ञस्य प्रपोषे क्षमं स्वधितिं यज्ञाऽऽयुधं "स्वधिते मैनं हिंसी"रिति श्रुतेः । राजपक्षे समिद्धं प्रदीप्तं यद्रणं समरं तस्मादिति । ततः मन्योः क्रोधस्य प्रपोषे क्षमं स्वधितिं कुठारं बिभ्राणे । मन्युर्दैन्ये क्रतौ क्रुधीत्युभयत्राऽप्यमरः । तथा ब्रह्मपक्षे लोके भुवने जने वा । शास्त्रे व्याकरणादौ । "मुखं व्याकरणं स्मृत"मित्युक्तत्वादस्य मुख्यत्वं, विचक्षणे चतुरे राजपक्षे लोकेशानामिन्द्रादीनामस्त्रप्रयोगेषु विचक्षणे चतुरे । पुनर्ब्रह्मपक्षे नृपकुलस्य राजवंशस्य इज्याकर्मणो यजनकर्मणः संस्थाः समाप्तीः । "सन्तिष्ठन्ते गृहमधीये"त्यादिसूत्रात् । अथ वा इज्याकर्म यजतिचोदनं श्रौतं, संस्थाः जुहोतिचोदनाः, सप्तपाकयज्ञसंस्थारूपस्मार्तं च । अन्यत्र नृपकुल ज्यायां मौर्व्याः कर्मणा संस्थां मारणं करोति तस्मिन् । संस्था ऽऽधारे स्थितौ मृताविसमरः । अत्र अघटनघटने पटीयस्यास्तवाऽऽश्रयो ज्ञेयः । श्लेषालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

अथ रामाऽवतारः—

पञ्चास्यत्वजुषा पुरा भगवता यो ऽसौ हिरण्याऽसुरः
पञ्चत्वं गमितः स एव जननि स्पर्धाऽभिवृद्धाऽऽग्रहः ।

---

२० हे जननि ! पुरा पञ्चास्यत्वजुषा ( पञ्चवदनत्वजुषा, सिंहत्वजुषा च ) भगवता यो ऽयं हिरण्यकशिपुः पञ्चत्वं ( पञ्चसंख्यावत्त्वं, मरणं च ) प्रापितः स एव हिरण्यकशिपुः स्पर्धया प्रवृद्धाग्रहः सन् तद्द्विगुणाननो ( दशाननः ) भूयो पुनरपि त्वच्चरणरूपाऽपराभाऽग्निना दग्धो ऽपि एकमुखस्य प्रभोः ( रामस्य ) चतुर्मुखास्त्रेण ( चतुर्मुखवता अस्त्रेण, ब्रह्मास्त्रेण च ), अपि दग्ध इति पुरा पञ्चास्येन पञ्चत्वं प्रापितो हिरण्यकशिपुः स्पर्धया दशाननो ऽपि सन्

भूत्वा तद्द्विगुणाऽऽननो जितजगद्भूयस्त्वदागोऽग्निना
दग्धो हन्त चतुर्मुखाऽस्त्रनिहतो ऽप्येकाऽऽननस्य प्रभोः २०

पञ्चेति । हे जननि ? पञ्चास्यत्वं पञ्चवक्त्रत्वं सिंहत्वं च जुषते तेन भगवता यो ऽसौ हिरण्याऽसुरः पञ्चत्वं पञ्चसङ्ख्याकत्वं मरणं च । पञ्चता पञ्चभावे स्यात्पञ्चता मरणे ऽपीति विश्वः । गमितः प्रापितः स एव स्पर्धया ऽभिवृद्धः आग्रहो यस्य सः, तथा तस्याः पञ्चसङ्ख्यायाः द्विगुणान्याननानि यस्य सः, दशानन इत्यर्थः । भूत्वा ऽपि भूयः पुनः तव आगसा ऽपराधरूपेण वह्निना दग्धः, अत एवैकाननस्याऽपि प्रभोः रामस्य चतुर्मुखस्याऽस्त्रेण, ब्रह्माऽस्त्रेणेति भावः । निहतो मारित इति । अत्र दशाननानाशे एकाननचतुराननाऽस्त्रकर्तृकरणके तवाऽपराधकरणमाश्रयः । उत्प्रेक्षाविभावनाश्लेषालङ्काराः । शार्दूलवि० ॥ २० ॥

सप्ताऽश्वाऽन्वयशालिना दशरथप्राप्तोदयेनाऽपि ते
नेत्राऽऽपत्तिविवर्जितेन कमले मुक्तद्विपेन्द्रेण च ।

---

पुनरेकाननस्य चतुर्मुखेनास्त्रेण दग्ध इति पूर्वतो ऽपीदानीं समधिकः पराभवो जात इति वस्तु नृसिंहाऽवतारे भगवता हतो हिरण्यकशिपुः स्पर्धया रावणतां प्राप्तो भगवता रामेण त्वदपराधकरणाद् ब्रह्मास्त्रेणाऽघानीत्याह ।

२१ हे कमले ! सप्ताऽश्वाऽन्वयशालिनापि ( सप्तानामश्वानां सम्बन्धशालिनापि, सूर्यवंशजातेनापि च ) दशरथप्राप्तोदयेनापि ( दशभिः रथैः प्राप्तवृद्धिनापि, दशरथाख्यनृपतिजातेन च ) पत्तिविवर्जितेन, आपत्तिविवर्जितेन च मुक्तद्विपेन्द्रेण (त्यक्तगजेन, मोचितगजेन्द्रेण च ) ते नेत्रा ( नायकेन ) तद्विपरीतगुणो ऽनन्तपा-

निःसङ्ख्याश्वकुलो रथाऽयुतयुतो निःसीमपत्तिच्छटः
स्त्वद्द्रोहादगणेयकुञ्जरगणोऽप्यस्तो रणे रावणः ॥ २१ ॥

सप्तेति । हे कमले ! सप्ताश्वानां सप्ताश्वस्य सूर्यस्याऽन्वयेन सम्बन्धेन वंशेन शालिना शोभिना । तथा दशसङ्ख्याकरथप्राप्तोदयेन दशरथराजकृतोदयेनाऽपि । एवम् आपत्तिविवर्जितेन ईषदपि पत्तिना विवर्जितेन । पदातिपत्तिपदगेत्यमरः । मुक्तः द्विपेन्द्रः गजः गजाश्च येन तेन ते नेत्रा पत्या । पूर्वप्रतिद्वन्द्वीनि विशेषणानि । निःसङ्ख्यम् अश्वानां कुलं यस्य सः तथा रथानामयुतैर्दशसाहस्रैर्युतः, पुनर्निःसीमा पत्तिच्छटा यस्य सः, एवम् अगणेयः । गणनीये तु गणेयमित्यमरः । तद्भिन्नः कुञ्जराणां गणो यस्य सो ऽपि रावणः रणे अस्तः । त्वद्द्रोहादेव हत इत्यत्र त्वद्द्रोहाऽऽश्रयः । श्लेषविभावनापरिकराऽलङ्काराः । शार्दूलवि० ॥ २१ ॥

रघुवरकृतशङ्काभङ्गदम्भेन लङ्का-
मिषभुगशुचिसद्माऽऽस्वादनैः कृष्णवर्त्मा ।

---

दातपरम्परम्परापारिगतो ऽसङ्ख्याऽश्वसमूहसहितो ऽगणनीयवाजिगणो ऽपि रावणस्त्वदपकारात् रणे विनाशित इति श्लेषेण सूचयन् त्वच्चरणेनाऽपकर्ता रावणो रामेण विनाशित इत्याह ।

२२ हे देवि ! लङ्कायामामिषभुजां राक्षसानामपवित्रगृहभक्षणेनाऽशुचिः कृष्णवर्त्मा (कुमार्गगः, अग्निश्च) सत्या ( पतिव्रतया ) भवत्या रामचन्द्रकृतायाः राक्षसगृहोषितायास्तवाऽपावित्र्यशङ्कायाः दूरीकरणकपटेन स्वयमग्नौ प्रवेशात् पवित्रीकृतः स शुचिरिति संज्ञां वहति, मूढास्तमन्यथा (स्वतः शुचि) वदन्तीति पुरा प्रदीपितपुच्छेन हनूमता लङ्कायां राक्षसगृहेषु अमेध्येषु उत्सृष्टो ऽग्निस्तानि

अशुचिरिह भवत्या पावितो देवि सत्या
स वहति शुचिसंज्ञां तद्वदन्त्यन्यथाऽज्ञाः ॥ २२ ॥

रघुवरेति। हे देवि! कृष्णवर्त्मा ऽग्निः पापमार्गरतः, अतः रघुवरेण कृतायाः शङ्कायाः लङ्कायां रावणप्रभावात्को ऽपि बाधितुं न शक्नोति इति कथमस्मत्करगा स्यादित्येवंरूपायाः भङ्गस्य दम्भेन मिषेण लङ्कायां ये आमिषभुजो राक्षसाः। आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनीति विश्वः। तेषां अशुचिसद्मनाम् आस्वादनैर्भक्षणैरशुचिरपि सत्या भवत्या इहाऽस्मिन् भूलोके पावितः सो ऽग्निः शुचिः शुद्धः तन्नाम च। शुचिरप्युपधास्तु इत्यमरः। संज्ञामभिधां बिभर्ति स्वीकरोति तत् अज्ञा मूढाः अन्यथा स्वयमेव शुचिरिति वदन्ति। परिकराङ्कुराऽपन्हुतिकाव्यलिङ्गनिरुक्तयो ऽलङ्काराः। मालिनीवृत्तम् ॥ २२ ॥

अखण्डं कोदण्डं प्रभुरदलयत् खण्डपरशो-
रगृह्णाद्रामस्य प्रसभमपि चाऽखण्डपरशोः।

---

भक्षयित्वा ऽपवित्रीभूतरावणवधोत्तरं परगृहोषितां भार्यां कथं स्वीकरवाणीति शङ्कमाने रामभद्रे तस्य शङ्कापनोदाय स्वयं प्रविश्य पवित्रितः स शुचिरिति संज्ञां लेभे, नो चेत्कृष्णवर्त्मनस्तस्य कुत एवं पावित्र्यमिति बोधयन् अग्नेरपि त्वदीयं पावित्र्यं प्रकृष्यते इत्याह।

२३ हे अम्ब! प्रभू रामः खण्डपरशोः शिवस्य समग्रं चापमखण्डयत्, अकुण्ठितकुठारस्य परशुरामस्य चापं बलादग्रहीत्, समुद्र-

अबध्नादप्यम्भोनिधिमथ दशग्रीवमवधीन्

महाश्चर्याश्चर्यास्त्वयि कृतधियो स्याऽम्ब सुकराः॥२३॥

अखण्डमिति । हे अम्ब ! प्रभु रामः खण्डपरशोः शिवस्य अखण्डमभग्नं कोदण्डं चापम् अखण्डयद्बभञ्ज, अपि च अखण्डपरशोरव्याहतकुठारस्य रामस्य भार्गवस्य प्रसभं बलात् अगृह्णात् गृहीतवान्, पूर्वमभग्नत्वादखण्डाऽपि धनुरत्रेति ज्ञेयम् । अम्भोनिधिम् अबध्नात, सेतुरूपेणेति भावः। अथ दशग्रीवम् अवधीद्धतवान्, एताः महदाश्चर्यं यासु ताश्चर्याः त्वयि त्वत्पाणौ कृता धीर्बुद्धिर्येन तस्य सुकराः सुखेन कर्तुं शक्या इति भावः । काव्यलिङ्गमलङ्कारः । शिखरिणीवृत्तम् ॥ २३ ॥

सङ्कल्पनस्तत्र समीरसुते हि सीते

शीतो बभूव दहनश्चिरमध्यमानः ।

मातर्जगद्भ्रमनिवृत्तिकृते विशन्त्यां

शीतः कुतः स न भवेत्त्वयि देवि साक्षात् ॥ २४ ॥

सङ्कल्पेति । हे सीते ! समीरसुते चिरम् एधमानो दहनः तव सङ्कल्पनः सङ्कल्पमात्रात् शीतो बभूव, अतो हे मातः ! जगतः भ्रमस्य निवृत्तिकृते निवारणार्थे तप्ताऽग्नौ त्वयि साक्षाद्वि-

---

मबध्नात, रावणं जघान, एवं त्वयि निबद्धबुद्धेरस्य रामस्य महाऽऽश्चर्या अत्यद्भुताश्चर्याः ( चरित्राणि ) सुकरा आसन्नित्याह ।

२४ हे सीते ! तवेच्छामात्रात् हनूमति चिरात् प्रवर्धमानो ऽग्निः शीतो बभूव, एवं स्थिते लोकभ्रान्तिदूरीकरणाय ( निजपावित्र्यप्रत्यायनाय ) अग्नि त्वयि स्वयं प्रविशन्त्यां स कथमिव शीतो न भवेदित्याह ।

शन्त्यां प्रविशन्त्यां सत्यां हे देवि ! स शीतः कुतो न भवेत् ? काव्यलिङ्गमलङ्कारः। वसन्ततिलकावृत्तम् ॥ २४ ॥

अथ बलाऽवतारः—

नीलाऽम्बरो हलधरो ननु हन्त भास्व-
द्भूभेदनैकरसिकः शुभशालिवृत्तिः ।
श्यामाकलाभरत एष विवृद्धमोहो
भोगी बभूव भुवनाऽम्ब तव प्रसादात् ॥ २५ ॥

नीलेति । हे भुवनाऽम्ब ! ननु हलधरः बलरामः कृषीवलश्च नीलाम्बरः नीलकम्बलश्च भास्वद्भुवो यमुनायाः सुन्दरभूमेश्च भेदने एकरसिकः शुभेन शालते तच्छाली, पक्षे शुभेषु शालिषु च वृत्तिर्यस्य सः, श्यामायाः षोडशवार्षिकयुवतेः । श्यामा स्त्री मुग्धयौवनेत्यनेकाऽर्थमञ्जरी । कलानां कामकलानां भरादिति भरतः। यद्वा श्यामायाः कस्य सुखस्य लाभे रतः, पक्षे श्यामाकानां 'सावा' इति ख्यातानां लाभे निरतः सन्, विवृद्धः मोहः माध्वीपानजः माया ऊहश्च यस्य सः एषः भोगी शेषो

———

२५ हे भुवनाम्ब ! नीलाम्बरः (नीलवर्णवस्त्रधरः, मलिनवस्त्रश्च) भास्वद्भूभेदनैकरसिकः ( भास्वद्भूः सूर्यसुता यमुना, प्रकाशमाना भूमिश्च, तद्भेदने समासक्तः ) शुभशालिवृत्तिः ( शुभशोभमानव्यापारः, शुभैः शालिभिर्व्रीहिभिर्वृत्तिर्जीवनं यस्य स च ) श्यामायास्तरुण्या रेवत्याः कलानां भारात् विवृद्धमोहः, श्यामाकानां क्षुद्रधान्यविशेषाणां लाभे रतः, विवृद्धमोहो मूढतमश्च, हलधरः ( बलरामः, हालिकश्च ) तव प्रसादात् भोगी ( सर्पेन्द्रशेषावतारः, भोगवांश्च ) बभूवेति श्लेषेण हलिहालिकयोः साम्यं प्रदर्श्य तस्य त्वत्प्रसादादेव भोगिताप्राप्तिरित्याह ।

ऽपि भोगवान् तव प्रसादादभवत् । श्लेषालङ्कारः । वसन्ततिलका० ॥ २५ ॥

अथ कृष्णाऽवतारः—

श्यामा त्वमम्ब दयितश्च तवैष कृष्णो
गाङ्गेययोगमुदिता स च रुक्मिणीशः ।
त्वं स्वादुवाक् स च युवा मधुरोदितश्री-
र्दाम्पत्यमेतदनुरूपमतो मिथो वाम् ॥ २६ ॥

श्यामेति । हे ऽम्ब ! त्वं श्यामा श्यामवर्णा नित्यतरुणी वा, प्रमाणं पूर्वोक्तं, तव दयितः कृष्णः कृष्णवर्णश्च, त्वं गाङ्गेयस्य स्वर्णस्य योगेन मुदिता स च रुक्मं स्वर्णम् अस्या अस्ति सा रुक्मिणी च तस्या ईशः, त्वं स्वादुवाक् स च युवा मधुरा सुन्दरा उदितश्रीर्यस्य मधोः रोदिते च श्रीर्यस्याऽतः मिथः वाम् एतद्दाम्पत्यम् अनुरूपं युक्तम् । श्लेषसमालङ्कारौ । वसन्ततिलकावृत्तम् ॥ २६ ॥



२६ हे अम्ब ! त्वं श्यामा ( तरुणी, श्यामवर्णा च ) तव दयितश्च कृष्णः, ( तन्नामा, कृष्णवर्णश्च, ) एवं त्वं गाङ्गेययोगमुदिता ( सुवर्णसंबन्धसंतुष्टा ) स च रुक्मिणीशः ( रुक्मिण्या रुक्मिभगिन्याः, सुवर्णवत्याश्च ईशः ) त्वं मधुरवचना, स च युवा मधुरोदितश्रीः ( मधुरा सुन्दरी उदिता श्रीर्यस्य, मधुरानगर्यामुत्पन्ना शोभा यस्य, मधोर्दैत्यस्य रोदिता श्रीर्येन तथाभूतश्च वा ) अतो युवयोर्जायापतित्वं परस्पराऽनुरूपमित्याह ।

रामाऽनुषङ्गविहृतौ रचिताऽभिलाषं
मातस्त्रिलोचनजितं भवती मनोज्ञम् ।
पित्रा समानगुणमात्मभुवं प्रसूय
पुष्पाऽऽयुधं कमपि रुक्मिणि लब्धहर्षा ॥ २७ ॥

रामेति । हे रुक्मिणि ! हे मातः ! कृष्णपक्षे रामस्य बलरामस्य, कामपक्षे रामाणां सुन्दरीणाम् अनुषङ्गेण विहृतौ विहारे रचितः अभिलाषो येन तं, त्रिलोचनं शिवं बाणाऽसुरयुद्धे मोहिनीरूपेण वा जयति तम्, अन्यत्र त्रिलोचनेन जितः पार्वतीपरिणयसमये दग्धः तं पित्रा कृष्णेन समाः पूर्वोक्ता गुणा यस्य तं पुष्पाऽऽयुधं कमपि किमपि विलक्षणसौन्दर्यसुकुमारत्वादियुक्तम् आत्मभुवं पुत्रं प्रसूय लब्धः हर्षो यया सा अभूरिति । श्लेषोपमाकाव्यलिङ्गालङ्काराः । वसन्ततिलका वृत्तम् ॥२७॥

गम्भीरगोवाहिकृतार्थक्लृप्त-
सम्पन्नटीका श्रुतिमञ्जुसूक्तिः ।

---

२७ हे रुक्मिणि, मातः ! भवती रामाऽनुषङ्गविहृतौ ( रामेण बलभद्रेण सह विहारे, रामाभिः स्त्रीभिः सह विहारे च) कृताऽभिलाषं, त्रिलोचनजितं ( बाणाहवे शिवजयिनं, शिवेन जितं च ) सुन्दरं, पित्रा कृष्णेन समानगुणं ( पूर्वोक्तरीत्या ) पुष्पायुधम् ( अनिरुद्धम् ) कमपि आत्मजं प्रसूय लब्धहर्षा आसीदित्याह ।

२८ हे मातः ! गम्भीरगोवाहिकृतार्थक्लृप्तसंपन्नटीका ( गम्भीरा ये गोवाहिनो वाग्मिनः, पण्डितास्तेषु कृतो निष्पादितो योऽर्थो धनं तेन क्लृप्ता संपद्रूपा नटी यया तथाभूता, पण्डितसंपद्दात्रीति यावत्, गम्भीरो यो गोवाही वृषभवाहनः शिवस्तद्रूपो यः शङ्कराचार्यस्तेन कृता येऽर्था अभिधेयास्तैः क्लृप्ता सम्पन्ना पुष्टा(विस्तृ-

गीतेव कृष्णाऽऽननसौरभज्ञा

ध्येया ऽसि मातः शुभयोगभाजाम् ॥ २८ ॥

गम्भीरेति । हे मातः ! गीतेव कृष्णस्याऽऽननस्य सौरभं सौन्दर्यं सुगन्धं वा जानाति सा, अतः शुभमष्टाङ्गयोगं पक्षे शुभस्य कल्याणस्य योगं त्वत्कटाक्षेण संयोगं भजन्ति तेषां ध्यातुमध्येतुं च योग्या ऽसि, गम्भीरो यो गोवाही वृषवाहनः शिवो नाट्याचार्यः तत्प्रकाशे कृतार्थाः लब्धनाट्यकलाः क्लृप्ता जागरूका सम्पन्नाऽथवा सम्पन्नाऽऽसां तादृश्यो नट्यो नर्तक्यो यस्याः सा अन्यत्र गम्भीरा गम्भीराऽऽशयाः ये गोवाहिनो वाक्चतुराः पण्डिताः तैः कृतं यदर्थक्लृप्तम् अर्थक्लृप्तिस्तया संपन्ना युक्ता टीका यस्यां सा श्रुतेः कर्णस्य मञ्जुः सूक्तिर्यस्याः सा, अन्यत्र श्रुतेर्वेदस्य मञ्जुः अद्वैतप्रतिपाद्यत्वत्सूक्तिर्यस्याप उपनिषद्बृंहकत्वादिति भावः । श्लेषोपमालङ्कारौ । वसन्ततिलकावृत्तम् ॥२८॥

घनमहा नवनीतसुधाश्रित-

व्रजविपत्तिहरा हरिवल्लभे ।

———

ता ) टीका व्याख्या यस्याः सा च ) श्रुतिमञ्जुसूक्तिः ( कर्णमधुरवचना, वेदवन्मनोरमवाक् च ) कृष्णाऽऽननसौरभज्ञा ( चुम्बनादिसमये भगवन्मुखसौगन्ध्यज्ञा, भगवन्मुखनिस्सृततया तत्सौरभज्ञाऽतिसुन्दरी च ) त्वं गीतेव शुभयोगभाजां ( पुण्यवतां योगिनां च ) ध्येया ऽध्येया चासीत्याह ।

२९ हे हरिप्रिये ! घनमहा ( सान्द्रोत्सवा ) अनघेन पुराणपुरुषेण नीतां प्रापितां सुधां श्रिता ये देवास्तद्व्रजस्य विपत्तिहरा, यद्वा एन विष्णुना नवं यथा तथा नीतसुधाः प्रापिताऽमृता मक्षं प्रापिता इति यावत्, तथा विधा ये श्रिता निजाश्रिता ये देवास्तद्व्रजविपत्तिहरा

प्रबलभद्रविकासविधायिनी

त्वमयसे निजवल्लभतुल्यताम् ॥ २९ ॥

घनेति । हे हरिवल्लभे ! कृष्णपक्षे घनवन्मेघवन्महः कान्तिर्यस्य सः तथा नवनीतं सुधेव तां, यद्वा नवनीतं साक्षात् सुधाऽमृतं लक्षितलक्षणया दुग्धं च ते आश्रितस्य व्रजस्य गोकुलस्य विपत्तेर्हरः, तथा लक्ष्मीपक्षे घनः महः उत्सवो यस्य सः स चाऽसौ अनवः पुराणपुरुषः तेन नीतां प्रापितां सुधां श्रिता देवाः तेषां व्रजस्य गणस्य विपत्तिहरा, सः मकुष्टस्य बलभद्रस्य विकासस्य विधायी त्वं प्रबलस्य विपुलस्य भद्रस्य कल्याणस्य विधायिनी कर्त्री तत्सम्बुद्धौ(?) अतः त्वं निजवल्लभस्य कृष्णस्य तुल्यताम् अयसे प्राप्नोषि । श्लेषोपमालङ्कारौ । द्रुतविलम्बितं वृत्तम् ॥ २९ ॥

अथाऽस्मिन् वर्णने मोक्षदायिका अयोध्यादिसप्तपुरीर्दर्शयति—

प्राऽयोध्यानगरीयसां सुमनसां मायातमश्छेदिनी

त्वं काञ्चिमधुराऽवलम्बसरणिः क्षोभाद्वन्ती जगत् ।

———

बलस्य दृढस्य भद्रस्य कल्याणस्य विधायिनी त्वं, तव प्रियश्च घनमहा ( मेघकान्तिः ) एवं नवनीतं हैयङ्गवीनमेव सुधा तामाश्रितो यो व्रजो गोकुलं तद्विपत्तिहरः, तथा प्रकर्षेण बलभद्रस्य निजभ्रातुर्विकासस्याऽऽनन्दस्य विधायी, अतस्त्वं निजदयितसाधर्म्यं प्राप्नोषीत्याह ।

३० हे देवि ! प्रायः ध्यानेनाऽतिगुरूणां सुमनसां (पण्डितानां) मायारूपाऽन्धकारविनाशिनी, काञ्च्या रशनया सुन्दरी अवलम्बसरणिर्यस्याः सा, क्षोभाज्जगद्रक्षन्ती, त्वं द्वारवतीनगरे विहरते ऽतृष्णाय (भास्कामस्वाभिलोभाय) कृष्णाय भगवते अस्य अलङ्कृतास्तरकुल-

सम्भोगैः स्वदसेऽस्य देवि जलधेरुद्वीचिकाशीकरैः
स्वैरं द्वारवतीपुरे विहरते ऽतृष्णाय कृष्णाय तैः ॥३०॥

प्राय इति । हे देवि ! त्वं प्रायो बाहुल्येन ध्यानगरीयसां पुंसां मायातमश्छेदिनी २ अवाऽयोध्या मायेति पुरीद्वयं, तथा काञ्च्या मधुरा ऽवलग्नसरणिर्यस्याः सा ४ अत्र काञ्ची मधुरेति द्वयं, मधुरा मथुरायाञ्चेति मेदिनी । यद्वा मधुरेत्येव पुरी द्रविडदेशे प्रसिद्धा, पुनः क्षोभाज्जगत् अवन्ती रक्षन्ती ५ इयमेका, त्वं द्वारवतीपुरे विहरते तृष्णायाऽपि कृष्णाय सम्भोगैः स्वदसे रोचसे ६ इयमेका, कीदृशैः अस्य जलधेः क्षीरोदस्य उद्वीचिका उज्ज्वलतरङ्गास्थच्छीकरैरिव मधुरत्वात् ७ अत्र काशीत्येका । मिलित्वा सप्त । रत्नावल्यलङ्कारः । शार्दूलवि० ॥३०॥

अथ कल्क्यवतारः—

म्लेच्छान् भयानकरवानपि मूर्च्छयित्वा
निर्वापयिष्यति कलिं हरिरध्वरं च ।

---

णाः येषु नथाविधैस्तैर्नानाविधैः संभोगैः प्रीतिपात्रं भवसीति "अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः" इत्युक्तपुरीसप्तकनामनिर्देशवैचित्र्यप्रदर्शनपुरस्सरमाह ।

३१ हे पद्मे ! कल्क्यवतारे हरिर्भवत्या वचनैर्हरितव्यः सन् भयङ्करशब्दानपि म्लेच्छान् मूर्च्छयित्वा कलिं ( युगं ) निर्वापयिष्यति ( शमयिष्यति, ) यागं ( धर्मं ) च निर्वापयिष्यति ( प्रवर्तयिष्यति )

कल्की तमांसि परिपास्यति भूसुरांश्च
पद्मे भवद्वचनपल्लविताऽनुकम्पः ॥ ३१ ॥

म्लेच्छानिति। हे पद्मे ! भवत्या वचनेन पल्लविता सञ्जाता ऽनुकम्पा कृपा यस्य सः कल्की तत्संज्ञको हरिः भयानका भयङ्कराः रवाः शब्दा येषां तान् म्लेच्छान् यवनान् मूर्च्छयित्वा मोहयित्वा। मुर्च्छा मोहसमुच्छ्राययोरित्यस्माण्णिजन्तात्समानकर्तृकयोरिति क्त्वाप्रत्ययः। कलिं निर्वापयिष्यति शमयिष्यति अध्वरं यज्ञं च द्विजैः कारयिष्यति। णिजन्तात् डुवप् बीजसन्ताने इत्यस्मात् लृट्। चेत्यपरन्तमांस्यज्ञानानि परिपास्यत्याचामयिष्यति भूसुरान्ब्राह्मणांश्च रक्षिष्यति। पा पाने, पा रक्षणे इति धातुद्वयाल्लृट्। अत्र श्रीवचनाऽऽश्रयः। श्लेषतुल्ययोगितालङ्कारौ। वसन्ततिलकावृत्तम् ॥ ३१ ॥

मलिनकलिकालेशैः शाखापरिक्षयदूषितै-
रपगतसदामोदैरत्राऽसुहृद्यवनैर्वृते ।

---

तमांसि ब्राह्मणांश्च परिपास्यति ( नाशयिष्यति, पालयिष्यति च ) इत्याह।

३२ मलिनकलिकालेशैः ( मलिनस्य कलिकालस्य ईशैः कलिकालराजभिः, मलिना म्लानाः कलिकानां कोरकाणां लेशा येषु तैर्म्लानविरलकलिकैश्च ) शाखानां ( वैदिकशाखानां शिफानां च )-परिक्षयेण दूषितैः, अपगतसदामोदैः ( निरस्तसज्जनानन्दैः, नष्टसुगन्धैश्च ) असुहृद्यवनैः ( दुष्टहृदयैरत्यातिरूपैर्यवनैः, अरमणीयैर्वनैश्च ) अत्राऽस्मिन् लोके वृते सति शाखिग्लानिं ( वेदविदां ग्लानिं, वृक्षग्लानिं च ) शमयितुमिच्छुर्माधवो ( हरिः, वसन्तश्च )

शमयितुमनाः शाखिग्लानिं भविष्यति माधवो
जलनिधिभुवा वृद्धिं लब्ध्वा त्वया च महावनी ॥३२॥

मलिनेति । मलिनैर्दूषितैः कलिकालानाम् ईशैर्म्लेच्छरूपैः अन्यत्र मलिनैः कलिकाना कुड्मलानां लेशैः तथा शाखानां वेदानां शिफानां च परिक्षयेण दूषितैः शोभाहीनैः पुनरपगतः सदा सर्वदा मोदः हर्षः आमोदः सुगन्धश्च येषां तैः अपि च असुहृद्भिः शत्रुभूतैर्यवनैः, पक्षे सुष्ठु हृद्यानि हृदयप्रियाणि यानि वनान्यरण्यानि तादृशानि न भवन्तीति च तैर्वने युक्ते अत्र लोके काले वा शाखिनां ब्राह्मणानां वृक्षाणां च ग्लानिं म्लानिं शमयितुं शान्तयितुं मनो यस्य सः माधवः हरिर्वसन्तश्च जलनिधीयमाने ऽस्मिं तया भुवा भूम्या हेतुना वृद्धिमभ्युदयं, पक्षे वृद्धिं पल्लवादीनां लब्ध्वा महत् अवनं रक्षणं वनं च तद्विद्यते ऽस्य तादृशः भवति । श्लेषाऽलङ्कारः । हरिणीवृ० ॥ ३२ ॥

प्रातर्वात इवाऽवधूतकलिको मातर्महारण्यवत्
खड्गी तापसवत्कृतार्थजननः कल्की मुदे देवि ते ।

---

जलनिधिभुवा ( समुद्रात्मजया, जलपूर्णया भुवा च ) त्वया वृद्धिं लब्ध्वा महावनी ( महतामवनं रक्षणं यस्मिन् स साधुजनरक्षकः, महती वनी अरण्यानी च ) भविष्यतीति श्लेषेणाह ।

३३ हे देवि ! मातः ! प्रातर्वात ( प्राभातिको मारुतः ) इव अवधूतकलिकः ( निरस्तकलिः, कम्पितकोरकश्च ) महारण्यवत् खड्गी ( कृपाणवान्, गण्डकयुक्तश्च ) तापसवत् कृतार्थजननः ( कृतचतुर्विधपुरुषार्थोत्पादनः, कृतकृत्यजन्मा च ) स्वामी कल्की तव मुदे महीम् आन्ध्रीयजिह्वामिव ( आन्ध्रदेशोत्पन्नजनरसनामिव ) अम्लेच्छां ( म्लेच्छयवनादिरहिताम्, अम्ले रसे इच्छा यस्यास्तथाताम्

अम्लेच्छां स्वयमाचरिष्यति महीमान्ध्रीयजिह्वामिव
स्वामी सश्रुतिमार्गगानिह जनान्कर्ताऽथ शब्दानिव ॥३३॥

मातरिति। हे मातः! प्रातर्वातः प्रातःकालीनवात इवाऽवधूतः कम्पितः कलिरेव कलिकः कलियुगमित्यर्थः। अन्यत्राऽवधूता कलिका कोरकश्च येन महारण्यात्खड्गी खड्गः 'गेण्डा' इति लोके प्रसिद्धः। स अस्मिन्नस्ति सः, पक्षे निस्त्रिंशवान् तापसः यथा कृतार्थं कृतकृत्यं जननं यस्य तद्वद्वयमपि कृतम् अर्थजननं चतुर्विधपुरुषार्थसम्पादनं येन सः कल्की विष्णुः हे देवि! ते तव मुदे हर्षाय आन्ध्रदेशे भवा आन्ध्रीयाः, वृद्धाच्छ इति छप्रत्ययः। तेषां जिह्वा यथा अम्लस्य रसस्येच्छां तथा ऽयमपि महीम् अम्लेच्छां म्लेच्छरहिताम् आचरिष्यति करिष्यतीत्यर्थः। सः कल्की स्वामी ऐश्वर्यवान्। स्वामिन्नैश्वर्ये इति निपातनात्साधुः। शब्दान्ध्वनीन् श्रुतेः कर्णस्य वेदस्य च मार्गे पथि गच्छन्ति तान्कर्ता करिष्यतीत्यर्थः। श्लेषोपमालङ्कारो। शार्दूलविक्री० ॥ ३३ ॥

अथ लक्ष्म्या अपाङ्गे अङ्गेषु च दशाऽवतारान् श्लोकद्वयेन वर्णयति—

मात्स्यज्योतिषि मन्दरक्षणपरे ऽनन्तोच्चदर्पाऽऽवहे
हयास्यस्पृशि चारुवर्णिनि कृताऽशेषाऽभिकोपक्रिये।

---

च) स्वयं करिष्यति, एवं अत्र शब्दानिव श्रुतिमार्गगान् (वेदमार्गावलम्बिनः, श्रोत्रगोचरांश्च) करिष्यतीत्याह।

३४ हे देवि! मात्स्यज्योतिषि (मत्स्यतुल्यशोभापरे, मत्स्यरूपे च) मन्दरक्षणपरे (मन्दानां रक्षणे परं, मन्दरपर्वतविशेषस्य

एणश्रीमुषि कामपालविभवे कृष्णे कलिध्वंसने
देवि त्वद्दयिताऽवतारदशकं ध्यायाम्यपाङ्गे तव ॥३४॥

मात्स्येति। हे देवि! तवाऽपाङ्गे कटाक्षे त्वद्दयितस्य हरेरवतारदशकं ध्यायामि, अथाऽपाङ्गपक्षे ऽवतारपक्षे च विशेषणानि। मत्स्यस्येदं मात्स्यं तज्ज्योतिः शोभा स्वरूपं च यस्मिन् इति मत्स्यावतारः। एवं मन्दानां रक्षणे परः तत्परः, पक्षे मन्दरनिष्ठ क्षणो पारतन्त्र्ये परः येन मन्दरः परतन्त्रो ऽभूदित्यर्थः। तस्मिन्। क्षणः कालविशेषे स्यात्पर्वण्यवसरे महे। व्यापारविकलत्वे च परतन्त्रत्वमध्ययोरिति हैमः। अनेन कूर्माऽवतारः। पुनरनन्तस्य भगवतः अनन्तायाः पृथ्व्याश्चोच्चं हर्षम् अवलोकनेन धारणेन चाऽऽवहति तस्मिन्निति वराहावतारः। हरेर्विष्णोर्नृसिंहस्य चाऽऽस्यम्पृशयवलोकयितरि, यद्वा नेत्रचुम्बनस्योक्तत्वात्तत्समये धारके चेति नृसिंहावतारः। चारुवर्णो नीलादि-



तद्धारकत्वात् कच्छरूपे च) अनन्तोच्चहर्षाऽऽवहे (अनन्तस्य भगवतो गुरुप्रमोदप्रदे, अनन्तायाः पृथिव्या उच्चहर्षप्रदे तदुद्धारकत्वाद् वराहरूपे च) हर्यास्यस्पृशि (भगवन्मुखलग्ने, नृसिंहरूपे च) चारुवर्णिनि (रम्यकृष्णवर्णे, सुन्दरब्रह्मचारिणि वामनरूपे च) कृताऽशेषाऽधिकोपक्रिये (कृता अशेषाणामधिका उपक्रिया उपकारो येन, कृता सकलाऽऽधिस्वरूपा कोपक्रिया येन अतिक्रोधे परशुरामरूपे च) एणश्रीमुषि (हरिणशोभाऽपहारिणि, मृगवेषमारीचश्रीविघातके रामरूपे च) कामपालविभवे (मदनपालनसमर्थे, बलभद्रवैभववति च) कृष्णे (नीलवर्णे, तन्नामके च) कलिध्वंसने (पापनाशके, कलियुगनाशके च कल्किरूपे) तवाऽपाङ्गे हरेरवतारदशकं ध्यायामीति क्रमेण समष्ट्या अवतारदशकरूपत्वमपाङ्गे श्लेषेण वर्णयन्नाह।

यस्मिन् विद्यते चारुः सुन्दरश्चाऽसौ वर्णी ब्रह्मचारी च तस्मिन्निति वामनः । कृतः अशेषेषु अधिका उपक्रिया बहूपकारः येन तथा अशेषेषु आधिर्मानसी व्यथा यैस्तेषु दुर्नृपेषु कृता कोपक्रिया येनेति भार्गवः । एणश्रियं मृगनेत्रशोभां मारीचश्रियं च मुष्णातीति रामः । कामं पालयति रक्षति तथा कामपालो हलाऽऽयुध इत्यमराद्बलस्तस्य विभवे विभुत्वे इति बलाऽवतारः । कृष्णः । कलिं कलहं युगं च ध्वंसयति तस्मिन्निति कल्की । श्लेषरत्नावल्यलङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥ ३४ ॥

कृष्णः केशो दृगेषा झषतनुरधरोमन्दरागं हि धत्ते
सौकर्यं दोष्णि रेजे किल मुखहरिता मध्यमात्ता बलिश्रीः
रामाऽग्र्यत्वं वपुःश्रीः प्रथयति यमुनादर्पहृद्रोमवल्ली
धत्ते जङ्घाऽभिरामश्रियमिह कलिहृत्पादपद्मं तव श्रीः॥३५॥

कृष्ण इति । हे श्रीः ! तव केशः कृष्णः कृष्णवर्णः कृ-

---

३५ हे श्रीः ! तव केशः कृष्णः ( नीलवर्णः, तन्नामकश्च ) एषा दृक् झषतनुः ( मत्स्यस्येव आकारो यस्यास्तथाभूता, मत्स्यरूपा च ) अधरोमन्दरागं ( अमन्दं रक्तिमानं, मन्दरनामकमगं पर्वतं धत्ते च कूर्मरूपमिति यावत् ) दोष्णि ( भुजे ) सौकर्यं ( शोभनकर ( हस्त )-वत्त्वं, सूकरत्वं च वराहरूपत्वमिति यावत् ) रेजे, मुखहरिता ( मुखे चन्द्ररूपता, नृसिंहरूपता च, रेजे इति यावत् ) बलिश्रीः ( त्रिवलीशोभा बलिदैत्यश्रीश्च ) मध्येन ( बलग्नेन, वामनेन च ) आत्ता ( प्राप्ता ) वपुश्रीः रामाग्र्यत्वं ( स्त्रीश्रेष्ठत्वं, परशुराम, दाशरथिराम, बलरामेषु त्रिषु रामेषु मध्ये प्राथमिकत्वं परशुरामत्वं च ) प्रथयति, रोमवल्ली यमुनादर्पहृत् ( यमुनानीला, यमुनादर्पापहारिणी बलरामरूपा च ) जङ्घा ऽभिरामश्रियं ( सुन्दरशोभाम्, अभितो रामस्य दाशरथेः श्रियं च ) धत्ते इति व्युत्क्रमेण दशावताररूपत्वं भगवत्यास्तत्तदवयवेषु प्रदर्शयन्नाह ।

ष्णाऽवतारश्च । एषा दृक् झषस्य मत्स्यस्येव तनुः स्वरूपं ग-
त्या इत्यवतारश्च । हि निश्चये ऽधर ओष्ठः अमन्दं विपुलं रागं
रक्तिमानं मन्दरसंज्ञकमगं पर्वतं चेति कूर्मः । दोष्णि सौकर्यं सू-
करत्वं सूकरभावो वराहावतारश्च रेजे । मुखेन हरिः सिंहः त-
त्प्रावस्तत्ता मुखः प्रमुखो यो हरिः सिंहः तत्ता च(?), मध्यमेन
कक्ष्या आप्ता प्राप्नोति नृसिंहावतारः । मध्ये इत्यर्थः । किं च
बलिश्रीः एतन्नामकदैत्यश्रीः वलित्रयशोभा च मध्यमाप्तेति पूर्व-
वत् । वामनो ऽपि मध्यम इत्यर्थः । पुनर्वपुश्रीः रामासु स्त्रीषु रा-
मयोर्दाशरथिबलभद्रयोरपेक्षया रामेषु अग्रत्वं प्राथम्यं परशु-
रामावतारत्वं च प्रथयति प्रख्यापयति । रोमवल्ली लोमराजी कृ-
ष्णत्वेन यमुनाया दर्पं हन्ति सा अन्यत्र यमुनाया लाङ्गलेन कर्ष-
णाद्धलाऽवतारश्च । इदमाख्यानं सविस्तरं श्रीमद्भागवते दशमो-
त्तरार्धे, तदस्मत्कृतचम्पुभारतव्याख्याने तृतीयस्तबके ऽष्टाशीति-
श्लोके सङ्क्षिप्य दर्शितम् । जङ्घा अभिरामां सुन्दरीं श्रियं रा-
माऽवतारं च धत्ते दधाति पादपद्मं कलेर्युगस्य हृत्कल्क्यवतार-
श्चेति । श्लेषरत्नावल्यलङ्कारौ । तत्राऽक्रमेणाऽवतारवर्णनाद्रत्नाव-
ल्या द्वितीयो भेदः । स्रग्धरावृत्तम् ॥ ३५ ॥

विदितगुणाऽलङ्करणं विशिष्टरचनाऽटवीक्षणप्रेक्षम् ।

---

३६ हे अरविन्द गृहे ! विदितगुणाऽलङ्करणं ( विदितं प्रसिद्धं गु-
णानां रजस्तमआदीनामलङ्करणं समाप्तिकरणं यस्य, यद्वद् विदितानि
प्रसिद्धानि गुणाः शौर्यादयो ऽलङ्करणानि यस्य तं, विदितानि ज्ञातानि
माधुर्यादयो गुणा उपमादीन्यलङ्करणान्यलङ्कारा येषु तं च ) विशिष्ट-

कविमिव कृतदशरूपकमरविन्दगृहे ऽभिनन्दसि मुकुन्दम्

इति श्रीमद्वेङ्कटाऽध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे द-
शाऽवतारस्तबक एकविंशः सम्पूर्णः ॥ २१ ॥

विदितेति । हे अरविन्दगृहे ! कमलमन्दिरे ! कविः का-
व्यकर्ता विदिताः गुणाः काव्यस्य ओजःकान्तिसमाधिप्रभृत-
यः अलङ्करणं च उपमादि । मुकुन्दपक्षे विदितं गुणानां सत्त्वा-
दीनाम् अलङ्करणम् उपसंहारः यस्य स विशिष्टचित्ररूपकाव्यरच-
नाऽटव्या ईक्षणं विभावने प्रेक्षा मतिर्यस्य सः । प्रेक्षोपलब्धिश्चि-
त्संविदित्यमरः । पक्षे नानाभेदभिन्नप्रपञ्चरचनाटव्यां क्षणम् ई-
षत्प्रेक्षा ईक्षा यस्य सः । 'स ऐक्षते'ति श्रुतेः । कृतानि दशसं-
ज्ञकानि रूपकाणि येन तान्युच्यन्ते ।

नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥ इति ।

---

अनाटवीक्षणप्रेक्षं ( सकलसृष्टिकारणयोत्सवरूपाऽवलोकनं, सक-
लकाव्यरचनाकाननं क्षणमात्रात् प्रेक्षमाणं च ) कृतदशरूपकं ( कृ-
तदशावतारं, कृतनाटकादिरूपकरणकं च ) मुकुन्दं कविमिवाऽभिन-
न्दसि ( श्लाघसे ) इति वदन् स्तबकं पूरयति ।

इति श्रीमानवल्लयुपाख्यतैलङ्गरामशास्त्रिविरचितायां
लक्ष्मीसहस्राऽवतरणनिःश्रेणिकायां
दशाऽवतारस्तबकः ॥ २१ ॥

अन्यत्र कृतं त्वत्तुष्ट्यर्थं स्वीकृतं रूपकं मत्स्यादिद-शाऽवताराः येन तं कविमिव मुकुन्दं भगवन्तमभिनन्दसि आ-नन्दयसि मां पालयसि च । श्लेषोपमालङ्कारौ । गीतिर्वृत्तम्॥३६॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन वि-रचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मीसहस्रटी-कायां दशावतारस्तक एकविंशः सम्पूर्णतां प्र-
फाणतराम् ॥ २१ ॥



## अथ चित्रस्तबकः २२।

सवानरः समागम्य सर्वसाकेतवासिनाम्।
चक्रे चित्रं स्वचरितैः स रामः श्रेयसेऽस्तु नः ॥ २२॥

अथाऽस्मिन्द्वाविंशस्तबके श्रीमहालक्ष्म्याः स्ववर्णनस्य चित्रतां दर्शयितुं प्रथमनमनपद्ये चित्रस्तबकभूषितमिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

कमलाऽऽयतनां चित्ते कलये यत्पदाम्बुजम्।
चिरं विबुधसन्मौलिचित्रस्तबकभूषितम् ॥ १ ॥

अनुप्रासचित्रमिदम्।

कमलेति। यस्याः पदाम्बुजं पदकमलं विबुधानां सत्सु शोभनेषु मौलिषु स्थितैः चित्रस्तबकैर्विचित्रगुच्छैर्भूषितं तां कमलायतनां चित्ते मनसि चिरं कलये ध्यायामीत्यर्थः। अत्र प्रथमार्धे कवर्णाऽऽवृत्त्या द्वितीयाऽर्धे चिवर्णावृत्त्या अनुप्रासचित्रालङ्कारः। एतल्लक्षणं प्रथमस्तबकप्रथमपद्ये उक्तम् ॥ १ ॥

वेदानि सर्वशास्त्राणि विभाव्य भवतीं रमे।

---

१ अथ द्वाविंशेन नानाविधचित्रभूषितेन चित्रस्तबकेन स्तोतुमिच्छुश्चिर्रामाति तल्लिङ्गनिर्देशपुरस्सरं, यच्चरणकमलं देवमुकुटगतविचित्रपुष्पगुच्छालङ्कृतं (देवप्रणतं) तां कमलवासिनीं भगवतीं वन्दे इत्याह।

२ हे देवि! सापि (अति प्रसिद्धापि) सरस्वती यस्यास्तव दास्यं प्राप्नोति तां भवतीं सर्वाणि शास्त्राणि विचार्य वेदानि (जानीयां, तत्स्वरूपं जानीयाम् इति यावत्,) यद्वा यस्यास्तव सा सर-

दास्यं यस्यास्तवैपैति देवि सा ऽपि सरस्वती ॥ २ ॥

इदमपशब्दाऽऽभासचित्रम् ।

वेदेति । अस्य वासुदेवस्य स्त्री ई तत्सम्बोधनं हे इ ! पुंयोगादाख्यायामिति ङीपि यस्येति चेत्यलोपे अम्बार्थानामिति सम्बुद्धिह्रस्वः । हे रमे ! हे देवि ! वेदांश्च परं सर्वशास्त्राणि भवदात्मकानि विभाव्याऽऽलोच्य सा सरस्वत्यपि यस्यास्तव दास्यं मेवाप्नोति(?) इत्यपशब्दाऽऽभासचित्रम् ।

यत्राऽपशब्दधीः साधुभावज्ञानान्निवर्तते ।
तत्राऽपशब्दाऽऽभासः स्याद्यथेदं पुरुषो भवान् ॥
इति तल्लक्षणात् ।

अस्याऽर्थः । यत्र पद्ये ऽयमपशब्दः व्याकरणविरुद्धः इति धीर्ज्ञानं साधुभावस्य ज्ञानान्निवर्तते गच्छति तत्राऽपशब्दाऽऽभासोऽलङ्कारश्चित्रम् । तदुदाहरणम् । यथेदं पुरुष इत्युक्ते पुन्नपुंसकयोर्विशेषणविशेष्यभावाऽभावेनाऽपशब्दाभासत्वे अयं चाऽसौ पुरुषश्चेति समासेन तन्निवृत्तिः । तथा ऽत्र पद्ये ऽपि वेदानिति ह्यपशब्दाभासे वेदान् इ इति पदद्वयकरणेनाऽऽभासनिवृत्तिर्ज्ञेयेति ॥ २ ॥

कमले देवदेवस्य महिषि त्वं स्तुता रमे ।

---

सापि दास्यमुपैति तां भवतीं विभाव्य (ध्यात्वा) सर्वशास्त्राणि (अनायासेनैव) वेदान् जानीयाम्) इति वेदानीति नपुंसकप्रयोगमाभाष्य अपशब्दाऽऽभासालङ्कारेण चित्रेण स्तौति ।

३ देवदेवस्य (नारायणस्य) महिषि ! (कृताभिषेके पत्नि !) हे रमे ! विमले कमले सता (स्थिता) स्तुता त्वं मे (मम) दृश्यस्व

विमले देवि देहस्य ह्यहिमत्वं नता स्य मे ॥ ३ ॥

अयं गोमूत्रिका बन्धः ।

कमले इति । हे विमले ! हे देवदेवस्य महिषि ! हे देवि ! हे रमे ! मे मया नता स्तुता च सती त्वं देहस्य अहिमस्य प्र-णीतस्य भावः अहिमत्वं सन्तापमिति यावत् स्य नाशय । षो ऽन्तकर्मणि इत्यस्मात्प्रार्थनायां लोट् । अयं गोमूत्रिकाबन्धः । तल्लक्षणम् ।

वर्णानामेकरूपत्वं यद्येकान्तरमर्धयोः ।
गोमूत्रिकेति तत्प्राहुर्दुष्करं तद्विदो विदः ॥

अत्र केचित् । षोडश कोष्ठपङ्क्तिद्वये ऽर्धद्वयं क्रमेण विलि-ख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरित्युद्धारलक्षणं वदन्ति, तदापाततः । सर्ववर्णलेखनप्रसङ्गेन बन्धत्वाऽभावात् । ब-न्धत्वं तु न्यूनवर्णलेखने ऽपि समानवर्णाऽऽवृत्त्या श्लोकपर्याप्तव-र्णाऽवगमकत्वं, तादृशस्यैव चित्रताप्रयोजकत्वात् । गोमूत्रिका नाम पथि गच्छतो वृषभस्य मेहतो मूत्रं भुवि पतति तद्गोमूत्रं तत्प्रति-कृतिर्गोमूत्रिका । इवे प्रतिकृताविति कन् । तथा च गोमूत्रि-कालक्षणं कविकुतूहले ।

प्रथमाऽर्धसमस्थानभाजो वर्णाः परे दले ।
लभन्ते चेत्समं स्थानं तदा गोमूत्रिका भवेत् ॥

इत्येकं युग्माऽक्षराऽश्लिष्टगोमूत्रिकालक्षणम् । अत्रैव प्रथ-मार्धस्य प्रथमाऽऽद्यसमवर्णाः परदले वाचने लभन्ते चेद्युग्मा-

---

अहिमत्वस्य ( उष्णत्वं, सन्तापं ) स्य· ( नाशय ) इति गोमूत्रिका-बन्धेन रमादेहसन्तापनाशकत्वं प्रार्थ्यते ।

ऽक्षराऽश्लिष्टगोमूत्रिकेति द्वितीयलक्षणम् । अत्र तु प्रथमार्धस्थ-द्वितीयादिसमाक्षराणि एकवारं लिखित्वा द्वितीयाऽर्धवाचनेऽपि तान्येव मध्यस्थानि गोमूत्रवद्वाचनीयानीति। अत्र द्वितीयादियुग्मवर्णानाम् अर्धद्वयवाचने श्लिष्टत्वादिदं युग्माऽक्षरश्लिष्टगोमूत्रिकाचित्रम् ॥ ३ ॥

प्रथमपादगूढम्—

पाहि देवि कलशोदधेः सुते
देहि पापविलयं दयानिधे ।
शेषशायिदयिते तमोमुषं
शेमुषीं कलय नः सुशोभनाम् ॥ ४ ॥

पाहीति । हे कलशोदधेर्दुग्धसमुद्रस्य सुते ! कन्ये ! नोऽस्मान् पाहि रक्ष । 'पा रक्षणे' इत्यस्मात्प्रार्थनायां लोट् । पुनर्हे दयानिधे ! पापस्य किल्बिषस्य विलयं नाशं देहि, हे शेषशायिदयिते ! नः तमः मुष्णाति तां सुष्ठु शोभनां शेमुषीं मतिं कलय । इदं प्रथमपादगूढचित्रम् ॥ ४ ॥

चतुर्थपादगूढम्—

संश्रितानवितुमास्थया दया-
सारिणीह दिगधीशसेविता ।

———

४ हे अमृतसागरकन्यके ! पाहि, हे दयानिधे ! पापविलयं ( पापनाशं ) देहि, हे शेषशायिप्रिये ! तमोमुषीम् ( अज्ञाननाशिकां शोभनां शेमुषीं ( मतिं ) कलय ( कुरु ) इति प्रथमपादं द्वितीयादिपादत्रयगताऽक्षरोच्चारेण गोपयन् गूढप्रथमपादाख्येन चित्रेण प्रार्थयते ।

५ आश्रितान् साऽवधानं रक्षितुं दयासारिणी ( आत्तकृपा ) दिक्पालसेविता या स्वप्रियस्य ( हरेः ) वक्षःस्थलमाश्रयति सा हरिप्रिया

स्वप्रियस्य कलयत्युरःपदं
सम्पदं दिशतु सा हरिप्रिया ॥ ५ ॥

समिति । संश्रितान् भक्तान् आस्थया ऽनुरागेण अवितुं रक्षितुं दयां सरति प्राप्नोति एवंशीला सा दिशाम् अधीशैः स्वामिभिर्लोकपालैरित्यर्थः। सेविता या स्वस्य प्रियस्य पत्युः उरःस्थलं वक्षःस्थलं कलयति श्रयति सा हरेः प्रिया नो ऽस्माकं सम्पदं दिशतु ददातु। इदं चतुर्थपादगूढचित्रम् ॥ ५ ॥

तल्लक्षणं तु।

यत्रैकपादवर्णानामन्यपादेषु गोपनम्।
तद् गूढपादकं नाम तद्भेदः प्रथमादिभिः ॥

अस्यार्ऽथः । यत्र पद्ये ऽन्यपादेष्वितरपादत्रयेषु एकस्य चतुर्थपादस्य वर्णानामक्षराणां गोपनं रक्षणं तद् गूढपादकं नाम चित्रम् । तस्य चित्रस्य पादादिभिः प्रथमपादादिभिर्भेदः । अयं भावः।

पादत्रयं लिखित्वा तेभ्यः अन्यचतुर्थपादाऽक्षराणि निष्कासनीयानि, तथा चाऽत्र पाहीति प्रथमश्लोके द्वितीयादिपादत्रयं लिखित्वा तेषु प्रथमपादाऽक्षराणि निष्कासनीयानीति प्रथमपादचित्रम्। तथा संश्रितानिति द्वितीयश्लोके प्रथमपादत्रयं लिखित्वा चतुर्थपादाक्षराणि निष्कासनीयानीति चतुर्थपादगूढम्। इदं द्वयमपि चित्रविशेषशब्दाऽऽलङ्काररूपं ज्ञेयम् । रथोद्धतावृत्तम् ॥ ५ ॥

---

(लक्ष्मीः) संपत्तिं ददात्विति चतुर्थपादमाद्यपादत्रयगताऽक्षरैर्गोपयन् गूढचतुर्थपादाभिधेन चित्रेणाऽऽशास्ते।

निरोष्ठ्यम्—

श्रीरशेषजगदाऽऽर्तिहारिणी

शेषशैलतटशेखरायिता ।

राजसे जननि रक्षणाय नः

सागरेन्द्रतनये सनातनी ॥ ६ ॥

श्रीरिति । हे जननि ! श्रीः ! सागरेन्द्रस्य तनये ! अशेषस्य जगतः आर्तिं हरति सा शेषशैलतटस्य वृषाऽद्रिभृगोः शेखरायिता ऽवतंसभूता सनातनी चिरन्तनी नो ऽस्माकं रक्षणाय राजसे शोभसे । उकारः पवर्गः उपध्मानीयः वश्चैते ओष्ठ्यवर्णाः । अस्मिन्पद्ये एतद्वर्णविरहान्निरौष्ठ्यचित्रभेदः शब्दाऽलङ्कारः । रथोद्धतावृत्तम् ॥ ६ ॥

अथ क्रियावञ्चनम्—

हरेः प्रिये भगवतो हतसंश्रितसाध्वसा ।

अन्वहं क्रियमाणानामंहसां संहतीरयात् ॥ ७ ॥

हरेरिति । हे भगवतः प्रिये ! हतं नाशितं संश्रितानां भक्तानां साध्वसं भयं यया सा । भीतिर्भीः साध्वसं भयमित्यम-

---

६ हे सागरेन्द्रसुते ! मातः ! श्रीः ! सकलजगत्पीडानिवारिका नित्या त्वं नः रक्षणाय शेषाऽचलाऽलङ्कारभूता राजसे इति निरोष्ठ्याक्षरघटनया निरोष्ठ्याऽभिधेन चित्रेण स्तौति ।

७ हे भगवतः ( नारायणस्य ) प्रिये ! विनाशिताऽऽश्रितभीतिस्त्वम् प्रतिदिनम् ( अस्माभिः ) क्रियमाणानां दुरितानां राशीन् जयात् हरेः ( नाशयेः ) इति हरेरिति श्लोकस्य प्रयोगप्रयुक्तपदेन क्रियापदं गोपयन् क्रियावञ्चनाऽऽख्येन चित्रेणार्थयते ।

रः । अन्वहं प्रत्यहं क्रियमाणानामंहसाम्, अंहो दुरितदुष्कृतमित्य-
मरः । संहतीः समूहान् रयाद्वेगात् । तरसी तु रयः स्यद इत्य-
मरः । हरेः हरणं कुरु । अत्र हरेः इति क्रियाया अन्यत्र स-
म्बन्धभ्रान्त्या वञ्चनादिदं क्रियावञ्चनरूपं शब्दाऽलङ्कारचि-
त्रम् । तल्लक्षणमुक्तं विदग्धमुखमण्डने ।

क्रियादिकं स्थितं यत्र पदसन्धानकौशलात् ।
स्फुटं न लक्ष्यते यस्मात्क्रियागुप्तादिकं यथा ॥ इति ।
अत्राऽऽदिशब्देन कर्त्रादयो ग्राह्याः ॥ ७ ॥

सप्तविभक्तिवञ्चनम्—

पायान्मामुरसावितः श्रियमुमाराध्यां[1] प्रपद्येतमां
को वा न स्थिरमश्नुते शमधनोऽप्यालोकितो जातु चित् ।

---

८ असौ उः ( लक्ष्मीः ) मां पायात्, इतः ( इह लोके ) आराध्याम् उम् ( लक्ष्मीं ) प्रपद्येतमाम् ( सातिशयं प्रपद्येऽस्मि ) अधनः ( दरिद्रोऽपि ) कः ( पुमान् ) वा ( लक्ष्म्या ) जातु चिदपि ( कदाचिदपि ) आलोकितः ( सन् ) स्थिरं शं ( सुखं ) नाऽश्नुते ?, ( न प्राप्नोति ? ) दान्तैः ( यमिभिः ) त्रिभुवनाऽङ्घ्रिद्वयं वै ( लक्ष्म्यै ) नतिं तन्वताम् उतः ( लक्ष्म्याः सकाशात् ) श्रेयो न ? ( कल्याणं न भवति किम् ? ) ओः ( लक्ष्म्याः ) सेवां रचयामि, हे ( मम ) मानस ! भक्त्या औ ( लक्ष्म्याम् ) आदरं वह, इति उरसेति तृतीयान्तोरस्-शब्दभ्रमोत्पादनेन उरिति प्रथमान्तस्य उशब्दस्य, उमाराध्यामिति उमया ऽऽराध्यामिति भ्रमजननेन उमिति द्वितीयान्तस्य उशब्दस्य, वा इति विकल्पार्थकाऽव्ययभ्रान्तिजननेन वा इति तृतीयान्तस्य उशब्दस्य, वै इति अव्ययभ्रमोत्पादनेन चतुर्थ्यन्तस्य उशब्दस्य, अत्र

---

१ श्रियमुनाराध्यामिति १ पु० पा० (?)

वैदान्तैर्विनुताघ्रङ्घ्ये न किमुत श्रेयो नतिं तन्वतां
सेवामो रचयामि मानस सदा भक्त्यावहावादरम् ॥८॥

पायादिति । असौ उः लक्ष्मीः मां पायाद्रक्षतु । अत्र उरसा पायादिति वञ्चनेन कर्ता गोपितः । अहम् उना शम्भुना आराध्यां श्रियम् इतः इह मपश्येतमाम् । अत्र यमुनाराध्यामिति वञ्चनेन करणं गोपितम् । यथा जातुचिदालोकितो ऽपि को वाऽधनो निर्धनः स्थिरं शं सुखं नाऽश्नुते न प्राप्नोति । अत्र शमधन इति वञ्चनेन कर्मगोपनम् । दान्तैर्मुनिभिः विनुतौ अङ्घ्री यस्यास्तस्यै वै लक्ष्म्यै । उशब्दात् ङे विभक्तौ ङिति ह्रस्वश्चेति पाक्षिकनदीसंज्ञायाम् आण्नद्या इत्यादि आटश्चेति वृद्धौ यणि रूपं धेन्वै ईनिवत् । नतिं नमनं तन्वतां कुर्वताम् उतः लक्ष्म्याः सकाशात् उशब्दात्पञ्चम्यास्तसिल् । श्रेयो न किम्? अपि तु भवत्येव । अत्र वेदान्तानधीयते इति वैदान्ताः । तदधीते तद्वेदेत्यणि वैदान्तैरिति किमुत श्रेय इति च वञ्चनेन चतुर्थ्याः पञ्चम्याश्च गोपनम् । ओः लक्ष्म्याः सेवां परिचर्यां रचयामि इत्यत्र सेवामः रचयामीति यथाकथञ्चित्क्रियादर्शनवञ्चनेन षष्ठ्या गोपनम् । हे मानस! त्वं भक्त्या सदा औ लक्ष्म्याम् आदरम् आवह । अत्र भक्त्या आवहेति वञ्चनेन सप्तम्या गोपनम् । अस्मिन्पद्ये सप्तविभक्तीनां वञ्चनात्सप्तविभक्तिवञ्चनाच-

---

इति निपातभ्रान्तिजननेन तसिल्प्रत्ययान्तस्य पञ्चम्यन्तस्य उशब्दस्य, सेवामः रचयामीति प्रयोगेण सेवाम इति क्रियापदभ्रमोत्थापनेन ओः इति षष्ठ्यन्तस्य उशब्दस्य, भक्त्या वहाव इति लोडुत्तमपुरुषद्विवचनान्तभ्रमोत्पादनेन औ इति सप्तम्यन्तस्य उशब्दस्य गोपनात् सप्तविभक्तिवञ्चनाख्येन चित्रेण भवति ।

त्रम् । एतल्लक्षणमुक्तं पूर्वश्लोकएव । अत्र "पायान्मामुरसाविहो-ग्रभवतो नो वा विभेमि क चित्को नैवाऽत्र जनो महामतिरसौ शार्दूमां सेविता" इत्यर्धे कल्पिते सति उं रमाम् आसेविता इत्यत्रोमासेवितेति वा लक्ष्म्या करणेन भवतः संसारात्त्वत्कृपया न बिभेमीतिवत्प्रयोगः । अत्र नो वा बिभेमीति वञ्चनेन द्वितीयाकरणयोर्गोपनेन विभक्तिवञ्चकवद्गतिसामान्यं सुधीभिर्विभावनीयम् । शार्दूलविक्रीडितम् ॥ ८ ॥

अथ अर्धपादाऽनुलोमप्रतिलोम—

कालीनाऽऽननालीका राधिता हि हिताऽधिरा ।
या मा सा मम सामाया काऽपि दीप्रप्रदीपिका ॥ ९ ॥

कालीनेति । के ब्रह्मणि पुत्रे आलीनम् आननालीकं मुखकमलं यस्याः सा हि यस्माद्राधिता भक्तैः प्रार्थिता सती हितं कल्याणम् अधिकं राति सा, यद्वा आराधितः अहिहितः शेषशायी हरिर्यया अधिकं राति सा च या मा लक्ष्मीर्माता जननी अमायया कपटाऽभावेन सहिता या सा माया मम काऽपि अनिर्वचनीया दीप्रा दीप्तिमती प्रदीपिका मोक्षमार्गदर्शिका

———

९. काऽऽलीनाऽऽननालीका ( के निजसुते ब्रह्मणि आलीनं संलग्नम् आननालीकं मुखकमलं यस्याः ) या ऽऽराधिता ( सती ) हि (निश्चयेन) हिताऽधिरा (हितम् अधिकं राति ददाति, तथाभूता भवति ) सामाऽया ( साम शान्तिम् अयते प्राप्नोति, शान्तेति यावत् ) सा मा ( लक्ष्मीः ) मम कापि ( अनिर्वचनीया ) दीप्रप्रदीपिका ( उज्ज्वला प्रदीपिका, मोक्षमार्गप्रदर्शिका, दीप्रस्य मोक्षस्य प्रदीपिकेति वा ) इति प्रत्यर्धपादं प्रातिलोम्येन पाठे तदुत्तरपादार्धनिष्पत्तेः पादाऽनुलोमप्रतिलोमाख्येन चित्रेणाह ।

भवतीत्यर्थः। अत्र प्रतिपादं पादाऽर्धस्य प्रतिलोमाऽऽवृत्त्या ऽर्धपादप्रतिलोमयमकरूपाश्चत्राऽलङ्कारः। तदुक्तं दण्डिना।

आवृत्तिः प्रातिलोम्येन पादाऽर्धश्लोकगोचरा।
यमकं प्रतिलोमत्वात्प्रतिलोमामति स्मृतम्॥ इति ॥९॥

पादाऽनुलोमप्रतिलोम—

सा रयादरिहाख्या ऽसौ सौख्याहारिदयारसा।
मेयकायधरा माता तामाराधय काय मे॥ १०॥

सेति। हे मे! कायसौख्यम् आहरति स दयारसो यस्याः तथा ऽरीन्कामादीन् हन्ति सा आख्या नामसङ्कीर्तनं यस्याः पुनर्मेयं संमाननीयं स्तुत्यं वा कायं धरति सा। माङ् माने मिञ् स्तुतौ इत्यनयोः अचो यदिति यति ईद्यतीतीत्वम्। या असौ लक्ष्मीर्मम कविमाता जननी तां रयादाराधयाऽऽराधनङ्कुर्वित्यर्थः। अत्र प्रातिलोम्येन पादाऽऽवृत्त्या पादप्रतिलोमयमकचित्रम्॥ १०॥

अर्धाऽनुलोमप्रतिलोम—

कारिताभिमना चित्ताऽऽवासे हारितमा रमा।

---

१० रयात् (वेगात्) अरिहाऽऽख्या (शत्रुविनाशकनिजाभिधा) सौख्याऽऽहारिदयारसा (सौख्यस्य आहरणशीला दया यस्याः) सा ऽसौ माता मेयकायधरा (दृश्यमूर्तिधारिणी विराजते) हे मे काय! (शरीर!) ताम् आराधय (पूजय) इति प्रथमपादस्य तृतीयपादस्य च प्रातिलोम्येन पाठे द्वितीयतुर्यपादनिष्पत्तेः पादाऽनुलोमप्रतिलोमाभिधेन चित्रणाह।

११ हे मारमातः! (कामजननि!) कारिताऽभिमना (संपादितमनोरथा) चित्तावासे (मम चित्तरूपे आवासे गृहे) हारितमा

मारमातरिहाऽऽसेवात्ता चितामभितारिका ॥ ११ ॥

कारितेति। हे मारमातः! हे चित्ताऽऽवासे! भक्तहृत्स्थे! कारितं दासिकादिभिः अभिमतं भक्तजनेष्टं यया पुनः हारिता भक्तैः कृत्वा मारस्य वा वैभवं दुरासदत्वमिति यावत्, यया सा त्वं नास्ति चित् ज्ञानं येषां तेषां मूढानां सेवया शुश्रूषया आत्ता गृहीता सती अभितारिका तारयित्री भवसि। अत्र प्रातिलोम्येन अर्धश्लोकाऽऽवृत्तेः अर्धप्रातिलोमयमकचित्रम् ॥ ११ ॥

अथ अनुलोमप्रतिलोम—

का ऽपि मा सरसा सा ताऽभिलापाकरनामका।
कायिना ऽरिहना सेव्या ऽग्रयनावा स्तुतिवाचया ॥ १२ ॥

कापीति। अत्र भूलोके अभिलापस्य स्तुतेः आकराः खनिभूतानि नामकान्यभिधेयानि यस्याः सा। यद्वा। अभिलापाय सङ्कीर्तनाय आकराणि ग्रामकानि यस्याः सा। आकरो निवहोत्पत्तिस्थानश्रेष्ठेष्विति मेदिनी। तथा रसेन शृङ्गा-

---

(अतिशयेन शोभमाना) मा (लक्ष्मीस्त्वम्) इह (संसारे) आसेवात्ता (सेवया प्रसादिता सती) चिताम् (आत्मनाम्) अभितारिका (समुद्धारिका, मोक्षदा भवसि) इति पूर्वार्द्धस्यैव प्रातिलोम्येन पाठे उत्तरार्धनिष्पत्तेरर्धाऽनुलोमप्रतिलोमाख्येन चित्रेण स्तौति।

१२ क सरसा (शृङ्गारादिसहिता, सप्रीतिर्वा) अभिलापाऽऽकरनामका अभिलापः शब्दप्रयोगः स्तवः, तस्याऽऽकरभूत नाम यस्याः, स्तुत्याऽनन्ताभिधानेति यावत्) अरिहना (अरीन् हन्ति तादृशी) कापि सा मा कायिना (शरीरिणा) अत्र इह लोके स्तुतिवाग्रूपया) अग्र्यनावा (संसारपारप्रापकतया श्रेष्ठया नौकया) सेव्या।

रादिना सहिता पुनः अरीन् हन्ति सा । हन हिंसागत्योरित्य-स्मात्कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानमिति आकृति-गणत्वात्कप्रत्यये टाप् । का ऽपि सा प्रसिद्धा मा लक्ष्मीः का-यिना पुरुषेण अग्रनावा भवसिन्धुतरणनौकाभूतया स्तुति-वाचया । वष्टि भागुरिरिति भागुरेष्ट्या हलन्ताट्टाप् । सेव्या से-वितुं योग्या भवति ॥ १२ ॥

अयमेव प्रातिलोम्येन भिन्नार्थः श्लोको भवति यथा—

या च वाति स्तुवानाग्र्यव्यासेना हरिनायिका ।
कामनारकपालाऽभित्रासाऽऽसारसमापिका ॥ १३ ॥

याचेति । वातेरपत्यं वातिर्मारुतिस्तस्य स्तुवते इति स्तुवानाः । ष्टुञ् स्तुतावित्यस्मात्कर्तरि शानच् । तेषु अग्र्यस्य पूज्यस्य व्यासस्य च इना स्वामिनी कामः मदनः नारकाणां निरयाणां तत्स्थजन्तूनां वा पालको यमस्ताभ्यां सकाशाद्यो-ऽभित्रासः भयं तस्याऽऽसाराणां सम्पत्तीनां समापिका स-मापनकर्त्री या लक्ष्मीः सा चकारात् सेव्येत्यनुकर्षः । अत्र

---

१३ ख कामनारकपालाऽभित्रासाऽऽसारसमापिका ( काम एव नारकपालो नरकपालकस्तस्माद् यः अभितः त्रासाऽऽसारो भी-तिबाहुल्यं तस्य समापिका नाशिका ) इना ( ईश्वरी ) या हरिना-यिका ( लक्ष्मीः ) स्तुवानाऽग्र्यव्यासा ( स्तुवानः स्तुतिकारी अग्र्यः श्रेष्ठो व्यासो यस्यास्तथाभूता, व्यासमुनिस्तुता सतीति यावत् । ) वाति ( गच्छति ) ( सा मा इति पूर्वेणान्वयः ) इति संपूर्णस्य पूर्व-श्लोकस्य प्रातिलोम्येन पाठान्निष्पन्नेनाऽनेन भिन्नार्थेन श्लोकेन अनु-लोमप्रतिलोमाख्यचित्रेणाह ।

प्रातिलोम्येन पूर्वश्लोकाऽऽवृत्त्या श्लोकप्रातिलोमयमकचित्रं शब्दालङ्कारः। लक्षणं तूक्तपूर्वमेव ज्ञेयम् ॥ १३ ॥

अनतिरिक्तपदपदार्थाऽनुलोमप्रतिलोम—

दार्ढ्यदा मम हे देहे सा ऽत्रासा लल मे ऽपि मे।
खेदिखे ऽहह याने या तार्क्ष्येना ऽद्य द्य तान्तताम् ॥१४॥

दार्ढ्येति। मां प्रमाणम् अतिक्रान्ता ऽतिमा। अत्यादयः क्रान्ताद्यर्थे इत्यव्ययीभावः। यद्वा ऽत्यन्तं मा शोभा यस्यास्तत्सम्बुद्धौ हे अतिमे! हे मे! रमे! खेदीनि खेदकराणि खानीन्द्रियाणि यस्मिन् तस्मिन्। खमिन्द्रियं समाख्यातमित्येकाक्षरः। मम शरीरे दार्ढ्यमारोग्यं ददाति सा पुनः अत्रासेन सहिता त्वं लल विलसेत्यर्थः। लडयो रलयोरेकत्वाल्ललतीति। अहह अद्भुते वा। पुनः याने वाहने तार्क्ष्येण गरुडेनेता गता युक्ता वा त्वं तान्ततां खिन्नतां द्य द्य खण्डयेत्यावाधायां वीप्सा। दो ऽवखण्डने अस्माल्लोट्। अत्र पदपदार्थानामानुलोम्यप्रातिलोम्येन वाचने ऽनतिरिक्तत्वात्तल्लक्षणं चित्रम ॥ १४ ॥

---

१४ हे ऽतिमे! ( अधिकशोभे! ) मे! ( रमे! ) अहह ( खेदे ) खेदिखे ( खेदीनि दुःखदानि इन्द्रियाणि यस्मिन् तादृशे ) मम देहे दार्ढ्यदा ( दृढत्वदायिनी सती ) अत्रासा ( निःशङ्का सती ) लल ( विलस, ) या याने गमने तार्क्ष्येण गरुडेन इता युक्ता, गरुडवाहनेति यावत् सा ( त्वं ) अद्य तान्तताम ( खिन्नतां ) द्य ( खण्डय ) इति प्रातिलोम्यानुलोम्याभ्यां पाठे ऽपि समानार्थकेनाऽनेन श्लोकेन अनतिरिक्ताऽनुलोमप्रतिलोमाभिधेन चित्रेणाह।

अपुनरुक्तव्यञ्जनम्—

अच्छभावा फणिशये जगन्नाथे झषाङ्कदा ।
आरूढाघखलापीडोच्चाटा ऋद्धिं[१] हि सौतु मा ॥१५॥

अच्छेति । फणिशये शेषशायिनि जगन्नाथे हरौ अच्छभावा स्वच्छाऽऽशया सती झषाङ्कदा कामदा किं च ठं शून्यवादं महेशं वा आरूढा ये अघरूपाः खलास्तेषामापीडान् शेखरभूतानुच्चाटयति सा । ठो महेशः समाख्यातष्ठश्च शून्ये प्रकीर्तितः । बृहद्ध्वनौ च ठः प्रोक्तस्तथा चन्द्रस्य मण्डले इत्येकाक्षरः । सा मा बुद्धिं सौतु ददात्वित्यर्थः । अत्र ङञवर्जितानां कादिहान्तव्यञ्जनानां सस्वराणां पुनरुच्चाराऽभावादपुनरुक्तसस्वरव्यञ्जनचित्रविशेषः । अथ च सस्वराणामिति विशेषणात् न्नाथच्चाटइत्यत्र व्यञ्जनमात्रपौनरुक्त्यं न दोषाय । अथ वा । "फणिशायिजगन्नाथे स्वछभावा झषाङ्कदा" इति पाठे कृते यिञइति ञकारः अङ्कइत्यत्र ङकारश्च परसवर्णजन्य इति स्पर्शान्तस्थोष्मस्थितैः सङ्ग्रह इति सर्वव्यञ्जनसङ्ग्रहचित्रविच्छित्तिविशेषः ॥ १५ ॥

विशृङ्गाटकबन्धः—

मयि ते पदभक्ते ऽस्मिन्प्रसीद कमले हिते ।

———

१५ अच्छभावा ( शुद्धाभिप्राया ) फणिशये ( शेषशायिनि ) जगन्नाथे ( हरौ ) झषाङ्कदा ( कामदा ) मा ( लक्ष्मीः ) हीति निश्चयेन आरूढाऽघखलोच्चाटा ( आरूढाघाः सपापा ये खलाऽऽपीडाः खलमुख्यास्तान् उच्चाटयति सा ऋद्धिम् ( ऐश्वर्यं ) सौतीति प्रयुक्तव्यञ्जनानां पुनरप्रयोगात् अपुनरुक्तव्यञ्जनाख्येन चित्रेणाह ।

१६ हे हिते ! ( हितकारिके ) कमले ! ते पदभक्ते ऽस्मिन् मयि

[१] बुद्धिं हि सौतु इति १ पु० पा० ।

तेजसा दह शक्ते त्वं क्षिप्रमुद्यदघं मम ॥ १६ ॥

मयीति। हे हिते ! हितकारिणि ! हे कमले ! तव भक्ते अस्मिन्मयि प्रसीद प्रसादं कुरु। पुनः हे शक्ते ! पापदहन-समर्थे ! त्वम् उद्यदुदयं प्राप्नुवत् मम कवेः पापं किल्बिषं तेजसा स्वसामर्थ्येन दह भस्मीकुरु। दह भस्मीकरणे इत्यस्मात्प्रार्थनायां लोट्। अयं त्रिशृङ्गाटकबन्धः। तल्लक्षणम्।

प्रत्येकं विलिखेद्वर्णान्क्रमादेकत्र मण्डले।
अन्यत्रैकान्तरद्वौ चेत्त्रिशृङ्गाटकमुच्यते॥

अस्यार्थः। प्रत्येकन्द्वादशकोष्ठकयुक्ते रेखात्रयनिष्पन्नवीथीद्वयेन सहिते मण्डले मकारादीन् द्वादशवर्णान् क्रमेण तदूर्ध्ववीथ्यां लिखित्वा आद्यक्षरमेव त्रयोदशाऽक्षरत्वेन वाचयित्वा तदधस्तनद्वितीयवीथीकोष्ठद्वये तदनन्तरवर्णद्वयं विलिख्य पुनः ऊर्ध्ववीथ्यां प्रथमान्तरे एकान्तरितकोष्ठके पूर्वार्धं समाप्य उत्तराद्यक्षरमपि तत्रैव वाचयित्वा अधोवीथ्यां द्वौ वर्णौ ऊर्ध्ववीथ्यां एकान्तरितकोष्ठे एकमित्येवंप्रकारेण वाचयित्वा प्रथमवीथीगतप्रथमकोष्ठके एव श्लोकं समापयेत् इति त्रिशृङ्गाटकबन्धस्योद्धारक्रमः। एतद्विस्तरस्त्वन्यत्र द्रष्टव्यः। अनुष्टुब्वृत्तम् ॥ १६ ॥

द्विचतुष्कचक्रबन्धः, अयुग्माऽक्षराऽश्लिष्टगोमूत्रिका च—

भजेमहि हरेः कान्तां कारुण्यरसपूरिताम्।

---

प्रसीद, हे शक्ते ( हरेः शक्तिरूपे ! ) उद्यत् ( उदितवरं ) मे अघं तेजसा ( स्वमहिम्ना ) दह ( नाशय ), इति त्रिशृङ्गाटकबन्धेन प्रार्थयते।

१७ ( वयं ) दयारसपरिपूरितां संसाररोगनाशिनीं, दारिद्र्यभीतिविनाशिकां लक्ष्मीं सेवेमहि इति, द्विचतुष्कचक्रबन्धेन अयु-

भवाऽऽमयहरां कामं कार्पण्यत्रासहारिणीम् ॥ १७ ॥

भजे इति । भवाऽऽमयस्य संसाररोगस्य हरां तां काममत्यन्तं कार्पण्यस्य दैन्यस्य त्रासान् हरति तच्छीलाम्। ताच्छील्ये णिनिः। पुनः कारुण्यरसेन पूरितां भरितां हरेः कान्तां भजेमहि सेवयामः। भज सेवायामित्यस्मादाशंसायां लिङ्। द्विचतुष्कचक्रबन्धो ऽयम्, अयुग्माऽक्षराऽश्लिष्टाऽनुलोमगोमूत्रिका च। तल्लक्षणम्।

द्वयोरप्यर्धयोरैक्यं विषमार्णकृतं यदि।
द्विचतुष्कश्चक्रबन्धो भवेद्गोमूत्रिका ऽपि सा ॥ इति।

अस्याऽर्थः। द्वयोः पद्याऽर्धयोः विषमाऽक्षरैः वाचने लेखने च साम्यं भवति चेदयं द्विचतुष्कचक्रबन्धो भवति। पुनश्चाऽयमेव श्लोकः पूर्वोक्तगोमूत्रिकालक्षणे द्वितीयविषमाऽक्षरगोमूत्रिकारीत्या गोमूत्रिका ऽपि भवति। इति उद्धारक्रमो ऽस्य ज्ञेयः॥ १८ ॥

अथ चतुरस्रचक्रबन्धः----

मा ऽवतादत्र परमा मारपस्वाक्षिकालिमा।
मालिकाभिः समेता मा माता मे विधुनाऽवमा ॥ १ ॥

मावतादिति। मालिकाभिर्मालाभिः सगता युक्ता तथा

---

ग्माऽक्षराऽश्लिष्टाऽनुलोमगोमूत्रिकाबन्धात्मना च चित्रेणाशास्ते।

१८ परमा (उत्कृष्टा) मारपस्वाक्षिकालिमा (मारं कामं पाति तथाभूतः स्वाक्षणः कालिमा कृष्णत्वं यस्याः, समदननीलनेत्रेति यावत) मालिकाभिः (स्रग्भिः) समेता विधुनाऽवमा (कम्पितनीचा) मे माता रमा ऽत्र (लोके) मा (माम्) अवतादिति चतुरस्रचक्रबन्धेनाशास्त।

विधुताः कम्पिता अवमा नीचा यया सा । रेफयाप्याऽवमा-ऽधमा इत्यमरः । पुनर्मारं मदनं पाति रक्षति सः सुष्ठु अ-क्ष्णोर्नेत्रयोः कालिमा नीलिमा यस्याः सा परा उत्कृष्टा मा शोभा यस्याः सा मम कवेर्माता यद्वा मम परमा उत्कृष्टा मा माता अ-तिसंरक्षणकर्त्री इत्यर्थः । मा च लक्ष्मीः प्रकीर्तिता। मा च मात-रि माने च बन्धने चेत्येकाक्षरनिघण्टुः । मा इति माम् अवताद्र-क्षतात् । चतुरस्रचक्रबन्धोऽयम् । तल्लक्षणम् ।

आद्यन्ताः सर्वपादेषु समाः पादान्तिमत्रयम् ।
अन्यत्र प्रातिलोम्याच्चेच्चक्रं स्याच्चतुरस्रकम् ॥

अर्थः। पादादिपादान्त्यवर्णसाम्यं तदेव पादचतुष्टेऽपि, तथा पादान्त्यवर्णत्रयं व्युत्क्रमेण स्याच्चेदयं चतुरस्रचक्रबन्ध इत्युद्धारः । अनुष्टुब्वृत्तम् ॥ १७ ॥

षोडशदलपद्ममिदम्—

क्षमासमागमाऽभीमा रामाणामादिमा समा ।
क्षमाक्षेमा रमानामा प्रमासीमासु माति मा ॥ १८ ॥

क्षमेति । क्षमायाः पृथ्व्याः सकाशात् समागमः उदयः उ-त्पत्तिर्यस्याः। यद्वा क्षमायां पृथ्व्यां सम्यगागम आगमनं यस्याः सा ऽपि भीमा शत्रूणाम्, अभीमा वा भक्तानामित्यर्थः । रा-माणाम् आदिमा प्रथमभूता ऽतो ऽसमा निरुपमेत्यर्थः। यद्वा समा

---

१८ क्षमासमागमाऽभीमा ( क्षमायाः शान्तेः समागमेन सम्ब-न्धेन अभीमा ) रामाणाम् आदिमा ( सकलाऽङ्गनाश्रेष्ठा ) असमा ( निरुपमा ) क्षमाक्षेमा (क्षमायाः पृथिव्याः कल्याणकारिणी) रमाना-मा ( रमाऽपरनामधेया ) मा ( लक्ष्मीः ) प्रमासीमासु ( तत्त्वज्ञाना-वधिषु ) माति ( निविशते तत्त्वज्ञानसीमा भवतीति यावत् ) इति षोडशदलपद्मबन्धाश्रयेन चित्रेण स्तौति ।

सशोभा क्षमा भक्तरक्षणसमर्था क्षमा कल्याणकारिणी प्रमाया वास्तवज्ञानस्य सीमाऽवधिरपि रमेति नाम यस्याः सा मा लक्ष्मीः मा इतिवत् सुष्ठु मातेवाऽऽचरति । षोडशदलपद्मामिदम् । तल्लक्षणं कविकुतूहले ।

अनुष्टुभि समो वर्णो यत्रैको जायते तदा ।
ज्ञेयः कमलबन्धोऽयं बन्धः षोडशवर्णकः ॥

स्फुटोऽर्थः । अत्र यद्यपि गोमूत्रिकाया आभासस्तथापि तस्यां ये पूर्वार्धगता समस्थानगा वर्णास्ते विजातीया एवोत्तरदल समानस्त्वेक एवाऽत्र तु एकवर्ण इति विशेषाद्बाधः ॥१८॥

अथार्धभ्रमयमकश्लोकः—

रसासारा साऽमितासाऽऽसाधुभामतिपालिता ।
साऽऽभाकारा भावपामिराऽमरा मा विभाति सा ॥१९॥

रसेति । सा प्रसिद्धा रसस्याऽऽनन्दस्य आसारः संपातो यस्याः सा । 'रसो वै स' इति श्रुतेः । तथा अमिता गमिता आश्रेच्छायैस्तैर्भक्तैः सहिता सशयोरभेदात् साध्वी भा मतिश्च येषां ते पालिता यया । आहिताऽग्न्यादिगणत्वान्निष्ठायाः प-

---

१९ रसासारा ( रसायां पृथिव्यां सरति एति सा, पृथिव्यामवतीर्णेति यावत् ) सा ऽमितासाऽऽसाधुभामतिपालिता ( अपरिमिता या आसा सशयोरैक्यात् आशा तत्सहिताः ये आसमन्तात् साधुर्भाकान्तिर्मतिर्बुद्धिश्च येषां ते साऽमितासाऽऽसाधुभामतयः, ते पालिता यया सा ) साऽऽभाऽऽकारा ( आभया कान्त्या सहित आकारो यस्याः सा ) भावपाम ( भावं भक्तिं प्राप्नुवन्ति तेषां, भक्तानामिति यावत् ) इरा ( भूमिः, आश्रयभूता )अमरा ( अविनाशिनी, नित्या ) मा ( लक्ष्मीः ) विभातीति अर्धभ्रमयमकाव्येन चित्रणाद ।

रनिपातः । यद्वा साधुर्गोमतिः कविः पालितो यया । पुनः आभया सहितः आकारो देहो यस्याः, एवं भावं पान्ति ते भावपा भक्तास्तानमति संभजति । अम गत्यादिष्वित्यस्माऽऽदिग्रहणेन शब्दसंभक्त्योर्ग्रहणात् । भावपाऽऽमिनी चासौ रामस्य जगद्रमणस्य रामा सीतारूपा रमणी विभातीत्यर्थः । अर्धभ्रमयमकमिदं चित्रम् । अत्र सर्वतोभद्रवत्सर्वतः सर्वपादभ्रमणाऽभावात्प्रथमान्त्ययोरेव भ्रमणादर्धभ्रमयमकचित्रमिदम् । अस्योद्धारः सर्वतोभद्रचक्रोद्धारवत्स चाऽत्र पञ्चविंशतिपद्ये प्रदर्श्यते ॥१९॥

अथ हारबन्धः—

समुद्रजोन्नतान्कुर्यात्सा नः संसारतारिका ।
समुद्रजोन्वितान्कीर्यात्[1]पुनस्त्रासाऽन्वितारिका ॥ २० ॥

समुद्रेति । संसारात्तारयत्युद्धारयति सा संसारतारिका समुद्रजा लक्ष्मीः नोऽस्मानुन्नतान् श्रेष्ठान्कुर्यात्, पुनः च परं त्रासेन भयेनाऽन्विता युक्ता अरयो यस्याः सा समुद्गतं रजोगुणो यस्मात्तेन सत्त्वेनाऽन्वितान् कुर्यात्करोतु उन्नतत्वे राजमोद्धतत्वे मा भूदित्यभ्यर्थयत इत्यर्थः । हारबन्धाख्यं चित्रमिदम् । तल्लक्षणम् ।

२० संसारतारिका सा ( प्रसिद्धा ) समुद्रजा ( लक्ष्मीः ) नः ( अस्मान् ) उन्नतान् ( निजपदप्रापणेन समुन्नतिशालिनः ) कुर्यात् । पुनः त्रासाऽन्विताऽरिका ( त्रासेन भयेनाऽन्विता अरयो यस्यास्तादृशी ) समुत् ( साऽऽनन्दा सा ) रजोऽन्वितान् ( रजोगुणयुक्तान् राजसानुद्धतानिति यावत् ) कीर्यात् ( क्षिपतु, नाशयतु ) इति हारबन्धचित्रेणाह ।

[1] कुर्यादिति १ पु० पा० ।

हारान्तरे तु दलयोराद्यवर्णचतुष्टयम् ।
रसाष्टदिग्रविमनुतिथिभूपाः समास्तथा ॥

अस्याऽर्थः । पूर्वोत्तरयोर्दलयोराद्यवर्णचतुष्टयं समम्, ततः षष्ठाद्येकान्तरितं समं पञ्चदशषोडशवर्णौ च समौ इत्युद्धारक्रमो ज्ञेयः । अनुष्टुप् वृत्तम् ॥ २० ॥

मुरजबन्धोयम्—

इन्दिरा भासुरा पद्ममन्दिरा ऽघधरापहा ।
हा ऽपराधहरा दृष्ट्या सा पराभा सुरा ऽऽदृता ॥२१॥

इन्दिरेति । भासुरा देदीप्यमाना एवम् अघधरान्पापपर्वतानपहन्ति सा तथा पद्ममेव मन्दिरं यस्याः सा पुनर्दृष्ट्या ऽपराधस्य हरा तथा परा आभा कान्तिर्यस्याः सा किं च सुरैः आदृता इन्दिरा हा हर्षे अस्तीत्यर्थः। मुरजबन्धो ऽयम् । तल्लक्षणं कविकुतूहले ।

सर्वेषु पादेषु तृतीय एकः
षष्ठः स एव प्रथमाङ्घ्रिगौ च ।
यौ मध्यमौ तौ चरमान्तरस्थौ
वर्णौ विधेयौ मुरजाख्यबन्धे ॥
पूर्वार्धान्त्याश्च चत्वारो व्युत्क्रमात्स्युः परे दले ।
प्रथमाङ्घ्र्योर्द्वितीयैक्यमुपान्त्यैक्यं तथा तयोः ॥

———

२१ भासुरा ( दीप्तिमती ) पद्ममन्दिरा, अघधराऽपहा ( अघधरान् पापिनो पापरूपान् धरान् पर्वतान् वा ऽपहन्ति सा ) पराऽऽभा ( परा उत्कृष्टा आभा कान्तिर्यस्याः सा ) सुराऽऽदृता ( देवमानिता ) सा इन्दिरा ( लक्ष्मीः ) हा ( आश्चर्ये ) दृष्ट्या ( कटाक्षपातमात्रेण ) अपराधहरा ( अस्मत्पापनाशिका अस्ति ) इति मुरजबन्धेनाह ।

अस्याऽर्थः । अत्र सर्वेषु पादेषु तृतीयः पञ्चमश्च वर्ण एको भवति, तथा प्रथमपादगौ यौ मध्यमौ चतुर्थपञ्चमौ तावेवान्त्यपादे चतुर्थपञ्चमौ वर्णौ दृश्येते, तथा पूर्वार्धान्त्यगाः चत्वारः पञ्चमाद्विवर्णाः द्वितीयाऽर्धवाचने व्युत्क्रमेण भवन्ति, तथा प्रथमद्वितीयपादयोस्तथा तृतीयचतुर्थपादयोश्च द्वितीयं वर्णैक्यं भवति, इति मुरजबन्धलक्षणोद्धारो ऽत्रस्थः । अन्यत्राऽस्य बहवो भेदाः सन्ति इति दिक् ॥ २१ ॥

सजातीयनिरन्तरयमकचित्रम —

काकाननदे देवि विपापा ऽहह भूभू-
राराददरा राममना नाम महे हे ।
यायाम मखे खेददनानाऽघघनाऽऽना
त्वं त्वङ्ग गदादावनी नीततमा मा ॥ २२ ॥

काकेति । हे काकस्य काकाऽसुरस्य अननं प्राणानन्ददाति सा तत्सम्बुद्धौ । अन प्राणने इत्यस्माद्भावे ल्युटि आतो ऽनुपसर्गे क इति कप्रत्ययः । अङ्ग देवि ! हे द्योतने ! खेदमायासं ददति तैर्नानाऽघैबहुपातकैर्घनाः पूर्णा वयं मखे ना निषेधे यायाम

२२ हे काकाऽननदे ! ( काकस्य जयन्तस्य अननं जीवनं ददाति तथाभूते ! ) देवि ! महे ( तवोत्सवरूपे ) मखे ( यागे ) आराद् दूराद् ( वयं ) यायाम नाम ( निश्चयेन गच्छेम ) तु ( हि, यतः ) अङ्ग ( सम्बुद्धौ, ) मा ( लक्ष्मीनाम्नी ) भूभूः ( भुवः सकाशाद्भवति तथा भूमिजा ) राममनाः ( रामैकचित्ता ) अदरा ( भयरहिता ) खेददनानाऽघघनाना ( खेददैर्दुःखदैर्नानाविधैरघैः पापैर्घनानाम् आना सञ्जीविका, आनयतेः पचाद्यच्, ) नीततमाः ( अपनीताज्ञाना ) त्वं गदादौ ( आमयादौ ) अवनी रक्षिका ( भवसि ) इति सजातीयनिरन्तरयमकचित्रेणाह ।

न गच्छामः किं तु नाममहे त्वदभिधोत्सवे भाराच्छीघ्रं शयाम प्राप्नुमः त्वन्नामग्रहणमेव कुर्म इत्यर्थः । अतः भुवः सकाशाज्जत-ति सा भूभूः तथा विगतं पापं यस्याः सा तथा नीतन्तमो यया सा अहह अद्भुते । नास्ति दरो भयं यस्याः सा रामे मनो यस्याः अतः गदादौ रोगाऽऽदौ अवनी रक्षणकर्त्री । अव रक्षणादावित्य-स्मादर्तिसृधृधम्यम्यश्यवितृभ्यो निरित्युणादिसूत्रेण कर्तरि निः । कृदिकारादक्तिन इति ङीप् । मा माता त्वं भवेति शेषः । सरला वृत्तम् । इदं सजातीयनिरन्तरयमकचित्रम् ॥ २२ ॥

अथ गरुडगतिचक्रबन्धो ऽयं लिख्यते—

मारमाता ऽहिमात्युग्ररविमा हितभाग्रमा ।
मानिता विधिभीतानां धूतदुर्गत्युरुश्रमा ॥ २३ ॥

मारेति । हि यस्माद्विधिर्दैवाद् ब्रह्मणो वा भीतानां धूता नाशिता दुर्गतिर्दारिद्र्यं तद्धेतुका उरवः श्रमा यया सा पुनर्मा-निता तथा उग्ररविवत् मा श्रीर्यस्याः सा । मा स्त्री माने मृतौ वेलामेधाश्रीमय्यमातृषु इत्येकाक्षरः । हितानननुकूलान् भजति सा मारस्य माता रमा भाति शोभते इत्यर्थः । तल्लक्षणम् ।

मध्ये स्यात्प्रथमादिमन्तरपङ्क्त्यक्षरस्पृगेवोर्ध्वम् ।
गरुडगतिचक्रबन्धो ऽयमर्धे ह्यन्तैकगाभ्रमण्डलकः ॥

———

२३ मारमाता ( कामजननी ) अहिमात्युग्ररविमा ( अहिमे ग्री-ष्मे ऽत्युग्रस्य रवेर्मा शोभेव शोभा यस्यास्तथाभूता ) हितभाक् रमा मानिता ( आदृता सती ) विधिभीतानां ( दुर्दैवभीतानां ) धूतदुर्ग-त्युरुश्रमा ( धूतो निरस्तो दुर्गतेर्दारिद्र्यस्य नरकस्य वा उरुर्महान् श्रम आयासो यया तथाभूता भवति ) इति गरुडगतिचक्रब-न्धेन वदति ।

अस्योद्धारः। मध्ये प्रथमाद्यक्षरपञ्चकमित्यर्थः। ऊर्ध्वं मण्डलमित्यर्थात् द्वे अन्तरे मध्ये पङ्क्त्यक्षरः अयं गरुडगतिचक्रबन्धो ज्ञेयः। प्रकृते राहि इत्याकारके स्पृशति तादृशः ह्यर्थे द्वितीयाऽर्थे इत्यर्थतो ऽवसेयं द्वयोरक्षरयोरन्ते मध्ये एकम् अर्थात् मध्यगतमक्षरं स्पृशति तादृशः, त्रीणि मण्डलानि यस्मिन् तादृशः गरुडगतिचक्रबन्धो भवति। मध्यस्थमण्डलद्वयाऽपेक्षया बाह्यं मण्डलं गरुडगतिबन्महदित्यर्थाऽनुगम इत्युद्धारः॥ २३॥

चतुरङ्गतुरगबन्धः—

पामराऽज्ञानतरिका छाया या संमता ऽतुला।
तापनोदनहासैका रमा नतधुरा ऽवतात्॥ २४॥

पामरेति। पामराणां प्राकृतानाम् अज्ञानसिन्धुतरणे तरिका नौकेव अतुला निरुपमा छायेव संमता एवं तापस्य नोदनो ह्रासो यस्याः सा एका नतानां भक्तानां धूर्भारो यस्यां सा। 'ऋक्पूरब्धू'रित्यप्रत्ययः। रमा माम् अवतात्। चतुरङ्गतुरगबन्धोऽयम्। तल्लक्षणम्।

आग्रकोष्ठममायुक्तमुत्तराधर्यतः स्थितम्।
तिर्यक्पङ्क्तिचतुष्कं यत्तत्तुरङ्गपदं विदुः॥
अर्थः।

———

२४ पामराऽज्ञानतरिका (पामरा ये ऽज्ञाना ज्ञानशून्यास्तेषां तरिका, भवसागरोत्तरणनौका) या ऽतुला (निरुपमा) छाया (कान्तिरूपा, रक्षारूपा वा) संमता, तापनोदनहासा (तापनोदनः पापनाशको हासो मन्दस्मितं, प्रसाद इति यावत्, यस्यास्तथाभूता) नतधुरा (नतानां नम्राणां धूः रक्षणभारो यस्याम् एवंविधा) या रमा (सा लक्ष्मीः) अवतात्।

अष्टकोष्ठयुततिर्यक्पङ्क्तिचतुष्टयम् अधोऽधः स्थितमिति द्वात्रिंशत्कोष्ठेषु सव्यादिक्रमेण श्लोको वाचनीय इत्युद्धारः । अत्र

तुरङ्गपदविन्यासे ऽश्वगत्या पद्यमुद्धरेत् ।
प्रतिपादं पृथक्स्थानं तत्तुरङ्गपदं विदुः ॥

इति तल्लक्षणम् ।

अत्र बुद्धिबलक्रीडायां प्रसिद्धहयगत्या वाचनेनैकैकमक्षरमादाय श्लोक उत्पद्यत इत्यर्थः ॥ २४ ॥

स यथा ।

तुरङ्गपदोद्धृतश्लोकस्तु—

पापसंहारिका रातु मनोज्ञा नतसंमता ।
ज्ञानयामा दयाज्ञाता ऽच्छा ऽमाया ऽपापराऽऽदरा ॥२५॥

पापेति । इदं चतुरङ्गतुरगबन्धचित्रम् । पापानां संहारिका मनोज्ञा नतानां संमता ज्ञानस्य यामा प्राप्तिर्यस्याः सा दयया ज्ञाता विख्याता अच्छा स्वच्छा अपापं पुण्यं राति दत्ते सा नास्ति दरो यस्याः मकाशात्सा या मांसद्धा मा रमा रातु ददातु भुक्तिमुक्ती इति शेषः ।

श्लोकोद्धारक्रमस्तु आद्यकोष्ठस्थपाऽक्षरमारभ्य प्रथमपादः, द्वितीयकोष्ठस्थमकारमारभ्य द्वितीयः पादः, ततस्तुर्यकोष्ठस्थ-

---

पापसंहारिका मना ( इष्टा ) ज्ञानयामा ( ज्ञानस्य यामो विस्तारो यस्यां सा ) दयाज्ञाता ( दयया प्रसिद्धा ) अच्छा ( स्वच्छा ) अमाया ( निष्कपटा ) अपापराऽऽदरा ( अपापं पुण्यं राति ददाति तथाभूत आदरो यस्याः॰सा लक्ष्मीः ) अज्ञानतसम् ( अज्ञानं तस्यति उपक्षिणोति, क्षिपति, अज्ञानशून्यां भति यावत् ) मनः रातु ( ददातु ) इति तुरगपदबन्धेनाह ।

क्षाक्षरमारभ्य तृतीयः पादः । पुनर्द्वितीयपङ्क्तिप्रथमकोष्ठस्थच्छाकारमारभ्य चतुर्थः पादः । एवंरीत्या श्लोकान्तरमुत्पद्यते ऽतः तुरङ्गपदाख्यं चित्रमिदम् ॥ २४ ॥

सर्वतोभद्रम्—

रमा सदा दासमारमानदा ऽऽननदानमा ।
सदाशया ऽयाशदासदानयागगयानदा ॥ २५ ॥

रमेति । सदा सर्वदा दासे मारस्य मानमभिमानं यद्वा दासस्य मारमानं च द्यति खण्डयति सा । दो ऽवखण्डनइत्यस्माद्दातो ऽनुपसर्गेइति कः । अननं प्राणनं ददाति स आनमो नमस्कृतिर्यस्याः सा । णम प्रह्वत्वे शब्दे इत्यस्माञ्ञि नोदात्तोपदेशस्येति वृद्धिनिषेधः । सन् शोभनः आशयो ऽभिप्रायो यस्याः सा अयस्य शुभाऽऽवहविधेः आशा इच्छा येषां तेषां दासानां भक्तानां दानं विश्राणनं यागश्च ताभ्यां गम्यते प्राप्यते तत् । गमेर्ड इति डप्रत्ययः । यानं विमानं तत् ददाति सा तत्तत्प्रवर्तिकेत्यर्थः । सा रमा लक्ष्मीः प्रास्ति इत्यर्थः । अत्र पद्यगतपादचतुष्टयस्य सर्वतो भ्रमणात्सर्वतोभद्राख्यमिदं चित्रम् । तदाह दण्डी । तदिदं सर्वतोभद्रं भ्रमणं यदि सर्वत इति । अस्याऽर्थः ।

---

२५ मानदा ( संमानप्रदा ) आननदानमा ( आनने मुखे दानमा दानलक्ष्मीर्यस्याः ) सदाशयाऽऽयाशदा ( सन् आशयो ऽभिप्रायो येषां ते सदाशयास्तेषामायाशदा, स शयारैक्याशयासदा, भवभ्रमविनाशिनी ) सदानयागगयानदा ( दानयागाभ्यां सहिताः सदानयागाः दानिनो यज्वानश्च, तान् गच्छति तथाभूतं यद्यानं गतिस्तत्प्रदा, दानियज्वप्राप्यंगतिदायिनीति यावत् ) रमा सदा दासं ( माम् ) आर ( प्राप ) इति सर्वतोभद्रचित्रेणाह ।

चतुष्कोष्ठे चतुरङ्गबन्धक्रमेण आद्यपङ्क्तिचतुष्टये पादचतुष्टयं निलिख्य अनन्तरं पङ्क्तिचतुष्टये ऽपि अधः क्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु पङ्क्तिषु प्रथमः पादः सर्वतो वाच्यते । एवं द्वितीयतृतीयतुर्यपङ्क्तिषु द्वितीयतृतीयचतुर्थपादा वाच्यन्ते । इति उद्धारो ज्ञेयः ॥ २५ ॥

त्रिस्वरम्—

समर्थयस्व सकलक्षितिस्थितिविनिर्मितिम् ।
मुमुक्षुद्युद्रुरुरुमुत्समुद्रदुहितः स्वयम् ॥ २६ ॥

समर्थयस्वेति । हे समुद्रस्य दुहितः ! मुमुक्षूणां द्युद्रुः कल्पद्रुभूता उरुर्महती मुद्यस्याः ऽसा त्वं सकलायाः क्षितेः स्थितेः पालनस्य विनिर्मितिं निमार्णं स्वयं समर्थयस्व कुरु । अत्राऽकारेकारोकाराणां पादत्रये सत्त्वात्त्रिस्वरचित्रम् ॥ २६ ॥

एकस्वरम्—

पारावाराज्जाता माता
ऽपायात्पायात् त्रासाद्दासान् ।

---

२६ हे समुद्रदुहितः ! ( सागरकन्ये ! ) मुमुक्षुद्युद्रुः ( मुमूक्षूणां मोक्षरूपाभीप्सितदानेन कल्पवृक्षरूपा ) उरुमुत् ( महानन्दा त्वं ) स्वयं सम्पूर्णायाः पृथिव्याः स्थितेः पालनस्य विनिर्मितिं निर्माणं समर्थयस्व ( कुरु ) इति अकारेकारोकाररूपाऽच्त्रितयमात्रघटिततया त्रिस्वरनाम्ना चित्रमिदम् ।

२७ साराऽऽकारा ( सारभूताऽऽकारा ) राजास्या ( चन्द्रमुखी ) नागऽगाऽऽप्ता ( नागाऽगं फणिशैलम् आप्ता प्राप्ता सती ) साऽऽकारा ( मूर्तिमती ) ख्याता ( प्रसिद्धा ) पारावारात् ( समुद्रात् ) जाता

सारा्ऽऽकारा राजाऽऽस्या ख्या-

ता साकारा नागाऽगाऽऽप्ता ॥ २७ ॥

पारेति । पारावारात्समुद्राज्जातोत्पन्ना पुनः राकां राति गृह्णाति सः राकारः । क्विबन्तमेतत् । तत्स्थ इत्यर्थः । सचाऽसौ राजा चन्द्रश्च तद्वदास्यं यस्याः सा पुनः साकारा सदेहा नागागं भूषाऽचलप्र आप्ता ख्याता सा माता अपायभूतात्त्रासाद्दासान्पा-यात् रक्षतु । अत्र पद्ये एक आकारस्वरः अत एकस्वरचित्रम् । विद्युन्मालावृत्तम् ॥ २७ ॥

त्रिव्यञ्जनम्—

रमे रामे मुराराते र्मारमातरतीतरे ।

ततं तिमिरमेतत्तु मतितोऽतितरामि ते ॥ २८ ॥

रमे इति । मुराराते: रामे ! रमे ! इतरद् द्वयमतिक्रान्ता ऽतीतरा, 'अत्यादयः क्रान्ताद्यर्थे, इति समासः । तत्संबुद्धौ हे मारस्य मातः ! ते तव मतेर्बुद्धेरिति मतितः ज्ञानादिति यावत् । एतत्ततं विस्तृतं तिमिरम् अहम् अतितरामि । इदं त्रिव्यञ्जनचित्रम् ॥ २८ ॥

---

माता ( जननी रमा ) अपायात् (हानिरूपात् हानिप्रदादिति यावत् ) त्रासाद् ( संसारभीतेः ) दासान् पायात् । इति श्लोकस्य आकार-मात्रघटितत्वेन एकस्वराख्येन चित्रेणाह ।

२८ हे मुराऽराते: रामे ! ( मुराजित्पत्नि ! ) मारमातः । ( प्रद्यु-म्नजननि ) अतीतरे ! ( अतिक्रान्ता इतरे इतरा वा यया तत्सम्बुद्धौ सर्वातिशायिनि ! ) रमे ! ततम ( विस्तृतम )एतत् तिमिरम् ( अ-ज्ञानम् ) ते मतितः ( त्वदुद्भवया शुद्धया बुद्ध्या, त्वद्रूपज्ञानेन वा ) अतितरामि ( उल्लङ्घयामि ) इति श्लोकस्य तकारमकाररेफरूपहल्-त्रितयघटितत्वेन त्रिव्यञ्जनाभिधेन चित्रेणाह ।

द्विव्यञ्जनम्—

काले काले ऽलौकिकैककोले कालालके लल।
कलिकीलालकल्लोलाऽऽकुललोकाऽऽलिला किल॥२९॥

काले इति। कालाः कृष्णवर्णा अलका यस्यास्तत्संबुद्धौ कलिरूपस्य कीलालस्योदकस्य कल्लोलैः आकुलानां व्याप्तानां लोकानाम् आलिं पङ्क्तिं लाति कृपया गृह्णाति सा। आतोऽनुपसर्गे कः इति कः। महत्सूल्लोलकल्लोलौ इत्यमरः। अलौकिकः यः एककोलः वराहरूपः तस्मिन् काले काले तत्तत्समये लल क्रीडस्व इत्यर्थः। लड विलासे इत्यस्मात्प्रार्थनायां लोट्। इदं द्विव्यञ्जनचित्रम्॥२९॥

एकव्यञ्जनम्—

रुरोररेररुरुरोरुरूरुरुरोररे।

---

२९ हे कालाऽलके! (नीलकचे! कलिकीलालकल्लोलाऽऽकुललोकाऽऽलिला (कलिरेव कीलालं जलं तस्य ये कल्लोला महातरङ्गास्तैराकुला ये लोकास्तेषाम् आलिम् पङ्क्तिम् लाति आदत्ते तथाभूता, कलिकलुषितजनरक्षिकेति यावत्, त्वम्) काले (कृष्णवर्णे) अलौकिकैककोले (अलौकिको लोकोत्तरो य एकः कोलो वराहस्तस्मिन्, दिव्यवराहरूपे कृष्णे) काले (योग्यावसरे) किल (निश्चयेन) लल (क्रीडस्व) इति श्लोकस्य ककारलकाररूपव्यञ्जनद्वयघटिततया द्विव्यञ्जनाख्येन चित्रेणाह।

३० रे रे! अर (नास्ति धनं यस्य तथाभूत, अकिञ्चन!) आरेरा (अरीणां समूह आरं, तदीरयति कम्पयति तथाविधा) ररेरा (रं धनं राति ददाति इरा वाग् यस्याः सा, धनप्रदवाग् वरदेति यावत्) अरेरारिः (अरं शीघ्रम्) ईरते, गच्छन्ति अरयो यस्याः सा, पलायितशत्रुः) इरारिरा (इरां भूमिम् आरिणी प्राप्ता राः वैभवो यस्याः

रे रेऽरारेरारररेरारेरारिरिरिरारिरा ॥ ३० ॥

रुरोरिति। अस्य पञ्जिका। रुरोः अरेः अरुः उरोः उरूरुः उः उरोररे रेरे अरारेः आर ररेरा रे रारिः इरारिरा। अस्यार्थः। उरू पीवरे ऊरू सक्थिनी यस्याः सा उः लक्ष्मीः उरोर्महतः अरारेः अराः शीघ्रगामिनः पलायमाना अरयो रिपवो यस्य तस्य। यद्वा अरं चक्रं तन्नामा चक्रवाकः तस्याऽरिः शत्रुः शापदानात्। चक्रवाकस्य श्रीरामेण शापो दत्त इति आर्षरामायणादौ प्रसिद्धम्। उरोर्मृगस्य मारीचस्य अरेः श्रीरामस्य उरः वक्षः तदेव अररं कपाटं विस्तीर्णत्वात् तत्र आर प्राप जगत्क्षेमार्थम्। सा कथम्भूता? इरारिरा इरा जलं तस्याऽरिः शत्रुः शोषकत्वादग्निः, यद्वा इरा अरिर्यस्यं तमग्निं राति सः स्वप्रवेशेन गृह्णाति सा। लङ्कायां लोकप्रत्ययार्थमग्निं प्रविष्टवतीत्यर्थः। अरुः नास्ति रुर्भयं यस्याः सकाशात् सा साऽपराधे ऽपि जने दयालुत्वात्। किं च ररेरा रं धनं राति ददाति तादृशी इरा वाक् यस्याः सा वरदेत्यर्थः। सत्यामेतादृश्यां जनन्यां रे कवे! त्वं रारिः रः अग्निः तद्वज्ज्वाज्वल्यमानाः अरयः कामादयो यस्य तादृशो ऽसि। रे रे शिव इति खेदद्योतनम्। तस्मात्तां दयालुस्वभावां द्रुतं शरणं याहि मुक्तो भवेति भावः।

---

सा ) उरूरुः ( उरू पीनौ ऊरू यस्याः सा ) उः ( लक्ष्मीः ) अरुरुरोः ( अरुषा व्रणेन उरोर्महतो ऽतिकृतव्रणस्य ) रुरोः ( हरिणस्य मारीचस्य ) अरेः ( रामस्य ) अथ वा—अरुरुरोः ( व्रणविधाने महतः ) रुरोः अरेः ( हरिणारेः सिंहस्य, नृसिंहस्य ) उरोऽरर ( उरोरूपे वक्षोरूपे अररे कपाटे ) आप प्रापेति, श्लोकस्य रेफमात्रघटितत्वेन एकव्यञ्जनाख्येन चित्रेणाढ्य।

आत्मोपदेशो ऽयम् । रः स्मृतः पावके तीक्ष्णे । अरे शीघ्रे च चक्राङ्गे शीघ्रगे पुनरन्यवत् । इरा भूवाक्सुराम्बुषु । इति मेदिनी । तीक्ष्णे वैश्वानरे कामे रः स्वर्णे जलदे धने । रीर्भ्रमे रुर्भये सूर्ये इत्येकाक्षरः । रा दाने ला ऽऽदाने चेति । इवमेकव्यञ्जनचित्रम् ॥ ३० ॥

एकव्यञ्जनम्—

मा मा मम ममे ऽमामा मामो ऽमूमाममे ऽममे ।
मामा मे ऽमी ममे ऽमामा मा ममोमममामि मे ॥३१॥

मेति । अस्य पदच्छेदः । मा मा मम ममे अमामा मामः अमूम आममे अममे मामा मे अमी ममे अमामाः मा ममोमम् अमामि मे । अस्यार्थः । मम मा माता मा श्रीः ममे मं विषं तद्वद् दुःमदः मः समयो यत्र संसारे मरणकाले वेत्यर्थः । अमामा अमा सह अमति गच्छति मा सध्रीची हितकारिणी स्यात् न त्वन्या, यद्यस्मात् मामः मया प्रमाणत्वेन अमति गच्छति चरति स वेदः अमूं श्रियमेव अममे निममे मोक्षविषये आममे ऽभिहि-

---

३१ मम मा ( मज्जननी ) मा ( लक्ष्मीः ) ममे मस्य विषस्य मा शोभेव शोभा यस्य तादृशे विषोपमे संसारे ) अमामा ( अमा सह अमति गच्छति तथाभूता, सहकारिणी ) मामः ( मां प्रमाम् अमति प्राप्नोति तथा, प्रमाणभूतो वेदः ) अमूं (लक्ष्मीम्) आममे (उक्तवान्) मे ( मम ) अमी अमाऽमाः ( सहचराः ) मा ( न सन्तु ) हे ममे ! ( मश्चन्द्रस्तस्येव मा कान्तिर्यस्यास्तथाभूते ! ) ( अहं ) ममोममः ( मः ब्रह्मा, मः शिवः, उमा गौरी, ( तेषां समाहारः, तान्नितयमपि ) मा अमामि ( न व्रजामि ) इति श्लोकस्य मकारमात्रव्यञ्जनघटिततया, पूर्वोक्ताभिधेन चित्रेणाह ।

तस्मात् एतत्प्रसादमन्तरेण मोक्षो न भवतीति भावः । अतोऽहमपि तामेव शरणं गच्छामि नान्यत्र सज्जे इत्याह । मे मम अमी अमामाः अमा सह अमन्ति भुञ्जते ते कलत्रपुत्रादयः सहचारिणो मित्रवर्गाश्च मा मा भूवन्, किं बहुना हे ममे ! मश्चन्द्रस्तद्वन्मा कान्तिर्यस्याः । यद्वा मस्य ब्रह्मणः मे जननि हे ममे ! रमे ! अहं स्वहितार्थं ममोमं मः ब्रह्मा मः शिवः उमा चैतेषां समाहारस्तत् त्रयमपि मा अमामि न व्रजामि किं पुनरन्यान् । अम गतिभोजनशब्देषु । मो मये समये ऽपि स्यात् विषे च मधुसूदने । मः शिवश्चन्द्रमा वेधा इति मेदिन्येकाक्षरमाले।माङ् शब्दे इति धातुः।इदमप्येकव्यञ्जनमेत्र चित्रम्॥३१॥

अञ्जलिविषययमकसर्वतोभद्रम्—

मामानमामानमामामानमाननमाऽनमा ।
नमानमामानमानमानमाननमानमा ॥ ३२ ॥

मामानमेति । माम् आनम अमानमाम् आमानमाननमा अ-

---

३२ हे अन ! ( मत्प्राण ! ) आनमाः ( आ ईषत् नमः अन्नं यस्य तादृशो दरिद्र इति यावत् ) ( त्वं ) अमानमाम् ( अपरिमितकान्तिम् ) मां ( लक्ष्मीम् ) आनम ( नमस्कुरु ) ( या ) आमानमाननमा ( आ समन्तात् मानं प्रमाणं यस्य तस्य मस्य चन्द्रस्येव आननमा मुखकान्तिर्यस्यास्तादृशी ) अनमा (परान् अनमन्ती सर्वोत्कृष्टेति यावत् तथा वर्तते ) एवं हे अन ! त्वं ) मानमाननं ( मानं मानयन्तं मानिनं ) मा मा नम ( नैव नमस्कुर्याः ) इति श्लोकस्य अकाराऽऽकारमकारनकारमात्रघटिततया अञ्जलिविषययमकसर्वतोभद्राख्येन चित्रेणाह ।

नगा नमान मा मा नम अन मानमाननम् आनमाः । अर्थः । हे नमान ! नास्ति लोकेषु मानः सत्कारो यस्य तादृश, नशब्देन समासः । हे अन ! हे मम प्राण ! त्वम् आनमाः ईषत् नमः अन्नं यस्य सः दरिद्रो ऽसीति कृत्वेत्यर्थः । 'नमः सत्यं नमः आयुः, इति निघण्टौ अन्ननामसु पाठात् । अमाना मानरहिता अपरिमिता मा कान्तिर्यस्यास्तां मां मातरं श्रियम् आनम नमस्कुरु । कीदृशी सा ? या आमानमाननमा आ समन्तात् मानं प्रमाणं यस्य पूर्ण इत्यर्थः । तादृशो यो मश्चन्द्रः तद्वत् आननमा मुखशोभा यस्याः सा, किं च अनमा अन्यान्प्रति न नमति सा परमेश्वरीत्वात् । परम् अं वासुदेवं नमति सा च वर्तते इति शेषः । पुनः हे अन ! त्वं मानमाननं मानः गर्वः ईश्वरो ऽहमहं भोगी सिद्ध इत्याद्याकारकः स एव माननं सदा मननविषयो यस्य । स्वार्थे अण् । तं श्रीमदोद्धतं मा मा नम नैव नमस्कुर्याः । श्रीप्रसादेन ऐहिकाऽऽमुष्मिके उभे अपि कामने सेत्स्यत इति तामेव भज न देवतान्तरं सेवस्व इति भावः । इदं अजूद्वयेन अकाराऽऽकाररूपेण रलद्वयेन मन इत्याकारकेण च यमकचित्रेण युक्तं तत्सर्वतोभद्राऽऽख्यं चित्रमपि भवतीति ज्ञेयम् ॥ ३२ ॥

द्विव्यञ्जनैकस्वरम्—

मायामायामायामाया
मायामायामायामाया ।

---

३३ (या) मा ( माता ) मा ( लक्ष्मी ) माया ( हरिशक्तिरूपा अस्ति ) ( तस्याः मायाः ( लक्ष्म्याः ) "माया ( कृपा ) मायामायामाय ( माया अविद्यैव आमो रोगस्तस्य आयामो दैर्घ्यं तस्मै, अविद्याविघातायेति यावत् ) अमाया (निश्छला) यामायामा ( यमः काक एव या-

मायामायामायामाया

मायामायामायामाया ॥ ३३ ॥

मायेति । मा या माया माया मायामायामाय अमाया मायामायामायामायामा यामामायामा याम आयामायाः । या मा जगन्माता मा श्रीः माया भगवतश्चिच्छक्तिरूपा वर्तते तस्याः मायाः श्रियः माया कृपा मायाश्रितानाम् अविद्या एव आमः रोगः तस्य य आयामो दैर्घ्यं तस्मै तं विनाशयितुमित्यर्थः । क्रियार्थोपपदस्य च कर्मणि स्थानिन इति तुमुनि चतुर्थी । अमाया निष्कपटा । कथमेतदवगम्यते ? इति चेदाह । यामायामा यमः काकः स एव यामः तत्राऽऽयामो विस्तारो दृष्टो यस्याः सा । ननु काकस्येन्द्रत्वात्तदनुरोधेन तत्राऽनुग्रहो ऽभूदिति चेन्मैवम् । यामायामायामायामा संयमः अयः शुभावहो विधिश्च तयोर्नास्ति माया बुद्धिर्येषां तान्मानसकायिककर्ममन्दानमत्यनुसरति सा सर्वमन्दानुजिघृक्षुरित्यर्थः । अय गत्यादिष्वस्मात्पचाद्यच् । अतो वयं आयामायाः आयेषु धनादिष्वमाय निर्ममाः सन्तः तामिति शेषः । याम शरणं व्रजेम । यमः काले च यमजे ऽप्यहिंसादिषु पञ्चसु । संयमे यमने ध्वाङ्क्षे यामो प्रहरसंयमौ । स्यान्माया शाम्बरी क्रिया, दम्भो बुद्धिश्चेति मेदिनी ।

---

यस्तत्रायामो विस्तारो यस्याः, ( जयन्तरक्षकत्वात् ) यामायामायामा ( यामः संयमः, अयः शुभावहो विधिः, तयोर्नास्ति माया बुद्धिर्येषां तान् अमत्यनुगच्छति तादृशी, मन्दजनानुग्राहिका भवति ) ( अतो वयम् ) आयामायाः ( आयेषु लाभेषु अमाया निःस्पृहाः सन्तः ) याम ( तां शरणं गच्छाम ) इति श्लोकस्य आकारमकारयकारमात्रघटिततया विद्यमानैकस्वरात्मकत्वेन चित्रणाह ।

ममत्वाऽभिधायी मायाशब्दस्तु प्रसिद्ध एव। इदं द्विव्यञ्जनैकस्वरचित्रंच । विद्युन्मालावृत्तम् ॥ ३३ ॥

अथ अष्टदलपद्मम्—

मा सा रक्षा परस्याऽवनगगगनवत्याघुणस्वाशहेमा
माहेशस्वास्थ्यनाकादिपददपदित्यर्थयन्ती हताऽऽमा ।
माता हन्तीति सूतिं रचिततताचिरस्थानुकूल्यावनामा
मानावल्या प्रकृष्टं परममरपप्रीतिरक्षारसाऽमा ॥ ३४ ॥

मामेति । या परस्य विष्णोः अवनं रक्षणं गच्छति तत् गगनम् अवकाशः विधेते यस्याः सा रक्षा रक्षणशक्तिः विष्णुकर्तृकरक्षणभूमावित्यसंयोगिनीति यावत् । पुनर्घुणान्कीटविशेषानभिव्याप्य ये स्वाशा द्रव्याद्याशास्तेभ्यः हेम सुवर्णं यस्याः

———

३४ ( या मा ) परस्य ( परमपुरुषस्य हरेः ) अवनगगगनवती ( अवनं रक्षण तद्गच्छति तथाभूत यद्गगनम् अवकाशस्तद्वती ) रक्षा- ( रक्षणशक्तिः, हरेर्जगद्रक्षणसहायिनीति यावत् ) आघुणस्वाशहेमा ( घुणपर्यन्तं शोभना आशा येषां तेषां हेम सुवर्णं यस्याः सकाशात् ( सर्वाशापूरिका ) माहेशस्वास्थ्यनाकादिपददपत् ( महेशसंबन्धि यत् स्वास्थ्यं स्वर्गादिपदं च तद्दं तत्प्रदं पद् अङ्घ्रिर्यस्याः ) इति अर्थयन्ती ( अर्थसंपादिका ) हताऽऽमा ( हतः आमो रोगो यया सा ) माता सूतिं ( जन्म ) हन्ति इति ( हेतोः ) रचिततताचिरस्थानुकूल्याऽवनामा ( रचितं विहितं ततं विस्तृतं चिरस्थं स्थिरम् आनुकूल्यं येन तादृशो ऽवनामो नमस्कारो यस्याः ) सा ( मा ) मानावल्या ऽमा ( मानसमूहेन सह ) उत्कृष्टं यथा तथा परमम् ( अत्यन्तम ) ( अमरपप्रीतिरक्षारसा ( अमरपस्य देवेन्द्रस्य प्रीतिरक्षायां रसः प्रीतिर्यस्यास्तादृशी अस्तीति अष्टदलकमलबन्धेन कोणाक्षरैः सिद्धेन "रघुनाथसूनुकृतिरलङ्कुनालङ्कृतेनाह ।

सकाशात् क्षुद्रादिब्रह्मान्ततत्तदैहिकपूरणीत्यर्थः । किमैहिकपूरणमेव ? न हि, तर्हि महेशस्येदं माहेशं यत्स्वास्थ्यम् ऐश्वर्यं नाकादिस्वर्गादिपदं च दत्तः इति ददे । दद दाने इत्यस्मात्पचाद्यच् । ईदृशी पदी चरणौ यस्याः सा शिवब्रह्मेन्द्राद्यैश्वर्यपदात्री इत्यर्थः । किमेतावदेव ? न हि, तर्हि या मृतिं जनिं हन्ति नाशयति सा मोक्षमपि ददातीत्यर्थः । इति जनानाम् अर्थयन्ती अर्थं सम्पादयन्ती । अर्थशब्दात्तत्करोतीति णिजन्ताच्छतरि रूपम् । नन्वेतादृश्याः सेवादौष्कर्यं स्यादिति चेन्नेत्याह रचितं कृतं ततं विस्तृतं चिरस्थं चिरस्थायि आनुकूल्यं येन तादृशः अननामो नमस्कारो यस्याः सा नमस्कारमात्रानुग्राहिणीत्यर्थः । पुनर्या परमं यथा स्यात्तथा अवरपः देवपालको विष्णुः तत्र प्रीतिरक्षायां रसो यस्याः विष्णौ परमप्रीतिमतीत्यर्थः । न विद्यते मा मानं यस्याः सा प्रमाणाऽगोचरेत्यर्थः । 'यतो वाचो निवर्तन्ते, इत्यादिश्रुतेः । इति हेतौ, अतः हतो गतः आमः दोषो यस्याः सा निष्कलङ्केत्यर्थः । मतिा मा लक्ष्मीः मानावलया सम्मानपङ्क्त्या अमा सह प्रकृष्टं यथा स्यात्तथा जयतितिति शेषः । इदं पदार्थभक्तिनिविष्टदलन्यासं कोणास्पृष्टकर्णिकं दलाग्रभागेषु "रघुनाथसूनुकृति"रिति कविनामाङ्कितमष्टदलपद्मं चितम् । लक्षणं तु—

पादेषु प्रथमान्त्यैक्यं पादोपान्त्याऽक्षरद्वयम् ।
पादान्तरद्वितीयादितृतीयं चाद्रिपर्ययात् ॥
अष्टमादित्रयं वाच्यं गत्यागत्या भवेद्यदि ।
दशमस्याऽधिकावृत्तिरभ्युदश्चद्दलाग्रकम् ॥
यदि कोणोपरिस्थाऽर्णकविनामाङ्कितं तथा ।
इदमष्टदलं पद्मं स्यात्कोणाऽस्पृष्टकर्णिकम् ॥

अस्याऽर्थः—

'सर्वपादेषु प्रथममन्त्यं चाऽक्षरं समानं, तथा पूर्वपादस्योपान्त्याऽक्षरत्रयं पौरस्त्यपादस्य द्वितीयचतुर्थं विपर्ययेण स्यात् । थाऽष्टमं नवमं दशमम् आनुलोम्येनाऽपि भवति। तयोर्मध्ये दशस्याऽऽवृत्तिश्च । तत्र कोणोपरितनाऽक्षरैः निष्पन्नेन कव्यादिमाङ्किनम् इदमभ्युदश्चदलाग्रकम् । पुनरुभयोभयदलमध्यकोणैः स्पृष्टकर्णिकं तत्र दलं न कार्यम् इत्यर्थः । अयमष्टदलपद्मायो बन्धस्तदुद्धारश्च । स्रग्धरावृत्तम् ॥ ३४ ॥

चक्रबन्धः—

वक्राऽवेक्षणकर्म कुक्षितिभुजां नो सर्वथा यद्दृशा
पत्यङ्कस्थितिमत्र विन्दति भयं सा हर्तुमृज्वर्थिनाम् ।
भिक्षाऽऽटश्रमलास्यसङ्गतिहरा ऽजस्रं मता नः परा
राजीवाऽऽवसथा परर्धिभिदुरा शान्तात्मनां भासुरा ३५

वक्रेति । यस्याः दृशा कटाक्षपातेन कुक्षितिभुजां दुर्नृपा-

---

३५ यद्दृशा ( यदीयकृपाकटाक्षेण ) कुक्षितिभुजां ( दुष्टानां राज्ञां ) वक्राऽवेक्षणकर्म ( मुखदर्शनक्रिया ) सर्वथा नो ( भवति ) पत्रं ( या ) ऋज्वर्थिनाम् ( अकुटिलमतीनां याचकानां भयं हर्तुं पत्यङ्कस्थितिं ( हर्युत्सङ्गस्थितिं, सर्वदा हरिसांनिध्यं ) विन्दति ( प्राप्नोति ) ।भिक्षाटस्य भिक्षार्थं परिभ्रमणस्य यः श्रमस्तस्य यल्लास्यं नृत्यं, प्रभूतः श्रम इति यावत्, तत्सङ्गतेस्तत्सम्बन्धस्य हरा, परेषां शत्रूणाम् ऋद्धेः सम्पदो भिदुरा नाशिका, शान्तात्मनां यतचित्तानां भासुरा ( प्रत्यक्षा ) सा राजीवाऽवसथा ( कमलाऽऽलया ) नः ( अस्माकम् ) अजस्रं ( सदा ) मता ( पूज्या ) इति " वेङ्कटयज्वनः कमलासहस्र"मिति कविग्रन्थनामाङ्केन षडरचक्रबन्धेनाह ।

णां वक्राऽवेक्षणस्य मुखाऽवलोकनस्य कर्म नो जानते इत्यर्थः । यतो ऽत्र ऋज्वार्थिनां सरलयाचकानां भयं हर्तुं नाशयितुं पत्युर्विष्णोः अङ्के उत्सङ्गे स्थितिं विन्दति प्राप्नोति सा भिक्षार्थे आटः भ्रमणं तेन यः श्रमः तस्य लास्यस्य नर्तनस्य मङ्गनः प्रमेहरा पुनः शान्तात्मनां जितेन्द्रियाणां साधूनामित्यर्थः । भासुरा प्रकाशमाना तथा परेषां शत्रुभूतकामादीनाम् ऋद्धिं वैभवं भिनत्ति विदारयति सा । भिदर् विदारणे इत्यस्माद्विदिभिदिच्छिदेरिति कुरच् । किं च राजीवकमलम् अयनं स्थानं यस्याः सा लक्ष्मीः नः अस्माकम्भक्तानाम् अजस्रं सतत परा उत्कृष्टा मता इष्टा इयमेव परदेवतात्वेनाऽभिमता इत्यर्थः । इदं "वेङ्कटयज्वनः कमलासहस्र"मिति कविकाव्यनामाऽङ्कितमहाचक्राख्यं चित्रम् ।

चक्रबन्धोद्धारस्तु दशमण्डलरेखात्मके नवमण्डलान्तर्वर्तिचक्रे नाभिस्थानेन सह एकोनविंशतिकोष्ठं प्रत्येकं अक्षरपङ्क्तित्रयं समरेखा लिखित्वा तत्रैकस्यां पङ्क्तौ वामपार्श्वक्रमेण आद्यपादमालिख्य तथा प्रादक्षिण्येन द्वितीयतृतीयौ पादौ लिखित्वा नाभिस्थाने बाह्यवलयेन साक्षरकोष्ठषट्केन सह अष्टादशकोष्ठवर्तितृतीयपादान्तकोष्ठवर्ति(?)मारभ्य प्रादक्षिण्येन चतुर्थपादं लिखित्वा तथैव समापयेत्, तत्र नाभिस्थाने आद्यपादत्रय दशमाक्षरसंवादो भवति । तत्र आद्यन्तवर्णैः सह बाह्यवलये चतुर्थपादोद्धारो द्रष्टव्यः । तथा तृतीयपादान्तकोष्ठे द्वयावर्णेन चतुर्थाद्यन्तवर्णयोः संवादो भवति । एवं तृतीयषष्ठवलययोः "वेङ्कटयज्वनः कमलासहस्र"मिति कवेः काव्यस्य च नामोद्धारो विभावनीयः सरसधुरीणवर्गैः । अत्र पद्ये शार्दूलविक्रीडितवृत्तवस्कवेरपि अस्यां कवितायां तदेव ज्ञेयम् ॥ ३५ ॥

अथाऽष्टारचक्रबन्धः—

आर्तं वेदयमीड्यसारमहिमन् श्रीवत्सगौकः स्पृश
त्रेताङ्कस्थिरमातनु त्वममलापात्तङ्गिरिं वीष्टपाः ।
यत्राटानलसप्रतापमचलद्दासे हरीन्दुस्थले
वन्द्यार्यव्रजकल्पकक्रमतया ज्ञानप्रदानाऽसिना ॥ ३६ ॥

आर्तमिति । वेदैराम्नायैर्यमिभिः संयमिभिश्च ईड्यः स्तुत्यः सारमहिमा मुख्यमाहात्म्यं यस्यास्तस्याः सम्बुद्धौ, एवं श्रीवत्सं तत्संज्ञकं चिन्हं गच्छति प्राप्नोति तादृशं हृदयम् ओकः स्थानं यस्याः सा लक्ष्मीस्तां स्पृशति बिभर्ति तत्सम्बोधनम् । 'इगुपधज्ञाप्रीकिरः कः इति कप्रत्ययः । तथा त्रेताया अग्नित्रयस्य अङ्के समीपे स्थिर सततस्थायिन् । अग्नित्रयमिदं त्रेता इत्यमरः ।

---

३६ हे वेदयमीड्यसारमहिमन् ! ( वेदैर्यतिभिश्च स्तुत्यः सारभूतो महिमा यस्यास्तत्संबुद्धौ ) हे श्रीवत्सगौकः ( श्रीवत्सं प्राप्नोति तथाभूतं हरिहृदयम् ओकः स्थानं यस्याः, ) वीष्टपाः ( वेर्गरुडस्य इष्टं पाति तथाभूता ) त्वम् त्रेताङ्कस्थिरं ( श्रेताऽग्नित्रयाङ्कनं यज्ञपुरुषेण हरिणा स्थिरं, त्रेताङ्क स्थिरो यस्मिन्निति वा ) गिरिं ( वेङ्कटाचलम् ) स्पृश । हरीन्दुस्थले चन्द्रसदृशहरिनिवासस्थाने, अचलद्दासे ( निरन्तरं सेवकभक्ताऽशून्ये ) यत्र ( गिरौ ) अटा सञ्चरन्ती वन्द्या त्वम् आर्यव्रजकल्पकक्रमतया ( श्रेष्ठजनेषु कल्पवृक्षरूपतया ) ज्ञानप्रदानाऽसिना ( ज्ञानवितरणरूपेण खड्गेन ) आर्तं ( माम् ) अनलसप्रतापं ( जाग्रत्प्रतापम् आतनु इति

"आत्रेयवंशपालेन वेङ्कटार्यकवीन्दुना ।
मीमांसकवतंसेन सा नुता कमलालया" ॥

इति प्रत्यरं क्रमेण प्रथमतृतीयषष्ठाऽष्टमाक्षराऽनुसन्धानसिद्धेनाङ्केन शोभितेनाऽष्टारचक्रबन्धेनाह ।

हे वेङ्कटेशस्य इष्टं याति तत्सम्बोधनं वीष्टयाः ! पुनः वन्दितुं नमस्कर्तुं योग्यः वन्द्यस्तत्सम्बुद्धौ आर्यव्रजस्य श्रेष्ठसमूहस्य कलाकलापगुरुदुस्तक्रमः परिपाटी यस्य तत्सम्बोधनं तस्य अचलस्थः स्थिरः दामः यस्मिन् तस्मिन् हरस्यपि हरिस्तस्मिन् भगवतः इन्दुवत्स्थले स्वच्छे श्वेतद्वीपे इति यावत् । तथा चोक्तं महाभारते मोक्षधर्मे नारायणीयोपाख्याने । "क्षीरोदधेरुत्तरतः श्वेतद्वीपो महाप्रभः । तत्र नारायणपरा मानवाश्चन्द्रवर्चसः" इत्यादि। एवं च ये अनिवर्तिन एकान्तभक्तास्तएव तत्र तिष्ठन्तीत्यादितद्वीपवैभवमहिमा तत एवाऽवगन्तव्यः । आर्तं संसारपीडितं मां वेङ्कटकविं मलदोषैः अशास्त्रत्यक्तो न भवति तम् अशुद्धं पापिनमिति यावत् । किं च यत्र कुत्रापि भवति सः अनलसः अलसरहितो वा अमन्द इत्यर्थः । प्रतापो यस्य तादृशं चिरं सततं यथा तथा तनु विस्तारय कुरु इत्यर्थः । केनेति चेत् अज्ञानस्य प्रकर्षेण यद्दानं खण्डनं, दो ऽवखण्डने इत्यस्माल्ल्युट् । तत्राऽसिरूपया खड्गरूपया तया लक्ष्म्या महाप्रभृतयेत्यर्थः । इदं कविनामप्रतापगुणक्रियाङ्कितचतुष्पाद्द्वारानुगुणवर्णाभिप्रेतप्रथमतृतीयपष्ठाष्टमगण्डलकोष्ठाष्टकमष्टारचक्रबन्धचित्रम् । तल्लक्षणं तु

> कोष्ठाऽष्टकसमाक्रान्तनवमण्डलचक्रगे ।
> चतुर्वीथीगते पद्ये मण्डलेषु यथोचितम् ॥
> पद्यं पद्यद्वयं वा ऽपि यथाशक्ति समुद्धरेत् ।
> मण्डलीगतिरिरसैतदष्टारं चक्रमुच्यते ॥ इति ।

पूर्वचक्रबन्धे कोष्ठषट्कम्, अत्र तु कोष्ठाष्टकं, तेन चतुर्थपादस्य बाह्यभ्रमणमन्तरा अन्तरेव अष्टमकोष्ठे चतुर्थपादो वाचनीयः । इयानेव चक्रबन्धाद्भेदः अस्य चक्रस्य । इतर उद्धारक्रमस्तु चक्रबन्धवदेव ज्ञेय इति दिक् । इदं पूर्वोक्तमेव वृत्तम् ॥ ३६ ॥

अथ गवाक्षबन्धः—

वेषं कलिविकटाऽशुभ-
हरमार्यत्राणदं वृषाद्रौ त्वम् ।
श्रीरयसे करुणरस
पालितलोका हरस्यजस्रमकम् ॥ ३७ ॥

वेषमिति । हे श्रीः ! हे लक्ष्मीः ! करुणारसेन पालिता रक्षिताः लोकाः जनाः यया सा त्वं कलेर्विकटं करालं यदशुभं तस्य हरम् आर्येभ्यः श्रेष्ठेभ्यः त्राणं ददाति तं वृषाऽद्रौ शेषाऽद्रौ वेषम् आकृतिं वेङ्कटरूपामित्यर्थः । अयसे प्राप्नोषि, पुनः अकं दुःखमपि अजस्रं सततं हरसि । "वेङ्कटाऽऽर्यश्रीसहस्रक"मिति कविकाव्यनामोद्धाराऽनुगुणवर्णाधिष्ठितमध्यवीथिको गवाक्षबन्धोऽयम् । तल्लक्षणम्—

एकैककोष्ठाद्यपङ्क्तिरूर्ध्वाधो ह्यधिकाग्रतः ।
नव कोष्ठां यत्र मध्यां सव्यं वाऽसव्यमालिखेत् ॥
आद्यपङ्क्तिं समारभ्य जालबन्धः स उच्यते ।

प्रस्तारः—

प्रथमपङ्क्तावेककोष्ठां लिखित्वा तदधो द्वितीयां पङ्क्तिं प्रथमपङ्क्तिं प्रथमपङ्क्तिसममध्यकोष्ठां विलिख्य एवमेवाधस्तनपङ्क्तेः प्रथमपङ्क्तिकोष्ठसममध्यकोष्ठं लिखेत् । एवं पञ्चमी पङ्क्तिर्नवकोष्ठा भ-

---

३७ हे श्रीः ! त्वं कलिसंबन्धिभयङ्कराऽशुभनिवारकम्, श्रेष्ठजनरक्षाप्रदं वेषं शेषाऽचले प्राप्नोषि, एवं कृपारसेन पालितसकललोका त्वम् अजस्रम् अकं ( दुःखं ) हरसीति "वेङ्कटार्यश्रीसहस्रकम्" इति कविग्रन्थनामाङ्केन गवाक्षबन्धेनाह ।

वति, षष्ठीमारभ्य प्रतिपङ्क्ति पार्श्वद्वयैकैककोष्ठं विहाय कोष्ठद्वयहीनाश्चतस्रः पङ्क्तीर्लेख्याः, नवमी एककोष्ठा भवति, एवं च ऊर्ध्वप्रथमपङ्क्तिमारभ्य सव्यमसव्यं वा पद्यं लेख्यम् । इति उद्धारक्रमः ॥ ३७ ॥

भिन्नवृत्ताऽनुलोमश्लोकगोमूत्रिका—

जयति सा जलधीश्वरकन्यका
भवभयाऽऽतुरमादृशपालिनी ।
विकसिता रमणस्य कृपावतो
मनसि पालयतो व्यसनाऽऽनतम् ॥ ३८ ॥

जयतीति । कृपावतः अतः व्यसनैर्दारिद्र्यादिभिः आनतं भाराक्रान्तमिव नम्रं पालयतो रक्षतः रमणस्य श्रीहरेर्मनसि विकसिता पुनः भवात्संसाराद्भयेनाऽऽतुराणां पीडितानां मादृशानां पालिनी रक्षिका जलधीश्वरस्य दुग्धसमुद्रस्य कन्या पुत्री लक्ष्मीर्जयति । अयं द्रुतविलम्बितवृत्ते गोमूत्रिकायां प्रथमः श्लोकः ॥ ३८ ॥

———

३८ भवभीतिव्याकुलमादृग्जनरक्षिका, व्यसनैः ( दुःखैः ) आनतम् भृशं ( अतं ) पालयतो रमणस्य ( हरेः ) मनसि विकसिता ( निरन्तरं स्फुरन्ती ) सा जलधीश्वरकन्यका जयति ।

कायभासा चलद्विश्वमुत्कल्पिका
देवता या स्फुरत्याद्दता पावनी ।
लोकमाता मम त्रस्यतः पापतो
ज्ञानमापादयत्वव्यया नाथितम् ॥ ३९ ॥

कायेति । कायस्य भासा प्रभया स्फुरन्ती तथा चलच्च तद्विश्वं च तस्य कल्पिकोत्पादिका तथा पावनी इति आद्दता पुनः लोकमातेति या प्रसिद्धा अव्यया निर्विकारा सा देवता श्रीरूपिणी पापात्त्रस्यतः उद्वेगवतः मम नाथितं प्रार्थितं ज्ञानम् आपादयतु संपादयतु । अयं स्रग्विणीवृत्तश्लोकः गोमूत्रिकायां द्वितीयः, अतो भिन्नवृत्तयोर्द्वयोरेका गोमूत्रिका भवतीति तन्नामकं चित्रम् ॥ ३९ ॥

प्रतिलोमगोमूत्रिकायां प्रथमः श्लोकः—

त्रिदिना निगमे त्रिषमेषुतनौ
रसिके निरता वृषभाऽद्रिविभौ ।

---

३९ कायभासा ( देहप्रभया ) चलतो ( जङ्गमस्य ) विश्वस्य सन्तोषसम्पादिका, पावनी ( जगत्पावित्र्यसम्पादिनी ) आद्दता या देवता स्फुरति, अव्यया ( नित्या ) सा लोकमाता ( लक्ष्मीः ) पापात् बिभ्यतो मम नाथितं ( प्रार्थितं ) ज्ञानं संपादयतु इति द्रुतविलम्बितस्रग्विणीवृत्ताभ्यामनुलोमगोमूत्रिकाबन्धेनाह ।

४० हे विमलावसथ ! ( शुद्धगृह ! ) कमले ! श्रीः ! निगमे ( वेदे ) प्रसिद्धा, त्रिषमेषुतनौ ( कामरम्यदेहे ) रसिके वृषभाद्रिविभौ

मम दास्यवतो विमलाऽऽवसथे

कृपया दुरितं सहसे कमले ॥ ४० ॥

विदितेति । हे विमलाऽवसथे ! हे स्वच्छगेहे ! हे कमले ! निगमेषु वेदेषुविदिता विषमेषुतनौ काम(?) रमिके वृषभाद्रिविभौ हरौ निरता त्वं दास्यवतः सेवावतः मम दुरितं पातकं कृपया सहसे । भिन्नवृत्तप्रतिलोमगोमूत्रिकातोटकवृत्तः प्रथमश्लोकः ॥ ४० ॥

प्रातिलोम्येन वाचनीयः श्लोकः—

समस्तसेव्या सदरिक्षयादिकृ-

ल्लसद्विलासा विभवप्रदा मम ।

रविप्रभा त्वं वृषरक्षिके स्फुरन्न-

तस्य मे देवि जगद्धिता भुवि ॥ ४ ॥

समस्तेति । हे वृषस्य धर्मस्य इन्द्रस्य वा रक्षिके ! हे देवि ! समस्तैः सेव्या सदरीणामसाधूनां क्षयादि करोति सा एवं लसन्तो विलासा यस्याः सा पुनः रविवत्प्रभा यस्याः सा तथा स्फुरंश्चासौ नतश्च तस्य मम विभवप्रदा किं च जगतः हिता क-

( वेङ्कटपतौ ) निरता ( त्वं ) दास्यवतः ( दासस्य ) मम दुरितं कृपया सहसे इति प्रतिलोमगोमूत्रिकायां प्रथमेन श्लोकेनाह ।

४१ हे वृषरक्षिके ! ( धर्मरक्षिके ! ) मे ! ( रमे ! ) देवि ! समस्तैः सेवनीया, सदरिक्षयादिकृत् ( सत्पुरुषद्वेषिणां क्षयाद्यनिष्टकारिणि ) लसद्विलासा ( शोभमानविलासा ) रविप्रभा ( सूर्यसदृशकान्तिः ) जगद्धिता ( लोकहितकारिणी त्वं ) स्फुरन्नतस्य ( स्फुरतो नम्रस्य ) मम भुवि विभवप्रदा ( ऐश्वर्यप्रदा असि ) इति प्रतिलोमगोमूत्रिकया पठनीयेन द्वितीयश्लोकेनाह ।

ल्याण्यसीत्यर्थः । अयं गोमूत्रिकायां बन्धस्थवृत्तो द्वितीयः श्लोको लेखनीयो वाचनीयश्च । इदं गोमूत्रिकाद्वितीयलक्षणम्—

पूर्वार्धविषमस्थानभाजो वर्णाः परे दले ।
विषमस्थानगाश्चेत्स्युस्तदा गोमूत्रिकान्तरम् ॥

इति कविकुतूहले । अतोऽत्र विदितेति श्लोकस्याऽनुलोमवाचनेन प्रथमतृतीयादिविषमवर्णैक्याद्द्वितीयमिदं लक्षणम् । समस्तेति श्लोकस्य प्रतिलोमवाचने ऽपि एतत्स्तबकस्थतृतीयश्लोकोक्तसमवर्णैक्यलक्षणमिति सङ्करयुक्तं चित्रम् ॥ ४१ ॥

अष्टदलकमलबन्धः—

नाशिताऽऽपत्तिना नाकसद्मादिना
ऽनादिनेत्रा ऽधुना नाथिनीं विष्णुना ।
नाऽपचारादिनानाऽऽमयात्सज्जना-
नावितुं मां विना ऽनाश्रया नाऽर्थना ॥ ४२ ॥

नाशितेति । नाशिता आपत्तिर्विपत्तिर्येन तेन एवं नाकः सद्म येषां तेषां देवानाम् आदिना मुख्येन तथा ऽनादिश्चासौ नेता

---

४२ नाशिता आपद् येन तथाभूतेन नाकसद्मादिना ( नाकसद्मनां देवानामादिभूतेन ) अनादिनेत्रा ( अनादिना नायकेन विष्णुना ) नाथिनीं ( सनाथां ) मां ( लक्ष्मीं ) विना अपचारादिनानामयात् ( अपकारादिकात् नानाविधाद् दुःखात् ) सज्जनान् आवितुम ( आ समन्ताद्रक्षितुम ) अर्थना ( प्रार्थना ) अनाश्रया ( निरालम्बा, ) न ? किंतु व्यर्था,' इति कोणाक्षरैः "पद्मात्राविरासमाना" इत्यङ्काङ्कितेनाऽष्टदलपद्मबन्धेनाह ।

नायकश्च तेन विष्णुना नाथिनीं प्रभुमतीम् । अत इनेठनाविति इतिः । मां लक्ष्मीं विना अपचारादिरूपाज्ञानाऽऽपपापद्रहु-रोगादसज्जनानाविलुं आ समन्तादक्षितुम् अर्थना प्रार्थना अनाश्रया न अपि तु साश्रयैव, श्रीमद्भगवतो रक्षणोन्मुखत्वकरणं लक्ष्म्या विना नास्तीति भावः । इदं रेखाद्वयदलान्तरालदलाग्रभागेषु "पद्माऽत्राऽऽविरासमाना"इति प्रबन्धविषयनामाङ्कितम् अष्टदलकमलचित्रम् । एतदुद्धारक्रमस्तु "मा सा रक्षे"ति चतुस्त्रिंशच्छ्लोकोक्ताऽष्टदलपद्मवदेव ज्ञेयः । स्रग्विणीवृत्तम् ॥४२॥

यमकचित्रम्—

भक्तजिह्वासु या नित्यमिष्टक्रिया-
कारिका कारिकाकारिकाकारिका ।
सा शुभा यासि मे त्वं समृद्धिं रमे
नामयानामयानामयानामया ॥ ४३ ॥

भक्तेति । या भक्तानां जिह्वासु नित्यं सततमिष्टां क्रियां करोति सा तथा कारिकामङ्कुशविदारणरूपां वेदनां करोति स चाऽसौ काकश्च ऐन्द्रश्च तस्य आरिका रलयोः सावर्ण्यादालिका सखी हितकारिणीति यावत् । कारिका यातनाकृत्योरित्यम-

---

४३ या भक्तानां रसनासु नित्यम् इष्टक्रियाकारिका, ( अभीप्सितकर्मकारिणी ) कारिकाकारिकाकारिका ( कारिकां यातनां करोति तादृशो यः काको जयन्तः सो अरिर्यस्याः तथाभूता ) अनामयानाम ( नीरोगाणां वर्धमानानामिति यावत् ) अयानां ( शुभविधीनाम् ) अया ( गामिनी प्राप्तायच्छुभेति यावत् ) शुभा ( कल्याणिनी ) सा त्वं मे समृद्धिं यासि नाम ( इति निश्चये ) इति यमकचित्रेणाह ।

रः। पुनः अनामया निष्कलङ्का किं च नाम अभिधां याति इति नामया सा न भवतीत्यनामया अनिर्वचनीयेत्यर्थः। यद्वा नामः नमनं नम्रत्वमिति यावत् सा नामया तादृशी न भवति सा सर्वोत्तमत्वात्। इतरश्च अस्य वासुदेवस्य नाम नमनं याति सा असि, अतः हे रमे! लक्ष्मि! त्वं नाम निश्चयेन मे कवेः शुभाय समृद्धिं नामय प्रवणं कुरु। णम प्रह्वत्वे शब्दे इत्यस्मात् ण्यन्ताल्लोट्। यमकचित्रमिदम्। स्रग्विणीवृत्तम् ॥ ४३ ॥

यमकचित्रम्—

गृहाण नस्त्वं परमे रमे रमे
कृताऽपराधानधिकाधिकाधिकान्।
जडानपि त्वं नयनायनायना-
न्होत्र कर्णोत्सवदा वदावदा ॥ ४४ ॥

गृहाणेति। अहो रमे! सुन्दरि हे रमे! हे लक्ष्मि! परमे कान्ते हरौ स्परे पुत्रे वा या वदावदा भाषमाणा सती कर्णयोरुत्सवदा ऽऽनन्ददात्री त्वं कृताऽपराधानाचरितमन्तून् अधिकाधिकः अत्यन्त इति यावत्, स आधिर्मानसी व्यथा येषां तान् तथा नयनयोः अयनं मार्गः तम् अयन्ते प्राप्नुवन्ति तान्। अयनं व-

---

४४ हे परमे! (श्रेष्ठे!) रमे! (मनोरमे!) रमे! (लक्ष्मि) अधिकाऽधिकाऽऽधिकान् (अत्यधिकमनोव्यथान्) कृतापराधान् जडानपि नयनाऽयनाऽयनान् (नेत्रमार्गं प्राप्तान्, दृग्गोचरान्) नः वदावदा भाषमाणा सती कर्णोत्संवदायिनी त्वं गृहाण स्वीकुरु इति पूर्ववद् यमकचित्रेणाह।

र्मे मार्गेत्यपरः। जडान् ज्ञानहीनानपि नो ऽस्मान् अत्र भूलोके कृपया दययैव गृहाण स्वीकुरु। अत्र चित्रं तु उक्तपूर्वमेव ज्ञेयम्। वंशस्थं वृत्तम् ॥ ४४ ॥

अयं गोमूत्रिकायां प्रथमः श्लोकः—

सा मा मा पातु दयया शयदा भास्वराऽलका।
दासाऽवनी वरमहा भाविता नारदादिना ॥ ४५ ॥

सेति। भास्वराऽलका शयदा भक्तहस्तदा दासाऽवनी भक्तरक्षका वरमहाः श्रेष्ठतेजाः नारदादिना भाविता, ध्यातेत्यर्थः। सा मा लक्ष्मीः मा मां दयया पातु। अयमत्र भिन्नवृत्ताऽनुलोमगोमूत्रिकायां विपुलावृत्तः प्रथमः श्लोकः ॥ ४५ ॥

अयं द्वितीयः—

क्षेमा तापाप्तिदहा या जयदा भासुराऽऽलोका।
सा ऽसावानीतरसा हा भुवि लूनाऽऽपदाताना ॥ ४६ ॥

क्षेमेति। या क्षेमा कल्याणरूपा तापानामाप्तिं प्राप्तिं दहति सा या जयदा भासुरः आलोको यस्याः सा ऽसौ भुवि



४५ शयदा (हस्तदा, हस्ताऽवलम्बप्रदेति यावत्) भास्वराऽलका (विलसत्केशपाशा) दासाऽवनी, वरमहाः (उत्कृष्टतेजाः) नारदादिना महिता (पूजिता) सा मा (लक्ष्मीः) मा (मां) दयया पातु, इति गोमूत्रिकाप्रथमश्लोकेनाह।

४६ क्षेमा (कल्याणकारिणी) तापाऽऽप्तिदहा (सन्तापप्राप्तिदाहिका) जयदा भासुराऽऽलोका सा ऽसौ (लक्ष्मीः) हा भुवि लूनापदाताना (छिन्नविपत्तिविस्तारा अस्ति) इति द्वितीयगोमूत्रिकाश्लोकेनाह।

आनीतः रस आनन्दो यया लूनः आपदाम् आतानो विस्तारो यया तादृशी भवत्विति शेषः । अयमत्राऽनुलोम्येन गोमूत्रिकामर्यादया वाचनीय उपगीतिवृत्तो द्वितीयः श्लोकः ॥ ४६ ॥

अयं प्रतिलोमस्तृतीयः—

आदित्यैरर्च्यैताग्र्याभा या मज्जीवस्ताह्लादा ।
सा लक्ष्मीः स्वश्रीदा क्लेशग्लायद्यातुस्तोमावासा॥४७॥

आदित्यैरिति । या आदित्यैर्देवैरर्च्या पूज्या इता प्राप्ता ऽग्र्या श्रेष्ठोत्तमा वा भा यया मम जीवस्य स्तव एव स्तावः तेनाऽऽह्लादो यस्याः सा स्वस्य मम स्वः स्वर्गस्य वा श्रियं ददाति सा क्लेशेन ग्लायन्ता यातुस्तोमानां रक्षस्समूहानाम् आवासः शङ्कृति यावत् । यस्याः सकाशात्सा लक्ष्मीः मां पात्विति शेषः । अयमत्र प्रतिलोमतया गोमूत्रिकाक्रमेण वाचनीयो लेखनीयश्च विद्युन्मालावृत्तस्तृतीयः श्लोकः ॥ ४७ ॥

चतुरक्षरयमकम्, अनुलोमप्रतिलोमचित्र,-
मनुलोमप्रतिलोमगोमूत्रिका च—

मासवासरसाराववरा सारसवासमा ।

---

४७ आदित्यैः ( देवैः ) अर्च्या, इताऽग्र्याऽऽभा ( प्राप्तोत्कृष्टकान्तिः ) या मज्जीवस्तावाऽऽह्लादा ( मद्रूपस्य जीवस्य स्तावे स्तवे आह्लादो यस्यास्तथाभूता) क्लेशेन ग्लायतां यातूनां रक्षसां स्तोमे आवासः स्थितिर्यस्याः सा ( सीतारूपा लक्ष्मीः ) स्वश्रीदा ( स्वर्गसंपत्प्रदा भवति ) इति प्रतिलोमेन तृतीयगोमूत्रिकाश्लोकेन वदन् पञ्चभिस्त्रिभिः श्लोकैर्घटितेनैकेन गोमूत्रिकाबन्धेन स्तौति।

४८ मासवासरसाराववरा (' मासान् वासरान् सारेण योऽवति सूर्यस्ततो वरा, सूर्याऽधिककान्तिरिति यावत ) सारसवा-

मा ऽऽसवाऽसरसा ऽरावरा सारसवा ऽसमा॥ ४८ ॥

मासेति । मासाश्च चैत्रादयश्च वासराश्च रव्यादयश्च तेषां सारम् अवति रक्षति सः सूर्यस्तस्माद्वरा देदीप्यमाना, यद्वा मासान्वासरांश्च सायति गमयति सः सूर्यस्तम् अवति रक्षति सः वरः वरदानं यस्याः, यद्वा मासानां वासराणां च सारं चक्रम् अवति तत्कालचक्रप्रवर्तकम् आदित्यमण्डलं तत्र वरो यस्याः सा । "ध्येयः सदा सवितृमण्डलमध्यवर्ती"ति वचनात् । 'यो ऽसावादित्ये पुरुष' इति श्रुतिरपि । तथा सारसवासेन कमलवासेन मा शोभा यस्याः, यद्वा सारसस्य वासेन मा शोभा यस्याः सकाशात् यत्संबन्धेनैव कमलस्य शोभेत्यर्थः । आसवे सुरायां सरसा सप्रीतिर्न भवति सा, सात्त्विकत्वान्न तु कालीवत्सरसा । पुनः अरौ शत्रौ अवरा वरदा न भवति किं तु तन्नाशिका, एवं सारः श्रेष्ठः सवः अर्चनं यस्याः सा, असमा निरुपमा मा रमा विराजते इति शेषः । चतुरक्षरि च इदं यमकचित्रम्, अनुलोमप्रतिलोमचित्रं गोमूत्रिकाचित्रं चेति । इदं चाऽनुलोम्येन प्रातिलोम्येन च गोमूत्रिकारीत्या ऋजुगत्या वा वाचने ऽप्येकरूपमिति अतिदुष्करतरं चित्रम् । स एव शब्दालङ्कारो ज्ञेयः । अनुष्टुब्वृत्तम् ॥ ४८ ॥

---

मावा( सारसे कमले वासेन मा शोभा यस्याः सा ) आसवाऽसरसा ( आसवे मद्ये ऽसरसा प्रीतिरहिता ) अरौ (शत्रौ) अवरा ( न वरदा ) सारसवा ( सारभूतः सवो यागः पूजा यस्याः सा ) मा ( लक्ष्मीः ) असमा ( निरुपमा,) इति चतुरक्षराऽनुलोमप्रतिलोमचित्रेण गोमूत्रिकाचित्रेणाऽनुलोमप्रतिलोमगोमूत्रिकाचित्रेण चाऽतिदुष्करेणाह ।

नानायमकानि—

पद्मे वासो ऽप्यहह सुमनःकोमलं क्लान्तिकृत्ते
पद्मे वासो ऽप्यप्यतिमृदुतनोः साहसेनेति सिद्धे ।
आयासि त्वं न कथमधुना चित्रकूटाऽश्मचारा-
दायासित्वं तदिह कृपया सह्यतां साहसं मे ॥४९॥

पद्मे इति । हे पद्मे हे रमे ! अहह खेदे सुमनसः पुष्पात्कोमलं वासो वस्त्रमपि ते क्लान्तिकृद् ग्लानिकृत् अतो ऽतिमृद्वी तनुर्यस्यास्तस्यास्तव पद्मे कमले वासो वसतिरपि साहसेन इति सिद्धे त्वम् अधुनेदानीं चित्राणि गोमूत्रिकादीनि कूटानि यमकाऽनुलोमप्रातिलोमादीनि तद्रूपाः, अथ चित्रकूटस्यैतन्नामशैलस्य च ये ऽश्मानस्तेषु सञ्चारादायासित्वं श्रमित्वं कथं ऽऽनायासि ? अपि तु प्राप्नोषि, अतः कृपया मे साहसं पूर्वोक्तं सह्यताम । षह मर्षणे ऽस्मात्प्रार्थनायां लोट् । मन्दाक्रान्तावृत्तम् ॥ ४९ ॥

---

४९ हे पद्मे ! ( लक्ष्मि ! ) अहह ( खेदे ) सुमनःकोमलं ( कुसुमसुकुमारमपि ) वासः ( वस्त्रं ) ते क्लान्तिकृत् भवति, एवम् अतिकोमलशरीरायास्ते पद्मे ( कमले ) वासः ( अवस्थितिरपि ) साहसेन ( भवति ) इति प्रसिद्धे सति त्वम् अधुना चित्रकूटाऽश्मचारात् ( चित्रकूटाभिधपर्वतप्रस्तरसञ्चरणात्, चित्राणि अस्मिन् स्तबके प्रदर्शितानि चक्रादीनि कूटानि च यमकाऽनुलोमप्रतिलोमसर्वतोभद्रादीनि तान्येवातिकाठिन्यात् अश्मानस्तेषु सञ्चाराच्च ) अधुना आयासित्वम् ( आयासवत्त्वं श्रान्तत्वमिति यावत् ) कथं नाऽऽयासि ? अतः इह ( एतद्विषये ), मे साहसं कृपया सह्यतामिति निजविरचितचित्रकूटादिभिः श्रमप्रदानस्य क्षमां याचमानो यमकेनाह ।

नियतं नमांसि विदधीमहि ते
निगमप्रतीपमनसामहिते।
जगदम्ब जम्भरिपुणा महिते
मुनयो जपन्ति तव नाम हि ते॥ ५०॥

नियतेति। निगमेषु वेदेषु प्रतीपं प्रतिकूलं मनो येषां तेषामहिता तत्सम्बुद्धौ ते तुभ्यं नियतं नियमेन नमांसि नमस्कारान् विदधीमहि कुर्मः, हे जगदम्ब! हे जम्भारिपुणेन्द्रेण महिते! पूजिते! हे हिते! हितकारिणि! यद्वा हितविषये मुनयः तव नामाऽभिधां जपन्ति। कुटजाख्यं वृत्तम्॥ ५०॥

भयानकमलालयं प्रति भयेन जिह्वामिमां
स्तवैर्न कमलालयं हुतभुगुष्णया तृष्णया।
भजेय कमलालयं त्वहमितः परं तन्महो
ऽधुना ऽऽधिकमलालयं न हि भजन्ति यत्संश्रिताः॥५१॥

भयेति। हुतभुगग्निरिव उष्णया तापकारिण्या तृष्णया र-

---

५० निगमप्रतीपमनसां ( वेदपराङ्मुखचित्तानाम् ) अहिते! जम्भारिपुणा ( इन्द्रेण ) महिते ( पूजिते! ) हे जगदम्ब! ( वयं ) ते ( तव ) नमांसि विदधीमहि, हि यतः ते ( प्रसिद्धाः ) मुनयस्तव नाम जपन्ति, इति प्रणमति।

५१ ( अहं ) हुतभुगुष्णया ( अग्निवदुष्णया, अतिदीप्तया ) तृष्णया भयेन च भयानकानां मलानाम् आलयं ( स्थानं ) कं प्रति स्तवैः जिह्वां नाऽलालयम् ( नाऽचालयम् नाऽस्तावयमिति यावत् ) इतः परं यत्संश्रिताः आधिकमलालयं ( मनोव्यथामयमुष्टं ) न भजन्ति, कमलालयं ( कमलनिवासि ) तन्महः ( लक्ष्मीरूपम् ) अधुना भजेय, इति इतरस्तवेन निर्विण्णो भगवतीमात्रभजनमाशास्ते।

क्षणार्थं भयेन वा भयानकश्चासौ मलानां पापानाम् आलयः गृहं च कं पुरुषं प्रत्युद्दिश्येत्यर्थः। स्तवैरिमां जिह्वां नाऽऽलापम्? इतो हेतोः यस्मिन् संश्रिता आधेः कमलाऽऽलयं सिन्धुं न भजन्ति? ततः कमलम् आलयो यस्य तत्परं महः अधुना भजेय। पृथ्वीवृत्तम् ॥ ५१ ॥

हयरूपधरो यतः स मस्ते
श्रीतलोके कलया ऽधुना समस्ते।
जुषते धिषणाविकासमस्ते
दुरिते देवि भवदृशा समस्ते ॥५२॥

हयेति। अधुना श्रितः आश्रितश्चासौ लोको जनश्च तस्मिन् सः प्रसिद्धः मस्ते शिरसि हयरूपधरः हयग्रीवाऽवतारो हरिः ते तव कलयांशेन समः साधुर्वा चातुर्यस्फूर्तिदो ऽस्ति, यतः भवत्याः दृशा समस्ते दुरिते ऽस्ते सति धिषणा बुद्धिर्विकासं जुषते। सर्वसाधुसमानेषु समं स्यादभिधेयवत्। कला स्यान्मूलैवृद्धौ शिल्पादावंशमात्रके। षोडशांशे च चन्द्रस्य कलनाकालमानयोरिति च मेदिनी। औपच्छन्दसिकं वृत्तम् ॥ ५२ ॥

---

५२ मस्ते ( मस्तके ) हयरूपधरः ( अश्वरूपधरो हयग्रीव इति यावत् ) सः समस्ते ( समग्रे ) श्रितलोके ( आश्रितजने ) ते कलया अंशेन समः ( तुल्यः ) ( अतः ) हे देवि ! भवदृशा ( तव कटाक्षेण ) दुरिते अस्ते ( विनष्टे सति ) धिषणा ( बुद्धिः ) विकासं ( विस्तारं ) जुषते ( प्रोल्लसति ) इत्याह ।

जननि तडिद्भावपुषे प्रभवपुषे संपदां नमस्तुभ्यम् ।
हृषितवृषाचलविभवे विभवे ऽस्माकं प्रवर्तयेथास्त्वम् ॥५३॥

जननीति । हे जननि ! संपदां प्रभवमुत्पत्तं पुष्णाति तस्यै पुनः तडितः भया कान्त्या युक्तं वपुर्यस्या स्तस्यै तुभ्यं नमः, त्वं हृषितः प्रीतः वृषाऽचलो यं तस्मै विभव प्रभवे अस्माकं विभवे ऐश्वर्यविषये प्रवर्तयेथाः प्रवर्तयेत्यर्थः । हृषितं विस्मिते प्रीते इति मेदिनी । अत्र अहमिति पाठः साधुः(?) गीत्यार्यावृत्तम्॥५३॥

हृतसुखवारिजनिलयं वारिजनिलयं रमाभिधं ज्योतिः ।
हृदयसदानममहितं नममहितं तदितरेषु पतनं ते ॥५४॥

हृतेति । हे हृदय ! मत्स्वान्त ! हृतौ सुखवारिणौ सुखनाशकौ जनिलयौ जन्ममृत्यू येन तादृशम् एवं वारिजं कमलं निलयो गृहं यस्य तत् हितं पूजितं रमाऽभिधं लक्ष्म्याख्यं ज्योतिस्तेजः

---

५३ हे जननि ! तडितो भया (कान्त्या युक्तं) वपुर्यस्यास्तस्यै, संपदां प्रभववपुषे ( उत्पादिकायै ) तुभ्यं नमः । हृषितवृषा ( आनन्दितेन्द्रा, बर्द्धितसुकृता वा ) त्वम् अस्माकं विभवे ( अपगतसंसारे अचलविभवे ( स्थिरैश्वर्ये, मोक्षे ) प्रवर्तयेथाः ( अस्मान् प्रवर्तय, त्वं प्रवर्तस्वेति स्वार्थे णिज् वा ) इति नतिपुरस्सरं मोक्षसुखं याच्यते ।

५४ हे हृदय ! हृतसुखवारिजनिलयम् ( अपहृतसुखप्रतिबन्धकजन्ममृत्यु ) वारिजनिलयं ( कमलनिवासि ) महितं रमाऽभिधं ज्योतिः सदा नम, तदन्येषु ते पतनं ( प्रावण्यं ) मम हितकारकं न भवतीति भगवत्या एव प्रयात्नै हृदयं प्रबोधयति ।

सदा सर्वदा मम नमस्कुरु तस्या इतरेषु देवेषु पतनं स्वद्गमनं मम हितं न भवतीत्यर्थः। पूर्वोक्तमेव वृत्तम् ॥ ५४ ॥

प्रपदनभारत्यागो भारत्यागोन्मुखस्य सोढ्वा मे ।
कमले रक्षसि कलितो रक्षसि कलितोग्रदुष्कृते ऽभयदा ५५

मेति। हे कमले! कलितम् उग्रदुष्कृतं येन तस्मिन् रक्षसि काकाऽसुरे अभयं प्रियं वा ददाति सा त्वं भारस्य संसारभारस्य त्यागे उन्मुखस्य मे प्रपदनस्योपसदनस्य या भारती स्तुतिवचः तत्सम्बन्धि सम्भावितं यत्किंचिदागः अपराधं सोढ्वा सहनं कृत्वा कलितः कलेः सकाशाद्रक्षसि, मामिति शेषः। आर्यागीतिः ॥ ५५ ॥

कृतकंसाऽऽरम्भाऽन्तं सारं भान्तं रमे तवाऽपाङ्गम।
अर्थितरक्षोपाये रक्षोऽपाये पटो निधेहि मयि ॥ ५६ ॥

कृतेति। हे अर्थितः रक्षाया उपायो यस्यै सत्सम्बुद्धौ पु-

---

५५ हे कमले! कलितोग्रदुष्कृते (कृतस्तनविदारणरूपघोरदुरिते) रक्षसि (नृशंसे काके) अभयदा (त्वं) भारत्यागोन्मुखस्य (संसारभारत्यागप्रवृत्तस्य) मे प्रपदनभारत्या (प्रपन्नो ऽस्मीति वाचा) आगः (अपराधं) सोढ्वा (मर्षयित्वा (मां) रक्षसीत्याह।

५६ हे रक्षोऽपाये पटो! (हे राक्षसनाशसमर्थे! रमे! कृतकंसाऽऽरम्भाऽन्तं (कृतः कंसस्याऽऽरम्भस्य आत्मनो विन्ध्यवासिनीरूपायाः, श्रीकृष्णकर्तृ वा मारणरूपस्योद्योगस्य अन्तो नाशो येन तथाभूतं) सारं यथा तथा भान्तं दीप्यमानं तवाऽपाङ्गं (नयनप्रान्तम्) अर्थितरक्षोपाये (प्रार्थितो निजरक्षार्था उपायो येन तस्मिन्) मयि निधेहि (स्थापय) इति भगवतीं कृपाकटाक्षं याचते।

नः रक्षमामपाये नाशे पदो! चतुरे! हे रमे! त्वं मयि कुतः कंसारम्भस्य कंसोद्यमस्याऽन्तो येन तथा सारम् उत्कृष्टम्भान्तं दप्यमानं रम्यं तत्र स्वस्याऽपाङ्गं कटाक्षं निधेहि स्थापय। पूर्वोक्तमेव वृत्तम् ॥ ९६ ॥

जनमनुकम्पारम्या कं पारम्याद्रमे न मोदयसि।
कृतहितयाचित्राणा या चित्राणां निधिस्त्वमखिलानाम्॥

इति श्रीमद्वेङ्कटाऽध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे
चित्ररतबको द्वाविंशः संपूर्णः॥ ५५॥

जनमिति। हे रमे! अनुकम्पया कृपया रम्या त्वं परमस्योत्कृष्टस्य भावः पारम्यं तस्मात् कं जनं न मोदयसि न हर्षयसि? या कृतं हितयाचिनां हितार्थिनां त्राणं रक्षणं यया सा त्वम् अखिलानां समस्तानां चित्राणामाश्चर्याणां पत्कृतगोमूत्रिकादिचित्राणां च निधिः शेवधिरसि। पूर्वोक्तमेव वृत्तम ॥ ९७ ॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन विरचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मीसहस्रटीकायां
चित्रस्तबको द्वाविंशः समाप्तिं पफाण ॥ २२ ॥

---

९७ हे रमे! अनुकम्पारम्या (दयासुन्दरी) त्वं पारम्यात् (परमत्वात्, श्रेष्ठत्वात्) कं जनं न मोदयसि? कृतहितयाचित्राणा (संपादितहितार्थिरक्षा) या त्वम् अखिलानाम चित्राणाम (अद्भुतकर्मणां, चक्रबन्धादीनां च) निधिः शेवधिरसि, इत्यन्ते चित्राणामिति पूर्वोक्तं विषयं शब्दतः प्रतिपादयन् स्तबकं प्रपूरयति।

इति श्रीमानवल्ल्युपाह्वतैलङ्गरामशास्त्रिविरचितायां लक्ष्मीसहस्राऽवतरणिकाश्रेणिकायां चित्रस्तबकः ॥ २२ ॥

## अथ सङ्कीर्णस्तबकः ॥ २३ ॥

अभिषेकोत्सवे यस्य सुरवानरराक्षसैः ।
सङ्कीर्णमासीत्साकेतं स रामः श्रेयसेऽस्तु नः ॥ २३ ॥

अथाऽस्मिन् त्रयोविंशस्तबके श्रीमहालक्ष्म्याः सर्वव्यापकत्ववर्णनपुःसरं सङ्कीर्णं वर्णनं कुर्वन् प्रथमनमनपद्ये समस्तेति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति--

समस्तगुणविस्तारसमावेशनिवेशनम् ।
वन्दे ऽरविन्दनिलयं वरदं परदैवतम् ॥ १ ॥

समस्तेति । अहं समस्तानां गुणानां सौन्दर्यौदार्यशौर्यादीनां विस्तारस्य समावेशस्य निवेशनं स्थानम् अरविन्दमिलयो गृहं यस्य पुनर्वरान्ददाति तल्लक्ष्म्याऽऽख्यं परदैवतं वन्दे । काव्यलिङ्गमलङ्कारः । पुग्माविपुलावृत्तम् ॥ १ ॥

औदार्यशेवधिरनिन्दितकान्तिसिन्धु-
रोजःप्रसादनिधिरुज्ज्वलसौकुमार्या ।

---

१ अथ नानारूपेण भगवतीं स्तोतुकामस्त्रयोविंशं सङ्कीर्णाऽभिधं स्तबकमारिप्सुरादौ सकलगुणवितानसमावेशस्थानं कमलनिवासि वरप्रदायकं श्रेष्ठं दैवतं ( लक्ष्मीरूपं ) वन्दे इति समस्तगुणविस्तारेत्यनेन स्तबकनाम ( सङ्कीर्णेति ) निर्दिशन् मङ्गलमाचरति ।

२ हे सागरेन्द्रसुते ! औदार्यशेवधिः ( वादान्यकोनिधिः, औदार्याख्यस्य गुणस्य निधिश्च ) अनिन्दितकान्तिसिन्धुः ( अतिश्रेष्ठदीप्तिसमुद्ररूपा, शोभनकान्त्याख्यगुणस्य आश्रयश्च ) प्रसादनिधिः ( प्रसन्नतायाः शेवधिः, प्रसादाख्यगुणनिधिश्च ) उज्ज्वलसौ-

वैदर्भरीतिरिव वारिधिराजकन्ये
श्लाघापदं भवसि सारविदां कवीनाम् ॥ २ ॥

औदार्येति । हे वारिधिराजकन्ये ! औदार्यस्य तदाख्यगुणस्य च शेवधिः स्थानम् अनिन्दितकान्तेस्तदाख्यगुणस्य च सिन्धुः सागरभूता ओजसस्तदाख्यगुणस्य च प्रसादस्य तदाख्यगुणस्य च निधिः उज्ज्वलं सौकुमार्यं कोमलत्वं तदाख्यगुणश्च यस्याः सा वैदर्भरीतिः पूर्वोक्ता असमासरूपा सेव सारविदां तत्त्वविदां कवीनां श्लाघायाः स्तुतेः पदं स्थानं भवसि । ताश्च वैदर्भ्यादयः षोढा काव्यकरणरीतयः । तत्र वैदर्भ्या दश गुणाः । ते च काव्यादर्शे ।

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ।
इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ॥

अशिथिलबन्धत्वम्, प्रसिद्धार्थपदवत्त्वं, मृदुस्पष्टमिश्रवर्णत्रयाऽन्यतमघटितबन्धत्वम्, अनिष्ठुराऽक्षरवत्त्वम्, अनुप्रेयाऽर्थवत्त्वं, प्रतीयमानोत्कर्षवत्त्वं, समासबाहुल्याभाववत्त्वं, लौकिकार्थानतिक्रमराहित्यं, गौणवृत्तिमत्पदवत्त्वम्, इति क्रमेण अर्थो ज्ञेयः । श्लेषोपमालङ्कारौ । वसन्ततिलकावृत्तम् ॥ २ ॥

---

कुमार्या ( भासमानमार्दवा, विशदसौकुमार्याख्यगुणा च ) त्वं वैदर्भी काव्यरीतिरिव सारविदां ( तत्त्वज्ञानां, रसज्ञानां च ) कवीनां ( बुधानां, काव्यज्ञानां च ) श्लाघापदं भवसीति श्लेषेण भगवत्यां वैदर्भरीतिसादृश्यं प्रदर्शयन्नाह ।

अथ नाटकसमता—

आरम्भमेत्य महनीयममोघयत्ना
प्राप्त्याशया श्रितपदा परमेप्सितस्य ।
नित्यं फलं कलयसे नियताऽऽप्तिभाजा
नाथेन नाटककलापरिपाटिकेव ॥ ३ ॥

आरम्भेति । हे रमे ! त्वं नाटककलापरिपाटिकेव नाथेन भगवता सह नित्यं स्वर्गादिवद्विनाशित्वाऽभावाच्छाश्वतं फलं वैकुण्ठाख्यं मधुरफलसम्पत्तिं च कलयसे ऽधितिष्ठसि, कथम्भूता महनीयं महान्तम आरम्भमुपक्रमं भूयःफललाभौत्सुक्यमात्रं च एत्य प्राप्य अमोघः सफलः यत्नः प्रयत्नः फलप्राप्तिविषयकाऽतित्वरान्वितव्यापारश्च यस्याः सा, यदारभ्यते तत्सिध्यति न तु विघटते इति भावः । परमेप्सितस्याऽप्राप्तस्येष्टस्य प्राप्त्याशा प्राप्तुमिच्छा उपायापायशङ्काभ्यां कार्यसम्भवश्च तया आश्रितपदा भक्तैरिति शेषः । यद्वा । आ स्वयम्भुक्तेन श्रिते पदे यस्याः सा कथंभूतेन नाथेन नियताप्तिभाजा पूर्णकामेनेत्यर्थः । उपायाभावात्कार्यनिश्चयभाजा च । 'नाऽनवाप्तमवाप्तव्य'मिति श्रीमद्गीतोक्तेः ।

---

३ माननीयं कार्योपक्रमं प्राप्य सफलप्रयत्ना, परमेप्सितस्य ( मोक्षस्य ) प्राप्त्याशया (लिप्सया) भक्तैः आश्रितचरणा, नियताप्तिभाजा (नित्यसंबद्धेन) नाथेन ( हरिणा सह ) भक्तेभ्यः ) फलं ( वाञ्छितं मोक्षरूपं ) कलयसे इति आरम्भ, यत्न, प्राप्त्याशा, नियताप्ति, फलागमरूपाऽऽरब्धकार्याऽवस्थापञ्चकं घटतनाटककलारीतिसादृश्यमाविष्कुर्वन्नाह ।

औत्सुक्यमात्रमारम्भः फललाभाय भूयसे।
प्रयत्नस्तु फलप्राप्त्यै व्यापारोऽतित्वरान्वितः ॥
उपायाऽपायशङ्काभ्यां प्राप्त्याशा कार्यसम्भवः।
अपायाऽभावतः कार्यनिश्चयो नियताप्तिता ॥
समग्रफलसंपत्तिः फलाऽऽगम उदाहृतः ॥ इति।

एतदुदाहरणप्रपञ्चस्तु प्रतापरुद्रे नाटकप्रकरणे ज्ञेयः। वसन्ततिलकावृत्तम्। श्लेषोपमे अलङ्कारौ ज्ञेयौ ॥ ३ ॥

अथ न्यायसाम्यम्—

व्याप्त्या प्रसिद्धा श्रितपक्षपाता
बाधाऽनभिज्ञा प्रतिपक्षशून्या।
समीहितं साधयसि ध्रुवं नः
सद्धेतुवद् दुग्धपयोधिकन्ये ॥ ४ ॥

व्याप्त्येति। हे दुग्धपयोधिकन्ये! सद्धेतुवन्निर्दुष्टहेतुवत् नोऽस्माकं समीहितम् अर्थं वह्निसद्भावं च साधयसि। तत्र सद्धेतुसादृश्यविशेषणानि। सद्धेतुपक्षे यत्र धूमस्तत्र वह्निरिति साहचर्यनियमो व्याप्तिः तया प्रसिद्धः व्याप्तिप्रकारकप्रमात्मकनिश्च-

४ हे दुग्धपयोधिकन्ये! व्याप्त्या प्रसिद्धा (सकलजगद्व्यापकतया विष्णुना, साध्यसामानाधिकरण्यरूपतया प्रख्याता च) आश्रितपक्षपाता (स्वाश्रितेषु पक्षपातः स्नेहो यस्याः सा, आश्रितः पक्षे सन्दिग्धसाध्यवति पातो वर्तनं यया सा च) बाधाऽनभिज्ञा (दुःखाऽननुभविनी, बाधाख्यदोषशून्या च) प्रतिपक्षशून्या (शत्रुशून्या, साध्याऽभावसाधकहेत्वन्तररहिता च) एवं सद्धेतुवद् दुष्टहेतुवत् नः समीहितम् (इप्सितम्, साध्यं च) साधयसीति भगवत्यां न्यायसाम्यं प्रतिपादयन्नाह।

यविषय इत्यर्थः । श्रीपक्षे जगत्कार्ये निमित्तोपादानोभयकारणरूपया व्याप्त्या प्रसिद्धा तथा सन्दिग्धसाध्यवान्पक्ष इति प्राचां मतम्, अनुमित्युद्देश्यकत्वं पक्षत्वमिति च नव्यमतं, तत्र पातस्तत्संबन्धित्वं तच्छून्यं येनेति । अन्यत्राऽऽश्रितानां पक्षपातः साहाय्यं यस्या इति। पक्षे साध्याऽभावो बाधः । यथा वह्निः शीतो द्रव्यत्वाज्जलवदित्यादौ पक्षे वह्नौ साध्यं शीतत्वं तस्य प्रत्यक्षेण बाधः तदनभिज्ञम्, अन्यथा सद्धेतुत्वाऽऽपत्तेः । अन्यत्राऽनपायिनीति यावत् । "लक्ष्मीरस्याऽनपायिनी" त्युक्तेः । एवं साध्याऽभावसाधकं हेत्वन्तरं यस्याऽस्ति स सत्प्रतिपक्षः । स एवेह प्रतिपक्षशब्देनोच्यते । यथा शब्दो नित्यः श्रावणत्वात् शब्दत्ववदित्यस्मिन् शब्दस्य नित्यत्वसाधकाऽनुमाने शब्दो ऽनित्यः कार्यत्वाद्धटवदिति हेतोः सत्प्रतिपक्षत्वाद् दुष्टत्वं, तेन शून्यो हि सद्धेतुः, अन्यत्र प्रतिपक्षैः शुम्भादिशत्रुभिः शून्या रहितेति । श्लेषाऽलङ्कारः । उपजातिवृत्तम् ॥ ४ ॥

अथ व्याकरणसमत्वम्—

प्रकृतिरुचिरमूर्तिः प्रत्ययानां विधात्री
समधिकगुणवृद्धिः साधुतामादधाना ।

———

५ हे पद्मे ! प्रकृतिरुचिरमूर्तिः ( निसर्गसुन्दरदेहा, प्रकृत्या प्रत्ययविधानात्तध्याविभूतया रमणीया च ) प्रत्ययानां ( विश्वासानां, सुबादीनां च ) विधात्री, समधिकगुणवृद्धिः ( सविशेषसौन्दर्यादिगुणोपचया, अधिको गुणो अदेङ्रूपो वृद्धिः आदैज्रूपा यस्यां च ) साधुताम् ( समीचीनताम्, शब्दशुद्धिं च ) आदधाना, अनन्तशिरफणितिविधेया ( अनन्तस्य हरेः शिरायाः फणितेर्वाचो विधेया वश्या, अनन्तस्य शेषांशस्य पतञ्जलेः शिरायाः फणितेर्भाष्यरूपाया अधीना च ) ( त्वं ) शब्दविद्येव व्याकरणशास्त्रमिव द्राक् अजायेः

सृजति पदमजाद्यैरीप्सितं द्रागनन्त-
स्थिरफणितिविधेया शब्दविद्येव पद्मे ॥ ५ ॥

प्रकृतीति । हे पद्मे ! शब्दविद्या व्याकरणमिव त्वं पद्मा पक्षे प्रकृत्या स्वभावेनैवाऽन्यत्र प्रातिपदिकधातुरूपया रुचिरा मूर्तिर्यस्याः सा, एवं प्रत्ययानामनुभवानां सुप्तिङादीनां च विधात्री, पुनः सम्यगाधिकानां गुणानाम् औदार्यादीनां वृद्धिराधिक्यं पक्षे समधिके अदेङ् गुणः वृद्धिरादैच् इमे गुणवृद्धी यस्यां सा सती साधुताम् उत्तमत्वं शब्दशुद्धिं च । 'एकः शब्दः सम्यग्ज्ञातः शास्त्राऽन्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवती,ति पातञ्जलभाष्यात् । आदधाना स्थापयन्ती तथा अनन्तो हरिः स्थिरफणितेर्गम्भीरोक्तेर्विधेयो वश्यो यस्याः । विधेयो विनयग्राहीत्यमरः । अन्यत्र अनन्तस्य शेषाऽवतारपतञ्जलेः स्थिरया सिद्धान्तितया फणित्या उक्त्या विधातुं योग्या । 'यथोत्तरं मुनीनां प्रामाण्य,मित्यभिधानात् । अपि च अजाद्यैर्ब्रह्माद्यैः अन्यत्र अचूप्रत्याहारादिभिश्च ईप्सितम् इष्टं पदं ब्रह्मलोकादि अन्यत्र सुप्तिङन्तरूपं च द्राग् झटित्यञ्जसाऽह्नाय द्राग्झटित्यञ्जसा सपदि द्रुतमित्यमरः । सृजति ददाति । भवतीत्यध्याहारः । सृज विसर्गे इत्यस्माद्धातोः कर्तरि लट् । श्लेषोपमालङ्कारौ । मालिनीवृत्तम् ॥ ५ ॥

---

(ब्रह्मादिभिः, अज्झलादिभिश्च) ईप्सितं पदं (धाम, सुप्तिङन्तरूपं च) ददासीति भगवत्यां शब्दविद्यासाम्यं वर्णयन्नाह ।

अथ कर्मकाण्डस्तबकम्—

अधिकरणविचाराऽऽरम्भसीदद्विपक्षं
किमपि विशदयन्त्या कृत्स्नवेदार्थतत्त्वम् ।
गलति गहनकर्माऽऽलम्बनं मोहजालं
कमलमुखि भवत्या कर्ममीमांसयेव ॥ १ ॥

अधीति । हे कमलमुखि ! कर्ममीमांसयेव भवत्या लक्ष्म्या करणभूतया । कर्मपक्षे अधिकरणानां विषयसन्देहसङ्गतिपूर्वपक्षसिद्धान्तरूपपञ्चाऽवयवकश्रुतिवाक्यार्थनिर्णायकन्यायानां विचारस्य आरम्भं प्रथमप(?) अत्र प्रसङ्गात्सत्वध्यायं मीमांसाविषयो लिख्यते । प्रथमे धर्मे प्रमाणं, द्वितीये कर्मभेदः, तृतीये शेषता, चतुर्थे प्रयुक्तिः, पञ्चमे पौर्वापर्यं, षष्ठे ऽधिकारः, सप्तमे सामान्यरूपेणाऽतिदेशः, अष्टमे विशेषरूपेणाऽतिदेशः, नवमे तदूहः, दशमे बाधः, एकादशे तन्त्रं, द्वादशे नयः, इति । श्रीपक्षे ऽधिकः यो रणे विना गरुडेन सञ्चारः तस्याऽऽरम्भः तेन, यद्वा-

---

१ हे कमलमुखि ! अधिकरणविचाराऽऽरम्भसीदद्विपक्षम् ( अधिकोऽरणे यो विना गरुडेन वाहनभूतेन चारस्य सञ्चरणस्याऽऽरम्भस्तेन सीदन्तो नश्यन्तो विपक्षाः शत्रवो यस्य तत्, अधिकरणानां देवताधिकरणानां विचारस्य आरम्भेण सीदन् विरुद्धः पक्षो नास्तिकादिसिद्धान्तो यस्मिन् तत् ) कृत्स्नवेदार्थतत्त्वं ( सकलनिगमार्थसारभूतं भगवत्स्वरूपं, निखिलवेदप्रतिपाद्यं सिद्धान्तं च ) विशदयन्त्या ( प्रकाशयन्त्या ) त्वया ( करणभूतया ) कर्ममीमांसयेव ( पूर्वमीमांसाविद्ययेव ) गहनकर्मालम्बनं ( विषमकर्माश्रयं ) मोहजालम् ( अविद्यासमूहः, भ्रान्तिज्ञानं च ), गलति ( नश्यति ) इति कृत्स्नं पूर्वमीमांसासाम्यमाह ।

रणः कार्य इत्येवंरूपे विचारारम्भे एव सीदन्तो विशीर्यन्तो विपक्षा नास्तिका दैत्याश्च यस्मिन् तत् किमप्यनिर्वचनीयं कृत्स्नस्य सर्वस्य वेदस्याऽर्थरूपं तत्त्वं हरिं विशदयन्त्या रमयन्त्या त्वया गहनानां कर्मणाम् आलम्बनं मोहजालम् अविद्यारूपं जालं गलति यथा तत्किमपि अपूर्वाख्यं गहनकर्माण्येवाऽवलम्बनं तादृशं कृत्स्नवेदार्थतत्त्वं सर्वो वेदः कर्मपर्यवसायी कर्मापूर्वपर्यवसायीति विशदयन्त्या स्फुटयन्त्या कर्ममीमांसया यथा मोहजालं प्रत्यक्षप्रमाणवादिचार्वाकोद्भावितस्वर्गाऽभावरूपं मोहं जालवद्गहनं नानायुक्तिग्रथितत्वाद् गलति । श्लेषोपमालङ्कारौ । मालिनीवृत्तम् ॥ ६ ॥

अथोत्तरज्ञानकाण्डसाम्यम्—

चतुराऽऽकृतिलक्षणाऽभिरामा
परदेवस्य गुणान् प्रकाशयन्ती ।
उपदर्शयसे ऽपवर्गमार्गं
मम शारीरकभारतीव मातः ॥ ७ ॥

चतुरेति । हे मातः ! त्वं श्रीपक्षे चतुरायाः सुन्दर्या आकृतेराकारस्य लक्षणैः सामुद्रिकैरभिरामा रमणीया, यद्वा चतुराणां कृतिनां कुशलानामभिरामा(?) शारीरकपक्षे प्रथमः समन्वयः,

---

७ हे मातः ! चतुराकृतिलक्षणाऽभिरामा ( चतुराया मनोरमाया आकृतेर्लक्षणैः सुलक्षणैः सुन्दरी, चतसृणामाकृतीनां मूर्तीनां वासुदेवसङ्कर्षणप्रद्युम्नाऽनिरुद्धरूपाणां लक्षणैर्हृद्या च ) परदेवस्य ( हरेः, परब्रह्मणश्च ) गुणान् ( दयादाक्षिण्यादीन्, जगत्कर्तृत्वादिकांश्च ) प्रकाशयन्ती ( त्वं ) शारीरकभारतीव ( वेदान्तवाणीव ) मम मोक्षमार्गं प्रदर्शयसीति रमायां वेदान्तवाक्तुल्यतां प्रतिपादयति ।

द्वितीयो ऽविरोधः, तृतीयः साधनं, चतुर्थः फलम् इति चतुर्भिरध्यायैरभिरामा; यद्वा चतुराकृतीनि चतुर्विधलक्षणानि तैः यद्वा चतुराकृतीनां वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाति चतुर्विग्रहाणां लक्षणमुपासनं तेन परस्य विष्णोर्ब्रह्मणश्च गुणान्प्रकाशयन्ती शारीरकभाष्यस्य भारतीव ममाऽपवर्गस्य मोक्षस्य मार्गम् उपदर्शयसे प्रकाशयसि । श्लेषोपमालङ्कारौ । औपच्छन्दसिकं वृत्तम् ॥७॥

अथ श्रुतिसाम्यम्—

सुवर्णश्रीरम्यं शुभकरपदर्चं श्रुतिकुलं
भवद्रूपं चेदं भवति महितं ब्राह्मणगणैः ।
तयोरित्थं भेदः स्फुरति तटिनीजानितनये
बुधेन्द्रैरध्येयं प्रथममितरद्ध्येयमिति च ॥ ८ ॥

सुवर्णेति । हे तटिन्यः नद्यः जायाः यस्य स सिन्धुः । जायाया निङ् । तस्य तनये ! श्रुतिपक्षे सुष्ठुवर्णानामकारादीनां श्रीपक्षे सुवर्णया हाटकनिभया श्रिया रम्यम्, एवं शुभकराणि पदानि सुप्तिङन्तरूपाणि यासु ता ऋचो यत्र । ऋक्पूरब्धूःपथामानक्षे इत्यः । पक्षे शुभकरी पदारर्चा पूजा यस्य तत् श्रुतीनां

---

८ हे तटिनीजानितनये ! ( नदीपतिसमुद्रकन्ये ! ) सुवर्णश्रीरम्यं ( कनककान्तिशोभासुभगं, शोभनवर्णशोभासुन्दरं च ) शुभकरपदर्चं ( शुभकरी पदाश्चरणयोरर्चा पूजा यस्य तत्, शुभकराणि पदानि यासु तादृश्यः ऋचो यत्र तच्च ) श्रुतिकुलं ( वेदसमूहः ) इदं भवत्या रूपं च ब्राह्मणगणैः ( विप्रसमूहैः ब्राह्मणभागैश्च ) महितं भवति, परं तयोरेवं भेदो यत् प्रथमं ( श्रुतिकुलं ) बुधेन्द्रैः ( श्रेष्ठपण्डितैः ) अध्येयं ( पठनीयं, ध्यातुमयोग्यं च ) द्वितीयं ( त्वद्रूपं तेषां ) ध्यानयोग्यमिति भगवतीरूपं वेदसाम्यं प्रदर्श्य पुनस्ततो ऽत्र व्यतिरेकं प्रतिपादयति ।

कुलं समूहः भवत्याः रूपं च ब्राह्मणानां गणैर्महितं पूजितं भवति। तथापि तयोर्द्वयोर्मध्ये प्रथमं श्रुतिकुलं बुधेन्द्रैः अध्येतुम् अध्ययनं कर्तुं योग्यम् इतरच्छ्रीरूपं ध्यातुं योग्यम् इति उपमानोपमेययोर्भेदः स्फुरति। अतो व्यतिरेकालङ्कारो भवति। शिखरिणीवृत्तम् ॥ ८॥

अथाऽमृततरङ्गिणीसाम्यम्—

व्याकोचवारिजधरां द्विजराजसेव्या-
मव्याहताममृतशैवलिनीमिव त्वाम्।
निःसीमसंसृतिनिदाघविदाहतप्ताः
केचित्सुधाऽब्धितनये कृतिनो भजन्ते ॥ ९॥

व्याकोचेति। हे सुधाऽब्धितनये! व्याकोचं स्फुटं वारिजं वारिजानि च धरति ताम्, एवं द्विजराजेन गरुडेन ब्राह्मणैर्वा पक्षे पक्षिभिश्च सेव्यां, पुनर्निःसीमायाः संसृतेः संसाररूपस्य निदाघस्य विशिष्टदाहेन तप्ताः केचित्कृतिनः अव्याहताम् अमृतशैवलिनीं नदीमिव त्वां श्रियं भजन्ते। श्लेषोपमाकाव्यलिङ्गालङ्काराः। वसन्ततिलकावृत्तम् ॥ ९॥

---

९ हे सुधापयोधिसुते! निःसीमसंसृतिनिदाघविदाहतप्ताः (निरवधिकसंसाररूपग्रीष्मतापसंतप्ताः) के चित् कृतिनो व्याकोचवारिजधरां (विकसितकमलधारिणीं) द्विजराजसेव्याम् (पक्षिराजगरुडसेवनीयां, हंसादिपक्षिश्रेष्ठसेव्यां च) अव्याहताम् (अकुण्ठितशक्तिम्, अनवरुद्धां च) त्वाम् अमृतनदीमिव भजन्ते इति अमृतनदीसाम्यं भगवत्यां वर्णयन्नाह।

वात्सल्यं तव राघवप्रणयिनि व्याचष्ट काकाऽसुरः
शक्तिं दुर्घटसाधनीं हनुमतः शीतः स वालानलः ।
औदार्यं त्वदपाङ्गलब्धविभवोल्लासा महेन्द्रादयः
कारुण्यं कृपणा वयं तु विगुणा निर्हेतुकं रक्षिताः ॥१०॥

वात्सल्यमिति । हे राघवप्रणयिनि ! तव वात्सल्यं दयालुत्वं काकाऽसुरः व्याचष्ट । चक्षिङ् व्यक्तायां वाचि अस्माल्लङ् । तथा दुर्घटसाधनीं शक्तिं हनुमतः वालाऽनलः पुच्छाऽग्निः, पुनरौदार्यं त्वदपाङ्गाल्लब्धा विभवस्यैश्वर्यस्योल्लासा यैस्ते महेन्द्रादयः, कारुण्यं तु कृपणा विगुणा हेतुरहितं यथा तथा रक्षिता वयं प्रकटयाम इति भावः । दीपकाऽलङ्कारः । शार्दूलविक्रीडितम् ॥ १० ॥

दोषौघः शरणं जगाम गुणतामादित्सुरङ्गानि ते
कौटिल्यं किमपि भ्रुवौ कठिनता कल्याणि वक्षोरुहौ ।

---

१० हे राघवप्रणयिनि ! ( सीते ! ) काकासुरः ( तव स्तनविदारको जयन्तः ) तव वत्सलत्वगुणम् व्याख्यातवान्, शीतलो मारुतः पुच्छलग्नो ऽग्निस्तवाऽघटितघटनापटीयसीं शक्तिं व्याचख्यौ, तव वादान्यकं च त्वत्कटाक्षसमासादितसमधिकैश्वर्या देवेन्द्रादयो व्याचख्युः, दीना गुणशून्या निष्कारणमेव त्वया रक्षिता वयन्तु ते करुणां व्याख्यास्यामन्त इति अगतिकानां त्वमेव गतिरित्याह ।

११ हे कल्याणि ! अम्ब ! कौटिल्यम् ( अनार्जवम्, वक्रत्वं च ) ते भ्रुवौ, काठिन्यं ( क्रूरता, कठिनस्पर्शश्च ) स्तनौ, दारिद्र्यम् (अकिञ्चनत्वं, तनुत्वं च ) मध्यभागं, रागः ( विषयाऽभिलाषो, रक्तिमा च ) अधरोष्ठं, तमः ( अज्ञानम्, अन्धकारश्च ) केशान्, चाञ्चल्यं ( अगाम्भीर्यं, चपलत्वं च ) दृशौ, सन्दमतिता ( कुण्ठितगतित्वं,

दारिद्र्यं बत मध्यभागमधरं रागस्तमः कुन्तला-

श्चाञ्चल्यं दृशमम्ब मन्दगतिता पादौ मुखं मुग्धता॥ ११॥

दोषेति। हे कल्याणि! गुणानाम् आदातुमिच्छुर्दोषौघः शरणं रक्षितॄणि ते ऽङ्गानि जगाम प्राप। तदाह हे ऽम्ब! किमपि कौटिल्यं भ्रुवौ, एवं हे कल्याणि! कठिनता कुचौ, तथा दारिद्र्यं कार्श्यं वा अभावः मध्यभाग, पुनरधरं रागो रक्तिमा, अन्यच्च तमः कुन्तलान् कचान्, अपि च चाञ्चल्यं दृशम्, इतरन्मन्दगतिता पादौ, पुनर्मुखं मुग्धतेति। उत्प्रेक्षादीपकोल्लासालङ्काराः। शार्दूलविक्री० ॥ ११ ॥

कृतस्त्वया देवि कृपाकटाक्ष-

लेशैरहं श्लोककृदर्भको ऽपि।

परं त्वहं श्लोककृदित्यभीक्ष्णं

कदा नु गायेयमिति प्रतीक्षे ॥ १२ ॥

कृत इति। हे देवि! त्वया कृपायुक्तानां कटाक्षाणां लेशैः अर्भको ऽप्यहं श्लोकान्पद्यानि करोतीति तादृशः कृतः परं तु "अहं श्लोककृत्" इत्यभीक्ष्णं पुनः पुनः कदा नु गायेयम् इति प्रतीक्षे इच्छामि। "अहं ३ श्लोककृदहं ३ श्लोककृ"दित्यादितैत्तिरीयोप-

---

शनैर्गतिश्च) पादौ, मुग्धता (मूर्खता, सौन्दर्यं च) मुखं, प्रापेत्यत्र दोषसमूहः गुणानां लिप्सुरिव ते ऽङ्गानि रक्षकतया प्रापेति भगवतीसौन्दर्यातिशयं प्रतिपादयति।

१२ हे देवि! डिम्भो ऽप्यहं त्वया कृपाऽपाङ्गैः श्लोककृत् (काव्यकृत्) रचितः, परन्तु (अहं) "अहं श्लोककृ"दिति ब्रह्मज्ञानाऽवस्थायां गेयं तैत्तिरीयोपनिषदुक्तं कदा गायेयमिति प्रतीक्षे (प्रतिपालयन्नस्मि) इति स्वस्य ब्रह्मज्ञानं याचते।

निषदुक्तां ब्रह्मविदवस्थां कदा प्राप्स्यामीति भावः । उपजातिवृत्तम् ॥ १२ ॥

आगस्ततिं मे किमदृश्यविद्या-
मध्यापयस्यब्धिसुते तथा त्वम् ।
स विश्वतश्चक्षुरधोक्षजोऽपि
न पश्यति व्यक्ततमां यथैनाम् ॥ १३ ॥

आग इति । हे ऽब्धिसुते ! "विश्वतश्चक्षुरुत विश्वतस्पात्" इति श्रुतिसत्त्वात् सर्वतश्चक्षुरपि सः अधः कृतम् अक्षजमिन्द्रियजन्यज्ञानं येन सः यथा मे मम आगस्ततिमपराधपङ्क्तिं प्रति व्यक्ततमां स्पष्टां न पश्यति तथा एनाम् अदृश्या ऽन्तर्धानरूपा चाऽसौ विद्या च ताम् अध्यापयसि पाठयसि किम् ? इति दयालुत्वे उत्प्रेक्षा । सैवाऽलङ्कारः । उपजातिवृत्तम् ॥ १३ ॥

रक्षेति नाथसविधे तव गाढमुक्ति-
र्यद्युद्गता मम भवेत्तत एव मुक्तिः ।

---

१३ हे अब्धिसुते ! त्वं मे अपराधपरम्परां तथा अदृश्यविद्यां (तिरस्करिणीविद्याम्) अध्यापयसि किं ? यथा अतिस्फुटामप्येनां सर्वप्रत्यक्षवान् हरिरपि न पश्यतीति त्वं मदपराधततिं मर्षयित्वा हरेरपि तामुपेक्षणीयां करोषीत्याह ।

१४ हे कृष्णप्रिये ! भगवत्समीपे (एवं) रक्षेति तव वाग् यदि निर्गता स्यात् तत एव मे भवमोक्षो भवेत्, तथापि एतावति (अ-

एतावति श्रितमनोरथपूरणे ऽस्मिन्
कृष्णप्रिये ननु तथापि कियान्विचारः ॥ १४ ॥

रक्षेति। हे कृष्णप्रिये ! रक्ष 'एनं कविं पालय' इति नाथस्य हरेः सन्निधे समीपे तव गाढम् आदरयुक्तम् उक्तिर्व्याहारः यदि भवेत् ततः तद्वचनादेव मे मम मुक्तिर्भवेत, एतावत्यस्मिन् श्रितस्य आश्रितस्य मम मनोरथस्य पूरणे नन्विति वितर्के, किं परिमाणमस्य कियान् । किमिदम्भ्यां वो घ इति वतुप् । विचारः आलोचनं, श्रीहरिसन्निधौ त्वत्कथनादेव मदुद्धारो भविष्यति अत एतत्कथने ऽपि विचारं मा कुर्विति भावः । वसन्ततिलकावृत्तम् ॥ १४ ॥

यद्यम्ब निन्दसि यदूद्वहवल्लभे मां
कर्माणि कारय तदा कलुषोज्झितानि ।
नैर्घृण्यमेषि यदि वा न ततो ऽपि दूये
नैराश्यमेव हि सुखं निगदन्ति सन्तः ॥ १५ ॥

यदीति । हे यदूद्वहस्य वल्लभे ! प्रिये ! हे ऽम्ब ! यदि मां त्वम् महादुराचार्यसि त्वामेनं द्रष्टुं नाऽर्हामीति यदि नि-

---

स्वल्पश्रमसाध्ये ) आश्रिताऽभीप्सितपूरणे विचारः कियान् ? इति त्वं द्रुतं भगवते निवेद्य मां मोचयेत्याह ।

१५ हे यदुनाथप्रिये ! अम्ब ! ( कुचरित्रं ) मां यदि विगर्हसे तर्हि निष्कल्मषाणि कर्माणि ( मां ) कारय, यदि वा दयाशून्यतां यासि ततो ऽपि न मे दुःखं, यतः सन्तो नैराश्यमुत्कृष्टं सुखं वदन्तीति भगवतीं स्वस्य सुचरितप्रवर्तनाय प्रार्थयते ।

न्दसि तदा कलुषोज्झितानि निष्पापाणि कर्माणि कारय इति प्रार्थना, यदि वा तादृशकरणे नैर्घृण्यं निर्दयत्वम्, एषि प्राप्नोषि ततो निष्करुणत्वादपि सर्वथा निराशो ऽहं न दूये न उपतापं प्राप्नुयाम् । तत्र हेतुः 'आशा हि परमं दुःखं नैराश्यं परमं सुख'मित्यभिधानात् । सन्तः साधवः नैराश्यमेव सुखं गदन्ति वदन्ति । काव्यलिङ्गमलङ्कारः । वसन्ततिलकावृत्तम् ॥ १५ ॥

नैवाऽपवर्गमतिदुर्गममर्थये त्वां
न स्वर्गमम्ब न ततो ऽप्यपरं च सौख्यम् ।
अभ्यर्थये हरिसखि त्वयि भक्तिमात्र-
मत्राऽपि चिन्तयसि चेदथ किं करोमि ॥ १६ ॥

नैवेति । हे ऽम्बाऽत्यन्तं दुर्गमं गन्तुमशक्यम् अपवर्गं मोक्षं त्वां नाऽर्थये न प्रार्थये, तथा स्वर्गं न, ततो ऽप्यपरिमितम् इतरत् सौख्यं न, तर्हि हे हरिसखि! त्वयि भक्तिरेव भक्तिमात्रम् अभ्यर्थये याचामि अत्र केवलभक्तिदाने ऽपि चिन्तयसि चेत् अथ किं करोमि ? मन्निरुपायत्वमिति भावः । वसन्ततिलकावृत्तम् ॥ १६ ॥

---

१६ हे ऽम्ब ! अहं त्वाम् अतिदुरापं मोक्षं न याचे, स्वर्गमपि न, अन्यदपि सुखं न, किन्तु हे हरिप्रिये ! त्वयि केवलां भक्तिं याचे, तावन्मात्रदाने ऽपि यदि विचारयसि तर्हि का मे गतिरित्याह ।

मा कोपं कुरु मातरेकमधुना जल्पामि धृष्टो वचः
शक्तिः कर्तुमकर्तुमन्यथयितुं जागर्ति येयं त्वयि ।
तल्लेशो मम चेदसेत्स्यदमृतं सर्वाननेष्यं क्षणाद्
विश्वो नैवमुपेक्षसे घनकृपा कस्मात्त्वमस्मानिति ॥ १७ ॥

मेति । हे मातः ! अहमेतावत्पर्यन्तं समर्यादमवादिषम्, अधुना धृष्टः उद्धतः सन्नेकं वचः जल्पामि, कोपं मा कुरु, त्वयि कर्तुम् अन्यथयितुं विपरीतयितुं येयं शक्तिर्जागर्ति तस्या लेशः ममाऽसेत्स्यदभविष्यच्चेत् सर्वान् क्षणात् मोक्षम् अनेष्यम् । णीञ् प्रापणे अस्माद्धेतुहेतुमद्भावे लृङ् । एवं सति घनकृपा त्वम् अस्मान्किम् उपेक्षसे ? न विद्म इति लोकोक्तिरलङ्कारः । शार्दूलवि० ॥ १७ ॥

सौन्दर्यस्य निधिर्मुदामुदयभूः संपत्तिमञ्जूषिका
कान्तीनां निलयः कलाजलनिधिः क्षान्तेर्निशान्तस्थली ।

---

१७ हे मातः ! मा कुप्य, अधुना धृष्टः सन्नहमेकं वचो वदामि ( यत् ) त्वयि कर्तुमकर्तुमन्यथा कर्तुं च येयं शक्तिर्जागरूका ऽस्ति तस्या लेशो ऽपि मम यदि सिद्ध्येत् तर्हि अहं सर्वान् क्षणात् मुक्तिं प्रापयेयम्, एवं सति करुणासागररूपा त्वं किमित्यस्मानुपेक्षसे ? तन्नु न जानीम इति सप्रणयधाष्ट्र्यमात्मा ऽनुपेक्षां प्रार्थयते ।

१८ हे कमले ! त्वं रामणीयकस्य शेवधिः, संतोषाणामुत्पत्तिभूमिः, संपदां पेटिका, कान्तीनामालयः, चतुःषष्टिकलानां सागरः, क्षमाया मन्दिरं, धर्मसकलस्य रक्षणगृहम्, औदार्यस्य विश्रमस्थानं, यशसां

दाक्षिण्यस्य शरण्यसद्म कमले दातृत्वविश्रान्तिभू-
रास्थानी यशसां प्रपा ऽसि सतृषामाद्यस्य पुंसो धनम् १८

सौन्दर्येति । हे कमले ! त्वं सौन्दर्यस्य निधिः, तथा मुदां हर्षाणामुदयभूः उत्पत्तिभूमिः, पुनः संपत्तिमञ्जूषिका । पिटकः पेटकः पेटा मञ्जूषेत्यमरः । पुनश्च कान्तीनां निलयो गृहम्, अन्यत्कलानां चतुःषष्टिसंज्ञकानां जलनिधिः, इतरत्क्षान्तेः क्षमाया निशान्तस्य गृहस्य स्थली, एवं दाक्षिण्यस्य कौशलस्य शरण्यं रक्षणसाधु, तत्र साधुरिति यत्प्रत्ययः । सद्म गृहम्, इतरच्च दातृत्वस्य विश्रान्तिभूः, अपि च यशसाम् आस्थानी । आस्थानी क्लीबमास्थानमित्यमरः । च परं सतृषां प्रपा पानीयशालिका, आद्यस्य पुंसः धनं सर्वस्वमप्यसीति । उल्लेखालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

मोहोन्मूलनमूलिका भवजुषां मोक्षाऽध्वनिःश्रेणिका
चेतःशुद्धिविधानसिद्धगुटिका चिन्तातमश्चन्द्रिका ।
विद्याविभ्रमशालिका ऽसि कमले विष्णोरुरोमालिका
मातस्त्वं मम पारिजातलतिका मोदाम्बुधेर्वीचिका॥ १९॥

मोहेति । कमले ! मोहस्याऽज्ञानस्योन्मूलने उत्पाटने मू-

---

सभाभवनं, तृष्णा( विषयतर्ष )वतां पानीयशाला, हरेश्च सर्वस्वमसीति स्तौति ।

१९ हे मातः ! संसारिणामज्ञानविनाशकौषधिः, मोक्षरूपस्याट्टस्याऽधिरोहणी, चित्तशोधकसिद्धगुटिका, चिन्ताऽन्धकारज्योत्स्ना, विद्याविलासशाला, हरेर्वक्षःस्रक् त्वं मम पारिजातलता ( सर्वार्थदा ) संमदसागरोर्मिः ( निरतिशयहर्षदा ) असीति स्तुते ।

लिका ओषधिः, भवजुषां संसारिणां मोक्ष एवाऽट्टः सौधस्तस्य निःश्रेणिका अधिरोहणिका, चेतसः शुद्धिविधानस्य सिद्धगुटिका सिद्धरचितगुटिका, चिन्तातमसः चन्द्रिका, चन्द्रिका कौमुदी ज्योत्स्नेत्यमरः। विद्याया विभ्रमस्य विलासस्य शालिका शाला, विष्णोः उरसः मालिका तत्राऽवस्थानात्। हे मातः ! त्वं मम पारिजातस्य कल्पद्रोर्लतिका इष्टदातृत्वात्, मोदाम्बुधेरानन्दसिन्धोर्वीचिका लहरी। असीति शेषः। उल्लेखालङ्कारः। शार्दूलवि० ॥ १९ ॥

विकासः पुण्यानामपि च विकचाऽम्भोरुहरुचां
विवर्तो हर्षाणां विततिरमृतानां परिणतिः।
विकारः कारुण्याऽमृतजलधिवीचीपरिषदां
विकल्पः कल्पद्रोर्जननि तव वीक्षा विजयते ॥ २० ॥

विकास इति। हे जननि ! पुण्यानां विकासः, अपि च विकचानां प्रफुल्लानामम्भोरुहाणां कान्तीनां विवर्तः परिणामः, हर्षाणां विततिर्विस्तारः, अमृतानां परिपाकः, कारुण्याऽमृतजलधेः कृपापीयूषसिन्धोः वीचीनां परिषदां सभानां विकारः, कल्पद्रोर्विकल्पः अपरः, ईदृशी तव वीक्षा ऽवलोकः विजयते। विपराभ्यां जेरित्यात्मनेपदम्। उल्लेखालङ्कारः। शिखरिणीवृत्तम् ॥ २० ॥

---

२० हे जननि ! सुकृतविकासः, विकसितकमलकान्तिरूपान्तरं, हर्षविस्तारः, पीयूषपरिणामः, दयाऽमृतसागरतरङ्गपरम्पराविकारः, कल्पवृक्षाऽपररूपस्तवाऽवलोकः सर्वोत्कर्षेण राजते इत्याह।

प्रज्ञालतानां किमुपघ्नयष्टिः
पणायतां कामगवी कवीनाम् ।
प्रपद्ममातस्त्वमकिञ्चनानां
प्राणप्रतिष्ठा परमा ऽसि काष्ठा ॥ २१ ॥

प्रज्ञेति । हे पद्ममातः ! प्रज्ञालतानां बुद्धिवल्लीनाम् उपघ्न-भूता ऽऽश्रयभूता यष्टिः किम् ? स्यादुपघ्नो ऽन्तिकाश्रये इत्यमरः । पणायतां, स्तुवतां. पण स्तुतावित्यस्माद्गुपूधूपविच्छिपणिपनिभ्य आय इत्यायप्रत्यये धातुत्वाल्लटः स्थाने शत्रादेशः । कवीनां कामगवी कामधेनुः त्वम् अकिञ्चनानां दरिद्राणां प्राणानां प्रतिष्ठा स्थितिः, पुनः परमा उत्कृष्टा काष्ठा सीमा ऽसि परा काष्ठा ऽसीति । उल्लेखालङ्कारः । उपजातिवृत्तम् ॥ २१ ॥

अस्मादृशामभ्युदयाङ्कुरो वा
नाथस्य पद्मे नयनोत्सवो वा ।
दिव्यौषधं वा दुरिताऽऽमयानां
पारं परं वा भवती भवाऽब्धेः ॥ २२ ॥

अस्मादृशामिति । हे पद्मे ! भवती अस्मादृशाम् अभ्युदयस्य भाग्यस्य अङ्कुरः । अङ्कुरो ऽभिनवोद्भिदित्यमरः । वा, नाथस्य हरेः नयनयोः उत्सवः उद्भवः वा, दुरितरूपाणां पापरूपाणामामयानां

---

२१ हे जगज्जननि ! त्वम् पणायतां ( स्तुवतां ) कवीनां मति-वल्लरीणामन्तिकाश्रयदण्डरूपा ऽसि, किं च दरिद्राणां प्राणप्रतिष्ठा ( जीवनास्थानदा ) चरमसीमा ऽसीत्याह ।

२२ हे पद्म ! त्वं मादृशजनानां भाग्यनवोद्भिदू वा, हरेर्नयना-त्सवरूपा वा, पापरोगाणां दिव्यौषधरूपा वा, संसारसागरस्य परं पारं वा ऽसीत्याह ।

रोगाणां दिव्यम् औषधं भेषजं वा, भवाऽब्धेः परं पारं परतीरं वा। उल्लेखसन्देहालङ्कारौ । इन्द्रवज्रावृत्तम् ॥ २२ ॥

ताटङ्करक्षां त्रिदशाङ्गनानां
तरङ्गिणीजानितपःफलं श्रीः ।
दारिद्र्यविद्रावणमूलविद्यां
जगुर्जगन्नायकनायिकां त्वाम् ॥ २३ ॥

ताटङ्केति । हे श्रीः ! त्रिदशाङ्गनानां देवस्त्रीणां ताटङ्कानां रक्षां दैत्याऽर्दितसर्वामररक्षकत्वात्, तरङ्गिणीजानेर्दुग्धोदधेः तपसः फलभूतां, दारिद्र्यस्य विद्रावणस्य नाशनस्य मूलविद्यां जगन्नायकस्य हरेर्नायिकां पत्नीं त्वां जगुः । उल्लेखसन्देहालंकारौ । इन्द्रवज्रावृत्तम् ॥ २३ ॥

परिष्कृतिं पङ्कजकाननानां
परायणं नः शरणाऽऽगतानाम् ।
सन्तः शकुन्तध्वजसुन्दरि त्वां
सर्वस्वमाहुः सकलाऽऽगमानाम् ॥ २४ ॥

परिष्कृतिमिति । हे शकुन्तध्वजस्य गरुडकेतनस्य सुन्द-

---

२३ हे श्रीः ! जगन्नाथमहिषीं त्वाम् ( सुधियः ) देवाङ्गनानां ताटङ्करक्षां (तत्पतिदेवरक्षणेन तासां सौभाग्यचिन्हभूतकर्णाभरणरक्षणीम्) आहुः, नदीपतिसमुद्रसुकृतफलम् आहुः, एवं दारिद्र्योन्मूलनमन्त्ररूपां चाहुरित्याह ।

२४ हे शकुन्तध्वजसुन्दरि! ( गरुडध्वजरमणि ! ) सन्तः त्वाम् कमलवनानामलङ्काररूपां, शरणं प्रपन्नानामस्माकं चरमप्राप्यं पदं, निखिलशास्त्राणां सकलं धनमाहुरित्याह ।

रि ! त्वां पङ्कजकाननानां कमलवनानां परिष्कृतिं भूषणभूताम्, एवं शरणाऽऽगतानां रक्षणप्राप्तानां नो ऽस्माकं परमपनं प्राप्यस्थानं, तथा सकलानामागमानां शास्त्राणां सर्वस्वम् इति सन्तः आहुः जगुः। उल्लेखालङ्कारः। उपजातिवृत्तम् ॥ २४ ॥

परिकर्म विनिर्मलं मुरारेः
प्रतियत्नं प्रतिबुद्धशेमुषीणाम् ।
भवतीं भवतीक्ष्णयातनाना-
मभिचाराऽऽहुतिमाहुरब्धिकन्ये ॥ २५ ॥

परिकर्मेति। हे अब्धिकन्ये। भवतीं मुरारेः विनिर्मलं शुद्धं परिकर्म, परिकर्माङ्गसंस्कार इत्यमरः। प्रतिबुद्धानां ज्ञातॄणां शेमुषीणां बुद्धीनां प्रतियत्नो गुणाधानं, प्रतियत्नावुभौ लिप्सोपग्रहावित्यमरः। भवस्य तीक्ष्णानां खराणां यातनानां वेदनानाम् अभिचाराऽऽहुतिं मारणकर्माऽऽहुतिं चाऽऽहुः। उल्लेखालङ्कारः। औपच्छन्दसिकं वृत्तम् ॥ ३५ ॥

मुनिमानसराजहंसिका वा
मुरभित्कल्पकमञ्जुमञ्जरी वा ।

---

२५ हे जलधिसुते ! भवतीं मुरारिपोरमलमङ्गसंस्कारं, विद्वज्जनमनीषाणां गुणाधानं, संसारकठोरवेदनानां मारणकर्मपूर्णाहुतिं चाहुरित्याह।

२६ हे जननि ! त्वं मुनिजनमानसरूपमानससरोवरराजहंसी वा, मुरारिरूपकल्पवृक्षसुन्दरवल्लरी वा, निगमपञ्जर (म-

श्रुतिपञ्जरदिव्यसारिका वा

जननि त्वं गुणरत्नपेटिका वा ॥ २६ ॥

मुनीति । हे जननि ! त्वं मुनीनाम् ऋषीणां मानसस्य स्वान्तस्य सरसश्च राजहंसिका मराली वा, मुरभिदो हरिरूपस्य कल्पकस्य सुरद्रोर्मञ्जुर्मञ्जरी वल्ली । वल्लरिर्मञ्जरी स्त्रियाविस्यमरः । वा, श्रुतिरूपे पञ्जरे दिव्यसारिका । 'मैना' इति लोके । वा, गुणरूपाणां रत्नानां हीरकादीनां पेटिका मञ्जूषा वेति । उल्लेखसन्देहावलङ्कारौ । औपच्छन्दसिकं वृत्तम् ॥ २६ ॥

प्रतिसृष्टिरियं तडिल्लतानां

परिणामो नु शिरीषमञ्जरीणाम् ।

प्रतिभाति हृदि त्वदीयमूर्तिः

परिवृत्तिर्हरिपत्नि काञ्चनानाम् ॥ २७ ॥

प्रतीति । हे हरिपत्नि ! इयं त्वदीया चाऽसौ मूर्तिश्च तडिल्लतानां विद्युतां प्रतिसृष्टिः द्वितीयः सर्गः, नु वितर्के, शिरीषमञ्जरीणां परिणामः नु, काञ्चनानां परिवृत्तिर्विनिमयः प्रत्याम्नायः प्रतिभाति । वृत्तालङ्कारौ भूतपूर्वौ ज्ञेयौ ॥ २७ ॥

प्रस्तावनेति । हे देवि ! भुवनपालननाटकस्य प्रस्तावनेति ।

---

ध्यगत) दिव्यसारिका वा, गुणरूपरत्नानां मञ्जूषा वा ऽसीति स्तौति ।

२७ हे हरिगृहिणि ! तवेयं मूर्तिर्विद्युल्लतानां सृष्ट्यन्तरं नु, शिरीषमञ्जरीपरिणतिर्नु, सुवर्णानां विनिमयो नु, अस्मद्धृदये प्रतिभातीत्याह ।

प्रस्तावना भुवनपालननाटकस्य
प्राच्या दिशो धवलिमाऽपि च कालरात्रेः ।
दुर्गर्वसर्वरजनीचरधूमकेतु-
दोषद्रुमस्य परशुस्तव देवि रूपम् ॥ २८ ॥

एतल्लक्षणं सुधाकरे ।

विधेयमर्थं मङ्गल्यो मुखतां प्रतिपद्यते ।
यथ तस्य प्रबन्धस्य तदा प्रस्तावना मता ॥

अन्यदपि लक्षणम् "अर्थस्य प्रतिपाद्यस्य तदा प्रस्तावना मते"ति । वा कालरात्रेः प्राच्याः दिशः धवलिमा उज्ज्वलत्वम् प्रातः काल इत्यर्थः । वा दुर्गर्वयुक्तानां सर्वेषां रजनीचराणां धूमकेतुः नाशसूचकग्रहविशेषः, दोषरूपस्य द्रुमस्य परशुः कुठारः, इदं तव रूपम् अस्ति । उत्प्रेक्षालङ्कारः । वसन्ततिलकावृत्तम् ॥ २८ ॥

आलानयष्टिरसि योगिमनोगजाना-
माशापिशाचपरिमोचनमन्त्रविद्या ।

---

२८ हे देवि ! जगद्रक्षणनाटकस्याऽऽमुखं, कालरात्रेः पूर्वदिक्सम्बन्धि ( प्रातः कालिक ) शुभ्रतारूप, सदर्पानाखिलराक्षसनाशे धूमकेतुरूपं च तव रूपं दोषरूपवृक्षोच्छेदे कुठाररूपं विराजते इत्याह ।

२९. हे कमलालये ! त्वं योगिचित्तकरिणाम् आलानयष्टिः, ( बन्धनदण्डः ) आशारूपपिशाचनिःसारणे मन्त्रशास्त्रं, यमलोक-

कार्तान्तलोकगमनप्रतिरोधमुद्रा
कारुण्यपुण्यनटिनी कमलाऽऽलये त्वम् ॥ २९ ॥

आलानेति। हे कमलाऽऽयतने! योगिनां मनोरूपाणां गजानाम् आलानयष्टिः पादबन्धनमिति भावः। आशा इच्छा तद्रूपपिशाचस्य परिमोचनमन्त्रस्य विद्या, कार्तान्तलोके याम्यलोके गमनस्य तद्द्वारस्य प्रतिरोधस्य निरोधस्य मुद्रा मुद्राङ्कितताळकं 'कुलुप' इति लोके। कारुण्यपुण्ययोः कृपासुकृतयोस्तटिनी नदी च त्वं लक्ष्मीः असि भवसीत्यर्थः। उल्लेखालङ्कारः। वसन्ततिलकावृत्तम् ॥ २९ ॥

शरदं तमोघनानां शाश्वतसुखसम्पदामुपोद्घातम्।
शरणं व्रजामि कमले शौरिवशीकारमूलिकां भवतीम् ३०

इति श्रीमद्वेङ्कटाध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे सङ्कीर्णस्तबकस्त्रयोविंशः सम्पूर्णः ॥ २३ ॥

शरदमिति। हे कमले! तमसाम् अज्ञानरूपाणां घनानां शरदं शरत्कालं नाशकामिति भावः। शाश्वतसुखस्य ब्रह्मसुखस्य संपदाम् उपोद्घातम् उपबृंहणरूपां, शौरेभगवतः वशीकारस्य स्वाधीनीकरणस्य मूलिकाम् ओषधिमूलं भवतीं लक्ष्मीम् अहं शरणं

---

गमनप्रतिबन्धरूपा, दयायाः पवित्रतरङ्गिणी असीति स्तौति।

३० हे कमले! अज्ञानरूपाणां मघानां निःसारणे शरत्समयरूपाम, आत्यन्तिकसुख( मोक्ष )सम्पत्तेः प्रस्तावनां, हरिवशीकरणौषधिं त्वां शरणं व्रजामीति सर्वार्थतुल्या भगवत्याः शरणापगमं प्रतिजानानः स्तबकं पूरयति।

इति श्रीमानवल्ल्युपाह्वतैलङ्गरामशास्त्रिविरचितायां लक्ष्मीसहस्रान्तरार्थ दीपिकायां सङ्कीर्णस्तबकः ॥ २३ ॥

व्रजामि रक्षणं प्राप्तो ऽस्मीत्यर्थः । उल्लेखालङ्कारः । गीति-
वृत्तम् ॥ ३० ॥

इति श्रीरायजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन वि-
रचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मीसहस्रटी-
कायां सङ्कीर्णस्तबकस्त्रयोविंशः समाप्तिमगम-
त्समाप्तम् ॥ २३ ॥



## अथ निर्वेदस्तबकः ॥ २४ ॥

अनुजं जातनिर्वेदं यः श्रीगीतोपदेशतः ।
विततार स्वविज्ञानं स रामः श्रेयसेऽस्तु नः ॥ २४ ॥

अथाऽस्मिंश्चतुर्विंशे स्तबके स्वनिर्विण्णतां वर्णयितुं प्रथमपद्ये निर्वेदशमनीमिति तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

शरणीकरणीयाङ्घ्रिं शश्वत्तापत्रयाऽऽतुरैः ।
सर्वनिर्वेदशमनीं समस्तजननीं नुमः ॥ १ ॥

शरणीति । तापत्रयेणाध्यात्मादिना आतुरैः शरणीकरणीयः अङ्घ्रिर्यस्यास्तां, सर्वेषां निर्वेदानां श्रमाणां शमनीं, समस्तानां जननीं नुमः । पथ्यावक्त्रं वृत्तम् । काव्यलिङ्गमलङ्कारः ॥ १ ॥

अनुपासिततावकाऽङ्घ्रिपद्मा-
न्यपरामृष्टपराऽवरस्थितीनि ।

---

१ अधुना चतुर्विंशेन निर्वेदस्तबकेन तुष्टूषुराद्यो निर्वेदेति स्तबकनामोल्लिखन् आध्यात्मिकाधिदैविकाधिभौतिकतापत्रितयाऽऽतुरैः प्रपदनीयपदां निखिलदुःखशमनीं जगज्जननीं स्तुम इति मङ्गलमाचरति ।

२ हे जगन्मातः ! जीर्यतो मम असेवितत्वदीयपादाम्बुजानि,

जगदम्ब वृथैव जीर्यतो मे

'समतीतानि हि जन्मनां शतानि ॥ २ ॥

अनिर्वेति । हे जगदम्ब ! वृथैव जीर्यतो जरां प्राप्नुवतः मे अनुपासिते तावके भक्तिप्रभे येषु तानि, अपरामृष्टे अविचारिते पराऽवरे अमुत्रेहरूपे स्थिती यद्वा ब्रह्माणि स्थितिः येषु तानि जन्मनां शतानि वृथैव समतीतानि गतानीत्यर्थः । काव्यलिङ्गमलङ्कारः । औपच्छन्दसिकं वृत्तम् ॥ २ ॥

अपवर्गकथापथाऽतिगाना-

मनुदासीनहृषीककिङ्कराणाम् ।

दिवसा बहवो वृथैव याता-

स्तव सानन्दमुपासनं विना नः ॥ ३ ॥

अपवर्गेति । अपवर्गस्य मोक्षस्य कथायाः पन्थानमतिक्रम्य गच्छतां तथा अनुदासीनानां विषयसेवनतत्पराणां हृषीकाणामिन्द्रियाणां किङ्कराणां नो ऽस्माकं तव सानन्दमुपासनं विना बहवो दिवसाः वृथैव याता गताः । पूर्वश्लोकोक्ते एवाऽलङ्कारच्छन्दसी ॥ ३ ॥

---

अविचारितपूर्वाऽपराऽवस्थानि जनिशतानि मुधैव व्यतीतानीति सनिर्वेदं वदति ।

३ तव समन्तोषं सेवां विना मोक्षचर्चाऽध्वोल्लङ्घिनां साऽभिनिवेशेन्द्रियाविधेयानां नो बहूनि दिनानि निष्फलानि व्यतीयुरित्याह ।

अवधीरितसाधुसङ्गमाना-
मपचारेषु च बद्धकङ्कणानाम् ।
कथमन्यतमं कृपानिधे मां
कमले हन्त वृथा कृथाः खलानाम् ॥ ४ ॥

अवेति । हे कृपानिधे ! हे कमले ! अवधीरितस्तिरस्कृतः साधुसङ्गमः सत्सङ्गो यैस्तेषां, तथा अपचारेषु निन्द्यकर्मसु बद्धं कङ्कणं बिरुदं यैस्तेषां खलानां मध्ये अन्यतमं बहुष्वेकं मां हन्त खेदे वृथा कथम् अकृथाः ? कृधातोर्लुङि ह्रस्वादङ्गादिति सिचो लोपः । अलङ्कारच्छन्दसी पूर्वोक्ते ॥ ४ ॥

स्मारं स्मारं मलिनविषयान् मानसं मे ऽवसन्नं
चारं चारं प्रतिखलगृहं जातखेदौ च पादौ ।
कारं कारं कुजनविनुतिं क्लेशिता हन्त जिह्वा-
वारं वारं वरजलनिधे किं नु विज्ञापयेयम् ॥ ५ ॥

स्मारमिति । हे वराणां वरदानानां जलनिधे ! सिन्धुभूते ! मलिनान्विषयान् स्मारं स्मारं स्मृत्वा मे मानसमवसन्नं



४ हे कृपानिधे ! कमले ! त्वं मां तिरस्कृतसज्जनसङ्गतीनां दुराचारगृहीतदीक्षाणां खलानाम अन्यतमं ( खलवर्गान्तर्वर्तिनं ) हन्त ( खेदे ) कथमकृथाः ? इत्याह ।

५ हे वरदानसमुद्ररूपे ! मम चेतो मलिनान् विषयानसकृत् स्मृत्वा परिश्रान्तं, प्रत्येकखलगृहं गत्वा गत्वा मे चरणौ खिन्नौ, दुर्जनस्तवं पुनः पुनर्विधाय रसना सक्लेशा, ( जाता ) भूयो भूयः किं नु विज्ञापयेयम ? इति निर्वेदाऽतिशयं दर्शयति ।

क्षिप्तं, तथा खलगृहे खलगृहे इति प्रतिखलगृहं चारं चारं चरित्वा चरित्वा पादौ जातखेदौ सञ्जाताऽऽयासौ, पुनः कुजनानां विनुतिं स्तुतिं कारङ्कारं कृत्वा कृत्वा हन्त खेदे जिह्वा क्लेशिता क्लेशं प्रापिता, अतो वारं वारं पुनः पुनः नु इति विचारे किं विज्ञापयेयं ? न किमपीति भावः । मन्दाक्रान्तावृत्तम् ॥ ५ ॥

विहितमखिलं त्यक्त्वा कृत्वा च गर्हितमन्वहं
तदुचितफलान्यत्राऽमुत्राऽप्यहो कलयन्नहम् ।
गुणगणनिधे मृत्वा मृत्वा कियन्ति युगानि वा
मुरविजयिनो जाये जायेय मोहभयाऽऽतुरः ॥ ६ ॥

विहितमिति । हे गुणानां गणानां निधे ! अत्राहं प्रतिदिनम् अखिलं विहितं त्यक्त्वा गर्हितं निन्द्यं च कृत्वा तयोरुचितानि फलानि अत्राऽमुत्र इह परलोके ऽपि अगणयन्नहं कविः अहो इत्याश्चर्ये मृत्वा मृत्वा हे मुरविजयिनः जाये ! मोहभयाभ्यामातुरः सन् कियन्ति किंपरिमाणानि युगानि जायेय ? उत्पन्नो भवेयम् । कारकदीपकालङ्कारः । हरिणीवृत्तम् ॥ ६ ॥

तृणत्याजं त्यक्त्वा त्रिजगति कलत्रादिविषयान्
प्रणत्या ते दिव्यां कति कति गतिं यान्ति कृतिनः ।

---

६ हे गुणसङ्घशेवधे ! मुरारिपुपत्नि ! समस्तं विधिबोधितं कर्म विहाय निन्दितं च प्रतिदिनं कृत्वा इहाऽमुत्रापि तद्योग्यानि फलानि उपभुञ्जानोऽहं पुनः पुनर्मरणं प्राप्य मोहभयाभ्यां विधुरः सन् कियन्ति युगानि ( यावत् ) जायेय ? ( जन्म लभेय ) इति पृच्छति ।

७ हे रमे ! जगति कतिपये धन्याः जायादिविषयान् तृणमिव परित्यज्य ते नमनेन दिव्यां गतिं यान्ति, अहं पुनर्विषयरूप-

अहं त्वेवं तावद्विषयविषयन्त्रेषु पतितो
निषीदन् संसारे विपदवसरे रोदिमि रमे ॥ ७ ॥

तृणेति । हे रमे ! कृतिनः कुशलाः त्रिजगति लोकत्रये कलत्रं भार्या आदिर्येषां तान्विषयान् तृणत्याजं त्यक्त्वा तृणवत्त्यक्त्वेत्यर्थः। उपमाने कर्मणि चेति णमुलि यथाविध्यनुप्रयोगः। ते तव प्रणत्या नमस्कृत्यैव दिव्यां गतिं न यान्ति ? अपि तु यान्त्येवेति भावः । अहं त्वेवंप्रकारेण विषयरूपेषु विषयन्त्रेषु पतितः, अतः विषीदन्दुःखं कुर्वन् सन् विपदः अवसरे समये रोदिमि । प्रेयोलङ्कारः । शिखरिणीवृत्तम् ॥ ७ ॥

जननि महति वंशे जन्म लब्धं ततः किं
विशदमधिगतं वा वेदशास्त्रं ततः किम् ।
सदसि कथकदर्पः सादितो वा ततः किं
भवजलधितरिस्त्वं भाविता चेन्न चित्ते ॥ ८ ॥

जननीति । हे जननि ! महति वंशे जन्म लब्धं प्राप्तं ततः तेन किं भविष्यतीति भावः वा विशदं स्वच्छं यथा तथा वेदश्च शास्त्रं चाऽनयोः समाहारे सनपुंसकमिति नपुंसकत्वम् । तस्मिन्नधिगते प्राप्ते ऽपि ततः किं ? वा सदसि सभायां कथकानां

---

विषययन्त्रेषु निपतितः संसारनिषण्णः सन् विपत्तिकाले रोदिमि केवलमिति निजदुर्दशां प्रदर्शयति ।

८ हे मातः ! भवसमुद्रतरणीत्वं चेच्चित्ते न ध्याता चेत् तर्हि उच्चवंशजन्मलाभेन किं फलं ? निगमाऽऽगमसम्यग्ज्ञानेनापि किं ? सभासु वादिविजयेनापि किम् ? इति त्वद्ध्यानं विना सर्वं व्यर्थमित्याह।

पण्डितानां दर्पो गर्वः सादितः खण्डितोऽपि भवजलधेस्तरिर्नौका त्वं चित्ते न भाविता चेत्ततः किं ? व्यर्थमिति भावः । विनोक्तिरलङ्कारः । मालिनीवृत्तम् ॥ ८ ॥

अटित्वा दुर्देशान् सदसि च नटित्वा क्षितिभुजां
पठित्वा दीनोक्तीरपि फलमलब्ध्वा ऽतिचपलः ।
अपारैर्व्यापारैरलसतनुराराधनमहो
भवत्या हित्वा ऽहं बलवदवसीदामि कमले ॥ ९ ॥

अटित्वेति । हे कमले ! दुष्टान् देशानटित्वा गत्वा तथा क्षितिभुजां राज्ञां सभायां नटित्वा पुनर्दीनोक्तीरपि पठित्वोक्त्वा अतिचपलो ऽहं फलम् अलब्ध्वा अपारैर्बहुभिर्व्यापारैः अलसतनुः सन् भवत्या आराधनं हित्वा बलवन्महद्यथा स्यात्तथा अवसीदामि शोचामि । विषादनकाव्यलिङ्गालङ्कारौ । शिखरिणीवृत्तम् ॥ ९ ॥

निरन्तरमरुन्तुदैर्निरयवेदनाऽऽपादनाद्
दुरासदधराभुजामलमपावनैः सेवनैः ।

---

९ हे कमले ! दुष्टेषु देशेषु भ्रमित्वा, राजसभासु नाट्यं कृत्वा, दीनवचनान्युदीर्याप्यलब्धफला ऽत एवाऽतिचञ्चलो ऽनन्तैर्व्यापारैः शिथिलदेहो ऽहं भवत्या आराधनं हित्वा ऽतिविषादभागस्मि, अहो (आश्चर्ये) इति निष्फलैर्व्यापारैर्विषादं प्रकटयति ।

१० हे घनकुचे ! रमे ! नरकयातनादानान्मर्मविच्छिद्रपावित्रैर्दुरा-

रमे ननु रमेत मे दुरितमोचके मेचके
घनस्तनि मनस्त्वया घटितनर्मणि ब्रह्मणि ॥ १० ॥

निरन्तरमिति । दुःखेनाऽऽसादितुं शक्यानां धराभुजां राज्ञां निरयाणां वेदनानामापादनाव कारणाव निरन्तरं सततम् अरुं(?)व्रणं तुदन्ति व्यथयन्ति तैः । विध्यरुषोस्तुद इति खशि अरुर्द्विषदिति मुम् । तैः अपावनैर्निन्द्यैः सेवनैः अलं पर्याप्तं, नन्विति वितर्के । हे रमे ! दुरितस्य मोचके नाशके मेचके श्यामले तथा त्वया घटितानि नर्माणि क्रीडा येन तस्मिन्ब्रह्मणि विष्णुरूपे हे घनस्तनि ! मे कवेर्मनः रमेतेति प्रार्थना । काव्यलिङ्गमलङ्कारः । पृथ्वीवृ० ॥ १० ॥

जननि हृदवसादं शुष्कनिर्वेदवादं
जननि जहदपार्थं शश्वदालम्ब्य धैर्यम् ।
शरणमिह भजेयं संश्रिताऽन्यैरजेयं
दनुजभिदमुदारं तं भवत्या सदारम् ॥ ११ ॥

जननीति । हे जननि ! अपगतः अर्थः प्रयोजनं मस्मात्तम् एवं जननिनां जन्मवतां हृदवसादं मानसदुःखकारकं शुष्कनिर्वेदवादं निष्फलदैन्याऽऽलापं जहत् त्यजन् शश्वत्पुनः पुनः

राधराजसेवनैरलं, दुरितोत्सारके श्यामवर्णे त्वया कृतक्रीडे ब्रह्मणि ( हरौ ) मे मनो रमत, इत्याह ।

११ हे अम्ब ! प्राणिमनःखेदकरां निष्फलां नीरसां निर्वेदोक्तिं परित्यजन् भूयो धैर्यमाश्रित्य आश्रितेभ्यो ऽन्यैरजेयं (गतजनमात्रजेयं) भवत्या कलत्रवन्तमुदारं तं दानवरिपुं ( हरिं ) शरणं भजेयमित्याह ।

१ अपार्थमिति २ पु० पा० ।

धैर्यम् आलम्ब्य स्वीकृत्य संश्रितेभ्यो निजभक्तेभ्यः अन्यैर्जेतुमयोग्यं भवत्या लक्ष्म्या सदारं सपत्नीकम् उदारं दातारं दनुजान् दैत्यान् भिनत्ति विदारयति तं हरिं शरणं रक्षक इति भजेयं सेवेयं मालिनीवृत्तम् ॥ ११ ॥

निर्विण्णमब्धिकन्ये निरीक्ष्य मां शीतलैरपाङ्गलवैः ।
अभिषिञ्चसि बलिवञ्चकचरणद्वयशरणवरणसाम्राज्ये १२

इति श्रीमद्वेङ्कटाऽध्वरिविरचिते श्रीमल्लक्ष्मीसहस्रे
निर्वेदस्तबकश्चतुर्विंशः सम्पूर्णः ॥ २४ ॥

निर्विण्णमिति । हे अब्धेः कन्ये ! निर्विण्णमतिखिन्नं मां कर्म शीतलैः अपाङ्गानां कटाक्षाणां लवैर्लेशैर्निरीक्ष्य बलेर्दैत्यविशेषस्य वञ्चकस्य विप्रलम्भयितुः हरेः भगवतः चरणद्वयस्य पादयुगस्य शरणवरणस्य रक्षणं कुरु इति प्रार्थनायाः शरणागतेः साम्राज्ये अभिषिञ्चस्यभिषेकं करोषीत्यर्थः । गीतिवृत्तम् ॥१२॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन विरचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मीसहस्रटीकायां निर्वेदस्तबकश्चतुर्विंशः सम्पूर्णतां जगामगतमाम् ॥ २४ ॥

---

१२ अब्धिसुते ! (त्वं) निर्वेदशालिनं (मां) शिशिरैर्नयनान्तपातलेशैरवलोक्य बलि(दैत्य)विप्रलम्भक(हरि)पदद्वन्द्वशरणाऽङ्गीकरणरूपसाम्राज्ये अभिषिञ्चसीति स्तुवानः स्तबकं समापयति ।

इति श्रीमानवल्ल्युपाह्वनैलङ्गरामशास्त्रिविरचितायां लक्ष्मीसहस्राऽवतरणनिःश्रेणिकायां निर्वेदस्तबकः ॥ २४ ॥

## अथ फलस्तबकः ॥ २५ ॥

श्रीमद्रामायणकथां शृण्वतां पठतां नृणाम् ।
फलं ददाति मोक्षाऽऽख्यं स रामः श्रेयसे ऽस्तु नः ॥२५॥

अथाऽस्मिन् पञ्चविंशे स्तबके ग्रन्थफलं वर्णयितुं प्रथमपद्ये दुग्धामित्यादिना तल्लिङ्गं निर्दिशन्मङ्गलमाचरति—

दुग्धां दुग्धाऽम्बुधेः पुत्री दुरिताऽपहरा मम ।
शार्ङ्गिणश्चरणाऽम्भोजशरणाऽऽगतसंपदम् ॥ १ ॥

दुग्धामिति । दुरिताऽपहरा पापशमनी दुग्धाम्बुधेः पुत्री लक्ष्मीः शार्ङ्गिणः श्रीहरेश्चरणाऽम्भोजयोः शरणाऽऽगतेः संपदं दुग्धां पूरयतु । दुह प्रपूरणे इत्यस्माल्लोट् । आशीरलङ्कारः । पथ्यावक्त्रं वृत्तम् ॥ १ ॥

धावन्तमुच्चतरदुर्विषयाऽटवीषु
सारङ्गशावमिव शश्वदपाङ्गजालैः ।
मामच्युतस्य महिषि प्रसभं गृहीत्वा
नित्यं विधेहि युवयोरनुकूलवृत्तिम् ॥ २ ॥

धावन्तमिति । हे अच्युतस्य महिषि ! पट्टस्त्रिये(!) ! अति-

---

१ अथाऽन्तिमं पञ्चविंशं फलस्तबकमारिप्सुर्मम दुरितनाशिका क्षीरोदसुता हरेः पदकमलशरणप्रपन्नसंपत्तिं ( मुक्तिं ) दुग्धां ( पूरयताम् ) इति संपदं दुग्धामित्यनेन फलमिति स्तबकनाम सूचयन्नाह ।

२ हे अच्युतप्रधानपत्नि ! समधिकेषु दुष्टविषयकाननेषु भूयो धावन्तं मां हरिणशुशुमिवाऽपाङ्गरूपैरानायैर्बलाद् गृहीत्वा युवयोः ( दम्पत्योः ) अनुकूलचारिणं नित्यं विधेहीति प्रार्थयते ।

प्रायेणोच्चासु दुर्विगाहरूपासु अटवीषु वनीषु सारङ्गशावं हरिणबालमिव धावन्तं माम् अपाङ्गानां कटाक्षाणां जालैः प्रसभं हठाद् गृहीत्वा युवयोः श्रीसीतारामयोः अनुकूला ऽनुसारिणी वृत्तिश्चित्तं यस्य तं भक्तं विधेहि कुरु । रूपकोपमे अलङ्कारौ । वसन्ततिलकावृत्तम् ॥ २ ॥

मातर्हिताऽहितविवेकविहीनमेतं
मन्दं मुकुन्दवरवर्णिनि मामनार्यात् ।
मार्गान्निवर्तयितुमर्हसि मङ्क्षु माता
कूपे निपित्सुमपि डिम्भमुपेक्षते किम् ॥ ३ ॥

मातरिति । हे मुकुन्दस्य वरवर्णिनि सुन्दरि हे ! मातः ! हिताऽहितयोरिष्टाऽनिष्टयोर्विवेकेन विचारेण हीनं मन्दं मूढम् एतं कामिम् अनार्यान्निन्द्यान्मार्गान्मङ्क्षु । द्राङ्मङ्क्षु सपदि द्रुतम् इत्यमरः । निवर्तयितुं परावर्तयितुम् अर्हसि योग्या भवसि । तथा हि कूपे अन्धौ निपतितुमिच्छुं डिम्भं शिशुं माता उपेक्षते किमिति । अर्थान्तरन्यासालङ्कारः । वसन्ततिलकावृत्तम् ॥ ३ ॥

विश्वस्य धाति भवती परिपास्यतीति
विश्वस्य सम्यगभयं तु वयं चरामः ।

---

३ हे मातः ! मुकुन्दात्मजाये ! हिताऽहितविचाररहितमेतं मां दुर्मार्गान्निवर्तयितुमर्हसीति कूपे निपतितुमिच्छुं शिशुं जननी उपेक्षते किमित्यनेन समर्थयन्नाह ।

४ हे जगन्मातः ! वयं भवती रक्षिष्यतीति विश्वासेन निर्भयं चरामः, एवं स्थिते ( अस्मान् ) मोक्षं प्रापय, नरकं वा नय,

निःश्रेयसं गमय वा निरयं नयेर्वा
कीर्तिं लभस्व यदि वा महतीमकीर्तिम् ॥ ४ ॥

विश्वस्येति । हे विश्वस्य जगतः धात्रि मातः ! भवती श्रीः परिपास्यति इति सम्यक् विश्वस्य विश्वासं प्राप्य वयं तु अभयं यथा तथा चरामः, अतः निःश्रेयसं मोक्षं गमय, वा नरकं निरयं नयेः प्रापयेः । नीञ् प्रापणे इत्यस्माल्लिङ् । वा तेन कर्मणा कीर्तिं दीनोद्धरणरूपाम् अकीर्तिम् अधःपातनरूपम् अयशः लभस्व । यथासङ्ख्यमलङ्कारः । वसन्ततिलकावृत्तम् ॥ ४ ॥

उच्चैरकृत्रिमगिरो यदि नाऽब्धिघोषा
उन्मादिनां फणितयः स्मृतयश्च नो चेत् ।
नारायणप्रणयिनीं नमतो मम त्वां
नैःश्रेयसी न भविता कथमम्ब संपत् ॥ ५ ॥

उच्चैरिति । हे अम्ब ! उच्चैः अब्धिवत्समुद्रवत् घोषा यासां(?) ताः अकृत्रिमगिरः वेदाः त्वां पद्मिनीं प्रियादयः । यदि न, वा उन्मादिनां मुक्तानां(?) फणितय उक्तिरूपाः स्मृतयः मन्वादयः

---

कीर्तिं प्राप्नुहि ( अश्रितस्य मोक्षप्रापणेन ) महतीमपकीर्तिं वा लभस्व ( विश्वस्तस्य दुर्गतिनयनेन ) इति सप्रणयमाह ।

५ हे अम्ब ! श्रेष्ठा वेदवाचो यदि समुद्रघोषाः ( समुद्रनादवन्निरर्थाः ) यदि न ( भवन्ति ) एवं स्मृतयोऽपि यदि उन्मत्तप्रलपितानि ( तद्वदपार्थानि ) न ( भवन्ति ) तर्हि नारायणप्रेयसीं त्वां नमस्कुर्वतो मम मुक्तिसम्पत्तिः कथं न स्यादिति श्रुतिस्मृत्योः प्रमाणमूर्धन्यतया तदुक्त्यनुसारेण त्वां नमतो मम मुक्तिरवश्यं भाविनीत्याह ।

'सा विद्या परमा मुक्तेर्हेतुभूतेत्यादयः' नो चेत् तर्हि नारायणस्य प्रणयिनीं प्रियां त्वां नमतः मम नैःश्रेयसी मोक्षरूपा संपत् कथं भविता तर्हि नेति भावः(?) । सम्भावनाऽलङ्कारः । वसन्ततिलकावृत्तम् ॥ ५ ॥

गीतोपदेशगुरुपत्नि कृताऽऽगसो मे
गोप्त्री त्वमेव भवताद्भवतापभाजः ।
आत्माऽवने ऽप्यकुशलैरपरैः सुरैः किं
बद्धः स्वयं किमु विमोचयिता बताऽन्यम् ॥ ६ ॥

गीतेति । हे गीतोपदेशगुरोः कृष्णस्य पत्नि ! कृताऽगसः विहिताऽपराधस्य भवस्य तापभाजः दाहमेविनः मे मम गोप्त्री रक्षिका त्वमेव भवतात् । आशिषि तातङ् । तत्र हेतुः आत्मनः स्वस्याऽपि अवने रक्षणे ऽकुशलैरक्षैरपरैरितरैः सुरैः किं ? तथा हि बत वेदे । स्वयं बद्धः अन्यं पुरुषं विमोचयिता किमु ? नेत्यर्थः । काव्यलिङ्गार्थान्तरन्यासपरिकरालङ्काराः । वसन्ततिलकावृत्तम् ॥ ६ ॥

कर्माहतिर्मतिरुपास्तिरिति प्रतीतै-
र्मुक्तो मुकुन्दसुविलासिनि मुक्त्युपायैः ।

---

६ हे गीतोपदेशगुरोः ( कृष्णस्य ) पत्नि ! संसारसन्तापभाजः कृतापराधस्य मम त्वमेव रक्षिका, आत्मरक्षणे ऽप्यसमर्थैरन्यैर्देवैः किमिति स्वयं बद्धो, ऽन्यान् कथं मोचयेदित्यनेनोपायकुवलयमाह ।

७ हे मुकुन्दसुन्दरि ! अम्ब ! कर्माहृतिः ( सत्कर्माचरणं ) मतिः ( मननम् ) उपास्तिः ( उपासनम् ) इत्येवं प्रसिद्धैर्मोक्षोपायैः ) मुक्तः ( रहितः ) अनेकप्रकारकाऽपराधशेवधिरस्मत्सदृशो

अस्मादृशस्तव जगत्यनुकम्पनीयो
नानाऽपराधनिधिरम्ब न लभ्यते ऽन्यः ॥ ७ ॥

कर्मेति । हे मुकुन्दस्य सुविलासिनि ! पट्टमहिषि ! कर्माहृतिः सत्कर्मकरणं, मतिः सन्मतिः, उपास्तिर्देवतोपासनम्, इति प्रतीतैः । प्रतीते प्रथितख्यातेत्याद्यमरः । मुक्त्युपायैर्मोक्षसाधनैर्मुक्तस्त्यक्तः नानाऽपराधानां निधिः खनिः अतः जगति अनुकम्पनीयः दयनीयः अन्यो मद्व्यतिरिक्तः हे अम्ब ! अस्यास्तव यशः ? न लभ्यते न प्राप्यते अतः पापिशेखरं मां मुक्तोपायत्यक्तमुद्धृत्य यशो लभस्वेति भावः । काव्यलिङ्गमलङ्कारः । वसन्ततिलकावृत्तम् । अत्र त्यक्त इति पाठश्चारुतरः ॥७॥

पापार्थकोपकलुषीकृतनाथचेतः-
पाथःप्रसादनविधौ कृतकायितोक्तिम् ।
यो ऽहं भवामि सभयो यदुनाथयोषे
तां त्वामनन्यशरणः शरणं प्रपद्ये ॥ ८ ॥

पापेति । हे यदुनाथस्य श्रीकृष्णस्य योषे पत्नि ! यः भ-

---

ऽन्यस्तव दयनीयो जगति न लभ्यते इति सर्वथा गतिरहितस्य मम त्वमेव मुक्तिप्रदेत्याह ।

८ हे यदुनाथयोषे ! ( कृष्णपत्नि ! ) यो ऽहं सभयो भवामि ( संसारादपरिच्छिन्ना भीतिर्यस्यैवं भूतो ऽस्मि ) ( सोऽहं ) पापहेतुककोपाऽऽविलीकृतहरिमानसरूपजलनिर्मलीकरणविधौ कतकायितोक्तिं ( कतकबीजायमाना निर्मलीबीजायमाना उक्तिर्यस्यास्तां, निजवचनेन सकोपहरिचित्तप्रसादिनीमिति यावत् ) तां ( प्रसिद्धां ) त्वाम् अनन्यगतिः ( सन् ) शरणं प्राप्तो ऽस्मीत्याह ।

---

भवामितभय इति.२ पु० ।

वात्संसारात् अमितं विपुलं भयं यस्य तादृशः अहम् अनन्य-शरणः त्वद्व्यतिरिक्तरक्षकशून्यः सन् पापं कलुषम् अर्थः निमित्तं यस्य तेन कोपेन रोषेण कलुषीकृतस्य आविलीकृतस्य। कलुषो ऽनच्छ आविल इत्यमरः। नाथस्य श्रीहरेश्चेतमः अन्तःकरणरूपस्य पाथसः उदकस्य प्रसादनविधौ स्वच्छीकरणे कतकः। 'निवळीबीज'मिति लोके। तद्वित् आचरन्ती उक्तिरूपा-हारो यस्याः सा तां पापक्षमापणोक्तिरूपामिति यावत्। तां प्रसिद्धां त्वां लक्ष्मीं प्रपद्ये शरणमागतो ऽस्मीत्यर्थः। काव्यलिङ्गम्० । वसन्ततिलकावृ० ॥ ८ ॥

निरतिशयविभूते देवि निष्किञ्चनो ऽहं
भवदवपरितप्तो भास्वराऽऽनन्दमूर्ते ।
त्वदुपजनितबोधस्त्वज्जुषः कैटभारे-
श्चरणनलिनयोर्मामेनमद्याऽर्पयामि ॥ ९ ॥

निरतिशयेति । हे निरतिशया विभूतिरैश्वर्यं यस्यास्तत्सम्बुद्धौ हे देवि ! हे भास्वरा देदीप्यमाना आनन्दरूपा च मूर्तिर्यस्यास्तत्सम्बुद्धौ अकिञ्चनो दरिद्रः भवदवेन परितप्तश्चाऽहं, तस्मात्त्वामेव प्रपद्ये, एवं त्वत्तः उपजनितः सञ्जातः बोधो ज्ञानं यस्य सः त्वां जुषते प्रीत्या सेवते तस्य त्वत्सहितस्येत्यर्थः। उभयोर्भेदाऽभावात् कैटभारेर्भगवतः चरणे नलिने इव तयोः अद्य एनं मां कृतिम् आत्मानमेव अर्पयामि समर्पयामीत्यर्थः। परिकरालङ्कारः। मालिनीवृत्तम् ॥ ९ ॥

---

९. हे सर्वातिशाय्यैश्वर्ये ! प्रस्फुरदानन्दमूर्ते ! दरिद्रः संसाररूपवनाऽनलसन्तप्तो ऽहं त्वया समुत्पादितज्ञानः सन् आत्मानं त्वत्सहितस्य हरेः पादपद्मे समर्पयामीत्यात्मसमर्पणं प्रतिजानीते ।

महति भवती मामार्याणां कुले समजीजनद्
भवपथपरिश्रान्तं छायातरूननयद् गुरून् ।
शरणवरणं साङ्गं शौरावचीकरदिन्दिरे
किमिह बहुना संपूर्णो मे चिरेण मनोरथः ॥ १० ॥

महतीति । हे इन्दिरे कमलवासिनि ! भवती लक्ष्मीः मां कश्चिप आर्याणां श्रेष्ठानां महति पूज्ये कुले वंशे समजीजनत् उत्पादयामास । जन जनने इत्यस्माण्णिजन्तात् लुङ्, ततश्चलौ चङि सन्वद्भावादित्वं दीर्घश्च । तथा भवपथे संसारमार्गे परिश्रान्तमतिखिन्नं मां छायाप्रधानान् तरून् वृक्षरूपान् गुरून् देशिकान् अनयत्प्रापयामास । अकथितं चेति द्विकर्मत्वम् । पुनर्मां मया कृत्वा शौरौ साङ्गं यथाविधि शरणवरणं मम रक्षणं कुर्विति प्रार्थनाम् अचीकरत्कारयामास । किं बहुना, इह अस्मिन् लोके जन्मनि वा अचिरेण द्रुतमेव मे मनोरथः इच्छा सम्पूर्णः संपन्नः अभूदिति भावः । कारकदीपकालङ्कारः । हरिणीवृत्तम् ॥ १० ॥

हृद्यं पद्यसहस्रमेतदनघं संशृण्वतः कम्पतां
मोदेनाऽऽदिमशाब्दिकस्य फणिनो मूर्धा सहस्रं मुहुः ।

---

१० हे श्रीः ! भवती मां श्रेष्ठानामुच्चे वंशे उत्पादितवती, संसाराऽध्वक्लान्तं ( मां ) छायातरून् ( छायाप्रधानवृक्षरूपान्, आश्रयदानेन श्रान्तिहरान् ) गुरून् प्रापितवती, एवं हरौ मां शरणाङ्गीकरणं सर्वतः कारितवती, यत्त्वा ऽलं, चिरेण मे ऽभीप्सितं परिपूर्णमिति स्तोत्रसंपूर्तिजन्यमानन्दमाविष्करोति ।

तत्कालोदितचारुमारुतधुतत्वत्केलिगाढश्रमं
प्रत्नं संप्रति मे प्रसीदतु रमे पक्षीन्द्रवाहं महः ॥ ११ ॥

हृद्यमिति । हे रमे । हृदयस्य प्रियं हृद्यम् अनघं निष्पापम् एतन्मन्निर्मितं पद्यानां श्लोकानां सहस्रं मोदेन हर्षेण संशृण्वतः आदिमशाब्दिकस्य भाष्यकारसंज्ञकस्य फणिनः शेषस्य मूर्ध्नां शिरसां सहस्रं मुहुर्वारं वारं कम्पतां चलतु । स एव कालः समयः तस्मिन्नुदितेनोत्पन्नेन चारुमारुतेन सुन्दरवायुना धुतः गतः तव केल्याः क्रीडायाः गाढः अत्यन्तः श्रमो यस्य तत् प्रत्नं, पुराणे प्रतनप्रत्नेत्यमरः । पक्षीन्द्रो गरुडः वाहः वाहनं यस्य तन्महः विष्णवाख्यं तेजः मे प्रसीदतु । प्रसन्नं भवतु । काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

येयं नाऽऽद्रियते कृतिः कतिपयैरीर्ष्यागृहीतैर्जनै-
श्चित्रं सैव विपश्चितामकलुषं चित्ते विधत्ते मुदम् ।
विश्वस्याऽम्ब मनो दुनोति दयिताविश्लेषिणां या नृणां
नो किं कोकिलकाकली भवति सा तोषाय योषाजुषाम् १२

या इति । हे विश्वस्याऽम्ब ! जगतो मातः ! या इयं पूर्वग्रथिता लक्ष्मीसहस्ररूपा कृतिः काव्यरूपा ईर्ष्यया मत्सरेण

---

११ हे भगवति ! हृदयप्रियमनघमेतत् पद्यसहस्रमाकर्णयतः प्रधानव्याकरणविद्याचार्यस्य फणिनः ( महाभाष्यकारपतञ्जलितया ऽवतीर्णवतः शेषस्य ) शिरःसहस्रम् ( अभिनन्दकतया ) कम्पताम्, तत्कम्पनीयऽमरोत्पन्नवाताऽऽनीतभवतीक्रीडाघनपरिश्रमं पक्षीन्द्रवाहं ( गरुडवाहनकं ) प्राक्तनं तेजो ( हरिरूपम् ) अधुना मम प्रसादं करोत्विति निजकविताप्रशंसापूर्वकमाशास्ते ।

गृहीतैर्ग्रस्तैः कतिपयैर्जनैर्मानवैर्नाद्रियते न स्वीक्रियते सैव कृतिरित्यर्थः। विपश्चितां धीमताम् अकलुषे स्वच्छे चित्ते मुदं हर्षं विधत्ते करोति। अत्र दृष्टान्तः, या इयं कोकिलस्य पिकस्य काकली अव्यक्तमधुरध्वनिः। काकली तु कले सूक्ष्मे ध्वनावित्यमरः। दयितया विश्लेषिणां वियुक्तानां नृणां मनः दुनोति खेदयति सा काकली योषाजुषां सस्त्रीकानां पुंसां पुरुषाणां तोषाय हर्षाय भवति नो किं? शार्दूलविक्री० ॥ १२ ॥

बहुस्तबकभासुरस्तव नवस्तवस्त्वस्तरुः
प्रशस्तविबुधस्तुतस्त्रियुगनायिके दस्तुतः।
समस्तमपि वाञ्छितं वितनुते सदानन्दन-
स्थितिः सुरभिलै रसैरपि दिशो दशामोदयन् ॥ १३ ॥

बहिति। हे त्रियुगस्य विष्णोर्नायिके! बहुभिरनेकैः स्तबकैः प्रकरणरूपैरन्यत्र गुच्छैः भासुरो देदीप्यमानः तथा प्रशस्तैर्विबुधैर्देवैः पण्डितैश्च स्तुतः तव नवस्तवः एतत्सहस्रपद्यरू-

---

१२ हे जगन्मातः! विरलैर्मत्सरिभिः कैश्चिज्जनैर्येयं रचना न बहुमान्यते सैवेयं मनीषिणां निर्मले ऽन्तः करणे सन्तोषं तनुते इति प्रियावियोगिनां जनानां मानसं यः पीडयति स एव कोकिलसूक्ष्ममधुरध्वनिः संयुक्तानां तोषाय न भवति किम? इत्यनेन द्रढयन्नाह।

१३ हे त्रियुगनायिके! (त्रिविक्रमभार्ये) बहुस्तबकभासुरः, (बहुभिः स्तबकैः प्रकरणैः गुच्छैश्च भास्वरः) श्रेष्ठैः पण्डितैर्देवैश्च विनुतः, सदानन्दनस्थितिः (सतामानन्ददा स्थितिर्यस्य, सर्वदा नन्दनवने स्थितिर्यस्य स च) सुगन्धिभिः रसैः (शृङ्गारादिभिः, मकरन्दैश्च) दश हरितः आमोदयन् (तोषयन्, सुरभिताः कुर्वंश्च) अयं तव स्तवस्तरुः (स्तोत्रकल्पवृक्षः) समग्रमभीप्सितं पूरयतीति स्तवं सुरतरुत्वारोपणपुरःसरं सकलाभीष्टप्रदत्वं वर्णयन्नाह।

पनूतनस्तोत्रं वस्तुनः सत्यं स्वस्तरुः कल्पद्रुः, अतः सतामानन्दने पक्षे सदा सर्वदा नन्दनवने च स्थितिर्यस्य तथा सुरभिलैः सौरभयुक्तैः रसैः शान्तादिनवभिः पक्षे मकरन्दैः दशाऽपि दिशः प्राच्यादीः आमोदयन् हर्षयन्सन् समस्तं समग्रमपि वाञ्छितम इष्टं वितनुते। एतत्पद्यसहस्रपठनात्सर्वेष्टसिद्धिप्राप्तिः फलं भवतीति भावः। श्लेषरूपकसमालङ्काराः। पृथ्वीवृत्तम् ॥ १३ ॥

श्लोकाः श्लाघाऽवसरतरलीभूतवेधःपुरन्ध्री-
चूडागुच्छप्रसृमरमधुस्रोतसा जातसाम्याः।
निश्वाऽम्ब त्वद्गुणपरिचये वीततन्द्रान् सुधीन्द्रान्
प्रीणन्त्येते मम परमनोभैरवा धीरवादाः ॥ १४ ॥

श्लोका इति। हे निश्वाऽम्ब ! श्लाघायाः स्तुतेरवसरे समये तरलीभूतायाश्चञ्चलीभूतायाः वेधःपुरन्ध्र्याः ब्रह्मपत्न्याः सरस्वत्याः चूडागुच्छादवतंसगुच्छात्प्रसृमरेण विसृत्वरेण मधुनो मकरन्दस्य स्रोतसा अम्बुसरणेन। स्रोतोऽम्बुसरणं स्वत इत्यमरः। जातं साम्यं तुल्यत्वं येषां ते तथा मम परस्य स्वदयक्तस्याऽज्ञस्य भैरवा भयङ्कराः धीरवादरूपा एते श्लोकाः पद्यानि पद्ये यशसि च श्लोक इत्यमरः। तव गुणानां परिचये वीततन्द्रान्निरलसान् सुधीन्द्रान् प्रीणन्ति। उपमाकाऽपलिङ्गालङ्कारौ। मन्दाक्रान्तावृत्तम् ॥ १४ ॥

---

१४ एतत्स्तोत्राऽभिनवरचनाऽवसरचञ्चलीभूतवाग्देवताकेशपाशगतकुसुमस्तबकानिःसरन्मकरन्दक्षरणप्राप्तसादृश्याः, मत्सरिजनमानसभयङ्कराः गाम्भीर्यशालिन्यो मदीया एते श्लोकाः ( सकलपद्यानि ) त्वदीयगुणानन्ये ऽनलसान् विपश्चिद्वरान् संतोषयन्तीत्याह।

अम्ब त्वद्गुणलेशपेशलमिदं डिम्भस्य मे जल्पितं
साकं लोकपतिस्त्वया निशमयन्नाकं विधातुः पदम् ।
मोक्षं चाऽननुरूपमेव गणयन् मोदान् महोदारधी-
र्मन्ये सम्प्रति पारितोषिकमसावन्वेषयन्मे हरिः ॥ १५ ॥

अम्बेति । हे अम्ब ! ते(?) गुणानां लेशेन पेशलं रमणीयं दक्षे तु चतुरपेशलौ इत्यमरः । डिम्भस्य । पोतः पाको ऽर्भको डिम्भ इत्यमरः । मे जल्पितम् प्रलपितं उक्तं भाषितमुदितं जल्पितमित्यमरः । लोकपतिर्हरिः त्वया नाकं निशमयन् नाकं स्वर्गं तथा विधातुः पदं ब्रह्मलोकं पुनर्मोक्षं च [1]अपवर्गमपि अननुरूपमयुक्तमेव गणयन्वदन् सन् महती उदारा च धीर्यस्य सः मोदाद्धर्षात्सम्प्रति मे पारितोषिकं [2]प्रीतिदानं लोके । अन्वेषयन् गवेषयन् आस्ते इति मन्ये । काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

समस्तगुणशेवधेरमृतकल्पसूक्तेस्तव
स्तवस्य परिशीलनात् फलमुपैति यः प्रार्थितम् ।

---

१५ हे जननि ! शिशोरपि मे त्वदीयगुणासंसर्गसुन्दरं जल्पितं ( भाषणं ) त्वया सहाऽऽकर्णयन् स्वर्गं, ब्रह्मलोकम्, अपवर्गं चाऽयोग्यमेव मन्वानोऽतिवदान्यबुद्धिर्हरिरधुना मे पारितोषिकमनुरूपं गवेषयन्नास्ते इति स्वस्तोत्रस्य महार्घत्वं प्रतिपादयति ।

१६ हे अम्ब ! निखिलगुणनिधेरमृततुल्यवचनस्य तवास्य स्तवस्याऽभ्यासाद् यो वाञ्छितं फलं लभते, कामधेनुक्षीरदोहाज्जनो यां भूतिं लभेत स तेन ( एतत्स्तवाभ्यासिना ) उपमीयते नाऽन्य इति का-

---

१ कपवर्गमिति । २ पु० पा० ।

लभेत यदि वेतनं सुरभिदुग्धदोहाज्जनः
स काममुपमीयते[1] जननि तेन नैवेतरः ॥ १६ ॥

समस्तेति । हे जननि ! यः पुमान् तव समस्तगुणशेवधेः सकलगुणनिधेः अमृतकल्पसूक्तेः सुधामधुरस्य अस्य स्तवस्य परिशीलनात् पठनादिना प्रार्थितं फलमुपैति स तेन परिशीलनकर्मणा इतरं कामं नैवोपनीयते न प्राप्यते(?) इति काकुः, तर्हि प्राप्यतएव । अत्र दृष्टान्तः । जनः दोहनकर्मणि वेतनादिना नियुक्तः सुरभिदुग्धदोहनाद्वेतनं भृतिं यदि लभेत तावता सः इतरं कामं नोपनीयते इति न अपि तु सर्वान्कामानवाप्नुयादिति भावः(?) । अत्र वर्ण्याऽवर्ण्यानां धर्मैक्येन दीपकमलंकारः । पृथ्वी० ॥ १६ ॥

साऽऽनन्दं ये सरसमनसः स्वादु लक्ष्मीसहस्रं
जेगीयन्ते जगति जनितश्रीनिवासप्रसादम् ।
शान्तत्रासां विततिममितां शर्मणां निर्मिमाणा
तेषामेषा विहरतितरामिन्दिरा मन्दिरेषु ॥ १७ ॥

सानन्दमिति । सरसं सप्रीतिकं मनो येषां ते ये पुमांसः जनित उत्पन्नः श्रीनिवासस्य प्रसादो यस्मात्तत् स्वादु मधुरं

---

यथेनुक्षीरदोहिन आप्तकामतया वेतनं प्राप्तव्यं यथा न भवति तथैतत्स्तोत्रपाठकस्याऽऽप्तव्यं फलं नाऽवशिष्यत इति स्तोत्रपाठफलमाह ।

१७ हे मातः ! रसिकान्तरङ्गा ये उत्पादितनारायणप्रीति मधुरं लक्ष्मीसहस्राख्यमेतत् स्तोत्रं सहर्षं जगति जेगीयन्ते (पुनः पुनर्गायन्ति) तेषां गृहेषु अपगतिभीति सुखसन्तति कुर्वन्ती एषा लक्ष्मीरत्यन्तं क्रीडते इति पुनरेतत्स्तोत्रपाठफलमाह ।

---

१ उपनीयते इति १ पु० पा० ।

लक्ष्मीसहस्रं जगति भुवि जेगीयन्ते ऽभीक्ष्णं गायन्ति तेषां मन्दिरेषु गृहेषु शान्तः प्रासो यस्याः ताम् अमितां बह्वीं शर्मणां कल्याणानां विततिं विस्तारं तिर्मिमाणैषा मत्स्तुत्यमाना(?) मद्बुद्धिस्था इन्दिरा लक्ष्मीर्विहरतितराम् । अत्यन्तं क्रीडतीत्यर्थः । मन्दाक्रान्ता० ॥ १७ ॥

पौत्रेणाऽऽत्रेयगोत्राभरणनयचणश्रीनिवासाऽध्वरीन्दोः
श्रीमद्रामाङ्घ्रिभक्तिप्रमुदितरघुनाथार्ययज्वाऽऽत्मजेन ।
वेदान्ताचार्यपादाम्बुजिनिहितहृदा वेङ्कटाऽऽर्येण क्लृप्तं
रम्यं लक्ष्मीसहस्रं पठत दृढतरं नित्यकल्याणकामाः॥ १८॥

इति श्रीमत्काञ्चीनगरनायकताताचार्यभागिनेयवाजपेयसर्वपृष्ठाऽऽप्तोर्यामादियाज्यात्रेयवंशमौक्तिकीभवदप्पय्याचार्यतनूभवस्य श्लेषयमकचक्रवर्तिनो रघुनाथाचार्ययज्वनः पुत्रेण वेङ्कटाचार्येण विरचिते श्रीमल्लक्ष्मीसहस्रे फलस्तबकः पञ्चविंशो ग्रन्थश्च सम्पूर्णतामगमत् ॥ २५ ॥

पौत्रेणेति । हे नित्यं कल्याणे कामो येषां तत्सम्बुद्धौ, हे नराः! आत्रेयगोत्रस्य आभरणभूतश्चाऽसौ नयचणो न्यायवित्,-

---

१८ हे सुस्थिरक्षेमेच्छवः ! आत्रेयगोत्राऽलङ्कारनीतिज्ञश्रीनिवासाध्वरिमत्पौत्रा, रघुनाथपदभक्तिसंतुष्टरघुनाथाचार्ययज्वसुतेन वेदान्ताचार्य( वेङ्कटनाथनामकनिजगुरु )चरणसरोजासक्तमानसेन वेङ्कटाचार्येण रचितं मनोहरमिदं लक्ष्मीसहस्रं साऽऽग्रहं पठतेति निजवंशोत्कीर्तनपुरःसरमुपदिशन् स्तबकं स्तोत्रं चोपसंहरति ।

स्तेन चित इति खण्डः । श्रीनिवाससंज्ञकः अध्वरीन्द्रुर्यायजूक-राजा(?)तस्य पौत्रेण नप्त्रा, पुनः श्रीमद्रामाङ्घ्रिभक्त्या समुदितो यो-रघुनाथाख्य आर्ययज्वा श्रेष्ठयायजूकस्तस्याऽऽत्मजेन पुत्रेण, पुन-र्वेदान्ताऽऽचार्याणां रामानुजमतप्रवर्तकलक्ष्मणाचार्याणां पद्मा स्वस्य कवेर्वेदान्ताऽध्यापकवेङ्कटाऽऽचार्याणां पादाम्बुजं निहि-तं हृन्मनो येन तेन वेङ्कटार्येण वेङ्कटाऽध्वरिकविना क्लृप्तं निर्मितं रम्यं मनोहरम् इदं श्रीमल्लक्ष्मीसहस्रं हृद्गतरं श्रद्धाभक्तिसमन्विता-ऽर्थानुसन्धानसहितामित्यर्थः । पठत परिशीलयत, तेन च भजत सर्वमपि मङ्गलमिति शिवम् । स्रग्धरावृत्तम् ॥ १८ ॥

श्रीकृष्णात्रिकुलोद्भवः शिवमहीपालस्य यः सद्गुरु,-  
र्देवोपाह्वयवान् यजुःश्रुतिधरः सिद्धेश्वरो योगराट् ।  
रामस्तत्तनयः समस्तविबुधैः काश्यां कृताग्र्यार्चनः  
कृष्णस्तस्य सुतः कलासु कुशलस्तस्याऽप्यभूदात्मजः॥१॥  
यः श्रीरामपदाम्बुजद्वयरमाऽऽस्वादैकरोलम्बको  
वेदव्याकृतिकाव्यनाटककरा(?)लङ्काररत्नाकरः ।  
यावद्बुद्धिबलोदयं विवृतवान् स श्रीनिवासः कवि-  
स्तात्र वेङ्कटयज्वनिर्मितमिदं लक्ष्मीसहस्राऽभिधम् ॥२॥  
अनेकाऽर्था एकपदाद्युद्धृत्य संशोध्य यत्नतः ।  
अस्मान्निष्कासिता देवै रत्नानीव यथाऽम्बुधेः ॥ ३ ॥  
स्वस्तिश्रीनृपशालिवाहनशके ऽभ्यष्टाऽद्रिधात्रीमिते  
वर्षे दुन्दुभिसंज्ञके हरितिथौ मार्गाऽऽश्यपक्षे गुरौ ।  
टीकेयं करवीरनामनगरे लक्ष्मीसहस्रस्तुते-  
र्नीता ऽन्तं रघुवीरसुन्दरपदद्वन्द्वारविन्देऽर्पिता ॥ ४ ॥  
मूलान्यन्तराभावादज्ञानाद्भ्रान्तितोऽपि वा ।  
यदत्राऽसमञ्जसं तन्मे शोधनीयं महत्तमैः ॥ ५ ॥

सूक्तमत्राऽस्ति यत्प्रायस्तद्गुरोरेव मे न हि ।
दुरुक्तमस्ति चेत्किञ्चित्तन्ममैव गुरो र्न हि ॥ ६ ॥
विद्वांसो यदि मे दोषान् गुणान् वा कथयन्तु तत् ।
तुल्यं मनो मे मनुते ह्यशक्तिः कष्टदा भवेत् ॥ ७ ॥
कन्यासमार्गणविभूषितपाणिकञ्जात्
साऽम्भस्तडिज्जलधरोपमनीलदेहात् ।
आजानुबाहुयुगुलाद्रविवंशदीपात्
रामात्परं किमपि तत्त्वमहं न जाने ॥ ८ ॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन वि-
रचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मीमहसटी-
कायां फलस्तबकः पञ्चविंशो ग्रन्थश्च सम्पूर्णतां
प्रकाणतमाम् ॥ २५ ॥

---

वह्निगुहाऽऽननन्देन्दु( १९६३ )मिते भूपस्य विक्रमस्याब्दे ।
संक्षिप्य वृत्तिरेषा रचिता काश्यां हरिप्रियाप्रीत्यै ॥ १ ॥
साग्रं विलोक्य सम्यग् विचार्य मत्या ऽवधूतमत्सरया ॥ २ ॥
प्राचीननव्यवृत्त्योस्तरतमभावं विदन्तु विद्वांसः ॥ ३ ॥
गौतमगोत्रधुरन्धरनृसिंहसूरेः सुतो विनीतात्मा ।
तैलङ्गरामशास्त्री कृत्वेमां वृत्तिमार्पयल्लक्ष्म्यै ॥ ४ ॥

इति श्रीमानवल्ल्युपाह्वतैलङ्गरामशास्त्रिविरचितायां लक्ष्मीस-
म्भावतरणिनिःश्रेणिकायां फलस्तबको ग्रन्थश्च सम्पूर्णः ।